॥ श्रीः ॥

महामहोपाध्याय–महामहोपदेशक–विद्यानिधि-विद्यावाचस्पति–

पण्डित-श्रीगिरिधरशर्मचतुर्वेदमहाभागानाम्

जयपुरमहाराजसंस्कृतविद्यालयतो विश्रामावसरे

ससम्मानाभिनन्दनार्थं प्रकाशितः

संस्कृत-साहित्य-संमेलनस्य मासिकमुखपत्रस्य

# संस्कृतरत्नाकरस्य

# दर्शनाङ्कः

वर्षम् १०

सन् १९४५

संख्या १२

संपादकौ—

कविशिरोमणि-
भट्ट श्रीमथुरानाथशास्त्री
साहित्याचार्य.

पण्डित-
श्रीवृद्धिचन्द्रशर्मा शास्त्री
व्याकरण धर्मशास्त्राचार्यः

प्रकाशिका—

श्रीचतुर्वेदाभिनन्दनसमितिः, जयपुरम्

मूल्यम् ४ रूप्यकाणि ।

# विषय-सूची

# आशीर्वादाभिनन्दनानि

# जीवनचरितम्





भाषाविषयकं परिष्कारमिति शिक्षाङ्कं दर्शिनो विवेकिनो विदन्त्येव। अत एव समयेऽस्मिन् दर्शनविषयेऽपि चिरस्मरणार्थमङ्कनीयः संस्कृतभाषावत्सस्ति कश्चिदस्याङ्क इत्यभूत्केषांचिदभीप्सा। इतः समायासीदवसरोऽपि दैवयोगात्तादृश एव। संस्कृतसेविसमाजस्य चिरात्प्रणयभाजनं जयपुरराजकीयसंस्कृतकालेजस्य माननीयोऽध्यक्षो म. म. श्रीगिरिधरशर्मचतुर्वेदमहाभागः कस्य वाऽक्षरमुखस्य न स्यात्परिचितः। एष हि महाभागो महाविद्यालयेऽस्मिन्नध्यापिपद्बहून् संवत्सरान् दर्शनशास्त्राणीमानि। लब्धवांश्चात्र प्रभूतं यशः, यतो ह्यनेनाध्यापिता दर्शनशास्त्रस्याध्यापकपदमपि लेभिरे विद्यालयेऽस्मिन्। महाभागोऽयमस्मिन्नेव संवत्सरे विद्यालयाध्यापनादिकार्याद्विश्रमं गृह्णातीति विमनायते स्म जयपुरगता संस्कृतजनता। एतस्याध्यक्षत्वे समभूद्भूयसी समुन्नतिर्महाविद्यालयस्यास्य। बहुषु भारतीयविद्यालयेषु सुदुर्लभं चतुर्णामपि वेदानामध्यापनम्, राजभाषा-राष्ट्रभाषयोरपि सहाध्यापनप्रबन्धः, पृथक् छात्रावासपरिकल्पनम्, व्यायामादिशिक्षणम्, पाक्षिकच्छात्रसभानियमनम्, आयुर्वेदविभागस्योन्नतिः, पुस्तकालयादेः परिष्कार इत्येवंविधानि बहूनि कार्याण्यस्य समये समभूवन्।

न केवलमिदमस्मिन् जयपुर एव, संपूर्णे भारतेऽपि महाभागेनानेन यानि यान्युपयोगीनि कार्याण्यनुष्ठितानि तानि को वा न विद्यात्? सनातनधर्मस्यायं प्रमुखो नेता। वर्णाश्रमस्वराज्यसंघसौधस्य न साम्प्रतमेव प्रधानस्तम्भः, अपितु जन्मदाताप्येतस्य। करपात्रिमहाभागसंचालिताखिलभारतीयधर्मसंघस्य यशस्वी साफल्यप्रदः। एतदेव किम्, समाजपरिष्कारकगोष्ठीषु, धर्मसंमेलनेषु, धार्मिकमहोत्सवेषु यत्र यत्र सनातनधर्मस्य कृते विचारमयः समयः समुपतिष्ठति तत्र तत्रैव महाभागोयं हृदयंगमया निजवक्तृतया साफल्यं लभत इति को वा न वेद? अखिलभारतीयसंस्कृतसाहित्यसंमेलनमनेन परिचालितम्, संस्कृतभाषायाः शिक्षाप्रणालीं परिष्कर्तुं पण्डितानां संमतिसंग्रहादिव्यनेन प्रयतितम्, शिक्षोपयोगीनि संस्कृतपुस्तकान्यनेन लिखितानि लेखितानि च, संस्कृतरुचिसंवर्द्धनायाऽनेन परिश्रान्तम्, हरिद्वार-लवपुरादिषु सफलाध्यापनकीर्तिरनेनाधिगतेत्यादि को वा किन्न जानीयात्? स्थाने चेदम्, दर्शनादिशास्त्रपाण्डित्येऽलंकारसाहित्ये, लेखनलालित्ये, धर्मोपदेशने, नीतिनैपुण्ये, अधिकारोचितप्रबन्धपाटवे, सामयिकवृत्तप्रगल्भतायाम्, वाग्मितायां चेति सर्वत्र लब्धकीर्तय. कियन्तो वा पण्डितमहाभागाः सन्ति संप्रति भारतेऽस्मिन्?

एवंविधमहाभागस्याभिनन्दनाय यावानुत्साहसमारोहः स्यान्नायमाधिक्यकोटिमाटीकेत नूनम्। अत एव दर्शनाध्यापकस्यास्याभिनन्दनाय 'दर्शनाङ्कः' प्रकाश्येत रत्नाकरस्यास्येति प्रकटितमभूत्प्रबन्धसमित्या। निबन्धनीयविषयसूची प्रार्थनापत्रैः सह संप्रेष्यत पण्डितानां परिषदि। भूयसोऽवधीन् विलङ्घ्य, नानाप्रार्थनाः परिशील्य, विविधाननुरोधान्निगीर्य यथाकथंचिदपि वा भवतु, प्राप्ताः पण्डितानां दार्शनिका निबन्धा अपि। संख्यापि चैषां साधीयस्येव। किन्तु पुस्तकानां प्रकाशनं नास्मिन् समये साधारणी सिद्धिः। पत्राणाम् (कागज) प्राप्तिः परमपुरुषार्थः, मुद्रणालयस्यायत्तीकरणं भाग्यविजृम्भितम्, तत्राप्यक्षुण्णसीसकाक्षराणामवाप्तिर्निःश्रेयसाधिगमः, ब्लाकचित्राङ्कनोपयोगिपत्रप्रतिपत्तिः सौभाग्यसंपत्तिः। अस्तुः सर्वमिदमादि शनैः शनैर्यथा यथा समपादयाम तथा तथाऽभिनन्दनीयस्य चतुर्वेदमहाभागस्य विद्यालये कार्यावसरोऽपि शनैः शनैः पूर्णोऽभवत्। सोयं च सुप्रसन्नतया प्रतीक्षावसरोभूत् शीघ्र-

नासीदस्य । अत एव नेतः पूर्वमारम्भोऽभूद्विशेषाङ्क-मुद्रणकार्यस्य । किन्तु यदैव मुद्रणाय निबन्धाः समगृह्यन्त तदैव दर्शिता प्रकृतिर्मुद्रणालयकर्मचारिभिः । यस्मिन्मुद्रणालये मुद्रणप्रबन्धोऽभूत्तत्स्वामिभिरलभ्यमानत्वेनास्मिन्मुद्रणयन्त्रमेव विक्रीतं का कथा तत्र प्रकाशनस्य ?

अन्ततो मुद्रणस्य कृते विदेशमुखं दर्शनीयमभूत् । किन्तु विपद् विपदमनुबध्नातीत्याभाणकं तत्राप्यनुगतमेवासीत् । लाहोरनगरे यावत्प्रयत्यतेऽस्य मुद्रणाय तावत्तत्रापि समघटत राजकीयो नव्यो नियमो यत्— 'राजतन्त्रस्यानुज्ञामन्तरा न कस्यापि पत्रस्य विशेषाङ्कः शक्येत प्रकटयितुम्' । संस्कृतग्रन्थानां प्रकाशनाय भारते सुप्रथितः श्रीमेहरचन्द्रलक्ष्मणदासमहोदयो यो हि महतोत्साहेन स्वीकृतवानेतस्य समुद्रणं स हि राजतन्त्रे विवादमप्युपस्थापयदेतस्य कृते, किन्तु संतुष्टा नाभूद्भाग्यदेवताऽस्माकम् । अत एव पुनस्तत्रावलम्बितो वेताल इत्येव समघटत; अर्थात्पुनर्जयपुर एव मुद्रणाय मुद्रालयोऽन्वेषणीयोऽभूत् । परं स्थिरप्रबन्धं विच्छिद्य नवीनतया प्रबन्धे कियत्यो वाऽसुविधाः समुपतिष्ठन्तीति कस्य वा सहृदयस्य न स्याद्विदितम् । विशेषतश्च पाञ्चालीचीर इव प्रतिक्षणं समेधमानेऽस्मिन् मुद्रणमहर्घतायुगे ? अस्तु, ना भूद्दर्शनाङ्कदर्शने पाठकमहाभागानां विलम्बसंभावनेति दर्शनविषयलेखानामिदमारभ्यते मुद्रणं पुरस्तात् । अभिनन्दनसम्बन्धिनोऽपि निबन्धाः परस्तात्समायोज्येरन्निति पश्यत किं वा न वाञ्छामोऽनुग्राहकमहाभागपरितोषाय शीघ्रतायै । अमरभारत्यास्तामिमाममरतामभ्युपेतां रिरक्षिषन्तः प्रणिधानवन्तः सन्तो दर्शनाङ्कप्रकाशनस्यास्योद्देश्यमभिनन्दनं चेदमविस्मरणाय हृदि निधाय क्षम्यासुरखिला अपि संजायमाना नस्त्रुटीः । पूरयताच्च सर्वेषां नो मनोरथान् भगवान् भार्गवीजानिरित्यर्थयमानः समुपस्थापयामि तमिममङ्कमङ्के श्रीमतामिति—

विदुषां विधेयो

भट्टश्रीमथुरानाथशास्त्री

---

# निगूढ-दार्शनिकप्रश्नोत्तराणि



( स्वर्गीय—विद्यावाचस्पतिश्रीमधुसूदनपण्डितानां क्रोडपत्रात् संगृहीतानि )

## दृश्यस्यार्थस्य मिथ्यात्वं कथम् ?

यदस्ति तद् भाति, यद् भाति तदस्तीति सत्ताभात्योः सामानाधिकरण्यम् । यद् भाति तत्र सत्ता यद्यन्यत उपसङ्क्रमते, तर्हि तदानाय्यसत्ताकमनित्यम्, यथा मृत्सत्ताको घटः, तन्तुसत्ताकः पटः । अथ यद् भाति, तत्र भानविषयतावच्छेदकावच्छिन्ने यदि सत्ता नोपपद्यते, तर्हि स मिथ्याभूतोऽर्थः—यथा यत्र रज्जुः सर्प इति भाति, तत्र रज्जुः सर्पत्वेन भातीति सर्पत्वं भानविषयतावच्छेदकं भवति, सर्पत्वावच्छेदेन च तत्सत्ता नास्ति । तस्मात्स सर्पो मिथ्या ।

सत्ता हि रसो न बलम् । बलं च रसाद् भिद्यते । बलेषु सत्तास्तीति बलानि सन्ति । उत्पद्यन्ते, तिष्ठन्ति, विलीयन्ते बलानि । तेनैतेषु आत्मनः सत्तोपसङ्क्रमते । तस्मादनित्यानि बलानि कार्यलक्षणेऽर्थे द्रष्टव्यानि ।

* श्रीः *

सरस्वती श्रुतिमहती महीयताम् ।

# संस्कृत-रत्नाकरः

दर्शनाङ्कः

चित्रं द्विजपतिमण्डलकलामनुध्यायमेयसरोऽपि ।
वेलामनतिक्रामन् संस्कृतरत्नाकरो जयति ॥१॥

वर्षम् १० } जयपुरम्, चैत्रः संवत् २००२ वि० } मासः १२

## मङ्गल-घनाक्षरी

भूमिविलसं तं दुष्टदैत्यैर्मोरवन्तं वीक्ष्य
लोकेऽवतरन्तं शुचिन्वन्तं शीलयामहे
शकटं हरन्तं पातयन्तं पूतनां तामथ
दावाग्निं पिबन्तं बलवन्तं चिन्तयामहे ।
कालियफणासु नृत्यवन्तं विहरन्तं वने
कंसमुद्धरन्तं केशवं तं कामयामहे
सर्वतो लसन्तं विलसन्तं व्रजगोपिकासु
पीताम्बरवन्तं भगवन्तं भावयामहे ॥१॥

## अभ्यर्थना

उद्यल्लक्ष्मीरविद्वद्विपुलजलनिधेरञ्जसाभ्युज्जि[1]हाने
सौभाग्योन्मेषराजत्सकलसुमनसां मोदमाविर्दधाने ।
आहित्य व्योम्नि नूत्नामिह विमलरुचिं तन्वति द्रागमुष्मि-
न्नङ्कं कृत्वा, शशाङ्केऽभ्युदित इव मनो मोदतां 'दर्शनाङ्के' ॥

—मञ्जुनाथः

१—उद्गच्छति (उदयति) उद्—जिहीते, शानच्।

## शारदावन्दनम्

[ कविरत्नमायादत्तपाण्डेयशास्त्रिणः ]

१

देवि महेश्वरि भारति ! मातः !
तव गुणमहिमा भुवने ख्यातः ।
वीणापाणि ! सरस्वति ! वरदे !
आश्रित-रक्षिणि ! अयि जनसुखदे ॥

२

ज्ञानविरागविवेकनिधाने
निगमागमरूपिणि शान्तिनिधाने ।
विश्वविमोहिनि विश्वविकाशे
विश्वोद्धारिणि विश्वविलासे ॥

३

दूरीकुरु अयि ! दुष्कृतभारं
कुरु कृपया भवसागरपारम् ।
जाड्यनिवारिणि बोधप्रसारे
मायेशमनोनिलये श्रुतिसारे ॥

# आरम्भिकमावेदनम्



विमर्शनानि तत्त्वानां ब्रह्मसंस्पर्शनान्यलम् ।
प्राच्यार्याणां दर्शनानि दर्शनानि* दिवौकसाम् ॥१॥

विमर्शसानुरागाः पाठकमहाभागाः !

कस्य वा विवेकशालिनस्तथ्यमिदं बोधनीयं स्याद्यद् भारतीयमिदमार्षविज्ञानमेव निखिलानामपि भूमण्डलस्थस्य दार्शनिकविज्ञानानां मूलस्रोतः। इत एव प्राप्तप्रबोधाः अन्यान्यदेशीया विद्वांसः समशोधयन्निजनिजसाहित्ये दार्शनिकान्विचारान्। गुणपरवशाः प्राचीनपाश्चात्याः स्पष्टैरक्षरैर्निरदिशन् यद् विश्वमण्डलेऽस्मिन्नाध्यात्मिकविचाराणां गुरवस्तानीमानि भारतीयदर्शनान्येव। तथ्यकथनायोदारः शोपनहारः स्पष्टमभाषिष्ट यद्-'भारतीयं वायुमण्डलमुत्कृष्टान् पवित्रान् सत्यांश्च विचारान्प्रचारयत्यस्मासु।' अन्यान्यविषयेषु राजनीतिमनुसरन्तोपि तथ्यनिगूहने परवशाः पाश्चात्यविपश्चितो दर्शनानां दर्शने स्पष्टवादिन एव समभूवन्। पश्यत किं प्रोचुर्मैक्समूलरादयो विद्वांसः—'यद्धि राष्ट्रमुन्नतेरुच्चशिखरे स्थितं भवति, यस्मिन् राज्ये आन्तरिकाणां बाह्यकानां च शत्रूणामाक्रमणस्य किञ्चिदप्याशङ्का न भवति, यस्य राज्यस्य लोका धनसंपत्त्या सहैव अनेकानि विद्यामन्दिराणि अनेकांश्च विश्वविद्यालयान स्थापयित्वा, सर्वा अपि विघ्नबाधाः पराहत्य विद्यानामालोचनायां मनः संयोजयन्ति, तस्मिन्नेव सभ्ये समुन्नते च राष्ट्रे दर्शनशास्त्रस्याविर्भावो भवति'।

यदि नेदमभविष्यत्तर्हि विज्ञानगर्वादूष्मायमाणानां विजेत्रभिमानिनां राष्ट्राणां संमुखे भारतमिदं को वा पुमान्पर्यगणयिष्यत् ? प्रत्यक्षमद्य भौतिकविज्ञानस्य विजयपताका ( वायुयानम ) व्योमनि समुड्डीयमाना कोणनैकमारभ्याऽपरकोणपर्यन्तं विश्वतः परिभ्रमति। विश्वमण्डलस्यैककोणगतं संवादं जगतोऽपरस्मिन्कोणे निमेषमात्रात्संप्रापयन्ती सेयं शब्दवाहविद्युत ('रेडियो') द्वीपे द्वीपे देशे देशे नगरे नगरे ग्रामे ग्रामे खर्वटे खर्वटे गेहे गेहे किं बहुना, कोणकोणेष्वपि वैज्ञानिकविजयघोषणामदुन्दुभिध्वानं दन्ध्वनीति। जगदालावयत्येवंविधे वैज्ञानिकोपप्लवे भारतं प्रति या काचिल्लोकानां गौरवदृष्टिः सा हि 'मानवसभ्यतायाः प्रथमपदाङ्कप्रचारकः स एवायं देश इति' विचारगाम्भीर्येणैव। अस्मिन्विषये च दर्शनानाममीषां प्रमुखं स्थानमिति न को विवेकी विजानीयात्। एवंविधज्ञानस्यैव कृते महामहान्ति यात्राकष्टानि विषह्यापि चीनादिदूरदूरदेशेभ्यः समाजग्मुर्विज्ञानलिप्सवो यात्रिणः। आसीच्च तत एव प्राचीनभारते शिक्षितजगति दर्शनानामेतेषां सर्वतः प्रचारः। किन्तु कियतश्चित्कालादारभ्य एकशास्त्राध्ययन एव निखिलजन्मयापनपद्धत्या, विशेषतश्च पापया परीक्षाप्रणाल्याऽनया संपादितं दार्शनिकज्ञानवैरल्यं शिक्षितेषु।

किन्तु येषां महिम्ना समवाप्तं गौरवं भारतेनानेन तेषामेव दर्शनानां विस्मरणं न केवलमुपजीव्यविरोध एव सोयम्, अपि तु तच्छून्या शिक्षा ज्ञानवैकल्यायैव कल्पते भारतीयानाम्। तत एव संस्कृतानुरागिभिरवश्यमादरणीयानि दर्शनानीति संप्रति सर्वत्रापि श्रूयते विवेकिनां समाजे चर्चा। चिराच्च संस्कृतसेवकः सोयं संस्कृतरत्नाकरः स्मारयति समये समये समपेक्षितं संस्कृत-

---

* दर्शयन्तीति दर्शनानि, कर्तरि ल्युः।

आलाप्यमसत्तावति बले सत्तातिरेकेण यावद्बलं पृथक्त्वेन ज्ञायते, तत्र सदिति व्यामोहनबुद्धिः प्रवर्तते। तस्मात्-द्रसन्। आतश्चात्मनो द्रष्टुः पृथक्त्वेन ज्ञायमानोयमर्थो दृश्यो मिथ्या।

## अमितस्य मितिकरणं माया कथम्?

बलस्य वर्गस्त्रेधा—नित्यबलं, कोशबलं, क्षणबलञ्चेति। तत्र क्षणमात्रस्थायीनि बलान्यनन्तानि। कोशबलानि षोडश १६। नित्यबलं पञ्चधा ५। १ आनन्दशक्तिः शान्तिसमृद्धिभेदाभिन्ना। २ ज्ञानशक्तिः पञ्चविधा। ३ इच्छाशक्तिः सिसृक्षामुमुक्षे वा, जिघृक्षाजिहासे वा, ४ क्रियाशक्तिः बन्धमुक्ती, ग्रन्थ्युद्ग्रन्थी। ५ आवरणशक्तिश्च च्छन्दनम् विरुद्धभावव्यवधानं तमश्च।

तत्रावच्छेदश्छन्दः। सर्वमेव बलं क्वचिद्बिन्दावुद्भूय तं बिन्दुं परितः कांश्चिद्देशानाक्रम्य रूपं धत्ते। तेनैतद्बलं यावन्तं प्रदेशमभिव्याप्नोति, स देशस्तावता बलेन अवच्छिद्यते। माया चेयं षोडशबलकोशेष्वेकं कोशबलम्। तत्रानन्तानि क्षणबलानि उद्भूयोद्भूय विनश्यन्ति। तदिदं मायाबलं स्वशरीरेण यावन्तं रसमवगाहते, स एष मायाबलावच्छिन्नो रसः प्रमितो भवति। तथा चामितस्य रसस्य येन बलेनावच्छेदः संसाध्यते तदिदं मायाबलम्।

## कुत आयाति माया?

रसो बलमिति परात्परस्वरूपम्। प्रतिक्षणविलक्षणान्यनन्तानि बलानि तत्र स्वतः प्रादुर्भवन्ति, तिष्ठन्ति, विलीयन्ते च। माया चेयं कोशबलं स्वतो रसे समुद्भूय कालेन विलीयते, स हेतुः सर्वासां क्रियाणां धर्माणाञ्च। अतोन्यन्नास्ति तदुत्पत्तेः किंचिदपि कारणम्, तन्निबन्धनत्वादितरेषाम्। 'को अद्धा वेद क इह प्रवोचत्, कुत आजाता कुत इयं विसृष्टिः'।

## अनिर्वचनीयता कीदृशी?

बलाधीनानि सर्वाणि कर्माणि अर्थजातानि च। बलोत्पत्तिस्त्वचिन्त्यैव।

"अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्।"

## माया ऐन्द्रजालिकव्यामोहः कथम्?

आवरणशक्तिर्मायेत्युक्तम्। आवरणं त्रिविधम्। तत्र विरुद्धभावेन तिरोधानात्स्वस्वरूपभूतोऽर्थः सन्नपि स्वरूपेण नाभाति। ततोऽर्थस्यावरकन्तु तत्र स्वरूपाकारो वा परोपसङ्क्रान्तस्वरूपो वा मिथ्याभूतः प्रतिभाति। रज्जुं सर्पमिव, शुक्तिं रजतमिवान्यथाऽन्तमर्थमन्यथा प्रत्येति यत्र जनः, सोऽयं प्रातिभासिकोऽर्थो माया व्यपदिश्यते, स्वरूपमावृत्य अन्यथामितिकरणात्। प्रकृते च रस एवाभिन्नः सर्व एको नैकत्वेन प्रतिभाति। नत्वेदमेकं वस्तु सदप्यावरणादविद्यालक्षणान्न प्रतिभाति। अथ नानात्वं तु सर्वत्रेदं मिथ्या प्रतिभाति। तेनैतस्मिन्नैन्द्रजालिके मिथ्याभूतेऽपि भासमानेऽर्थेऽयं मायाशब्दः प्रयुज्यते, आवरणत्वसामान्यात्। अमितस्य मितिकरणाद्बले मायाशब्दो मुख्यः, सत्तां विनापि भासमानत्वं सामान्यमादाय तु ऐन्द्रजालिकेऽप्यर्थे प्रयुक्त इति निष्कर्षः।

## त्रिपुरुषं किंलक्षणम्?

अव्ययाक्षरक्षराणामविनाभावादेकसत्त्वे सर्वसत्त्वं नियम्यते। नैकेन विनाऽपरस्तिष्ठति। तथापि क्षराणामालम्बनमक्षरम्, तदालम्बनमव्ययमिति सदैव विद्यात्। तत्र क्षराणामिन्द्रियसान्निध्यादव्ययस्यान्तरतमतयात्यन्तनिगूढत्वाच्चाव्ययोऽक्षरेणैव, स पुनः क्षरेणैव प्रतिभातीति भाननियमः। कार्यकारणभावस्त्वेषां नास्ति। सहचारिणामेषां पौर्वापर्यायोगादविनाभावाच्च। अथ विकारक्षराणान्तु नियमेतदात्मक्षरकार्यत्वमेव।

आत्मक्षराणां नित्यकारणत्वमेव विकारक्षरापेक्षं द्रष्टव्यम्। तत्र वैकारिकक्षरापेक्षया आत्मक्षरस्योपादानकारणत्वम्, अक्षरस्य निमित्तकारणत्वम्। अव्ययस्य तु सर्वापेक्षया आलम्बनत्वम्। पुरुषद्वयालम्बनत्वादव्ययस्य पुरुषोत्तमत्वम्। त्रिसत्ताधारनिरूपणेऽव्ययमिदं सत्यं सद्वा। वस्तुतः सर्वेवेदं मनःप्राणवागनुगतरसलक्षणमव्ययम्। यत्सत्तायोगि तत्सत्। सति तु प्रतिष्ठितं सत्यम्। तदित्थं त्रिपुरुषं सत्तारूपाव्यययोगित्वात् सत्। अविनाभावात्तु अव्ययमपि सदित्युपचर्यते, त्रिपुरुषसमुदाये प्रतिष्ठितत्वाच्च सत्यपदेनापीदं व्यवह्रियते।

## मुक्तिः का ?

बलं द्विविधम्। क्षणिकबलानामुदयप्रलयपरम्पराक्रमधारानुबन्धि किञ्चित्कोशबलं प्रवर्तकम्। तादृशबलधारोदयप्रलयक्रमप्रतिबन्धकन्तु निवर्तकम्। प्रवर्तकबलानामेकत्र चितिस्तदुपरि पुनश्चितिरित्येवमुत्तरोत्तरमधिकाधिकचितिभिः संचरक्रमेण सृष्टयो भवन्ति, यथाकाशाद्वायुः, वायोस्तेजः, तत आपः, ततः पृथिवीति। बलोपरिबलचितिरिति पृथिव्यां पञ्च बलग्रन्थयो ज्ञेयाः। सेयं बहिश्चितिः। अत्रोत्तरोत्तरं स्थूलतोदेति। अथैतद्विपर्ययेण निवृत्तौ तदेकैकग्रन्थिनिर्मोकः, तेन प्रतिसञ्चरक्रमो भवति। पृथिव्या आपः,अद्भ्यस्तेजस्ततो वायुस्तत आकाशस्ततः प्राणस्ततो मन इति। मनसोऽपि बलनिवृत्तौ विज्ञानम्। विज्ञानाद्बलनिवृत्तौ आनन्दः। सेयमन्तश्चितिः। बलोपरि बलोपचयो बहिश्चितिः। बलप्रचयाद् उत्तरोत्तरं बलनिवृत्तिक्रमोऽन्तश्चितिः। तत्र प्रवर्तकबलानि अग्निनिवर्तयदिदं निवर्तकबलं कृतकरजःक्षोदवत् स्वयमपि निवर्तते। सेयं मुक्तिः।

## बलविनाशः कदा ?

द्विविधो बलनाशः। सञ्चरक्रमिको निसर्गात्, मोक्षौपयिकः प्रयत्नात्। द्वितीयस्य समयनियमो नास्ति। प्रथमस्य प्रतिबन्धकबलोदयो दिनरात्रिविभागनियतोऽपि बलानामनन्तत्वादनन्तविधः। मायापि द्विविधा—महामाया योगमाया च। द्वितीयानन्तविधा। महामायावच्छिन्न ईश्वरस्तस्यायुर्नियतम्। दिव्यं युगसहस्रं ब्राह्ममहः कल्पः। तावती रात्रिः कल्पः। द्वौ कल्पौ ब्राह्म एकोऽहोरात्रः। तेषां षष्ट्युत्तरत्रिशत्या ( ३६० ) एकं वर्षम्। तादृशवर्षाणां शतं ब्रह्मण आयुः। स ईश्वरमायाविनाशकालः। नातः परं सा सृष्टिरस्ति। पुनरभिनवा भवति। जीवानान्तु योगमायाविनाशकालोऽक्षरपुरुषसाक्षात्कारजन्यो हृद्ग्रन्थिविनाशकाल एव। स च कर्मगतेर्गहनत्वादनियतः।

## मायावच्छिन्नस्य पुरुषस्य कथं निस्सीमता ?

व्यक्तौ पुरुषशब्दो रूढः। 'व्यक्तिस्तु पृथगात्मता'। अतश्च नैष पुरुषो निःसीमः मायावच्छेदनियतत्वात्। यस्तु निस्सीमः कश्चिदर्थ इष्यते, तत्र परात्परशब्दो रूढो न तु पुरुषशब्दः। "परात्परं पुरुषमुपैति दिव्यम्" इति श्रुतौ तु नायमभेदान्वयः,किन्तु पराज्जीवाव्ययात् परं पुरुषं परमाव्ययमुपैति इत्यर्थः। मायापरिच्छेदान्निवृत्त्य 'ब्रह्मविद् ब्रह्मैव भवति' इति भावः। स यदि पुरुषो मोक्षौपयिकात् प्रयत्नाद् मायावच्छेदमुक्तो भवति,स पूर्वं घटाकाशवदवच्छिन्नो घटस्फोट इव निःसीमः सम्पद्यते। स निःसीमपूर्वः पुरुषमव्यः कालेन पुनर्निःसीमः सम्पन्न इति। निःसीम एवायं मायावच्छेदकाले पुरुषसंज्ञां धत्ते। तस्य कालान्तरसापेक्षं निःसीमत्वं शक्यं कदाचिदभिधातुम्। वस्तुतस्तु स पुरुषो नास्त्येव निःसीमः। याथार्थ्येन हि परमेश्वरो निःसीमो द्रष्टव्यः, ईश्वरस्तु पुरुषः परिच्छिन्न इति शास्त्रसिद्धान्तः। यस्तु कश्चित्पुरुषं निःसीममाह, स उपचारेणैव। पुरुषस्य जीवस्य शरीरावच्छिन्नत्वात्, ईश्वरस्य च विश्वरूपावच्छिन्नत्वात्।

## जीवस्य अङ्गुष्ठमात्रत्वोपपत्तिः कथम् ?

महाविशालस्य भूतज्योतिषः सूर्यबिम्बस्य काचखण्डे प्रतिबिम्बोपपत्त्या परज्योतिष ईश्वरबिम्बस्य जीवविग्रहे प्रतिबिम्बोपपत्तिः द्रष्टव्या। ऋग्यजुःसामेतित्रयीविद्याप्रभावादस्ति कश्चित्क्षेत्रानुगमः। एतावति खण्डक्षेत्रे एतावन्तं हृदयप्रदेशं प्रतिबिम्बो महानल्पोऽन्यल्पो वाभिव्याप्यावतिष्ठते, न सर्वं काचखण्डं सत्रा सर्वात्मना पर्याप्नोति। एवमेव त्रयीविद्याप्रभावाज्जीवविग्रहेऽपि चिदाभासः क्षेत्रानुसारेण परिमितो भूत्वाऽवतिष्ठते, महाशरीरे महान् वा, क्षुद्रशरीरे क्षुद्रो वा। तत्रैष महर्षिरनुग्रहेण शरीरक्षेत्रपरिमाणानुसाराच्चिदाभासस्याव्ययाक्षरक्षरस्य सबाह्यपरिकरस्य परिमाणमुपदिशति "अङ्गुष्ठमात्रम्" इति। स चायमङ्गुष्ठप्रमितश्चिदाभासः सत्यरूपो द्रष्टव्यः। 'आत्मा, प्राणाः, पशवः' इति त्रिवृत्त्व सत्यलक्षणम्। तत्रायमात्मभागोऽङ्गुष्ठप्रमित उक्तः। तस्य योऽयं प्राणभागस्तेनायं सर्वां शरीरयष्टिं अभिव्याप्नोति। अचेतनानपि शरीरधातंश्चेतनान् करोति। अथ तृतीयेन पशुभागेनायं चिदाभास आत्मा यावद् वित्तं क्षेत्रधनप्रजाजायादिकमभिव्याप्नोति।' वैकारिकोऽयं भूतमात्राप्रमित इष्यते। पञ्चप्रजापतिकेश्वरप्रजापतेरंशस्य जीवप्रजापतेः पञ्चप्रजापतिकतया प्रतिमाप्रजापतीनां तेषां परप्रजापतिगर्भगृहीतानां नियमेन प्रमितत्वसिद्धान्तात्। तत्रास्ति कश्चित्प्रादेशमात्रः, कश्चिद्वाङ्गुष्ठप्रमितः—इति ब्रह्मविज्ञानशास्त्रे विशिष्योपपादितं द्रष्टव्यम्। अप्रमितस्तु परात्परः परमात्मा निर्विशेषो भूमा। सोऽतिरिच्यते। न तस्य निरूपणं शक्यते कर्तुम्, वाङ्मनसातीतत्वात्। स तु "अस्तीत्येवोपलब्धव्यः।"

## कोऽयं षोडशी प्रजापतिः ?

यदिदमेकैकं किञ्चिद् दृश्यते, तत् त्रेधा विभक्तं द्रष्टव्यम्--आत्मा च शरीरं च महिमा चेति। एतावदिदमेकैकं सर्वं नातोऽन्यत् किञ्चिदस्ति। तत्रायमात्मैव शरीरं च महिमानं च सृजतीत्येतयोः प्रजातत्वादयमात्मा प्रजापतिः। स द्वेधाऽभिनीयते —अनिरुक्तश्च निरुक्तश्च। प्रजोपहितो विशुद्धस्वरूपमात्रः सोऽनिरुक्तः। प्रजाविशिष्टः सर्वः। तत्रायमनिरुक्तः प्रजापतिरलक्षणत्वात् कृष्णः। सर्वस्तु प्रजालक्षणलक्षितत्वात् शुक्रः।

तत्रायमनिरुक्तः प्रजापतिस्त्रैधातव्यः षोडशी पुरुषोऽभिज्ञायते। तथा हि—क्षराक्षराभ्यां प्रकृतिभ्यामभिसंपन्नतमोऽयमव्ययः पुरुषस्त्रैधातव्यो भवति। एक एवायमात्मा त्रेधा भिद्यते। स क्षरो विकुरुते, परिणमते इत्युपादानं सृष्टौ भवति। अक्षरः कामयते, तपस्तप्यति, समन्वयाच्चश्राम्यतीति कृत्वा निमित्तं सृष्टौ भवति। इत्थमेते प्रकृती अव्ययं पुरुषमनुवर्तेते। प्रकृतिविशिष्टोऽयमव्ययपुरुषः स्वप्रकृत्यनुसारेण सर्वं सृजति। यथोक्तं गीतायाम्—

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।**
**प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया॥** इति

प्रकृत्यनपेक्षः पुनरयं कार्यकारणभावातीत इष्यते। न कार्यं न कारणम्, उभयोस्त्वालम्बनं भवति। अत एव च भोक्तृत्वमुपपद्यते। प्रकृतिजनितविकृतीनामस्मिन्नव्यये एवान्तर्भुक्तत्वात्।

आनन्दो विज्ञानं मनः प्राणो वागिति पञ्चकलोऽव्ययः पुरुषः। ब्रह्मा विष्णुः इन्द्रोऽग्निः सोम इति पञ्चकलोऽक्षरः। प्राणा आपो वागन्नादोऽन्नमिति पञ्चकलः क्षरः। स निष्कलेनात्मना षोडशी भवति। श्रूयते च—'षोडशकलः पुरुषः' इति। तत्राव्यय [illegible] नान्दा ज्ञानशक्तिः। मनःप्राणवाचस्तु कर्मशक्तिरिति ज्ञानकर्मभ्यां कृतरूपत्वादयमात्मा सर्वज्ञानघनः सर्व-

शक्तिधनश्चोपपद्यते। ज्ञानमयेन तपसा चायं सर्वाः सृष्टीरातनुते। स यथा पश्यति, यथा कामयते, तथा तपस्तप्यति, तथा श्राम्यतीति कृत्वाऽऽत्मन्येवात्मना स्वात्मन एवैताः सर्वाः सृष्टीर्भावयति।

तत्र एकैकस्यात्मनस्त्रिविधा सृष्टिरुत्पद्यते—आत्मा प्रजा पशुश्चेति। पशुर्वित्तम्। प्रजा प्रतिमा, विभूतिः। आत्मा त्वात्मनः प्रतिष्ठाहेतुः। प्रजानां पशूनां चात्मान्तराण्युपपद्यन्ते। येषां तूपपद्यमानानां भावानां नात्मान्तराणि पृथगिवोपपद्यन्ते, तेष्वयमात्मशब्दः। सोऽयमात्मा त्रेधा व्याक्रियते-ब्रह्म च नामरूपे चान्नं चेति। त्रितयं पीदं षोडशिनः पुरुषादेव क्षरभागादुत्पद्यते। तथा च श्रूयते—

"यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः।
तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते॥इति।

### अथ प्रकारान्तरेण व्याख्यास्यामः।

आत्मैवेदं सर्वम्। प्रजानिरूपित पतित्वं यत्रोपपद्यते, स प्रजापतिः, स आत्मा। पतित्वं च प्रभवप्रतिष्ठापरायणत्वमुक्थब्रह्मसामत्वं कोशत्वं सञ्चालकत्वं भोक्तृत्वं चेह विवक्षितम्। वीर्य्यं प्रजा पशवो वित्तमिति चतुष्टयं प्रजाशब्देन विवक्षितम्।

प्रजासम्बन्धेनायमात्मा प्रजापतिश्चतुर्धा व्याख्यायते—निष्कलः। पुरुषः। शिपिविष्टः। यज्ञश्चेति। सर्वान्तरतमः सर्वोपाधिविनिर्मुक्तो निर्द्वन्द्वो नित्यशुद्धबुद्धमुक्तस्वभावो हेयप्रत्यनीको विरजा नान्यद्रव्यो निष्कल आत्मा। तद्गर्भितपञ्चकलपुरुषत्रयविशिष्टः पञ्चपञ्चजनकृतरूपः षोडशकलः पुरुष आत्मा। पुरुषगर्भितकारणसूक्ष्मस्थूलशरीरत्रयविशिष्टः शिपिविष्टः। परमात्मनाऽहरहः संस्पृष्टतमः सर्वहृदयज्ञः प्रजापतिरात्मा। निष्कलमवलम्बते पुरुषत्रयम्, तदवलम्बते शरीरत्रयम्, तदवलम्बते सहस्रत्रयम्। तदित्थं चतुष्टयं वा इदं सर्वमित्याहुः।

मनःप्राणगर्भिताया वाचो गौरित्येषा संज्ञा क्रियते। सहस्रं गावः परितः पृष्ठरूपाः स्रवन्ते। तासु गावस्त्रिंशत् त्रिंशदेकैकमहरित्याख्यायते। त्रयस्त्रिंशदहानि भवन्ति। दश गावः परिशिष्यन्ते। तदेतत्सर्वं ब्रह्मविज्ञाने वैशद्येन निरूपितं द्रष्टव्यम्।

### अथ कोऽयं विश्वात्मा ?

अथैतस्य ब्रह्मणो यावन्मायावलासंसृष्टं निर्विकारं किंचित् स्वरूपं विश्वसृष्टिरूपादवशिष्यते, तस्य व्यापकत्वस्वाभाव्याद् द्वैरूप्यमुपपद्यते-विश्वातीतं च विश्वात्मा चेति। तत्र विश्वसीमातीतब्रह्मभागव्यतिरिक्तः कियांश्चिद् ब्रह्मभागः सृष्टं रूपमिदं विश्वमभिव्याप्नोति, सूर्य्यकिरणोत्पन्नप्रतिबिम्बोपरि सूर्य्यकिरणज्योतिःप्रसारवत्। आह च "तत् सृष्ट्वा तदेवानुप्राविशद्" इति। तदिदं विश्वचरं रूपं विश्वस्यात्माऽभवत्। सनिरूपकोऽयमात्मशब्दः। यो यस्य प्रभवः प्रतिष्ठा परायणं स्यात्, तयोरङ्गाङ्गिभावः संभवति। तत्राङ्गिन्यात्मशब्दोऽवधीयते, यो यस्याङ्गी स तस्यात्मा मृदात्मको घटः, तन्त्वात्मकः पट इति। विवक्षाधीनं चेदमात्मत्वम्। यावदङ्गत्वेन पृथग् विवक्ष्यते, तावतोऽङ्गस्य योऽङ्गी सिद्ध्यति, स तस्यात्मा। स्वयंभूर्ब्रह्मा जनल्लोकारब्धस्य सत्यलोकपरमस्य संयतीत्रैलोक्यस्यात्मा। अथ परमेष्ठी हिरण्यगर्भो विष्णुः स्वर्लोकारब्धस्य जनल्लोकपरमस्य क्रन्दसीत्रैलोक्यस्यात्मा। अथ अष्टमूर्तिरयं भूतनाथोऽग्निः पृथ्वीलोकारब्धस्य स्वर्लोकपरमस्य रोदसीत्रैलोक्यस्यात्मा। सप्तवितस्तिकायस्तु कश्चिदेकोऽव्ययपुरुषः सप्तलोकविभक्तस्यैतस्य विश्वस्यैक आत्मा—

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥
(इति स्मरणात्)

त्रिवृत त्रिवृतस्त्रयो लोका इति कृत्वा त्रयो लोका एवैते सप्त लोकाः प्रतिपत्तव्याः। स एतावानयमेको विश्वात्मा।

## किमिदं विश्वम् ?

अथातस्तृतीयं ब्रह्मणः सृष्टं रूपं व्याख्यास्यामः। मायायोगतो यावद्बृंहनः तदस्य बृंहणमेवेदं विश्वमभवत्। द्विविधं हीदं बृंहणं विज्ञायते: नित्यं चानित्यं चेति। अमृतं च मृत्युश्चेति द्वैभाव्यमत्रैतस्य नित्यं बृंहणम्। रसोऽमृतम्, बलं मृत्युः। रसश्च बलं चेत्येनावदिदं सर्वं संहितरूपं विजानीयात्। यद्वै किञ्चिदुत्तरतो वक्ष्यते, सर्वं तदेकस्मिन्नेवाभिन्ने रसे भिन्नं भिन्नं समाहृतं बलकूटमनुक्षणं संसृज्यते चापवृज्यते चेति नित्यो धर्म्मो विज्ञायते। नित्यं हीदं रसवद्बललक्षणमचेतनं वा, बलवद्रसलक्षणं चेतनं वा विश्वरूपं न कचिन्नोपपद्यते। आह च—

"ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगद्" इति

तदिदं द्वैभाव्यं नित्यं बृंहणमाहुः। अन्यथाऽप्यन्ये नित्यमिदं द्वैभाव्यं पश्यन्ति। सदसती इत्येके। ज्योतिस्तमसी इत्येके। व्योमरजसी इत्येके। अपरे पुनरद्वैतमिच्छन्ति। आवरणं वा, अम्भो वा, दैवं वा। तदित्थं सृष्टिविद्यायां नानामतानि भवन्ति। तानि पृथग्वादेषु व्याख्यातानि।

वेदप्रवर्तकस्तु जगद्गुरुर्भगवान् परमेष्ठी ब्रह्मा नेदं मतान्तरं साधु भावयति। उत्तरनानासृष्टिबीजानामेषां सर्वेषामेव शाखासृष्टिविधावुपादेयार्थानां याथाथ्याद् भिन्नविषयत्वादविरोधाच्च। सर्वशाखकमूलसृष्टिविधौ तु सर्वेषामेषामनारम्भकत्वेन प्रत्याख्येयत्वात्। तथा हि स परमेष्ठी ब्रह्मा सर्वादिसृष्टौ सर्वेषामेषां कारणत्वं निराकरोति—

> नासदासीन्नो सदासीत् तदानीं,
> नासीद् रजो नो व्योमापरो यत्।
> किमावरीवः कुह कस्य शर्मन्
> अम्भः, किमासीद् गहनं गभीरम् ॥१॥
> न मृत्युरासीदमृतन्न तर्हि,
> न रात्र्या अह्न आसीत् प्रकेतः।
> अर्वाग्देवा अस्य विसर्जनेऽनाथाः,
> को वेद यत आबभूवेति ॥ २ ॥
>
> (ऋक्संहितायाम्)

बृंहणे बृंहणं पुनर्बृंहणमित्येवं पुनः पुनरुत्तरोत्तरं बृंहणमन्वावर्तते। प्रतिबृंहणं त्वमृतमृत्युभावयोरन्योन्यपरिग्रहो भवति। तत्र प्रथमे पर्याये रसबललक्षणौ सहचारिणावमृतमृत्यू व्याख्यातौ। अथ द्वितीये पर्याये सहचरितबलवद्रसलक्षणस्य निर्विशेषपर्यंकस्याखण्डस्य परात्परब्रह्मणो बहिर्द्धाचीयमानबलवद्रसलक्षणं द्विरूपं नित्यं बृंहणं भवति—पुरुषश्च प्रकृतिश्चेति। तदुभयममृतम्, नित्यत्वादेनयोरनादित्वम्। अथ गुणग्रामो विकारग्रामश्चेत्युभयो मृत्युः। अनित्यत्वात् प्रतिक्षणविलक्षणानामेतेषां गुणविकाराणां प्रभवप्रलययोगित्वमुपपद्यते तथा च स्मर्य्यते——

> "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि"।
> "विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान्"।

एवमुत्तरोत्तरं बृंहणे बृंहणमनवरतमनुवर्तमानं द्रष्टव्यम्। तदेव विश्वमिति। इति।

# बैन्दवं शरीरम्

( ले० सर्वतन्त्रस्वतन्त्राः महामहोपाध्यायाः पं० श्रीगोपीनाथकविराजमहाभागाः M. A. वाराणसी )

किमिदं बैन्दवं शरीरं नाम ? अस्य स्वरूपप्रयोजनोद्भवप्रकारादीनुद्दिश्य शास्त्रानुसारेण यथानुभवं संक्षेपेण किञ्चिदुच्यते।

भौतिकं शरीरं तावत् षाट्कौशिकं भोगायतनरूपं लोके प्रसिद्धम्। तत्तु प्रारब्धकर्मणः फलभोगार्थं तद्विपाकभूतम्। लिङ्गशरीरं सूक्ष्मशरीराख्यं सप्तदशावयवविशिष्टमादिसर्गे प्रकृतेराविर्भूय यावत् कैवल्यं तिष्ठति। वासनादीनामाश्रयभूतमेतत् सर्वेषु भौतिकशरीरेषु देवादितिर्यगन्तेषु सर्वथानुवर्तते। सूक्ष्मशरीरातिरिक्तं कारणशरीरमपि वेदान्तादिशास्त्रेषु क्वचित् प्रसिद्धम्। तच्च मायाजन्यं साक्षादानन्दमयकोशनाम्ना व्यपदिश्यते।

एतत् शरीरत्रयमेव प्रचलत्सु ग्रन्थादिषूपवर्णितं दृश्यते। किमिदं तुर्यं शरीरं बैन्दवाख्यमेतेषु त्रिषु शरीरेष्वन्तर्भवति ततो भिद्यते वा ? वेदान्तादिष्वप्रसिद्धमपि शरीरमिदं आगमेषु योगशास्त्रेषु च क्वचित् नामभेदेन क्वचित्स्वनाम्नैव वा वर्णितम्।

बिन्दुर्नाम महामाया, तदुद्भूतं शरीरं बैन्दवम्। महामायेयं मायातः प्रकृतितश्च स्वरूपतः पृथग्भूता शुद्धाप्यचिद्रूपा शुद्धसर्गस्योपादानभूता भगवतः परिग्रहरूपा काचित् शक्तिर्मायोर्ध्वं विराजते। द्वैतदृष्ट्या मायावन्नित्येयं महाप्रलयावसाने भगवतः परमेश्वरस्य स्वातन्त्र्यलीलस्य सिसृक्षानन्तरं शक्तिपातवशात् क्षोभमापन्ना वाच्यवाचकभेदेनार्थशब्दयोः सृष्टिं करोति।

चिद्रूपस्य परमेशस्य स्वरूपभूता समवायिनी शक्तिरपि काचित् सर्वोर्ध्वं विराजमाना तन्त्रेषु उद्घोष्यते। इयं हि शक्तिश्चिच्छक्तिरित्याख्यया प्रसिद्धा कदाचिदिच्छारूपेण कदाचिच्च क्रियारूपेण व्यपदिश्यते। परशिवस्य परमा कलेयं सर्वदा शिवेन सामरस्यं गतापि सर्गादाविच्छारूपेण क्रियारूपेण च प्रसरति। प्रसरणात् प्राक् निरिच्छः निष्क्रियः परमेश्वरः सत्यामपि स्वात्मभूतायां कलायां निष्कल इत्याख्यायते। प्रसरणमिदं स्फुरणात्मकश्चिद्रूपः पारमेश उल्लासविशेषः, न तु वैशेषिकादिसिद्धः कर्मपदार्थः साङ्ख्यादिसिद्धः परिणामपदार्थो वा।

शुद्धसर्गस्य कर्ता परमेश्वरः, करणं तस्य स्वरूपभूता चिच्छक्तिर्नित्यं तत्समवेता, उपादानं च महामायाख्यो बिन्दुः—इदमेव शैवागमप्रसिद्धं रत्नत्रयम्।

परमेश्वर एकः, तत्समवेता शक्तिरप्येकैव कृत्यवैचित्र्यान्नामभेदेन नानेव स्तूयते। परन्तु महामायेयमेकाऽपि स्वगर्भान्तरनन्तभेदधारिणी। कुण्डलिनी शब्दब्रह्मेत्यादिकं तु अस्या एव नामान्तरम्। अस्मिन् महामायागर्भे अनन्ता अनादिमलसंरुद्धशक्तय आत्मान आणवभावमापन्नाश्चिदणवो विज्ञानाकलरूपेण सुप्तास्तिष्ठन्ति। तेषु केषाञ्चिद् कालशक्तिप्रभावेण पक्वमलानां प्रबोधनाय पारमेश्वरी शक्तिस्तत्र पतति। वस्तुतस्तु कल्याणमयी शक्तिरियं स्वभावत एव तत्रानिशं पतन्ती वर्तते। परन्त्वपक्वमला अणवो बिन्दुमध्ये गाढं प्रविष्टा इति तत्र शक्त्यावेशो न भवतीति पक्वमलेषु बिन्दोरु-

दुर्गच्छत्सु केषुचिदणुष्वेव शक्तिपातः संलक्ष्यते। शक्तिपातोऽयं महाकरुणायाः संचारः, यदनन्तरमेव शक्तिपातविद्धा अणवो विदेहभावं परिहाय स्वयोग्यतानुरूपाधिकारभोगाद्यर्थं शुद्धदेहभेदानापद्यन्ते। देहास्तावदेते बैन्दवा एव, बिन्दोरुद्भूतत्वात्।

इदं बैन्दवदेहनिर्माणं यथा सृष्ट्यादौ भवति तथा स्थितिकाले संहारकालेऽपि भवति। परन्तु सृष्ट्यादौ परमा शक्तिर्निरधिकरणैव बिन्दौ पतति। कालान्तरे च साधिकरणभूता—इत्युभयोर्विशेषः। अधिकरणमिदमाचार्यदेहात्मकमवसेयम्। अर्थात् महाप्रलयावसाने शुद्धसर्गरचनार्थं परमगुरुणा परमेश्वरेण यो बिन्दुक्षोभः क्रियते तत्र तदानीं देहाद्यधिकरणानामसत्वात् भगवच्छक्तेः परार्थमधिकरणं नापेक्षते इति ज्ञेयम्। शुद्धसृष्टेरनन्तरं मायाक्षोभनिमित्तोऽशुद्धसर्गो जायते। तत्र परमेश्वरस्य साक्षात् कर्तृत्वं नास्ति, न वा साक्षाच्चिच्छक्तेस्तत्र पातोऽपि भवति। परम्परया तु उभयोः सत्वं स्वीक्रियत एव। मायाक्षोभक ईश्वरतत्त्वाश्रितो मन्त्रेश्वराधिपोऽनन्तनामा। शक्तिरपि तत्र तत्सङ्कल्पमयी नादरूपैव। तदुभयमपि बिन्दुक्षोभजन्ये शुद्धसर्गे अन्तर्भवति।

बैन्दवशरीरस्य मायाजन्यत्वाभावात् तत्राविद्याकामकर्मसंस्कारादीनामावेशो न भवति। तेन कर्मफलभोगो न सम्पद्यते इति तस्य भोगायतनत्वमपि न घटते। कलादिक्षित्यन्ततत्त्वारब्धसंसारमण्डले तादृशशरीरस्य लौकिक उपयोगोऽपि न दृश्यते। तथापि शुद्धज्ञानसन्ततेः संरक्षणार्थं मायातीतशुद्धभुवनेष्वधिकारभोगादिसम्पत्तये च तस्योपयोगो वर्तत एव। तथा च बैन्दवभुवनेषु यदधिकाराद्यैश्वर्यं भोगाद्यानन्दसम्पच्च विद्यते तत्र कर्मफलरूपता न स्वीक्रियते, परन्तु शुद्धवासनानुबन्धिनी भगवतः सावग्रहानुग्रहजन्यतैव इति ध्येयम्।

अनुग्रहश्चायं शक्तिपातापरनामा दीक्षाफलकः परमेश्वरस्य कृत्यविशेषः। यस्मिन् पशौ परमे विशुद्धे पक्वनममले भगवतः निरवग्रहोऽनुग्रहो भवति तस्य क्षणमात्रेण शिवत्वसम्पत्तिः सञ्जायते इति तस्य बैन्दवशरीरं परिगृह्य बैन्दवभुवने अधिकाराद्यर्थं प्रवेशो न युज्यते। संवेगस्य तीव्रतमतायां वैराग्योत्कर्षोदयादधिकाराद्यपेक्षाविरहे सद्य एव शिवत्वं सम्पद्यते।

परमपरं चेति परमेश्वरस्य द्विविधं स्वरूपम्। तत्रापरस्वरूपेऽपि परत्वापरत्वभेदेन पुनर्द्वैविध्यं कल्प्यते। यत् खलु परं स्वरूपं तत् निराकारं निरञ्जनं निरवद्यं चिद्घनं निष्कलं शिवरूपमेव। शक्तिश्च चिद्रूपा तत्राभेदेन शश्वद् विराजते। यदा शक्तेः समवेतत्वेऽप्युन्मेषो भवति क्रियारूपत्वपरिग्रहश्च तदा शिवस्य यद्रूपं तत् सकलमिति प्रसिद्धम्। इदमेव तावदपरं स्वरूपम्। इदं तु साकारम्। वस्तुतस्तु चिच्छक्तिर्निराकारापि व्यक्तिमापन्ना शिवस्य मूर्तिरूपेण कल्प्यते—न च तस्या वास्तवः सन्निवेशादिमय आकारविशेषः सम्भवति। इदमपरस्वरूपं बिन्दुक्षोभवशेन बिन्दुपरिणामभूतान् मूर्तिविशेषान् ईश्वरादीन् व्याप्नोति। तथा हि ईश्वरादिरूपं द्विविधम्। तत्रबिन्दुपरिणामभूतं यद्रूपं तत्तावत्पशोरधिगताधिकाराद्यवस्थस्यापरशिवभावापन्नस्य वास्तवम्। तदेव रूपं शक्त्यात्मनि स्वच्छे शिवस्वरूपे प्रतिफलितमिति उपचारेण तस्य शिवरूपत्वमप्यभिधातुं शक्यते। एवं रीत्या अपरस्वरूपस्य द्वैविध्यं सङ्गच्छते।

यत्तु कैश्चित् वैष्णवैकदेशिभिः भगवतः शुद्धचिदात्मकं शरीरं कल्प्यते तत्पूर्वप्रदर्शितोपचारन्यायेन समाधेयम्। पाञ्चरात्रावलम्बिषु वैष्णवसम्प्रदायभेदेष्वप्राकृतस्य विशुद्धसत्त्वस्यैव भगवच्छरीरत्वेनाङ्गीकारो दृश्यते। तादृशं सत्त्वं रजस्तमोमललेशास्पृष्टं साङ्ख्या-

दिष्वप्रसिद्धमपि स्वीकार्यमेव। परन्तु शुद्धमपि तत् कैश्चिदचिन्कोटौ निवेश्यते. कैश्चिच्च चित्कोटौ। विस्तरस्तु तन्त्वत्रयतत्त्वमुक्ताकलापादिषु मध्वसिद्धान्तसारादिषु अणुभाष्यतत्त्वदीपनिबन्धादिषु भागवतसन्दर्भादिषु चानुसन्धेयः। शुद्धसत्त्वस्याचिन्कोटौ निवेशपक्षे तस्य भगवद्देहाङ्गीकारे तादृशदेहस्योपचारनीत्यैव भागवतत्वमङ्गीकार्यम्। अन्यथा परचित्स्वरूपस्य भगवतः शुद्धया अपि अचिता साक्षात् सम्बन्धः स्वीकरणीयः स्यात्। शैवशाक्तागमेषु तादृशः सम्बन्धो नाङ्गीक्रियते।

गुरुदेहः शिष्यदेहश्चोभावपि बैन्दवावेव। अयमेव देहो 'विशुद्धज्ञानदेह' इति प्रसिद्धः। सद्गुरोः शक्तिपातमहिम्ना यदा कुण्डलिनी क्षोभमापन्ना प्रबुद्धा सती सुषुम्णावर्त्मना नादात्मनोच्चरति तदैव नादमयस्य बैन्दवदेहस्योदयो भवति। देहोऽयं नादात्मकोऽपि शुद्धतत्त्वमय इति शब्दार्थयोः सममेव विन्दुत उद्भवस्वीकारात् पर्यवस्यति। उदितोऽप्ययं देहो योगाभ्यासक्रमेण परिपाकमापन्नो विकसितः सन् साक्षात्कारयोग्यो भवति ज्ञानचक्षुषाम्। एतादृशदेहाभावेन पुरुषो लौकिकविद्यानां पारङ्गतोऽपि पारमार्थिकविद्यादानकर्मणि दीक्षाख्ये शक्तो न भवति। यस्य स्वयमेव ज्ञानदेहो नास्ति स कथमन्यस्य तादृशं देहमुत्पादयितुं शक्नुयात्? स कथमन्यं शिष्यत्वेन परिगृह्णीयात्? ज्ञानशरीरं विहाय गुरोर्गुरुत्वं शिष्यस्य शिष्यत्वं चापार्थकमेव। अत एव ज्ञानतन्तोः संरक्षणार्थं बैन्दवशरीरस्योपयोग इति पुरस्तादुक्तम्।

शुद्धसर्गे विद्यातत्त्वाश्रितानां मन्त्राणामीश्वरतत्त्वाश्रितानां मन्त्रेश्वराणां सदाशिवतत्त्वाश्रितानां संस्कार्यसदाशिवानां च बैन्दवदेहयोगः स्पष्ट एव। समानेऽप्यत्र बैन्दवदेहसम्बन्धे तत्र तत्र चैतन्याभिव्यक्तेर्विशेषो दृश्यते। तथा च महाकृपावतः परमशिवस्य जीवोद्धारकर्मणि मन्त्राणां करणत्वेन गुरुरूपाणां मन्त्रेश्वराणां च कर्तृत्वेनोपयोगो भवति। तत्र करणानां कर्तृप्रयोज्यत्वेन मन्त्रेभ्यस्तदीश्वराणामाधिक्यं स्फुटं प्रतीयते। इदं तावदाधिक्यं क्रियाशक्तेर्विलासकृतमित्येव सुष्ठु समाधानम्, शुद्धभुवनस्थानां मन्त्रमन्त्रेश्वराणां तत्परिकरभूतानामपरेषामपि सर्वेषां ज्ञानशक्तिमत्त्वस्य विभुत्वादिगुणवर्गस्य च समानत्वदर्शनात्। अभिन्नज्ञानक्रिययोश्चैतन्यत्वाङ्गीकारेणाधारभेदेषु ज्ञानशक्तेः साम्येऽपि क्रियाशक्तेर्विषमतादर्शनात्क्रियाशक्तिवैचित्र्यकृतमेव शुद्धभुवनस्याधिकारादि वैचित्र्यमिति तात्पर्यम्।

शुद्धभुवनेषु तत्तत्कर्मसम्पादनायाधिकारिकपदमधितिष्ठतां विशुद्धभोगपदप्राप्तानां च बैन्दवशरीरयोगो वर्तत इत्युक्तम्। न तावदेतावदेव सर्वम्। तेषु तेषु भुवनेषु तत्तद्भुवनेश्वराणामाराधनादिनापि भक्तानां प्रवेशो भवति। तत्र प्रविष्टानां तेषामपि बैन्दवशरीरयोगो भवति। दीक्षाकर्मणा यद्बैन्दवं शरीरं लभ्यते तत्तु सिद्धं राजपदार्हं, न तथा भक्तानां सालोक्यादिमुक्तिभाजाम्। मायिकदिव्यभुवनेषु दिव्यदेहभाजामाजानजकर्मजभेदभिन्नतावद् बैन्दवशरीरस्यापि भेदोऽवसेयः। मायिकसर्गे सकलपशूनामपि मलपाकविशेषवतां भगवतः साधिकरणानुग्रहजन्यं बैन्दवशरीरं जायते। एतच्छरीरं तु प्रारब्धक्षयनिमित्तककर्मजन्यदेहपातात्प्राङ्मायिकशरीरेण सह तादात्म्यापन्नमिव तिष्ठति। तद्देहपातानन्तरं शुद्धाधिकारभोगादिवासनासु शिष्टासु बैन्दवभुवने गतिर्भवति, अन्यथा तादृशपशूनां देहपातेन सहैव शिवत्वं भवति।

बैन्दवशरीरसम्बन्ध एव जीवन्मुक्तिः तदूर्ध्वं शाक्तरूपाभ्युपगमः परामुक्तिरिति केषांचिन्मतम्। एतत्तु न रमणीयम्। सद्गुरोः कृपाकटाक्षेण पौरुष-

मज्ञानं सद्यो निवर्तते, परन्तु बौद्धमज्ञानं यथापूर्वं तिष्ठत्येव। साधनादिना योगाभ्यासेन च 'शिवोऽहम्' इति बौद्धज्ञानोदये बौद्धाज्ञानमपि निवर्तते। तदानीं शिवोऽहमिति ज्ञानोदयात् जीवन्मुक्तिपदवाच्यमिभवति। बौद्धज्ञानमिदं पौरुषज्ञानस्याभावेऽपि वर्तमानदेहसम्भूतम्। विशुद्धं पौरुषज्ञानं तु मायादेहपातानन्तरमेव भवति—तत्तु शिवत्वावाप्तिरेव। येषां तावद् चित्ते बौद्धज्ञानं न भासते तेषां पौरुषज्ञाननिवृत्तावपि जीवन्मुक्तिमुखं नोदेति, बौद्धाज्ञाननिवृत्तेः 'शिवोऽहमिति' प्रतीतिरनुद्भवात्।

बैन्दवदेह एव कदाचित् लिङ्गदेह इति नाम्ना कदाचित् दिव्यदेह इति नाम्ना च तत्र तत्र ख्याप्यते। दत्तात्रेयमार्गे 'महाकारणदेह' संज्ञया देहोऽयं श्रुतिसिद्धान्तसारादिषु प्रसिद्धः। गोरक्षजलन्धरादिभिर्महासिद्धैर्देहसिद्धेर्यदुपवर्णनं विस्तरेण कृतं तदपि संज्ञान्तरेण बैन्दवदेहाधिगतरूपमेव प्रतिभाति। तत्रोपायनिर्देशोऽपि दृश्यते। उपायः कोऽपि भवतु,—शुद्धपवनः ( यथा हठयोगिनाम् ), अष्टादशसंस्कारसंस्कृतो रसः ( यथा रसवादिनाम् ) चन्द्रकला ( यथा कापालिकानाम् ) स्वदेहसम्भृतमोजो वज्रोल्यादिप्रक्रियाविशेषेण ऊर्ध्वं नीतम् ( यथा वज्रयोगिनां सहजोपासकानां च ) अन्यः कोऽपि वा भवतु—सर्वत्रैव सर्वाधिष्ठानभूतायाः महामायाकायाः कुण्डलिन्याः क्षोभः तज्जन्यः परिणामश्च केनचिदपि स्वरूपेणानुवर्तत एव।

सौगतमते रूपधातुवर्तिनां देवनिकायानां देहा अपि बैन्दवतुल्या एव तेषां रूपध्यानजन्यात् तत्र कामजदोषाणामसत्त्वात्। परन्तु सुगतानां निर्माणसम्भोगादिकायभेदस्तु विशुद्धतरशाक्तरूपकल्पः बैन्दवदेहसदृशोऽपि न सर्वथा तत्समः। नाथमार्गे देहसिद्धिवन्महायानमार्गेऽपि स्कन्धसिद्धेराश्रयपरावृत्तेश्च भूयो भूयो विवरणमुपलभ्यते। [illegible] [illegible] नीयकालचक्रयानीयचर्यादिषु न सर्वमिदमस्पष्टम्।

अशुद्धमायिकदेहेनो [illegible] न [illegible] सर्वत्रैव देहशुद्धेः प्रयोजन [illegible] [illegible] देवं यजेत्" [illegible] [illegible] [illegible] मान्त्रिकैश्चामकृदावेदितम्। [illegible] परमार्थः। योगवृन्दादि [illegible] ज्ञानादयन्ते भूतशुद्ध्यादीनां क्रियाणां यथायथमनुष्ठानं [illegible] [illegible]। अशुद्धमुपादानं [illegible] [illegible] चोपासनायोग्यस्य शुद्धदेहस्य [illegible] [illegible] देहे अधिष्ठानं च इत्येव भूतसंस्कारस्य मुख्यं [illegible]।

प्रस्थानभूयिष्ठेऽस्मिन्देशे तावत् बिन्दुस्वरूपमुद्दिश्य वासनाभेदेन भिन्नाः काश्चिद् विचारधाराः प्रवृत्ता उपलभ्यन्ते। तत्र काचिदेव प्रक्रियात्र संक्षेपेणोपवर्ण्यते। चिच्छक्तिः पारमेश्वरी कला नित्यं परमेशाश्रितापि सर्गादौ तदिच्छावशेन पृथगिवावभासते—अस्याः शक्तेर्नाद उद्भवति नादाच्च बिन्दुः। कार्यजातं प्रलयकाले ब्रह्मप्रकृतौ लीनं तिष्ठति, प्रलयान्ते तत्रैव पुनराविर्भवति च। आविर्भावकाले शक्तेरुन्मेषः सर्वादौ भवति-व्यक्तरूपेयमाद्या शक्तिः केश्चिन् क्रियानाम्ना केश्चिदिच्छानाम्नाभिधीयते। यथा तिलेषु तैलमव्यक्तात्मना वर्तमानमपि न संलक्ष्यते, निष्पीडनेन व्यज्यमानं तु लक्ष्यते, तथा परा शक्तिः शिवतत्त्वेनैकत्वं गता विलीनकल्पेव तिष्ठति प्रलयकाले, परिस्फुरति च सर्गकाले। ब्रह्मादिमूर्तयोऽस्या एव रूपभेदाः। व्यक्तरूपाया महाशक्तेरस्या लक्ष्यालक्ष्यभेदेन रूपद्वयं विद्यते। तत्र नादपदवाच्यं यद् रूपं तद् लक्ष्यं तत्प्राक्तनं च अलक्ष्यमिति भेदः। प्रलयस्तु सुषुप्तिवदवस्थाविशेषः। यथा सुप्तौ जीवस्य निखिलं ज्ञानं लीयते स्वसत्ताबोधोऽपि स्पष्टतया न भासते, सुप्तिभङ्गे च सर्वमेव स्मृतिरूपेण पुनरुदेति, तथा महाप्रलयान्ते

ब्रह्मप्रकृतौ विनष्टसर्गस्य पुनर्दर्शनाकाङ्क्षा जायते। इयं तावदिच्छाशक्तेः स्वरूपम्। तदानीं भावादर्शनरूपमभावज्ञानमाविर्भवति। एतच्छून्यकल्पनं महामायारूपं प्रतिबिम्बाकाशभूतम्। यस्येच्छया शून्यरूपेयं महामाया प्राकट्यं गता स एव महामायाधीशः परमात्मा।

इच्छायाः शून्यदर्शनकाले शक्तेर्नादरूपेण शून्याकाशव्यापनात् अस्फुटो नादध्वनिः निरन्तरं स्फुरति। नादस्य ज्योतीरूपतया नादव्याप्तिरियं ज्योतिर्व्याप्तिरिति मन्तव्यम्। शून्यकल्पनं नादेन तद्व्यापनं च इच्छायाः प्रथमा क्रिया एतद् द्वयमपीच्छात्मकमेव।

अयमादिनाद इतः परं क्रियाशक्तिप्रधानं बिन्दुरूपं धत्ते। नादस्य ज्योतिरात्मकत्वात् समन्तात् व्याप्ता किरणधारैवेच्छया घनीभावमापन्ना बिन्दुपदवाच्या भवति। बिन्दुत एव क्रियाप्रसरः। चिच्छक्तेर्मायाकृतं विलयनं नादः, नादस्य च केन्द्राभिकर्षणेन सञ्जातो बिन्दुः। उभयोर्न वस्तुतो भेदः कश्चित्। विलीयमानतया नादे ज्योतिःप्रकाशो न लक्ष्यते, बिन्दौ तु स स्फुटीभवति।

नादाभिव्यक्तेः प्राक्तनी शक्तिः निर्वाणकला, शक्तेर्नादात्मना प्रसरोऽमा कला--इति कलाद्वयस्य विशेषो ज्ञेयः। ❀

पूर्वोपवर्णितो बिन्दुरेव आदिबिन्दुरिति परबिन्दुरिति चाख्यायते। स्वस्वरूपजिज्ञासया वा कस्मादप्यन्यस्मात् कालादिनिमित्तभेदाद् वा बिन्दुरयं बिन्दुनादबीजात्मना भिद्यते। बिन्दुभेदात् प्राक् या ब्रह्मप्रकृतेः क्रिया साऽव्यक्ता, तदनन्तरभाविनी या सा तु व्यक्ता।

सहस्रदलकमलस्य कर्णिकायां यद् ब्रह्मरन्ध्राख्यं महाशून्यं विद्यते जरायुमध्ये देहनिर्माणकाले तदेव प्रथममुत्पद्यते इति केषाञ्चिन्मतम्। तस्मिन् रन्ध्रे मनसः सम्यग्लये सञ्जाते असंप्रज्ञातसमाधेरुन्मन्यवस्थाया बोदयो भवति। तदानीं मनसो या निश्चला दशा सैव चित्तवृत्तीनां निरोधात्मको योगः, तदेव परप्रमातुः स्वरूपस्थितिरूपं निर्गुणं शिवपदम्। तत्र महाप्रलयावसाने भगवतः सिसृक्षारूपाया इच्छाशक्तेराविर्भावो भवति, तत्रैव चादिनादस्य साक्षात्कारो भवति। आदिनादोऽयं क्वचित् व्यापिकाशक्तिरूपेण क्वचिच्चामाख्यषोडशीकलासंज्ञया वर्णितो दृश्यते। अव्याकृतेच्छाशक्तिः खलु सप्तदशी कला यत्र मनः सुसूक्ष्मतया गुप्तमपि योगिभिर्लक्ष्यते। शून्याख्यं शिवपदं तु शक्तेरुन्मन्यावस्था। येषां मते उन्मन्या इच्छाशक्तेश्चाभेद इष्यते तत्रान्तिमपदद्वयमभिन्नतया ग्राह्यम्। निर्गुणः शिवोऽकुलं तदिच्छारूपा जगद्योनिस्वरूपा शक्तिः कुलम्—इति कुलाकुलविवेकः। कुलमिदं विसर्गमण्डलमिति नाम्नाऽप्यभिधीयते।

आदिनाद आदिबिन्दुश्चाद्याशक्तेः स्वरूपं ब्रह्मण-

❀अनुत्तरप्रकाशस्य विसिसृक्षाख्या या परमा शक्तिः ( अ ) सैवामानाम्नी सप्तदशी कला, सेयं नित्योदितामृतस्वरूपा निखिलकलानामाप्यायनकारिणी। कौलिकी शक्तिरियं परप्रमातरि सदाऽभेदेन विद्यमानापि कदाचिद् बहिरुन्मुखी भवति। एतद् बहिरौन्मुख्यं हि तस्याः क्षोभः। तेन क्षोभेन विसिसृक्षा विसर्गो भवति, तत आनन्दोदयः। विसर्गोऽयं परो विसर्गः सूक्ष्मरूप ( आ ) इति ध्येयम्। एतदेव अकारादाकारोदयरहस्यम्। अपरो विसर्गस्तावत् हकारात्मकः स्थूलः। अस्य विसर्गद्वयस्य स्वस्वरूपस्थमात्मभूतं यद्बिन्दुद्वयं वर्तते तस्य गत्या—अवभासनपूर्वकप्रसरणेन—विसर्पतीयं परमा कला। इत्थमेव तत्तद्रूपस्यावभासनं सम्भवति नान्यथा। सर्वेषामपि वस्तूनां प्रमातृ-प्रमाण-प्रमेयरूपाणाम् प्रमातुः अनतिरिक्तत्वेऽपीयं तत्सर्वमतिरिक्ततयेव तत्तन्नियतप्रकाशरूपेणैव प्रकाशयति। अमाशक्तिर्विसर्गहीना ( बहिरुन्मुखताविरहात् ) प्रसुप्तभुजगाकारा परसंविद्रूपा शक्तिकुण्डलिनीति व्यपदिश्यते। अत एव विसर्गस्य कोटिद्वये कुण्डलिनीद्वयमवभासते—बहिरुन्मुखताकोटौ प्राणकुण्डलिनी तदितरकोटावन्तर्भावोन्मुखतारूपायां स्वात्मविश्रान्तपरसंविन्मात्रा परा कुण्डलिनी——इति त्रिशिरोभैरवमतम्।

स्तुर्यं शरीरम्। इदमेव संसारवृक्षस्य मूलभूतं ब्रह्मरन्ध्रस्योर्ध्वस्थे महाशून्ये स्थितम। शिवस्य शक्तौ प्रतिफलनं भवति शक्तेश्च शिवे इत्युभयोः परस्परप्रतिफलनोद्भूता या माया ततः सर्गादिभूतौ नादबिन्दू आविर्भवतः। अयमाविर्भावः आद्याशक्तेः प्रथम उन्मेषः विसर्गाख्यो वेदितव्यः। अत्रैव नादबिन्द्वात्मना सृष्टेरङ्कुरो लक्ष्यते। विसर्गस्थानमिदं नित्यानन्दमयमिति शास्त्रेषु प्रसिद्धिः। ‡

बिन्दुभेदेन बिन्दुबीजनादात्मना या त्रिकोणभूमिराविर्भूता सैव शब्दब्रह्मरूपा कुलकुण्डलिनी ब्रह्मणः कारणशरीरम् तस्याः शक्तिरूपतया कुलत्वम्,तत्त्वत्रयस्य कुण्डलाकारयन्त्ररूपतया च कुण्डलिनीत्वम्। जगदुपादानभूतानि सूक्ष्मतत्त्वानि त्रिकोणादस्मान्निःसृत्य रन्ध्रस्य निम्नप्रदेशेषु भालमध्यमारभ्य मेरुरथचक्रपर्यन्तं सर्वत्र स्थितानि। त्रिष्वेतेषु तत्त्वेषु बिन्दुः शिवात्मकः, बीजं शक्त्यात्मकं, नादश्च उभयोर्मिथः समवाय इति वेदितव्यम्। बिन्दुरयमपरः कार्यरूपः, बीजञ्च 'अकथादि' रेखात्रयघटितनिखिलवर्णावलीसमन्वितत्रिकोणात्मकम्। बिन्दुना क्षोभकेण बीजे क्षुब्धे नादः संजायते। परबिन्दोर्भिद्यमानाद् बिन्दुबीजयोरुद्भवः। अपरबिन्दुना क्षुब्धाद् बीजान्नादस्योद्भवः— इत्येकः कालः। परस्मिन् बिन्दौ शिवशक्त्योरविभागो वर्तते, अपरबिन्दौ तावत् शिवांशस्य प्राधान्यम्। अविभक्ते परबिन्दौ इच्छादीनां शक्तीनामभिव्यक्तिर्न भवति। बिन्दुभेदेन योऽव्यक्तात्मा रवो जायते स एव महानादः, बिन्दुबीजयोः सङ्घट्टादुत्पद्यमानो ध्वनिस्तु नाद इति महानादनादयोर्विवेकः। नादेऽस्मिन्नकारादिक्षकारान्तवर्णानामव्यक्तो ध्वनिर्लक्ष्यते। पूर्वोपवर्णितो महानाद एव शब्दब्रह्मापरनाम्ना कुण्डलिन्यात्मना परिणतः सन् प्राणिनां देहमध्ये राजमानो वर्णरूपेणाविर्भवति।

उपासकैः साधितो मन्त्रः सुषुम्णाध्वनि-सूक्ष्मतया ध्वनितो बीजजातनादपर्यन्तं प्रसरति तत्रैव लीयते च। महानादपर्यन्तं तस्य गतिर्न सम्भवति वायोस्तत्र प्रवेशासम्भवात्। महानादस्योर्ध्वं शक्त्यात्मिका कोटिरेका ब्रह्मरन्ध्रस्य मध्यस्थे इच्छाकारणभूते अव्यक्तादिनादे लीना तिष्ठति। अपरा कोटिस्तावदधःशक्तिरूपेण भ्रूमध्यं भित्वा मेरौ प्रसरति। मेरोरधःप्रदेशे मूलाधारचक्रे सैव कुण्डल्यात्मना परिणता भवति। अकारादिवर्णमालासमन्वितं पूर्वोक्तं बीजमत्रत्यमधः शक्तौ विद्यमानतया भावनीयम्। ऊर्ध्वाधः शक्तिद्वयस्य सन्धिस्थले परो बिन्दुर्भावनीयः। स एव महाकालः, यत्र स्वशक्त्या लिङ्गितं श्रीगुरुवपुः योगिभिश्चिन्त्यते। महानादरूपादादिप्रणवादेव हंसाख्यौ प्रकृतिपुरुषौ निःसरतः।

एतावत्पर्यालोचनया सिद्ध्यति यदद्वैतनये बिन्दुनादकलादीनामन्ततश्चिच्छक्तेरेव विलासरूपत्वाद् बैन्दवशरीरमपि चिन्मयमेव ग्राह्यमिति। बिन्दोः परापरभेदेन तच्छरीरस्य परत्वापरत्वविभागेऽपि चिन्मयत्वस्य सर्वत्र समानत्वम्। वैसर्गिकीकलारहस्यं बिन्दुरहस्यं च तुल्यमेव।

‡ तथा च कंकालमालिनीवचनम्—"तस्मिन् रन्ध्रे विसर्गं च नित्यानन्दं निरञ्जनम्" इति।

ब्रह्मप्रकृतौ विनष्टसर्गस्य पुनर्दर्शनाकाङ्क्षा जायते। इयं तावदिच्छाशक्तेः स्वरूपम्। तदानीं भावादर्शनरूपमभावज्ञानमाविर्भवति। एतच्छून्यकल्पनं महामायारूपं प्रतिबिम्बाकाशभूतम्। यस्येच्छया शून्यरूपेयं महामाया प्राकट्यं गता स एव महामायाधीशः परमात्मा।

इच्छायाः शून्यदर्शनकाले शक्तेर्नादरूपेण शून्याकाशव्यापनात् अस्फुटो नादध्वनिः निरन्तरं स्फुरति। नादस्य ज्योतीरूपतया नादव्याप्तिरियं ज्योतिर्व्याप्तिरिति मन्तव्यम्। शून्यकल्पनं नादेन तद्व्यापनं च इच्छायाः प्रथमा क्रिया एतद् द्वयमपीच्छात्मकमेव।

अयमादिनाद इतः परं क्रियाशक्तिप्रधानं बिन्दुरूपं धत्ते। नादस्य ज्योतिरात्मकत्वात् समन्तात् व्याप्ता किरणधारैवेच्छया घनीभावमापन्ना बिन्दुपदवाच्या भवति। बिन्दुत एव क्रियाप्रसरः। चिच्छक्तेर्मायाकृतं विलयनं नादः, नादस्य च केन्द्राभिकर्षणेन सञ्जातो बिन्दुः। उभयोर्न वस्तुतो भेदः कश्चित्। विलीयमानतया नादे ज्योतिःप्रकाशो न लक्ष्यते, बिन्दौ तु स स्फुटीभवति।

नादाभिव्यक्तेः प्राक्तनी शक्तिः निर्वाणकला, शक्तेर्नादात्मना प्रसरोऽमा कला--इति कलाद्वयस्य विशेषो ज्ञेयः। ❀

पूर्वोपवर्णितो बिन्दुरेव आदिबिन्दुरिति परबिन्दुरिति चाख्यायते। स्वस्वरूपजिज्ञासया वा कस्मादप्यन्यस्मात् कालादिनिमित्तभेदाद् वा बिन्दुरयं बिन्दुनादबीजात्मना भिद्यते। बिन्दुभेदात् प्राक् या ब्रह्मप्रकृतेः क्रिया साऽव्यक्ता, तदनन्तरभाविनी या सा तु व्यक्ता।

सहस्रदलकमलस्य कर्णिकायां यद् ब्रह्मरन्ध्राख्यं महाशून्यं विद्यते जरायुमध्ये देहनिर्माणकाले तदेव प्रथममुत्पद्यते इति केषाञ्चिन्मतम्। तस्मिन् रन्ध्रे मनसः सम्यग्लये सञ्जाते असंप्रज्ञातसमाधेरुन्मन्यवस्थाया वोदयो भवति। तदानीं मनसो या निश्चला दशा सैव चित्तवृत्तीनां निरोधात्मको योगः,तदेव परप्रमातुः स्वरूपस्थितिरूपं निर्गुणं शिवपदम्। तत्र महाप्रलयावसाने भगवतः सिसृक्षारूपाया इच्छाशक्तेराविर्भावो भवति, तत्रैव चादिनादस्य साक्षात्कारो भवति। आदिनादोऽयं क्वचित् व्यापिकाशक्तिरूपेण क्वचिन्नामाख्यषोडशीकलासंज्ञया वर्णितो दृश्यते। अव्याकृतेच्छाशक्तिः खलु सप्तदशी कला यत्र मनः सुसूक्ष्मतया गुप्तमपि योगिभिर्लक्ष्यते। शून्याख्यं शिवपदं तु शक्तेरुन्मन्यावस्था। येषां मते उन्मन्या इच्छाशक्तेश्चाभेद इष्यते तत्रान्तिमपदद्वयमभिन्नतया ग्राह्यम्। निर्गुणः शिवोऽकुलं तदिच्छारूपा जगद्योनिस्वरूपा शक्तिः कुलम्—इति कुलाकुलविवेकः। कुलमिदं विसर्गमण्डलमिति नाम्नाऽप्यभिधीयते।

आदिनाद आदिबिन्दुश्चाद्याशक्तेः स्वरूपं ब्रह्मण-

❀अनुत्तरप्रकाशस्य विसिसृक्षाख्या या परमा शक्तिः ( अ ) सैवामानाम्नी सप्तदशी कला. सेयं नित्योदितामृतस्वरूपा निखिलकलानामाप्यायनकारिणी। कौलिकी शक्तिरियं परप्रमातरि सदाऽभेदेन विद्यमानापि कदाचिद् बहिरुन्मुखी भवति। एतद् बहिरौन्मुख्यं हि तस्याः क्षोभः। तेन क्षोभेन विसिसृक्षा विसर्गो भवति, तत आनन्दोदयः। विसर्गोऽयं परो विसर्गः सूक्ष्मरूप ( आ ) इति ध्येयम्। एतदेव अकारादाकारोदयरहस्यम्। अपरो विसर्गस्तावत् हकारात्मकः स्थूलः। अस्य विसर्गद्वयस्य स्वस्वरूपस्थमात्मभूतं यद्बिन्दुद्वयं वर्तते तस्य गत्या—अवभासनपूर्वकप्रसरणेन—विसर्पतीयं परमा कला। इत्थमेव तत्तद्रूपस्यावभासनं सम्भवति नान्यथा। सर्वेषामपि वस्तूनां प्रमातृ-प्रमाण-प्रमेयरूपाणाममाताऽनतिरिक्तत्वेऽपीयं तत्सर्वमतिरिक्ततयेव तत्तन्नियतप्रकाशरूपेणैव प्रकाशयति। अमाशक्तिर्विसर्गहीना ( बहिरुन्मुखताविरहात् ) प्रसुप्तभुजगाकारा परसंविद्रूपा शक्तिकुण्डलिनीति व्यपदिश्यते। अत एव विसर्गस्य कोटिद्वये कुण्डलिनीद्वयमवभासते—बहिरुन्मुखताकोटौ प्राणकुण्डलिनी तदितरकोटावन्तर्भावोन्मुखतारूपायां स्वात्मविश्रान्तपरसंविन्मात्रा परा कुण्डलिनी——इति त्रिशिरोभैरवमतम्।

स्तुर्यं शरीरम्। इदमेव संसारवृक्षस्य मूलभूतं ब्रह्मरन्ध्रस्योर्ध्वस्थे महाशून्ये स्थितम। शिवस्य शक्तौ प्रतिफलनं भवति शक्तेश्च शिवे इत्युभयोः परस्परप्रतिफलनोद्भूता या माया ततः सर्गादिभूतौ नादबिन्दू आविर्भवतः। अयमाविर्भावः आद्याशक्तेः प्रथम उन्मेषः विसर्गाख्यो वेदितव्यः। अत्रैव नादबिन्द्वात्मना सृष्टेरङ्कुरो लक्ष्यते। विसर्गस्थानमिदं नित्यानन्दमयमिति शास्त्रेषु प्रसिद्धिः। ‡

बिन्दुभेदेन बिन्दुबीजनादात्मना या त्रिकोणभूमिराविर्भूता सैव शब्दब्रह्मरूपा कुलकुण्डलिनी ब्रह्मणः कारणशरीरम् तस्याः शक्तिरूपतया कुलत्वम्,तत्त्वत्रयस्य कुण्डलाकारयन्त्ररूपतया च कुण्डलिनीत्वम्। जगदुपादानभूतानि सूक्ष्मतत्त्वानि त्रिकोणादस्मान्निःसृत्य रन्ध्रस्य निम्नप्रदेशेषु भालमध्यमारभ्य मेरुस्थचक्रपर्यन्तं सर्वत्र स्थितानि। त्रिष्वेतेषु तत्त्वेषु बिन्दुः शिवात्मकः, बीजं शक्त्यात्मकं, नादश्च उभयोर्मिथः समवाय इति वेदितव्यम्। बिन्दुरयमपरः कार्यरूपः, बीजञ्च 'अकथादि' रेखात्रयघटितनिखिलवर्णावलीसमन्वितत्रिकोणात्मकम्। बिन्दुना क्षोभकेण बीजे क्षुब्धे नादः संजायते। परबिन्दोर्भिद्यमानाद् बिन्दुबीजयोरुद्भवः। अपरबिन्दुना क्षुब्धाद् बीजान्नादस्योद्भवः—इत्येकः कालः। परस्मिन् बिन्दौ शिवशक्त्योरविभागो वर्तते, अपरबिन्दौ तावत् शिवांशस्य प्राधान्यम्। अविभक्ते परबिन्दौ इच्छादीनां शक्तीनामभिव्यक्तिर्न भवति। बिन्दुभेदेन योऽव्यक्तात्मा रवो जायते स एव महानादः, बिन्दुबीजयोः सङ्घट्टादुत्पद्यमानो ध्वनिस्तु नाद इति महानादनादयोर्विवेकः। नादेऽस्मिन्नकारादिक्षकारान्तवर्णानामव्यक्तो ध्वनिर्लक्ष्यते। पूर्वोपवर्णितो महानाद एव शब्दब्रह्मापरनामा कुण्डलिन्यात्मना परिणतः सन् प्राणिनां देहमध्ये राजमानो वर्णरूपेणाविर्भवति।

उपासकैः साधितो मन्त्रः सुषुम्णाध्वनि-सूक्ष्मतया ध्वनितो बीजजातनादपर्यन्तं प्रसरति तत्रैव लीयते च। महानादपर्यन्तं तस्य गतिर्न सम्भवति वायोस्तत्र प्रवेशासम्भवात्। महानादस्योर्ध्वशक्त्यात्मिका कोटिरेका ब्रह्मरन्ध्रस्य मध्यस्थे इच्छाकारणभूते अव्यक्तादिनादे लीना तिष्ठति। अपरा कोटिस्तावदधःशक्तिरूपेण भ्रूमध्यं भित्वा मेरौ प्रसरति। मेरोरधःप्रदेशे मूलाधारचक्रे सैव कुण्डल्यात्मना परिणता भवति। अकारादिवर्णमालासमन्वितं पूर्वोक्तं बीजमस्यामधः शक्तौ विद्यमानतया भावनीयम्। ऊर्ध्वाधः शक्तिद्वयस्य सन्धिस्थले परो बिन्दुर्भावनीयः। स एव महाकालः, यत्र स्वशक्त्या लिङ्गितं श्रीगुरुवपुः योगिभिश्चिन्त्यते। महानादरूपादादिप्रणवादेव हंसाख्यौ प्रकृतिपुरुषौ निःसरतः।

एतावत्पर्यालोचनया सिद्ध्यति यदद्वैतनये बिन्दुनादकलादीनामन्ततश्चिच्छक्तेरेव विलासरूपत्वाद् बैन्दवशरीरमपि चिन्मयमेव ग्राह्यमिति। बिन्दोः परापरभेदेन तच्छरीरस्य परत्वापरत्वविभागेऽपि चिन्मयत्वस्य सर्वत्र समानत्वम्। वैसर्गिकीकलारहस्यं बिन्दुरहस्यं च तुल्यमेव।

‡ तथा च कंकालमालिनीवचनम्—"तस्मिन् रन्ध्रे विसर्गं च नित्यानन्दं निरञ्जनम्" इति।

# लौकायतिकमतरहस्यम्

[ लेखकाः श्रीमन्माध्वसंप्रदायाचार्य्य-दार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्नदामोदरगोस्वामिनः (वाराणसी) ]

अन्यान्यदर्शनानां विषयाः सन्त्यौपकारिणकाः प्रायः लौकायतिकरहस्यं श्रोतृश्रवणातिथीयतामद्य,

अयि "संस्कृतरत्नाकर" वाचकवृन्द !

अचिराय प्रकाशनीये संस्कृतरत्नाकरविशेषाङ्के समाविवेशयिषितव्येषु विषयेषु लौकायतिकमतप्रमाणतत्व दिग्दर्शनं विपश्चित्कुतूहलायाहं निरदीधरम्।

सर्वपथीनशेमुषीकाणां भवादृशामेतत्तु नानवगतचरं संभाव्यते ; यदद्यत्वे प्रचर्चूर्य्यमाणेषु दर्शनविवादेषु चार्वाकापराख्यलौकायतिकविचारोऽपि किलान्यतमत्वेन जागरूकोऽस्ति,

परन्त्वितो भिन्नैरखिलैरपि दर्शनैरेतद्दर्शनं नितान्तमनास्थेयतां बहुतिथादनेहसो नीयमानमस्तीत्यप्यतिरोहितमेव,

ईदृश्यनास्थायां निदानं तु निपुणतरमन्विष्यमाणमपि केवलमाहोपुरुषिकामपहाय नापरं विवेकपदवीमध्यास्ते ,

यद्यप्यदसीयप्रस्थानसरणिरैहलौकिकेतरवस्तुविचारधोरणी कूलङ्कषेव, सुदृढप्रमाणकदम्बप्राकारक्रोडस्थवैदिकसिद्धान्तदुर्गाभ्रंलिहवैजयन्तीमवनिनमयिषुरिव, प्रत्यक्षेतरप्रमाणतत्त्वापनोदनवाशंवदीनान्तरीयकागमविगानाकुलस्वान्तारितकनिकुरम्बारुन्तुदवाग्विस्तराऽपि, तथाऽपि समन्वयघण्टापथाध्वनीनराद्धान्तरीत्यवलम्बिसर्वजनीनतात्पर्यपरिपन्थित्वमुष्टिन्धम-'स्थूणानिखनन' -न्यायसध्रीचीननिश्चिकीषाशालिनां तैथिकानामनवद्यैदमित्थम्यपर्यालोचनचणचतुरिमगृह्यतैनयाऽपि यथा माविरौत्सीत्तथैव वस्तुयाथातथ्येन भवितव्यमिति विमत्सराणां विदुषां परामर्शोऽखिलोद्वेगप्रशमनं शरणं बेभ्रेजीत्येव,

तदीयाभ्युपगमदत्तहस्तावलम्बं तावत्प्रत्यक्षादितरेषां परैः प्रमाणत्वेनाभ्युपगतानामनुमानोपमानशब्दार्थापत्त्यनुपलब्धिसंभवैतिह्यचेष्टानां प्रमाणाभावव्युदसनमरोचयमानाः प्रत्यवस्थाय कलहायितुमुपक्रान्तविक्रमा भूयांसो दार्शनिकाश्चकासति सारस्वतसाम्राज्ये।

ये हि सर्वदैवाहोरात्रमनुमानादिभिर्व्यवहरमाणानां लौकिकानामप्यात्मनीनप्रवृत्त्यौपयिकाशयं गृहयालूनामभिप्रायोहाप्रयोजकमेतेषां प्रमाणत्वं प्रत्यक्षमात्रैकग्रहिलेन चार्वाकेण कथंकारमपह्नवनीयमिति भणन्तो विवदन्तेऽधिवादाहवम्।

अत्रेत्थं विचार्यते—प्रत्यक्षादिचेष्टाऽन्तेषु नवस्वेवागमिकः प्रमाणत्वं; चरमां चेष्टां विहायाष्टसु पौराणिकस्तद्; ऐतिह्यमुज्झित्वा सप्तसु ज्यौतिषिकस्तत्; संभवमपहाय षट्सु वेदान्तिष्वद्वैतवादी तद्; अनुपलब्धिमपसार्य पञ्चसु मीमांसकस्तद्; अर्थापत्तिमुत्सृज्य चतुर्षु नैयायिकस्तद्; उपमानं निराकृत्य त्रिषु कापिलपातञ्जलौ तत्; शब्दमपास्य द्वयोस्तद् वैशेषिकताथागतौ; लौकायतिकश्चानुमानमप्यनूरीकृत्य प्रत्यक्ष एवैनत् प्रतिपद्यन्ते,

उक्तान्ये च दार्शनिकाः स्वसंमतसंख्याकप्रमाणोपगन्तृत्वेन सब्रह्मचारिपरिपाट्यैव व्यवहारं निर्वहन्तितरामिति न ते शृङ्गग्राहिकयोल्लिखिताः;

एवं प्रमाणसंख्यावैमत्येऽपि तत्तत्प्रमाणाभ्युपगन्तारोऽनभिमतप्रमाणपरिच्छेद्यप्रमेयपरिच्छेदविधाने यतमाना विप्रतिपन्नप्रमाणं संप्रतिपन्नप्रमाणेऽन्तर्भावं बुभूषमाणा जाग्रति,

अयमत्राभिसन्धिः—तत्तत्प्रमाणं विमन्ता विमन्तव्यप्रमाणं परिजिहीर्षुस्तत्प्रमाणस्वातन्त्र्यस्थापनप्रक्रियागरिमाणमेव स्थगयितुमीहते; न तु तदीयां सत्तामेव समूलघातं हन्तुमीप्सति तत्प्रमेयं वाऽऽनुभविकमपलपितुमुद्युङ्क्ते, कथमन्यथा तत्तत्प्रमाणेन प्रमित्सितव्यमभीष्टप्रमाणेन प्रमिमीततमाम्।

सन्ति चेहोज्जिहानानि निदर्शनानि—

यथा किल कापिलपातञ्जलादयः—उपमानमानमुच्छिच्छिषवस्तदीयफलकरणव्यापारानंशतो यथायथं प्रत्यक्षानुमानशब्देगतार्थयन्तोऽपरथोपमेयत्वेन पराभिमतं प्रमेयं प्रामीमपन्।

यथा च काणादसौगतौ शब्दे पार्थक्येन मानतामनीप्सन्तौ शाब्दविषयत्वेन पराभिमतं प्रमेयमनुमिनुत एव न त्वेनत् खपुष्पकल्प भणतः; शब्दमानं निराकरिष्णू अप्येतौ व्यवहरतां भृत्यादीनां मुखादशनाद्यर्थकाङ्क्षानपरवाक्यमाकर्ण्य, व्याघ्रिज्ञानादिकारणघटितसामग्रीप्रयोज्यानुमानसाहायकेन नैव प्रवर्तमानौ दृश्येते किन्त्वसति बाधके शब्दादेव प्रवर्तेते सर्वदेति प्रसिद्धमेतद्।

तथैव चार्वाकोऽपि प्रत्यक्षेतरत्प्रमाणमनभिलषन्नपि स्वतन्त्रामेव मानतामनुमाने न सहते, प्रत्यक्षार्हेऽपि प्रवर्तमानेनानुमानेन व्यवहरमाणो न निगृह्येत नापि प्रत्यवेयात् काणादादिवत्।

इयांस्तु विशेषः-सर्वथाऽपीदमीयनये प्रत्यक्षायोग्यस्य वस्तुनः सत्त्वं नोपगम्यते यत्प्रत्ययार्थमनुमानं शरणीकरणीयं स्यात्, यच्च प्रत्यक्षयोग्यं कदाचिद् कस्यचनाप्रत्यक्षं तत्रानुमानं प्रवर्त्तेत चेन् प्रवर्त्ततां नाम नैतावताऽस्मत्क्षतिः, तत्रत्यानुमानस्यानधिगतगमकत्वाभावेनाप्रमाणत्वात् सिद्धसाधनतायामनुवादकल्पतायां वा पर्यवसानात् तत्तथानाभिषिक्तसंभावनारूपत्वाद्वा।

एवञ्चायं निष्कृष्टार्थः—सर्वथाऽपि प्रत्यक्षायोग्यस्य धर्माधर्मादेरैहिकप्रत्यक्षानर्हपरलोकादेरनुपगमेन प्रत्यक्षयोग्यवस्तुमात्रेण संसारयात्रां परिचालयतश्चार्वाकस्य प्रतिक्षणविरसं भङ्गुरसत्त्वं विवेकिहेयं विषयजातमात्मनीनसर्वस्वं मन्यमानान् सदुपदेशाकर्णनभीरून् भोगवासनाऽनुस्यूतचेतसो नितान्तं शास्त्रविमुखान् स्थविष्ठदर्शिनो बहिर्मुखानधिकारिणो 'गुडजिह्विका'—नयेन दर्शनरसं पिपाययिषोर्लौकायतिकस्य गम्भीरतात्पर्यानाकलननिबन्धना एवान्येषां दोषारोपाः।

ईश्वरानङ्गीकर्तृजैमिनीयकापिलानां यदि नास्त्यपाङ्क्तेयता तर्हि तं तज्जातीयमपरं चानुररीकुर्वतश्चार्वाकस्यापि कौतस्कुती विगेयता।

यत्तु-सांख्यतत्त्वकौमुद्याः पञ्चमकारिकाव्याख्यायां 'नानुमानं प्रमाणम्' इत्याद्यवतरणप्रघट्टकात्मकदर्शनकाननपञ्चाननवाचस्पतिमिश्रोक्तितः, न्यायकुसुमाञ्जलेराद्यस्तवके प्रथमविप्रतिपत्तिनिराकरणे 'सापेक्षत्वाद्' इत्यादि-न्यायाचार्योदयनोक्त्या च प्रतिज्ञाहान्यादिना प्रत्यक्षैकप्रमाणिनं केचन निजिघृक्षन्तीति; तत्तु निरनुयोज्यानुयोगतः स्वयं श्वभ्रे पतयालुतामाश्लिष्यन्ति नैव किमु?

उक्ताभियुक्ततमोक्ति युगलं त्वनुमानप्रामाण्यमाश्रित्यैव यथाश्रुतप्रवादावलम्बनम्,

वस्तुतस्तु—नित्यानुमेयसत्तामनियच्छन्तं प्रत्यक्षसिद्धाराधकं प्रतीदृगास्कन्दनमकाण्डाक्रमणकल्पं प्रतिभाति,

प्रत्यक्षसिद्धमात्रोपगन्ता हि नित्यपरोक्षविषयकानुपपत्तिनिरासेऽपरित्रढिमानमुपैत्येतदन्यद्,तादृक्षममन्यमानं प्रत्यनुज्ञाव्यं च।

एतेन "यावज्जीवेदि"त्यादि "चार्वाक" गर्हापराणि वचनानीतराणि चैतज्जातीयानि तदीयतात्पर्यानवगतिजुषां वैधेयानामेवेति निर्मत्सराणां विवेकिधौरेयाणामनुपादेयान्येवेति सर्वं चतुरस्रम्।

चार्वाको दर्शनभङ्गः स्वल्पज्ञाक्षेपभाजनम्।
न योग्यो भवितुं तस्मात्तन्मते दिक् प्रदर्शिता॥

भूयांसो विषया दिदर्शयिषिता आसन् मतेऽस्मिन् मम
प्रायोऽन्यान् प्रविहाय लेखबहुताशङ्कोत्थिताया भियः।
मानैक्योपगमेन नैजनयगां सर्वां व्यवस्थां यथा
चार्वाकः कुरुते तथाऽत्र गदिता सांशेन संक्षेपतः॥

---

# बौद्धसिद्धान्तोपयोगविचारः

( ले० ईश्वरचन्द्रशर्मा, अध्यापकः, दयानन्दोपदेशकविद्यालयः, गुरुदत्तभवनम्, लवपुरम्। )

सौगतानां त्रयः सिद्धान्ता विद्यन्ते यैस्ते वैदिकेभ्यो भिद्यन्ते। तेषु प्रथमः नास्ति कश्चिन्नित्य आत्मा यः कर्मणामिह विहितानां परत्र फलं भुङ्क्ते इति।

द्वितीयः—नास्य जगतः कश्चिद्रचयिता परमेश्वरो वर्तते इति।

तृतीयः—नास्ति कस्यापि पुस्तकस्य स्वतःप्रामाण्यमिति।

अमीषां मतानां युक्त्यनुग्रहनिग्रहो साम्प्रतं न विमृश्येते। सौगतैर्वैदिकैश्च सुधीभिस्तत्र तत्र निबन्धेषु भूम्ना पराक्रान्तमस्मिन्विषये।

सौगतमतेऽस्ति विशेषो येन मानवोऽनायासेन प्रतिबन्धकानपाकृत्याभ्युदयं निश्रेयसं चावाप्तुं समर्थो भवति। वैदिकाभिमता प्रक्रिया तु मनुष्यस्य श्रेयः प्रतिबध्नातीति केषांचनाभिप्रायः, स इदानीं विविच्यते।

प्रथम आलोच्यताम्—इह कृतानां कर्मणां परत्र फलं भुज्यत इति सौगतवैदिकयोः समानं मतम्। प्रतिक्षणं परिणमन्ती चित्तसंततिः पूर्वपूर्वज्ञानैराहितसंस्कारा प्राचश्शरीरस्य परित्यागानन्तरमपरशरीरमुपादाय फलमनुभवतीति सौगतपक्षः। नित्य आत्मा जन्मान्तरे पूर्वकृतकर्मणां फलभोक्तेति वैदिकपक्षः। न च वैदिकपक्षे किञ्चिदनुपपन्नम्। यदि आत्मा नित्यस्तर्हि कथं संस्कारा उदयन्ते व्ययन्ते च तत्र। नित्यस्यापरेण सह स्पर्शोऽपि न संभवति। अनादिनिधन एकरसोऽवतिष्ठते। रागद्वेषादिभिः सम्बन्धे तस्य रागादीनामुत्पत्तेः प्राकन्यवस्था नूनं च्यवते। आत्मा न जडो यस्य बाह्यावयवेषु क्रियमाणाभिघातो नान्तर्विकारं जनयेत्। स चेतनः। इन्द्रियजनितं ज्ञानं तस्मिन्नामूलादाशिखं प्रसरेत्। इत्थं पूर्वावस्थातो नियतं विच्युतिः। अभ्युपेतोऽपि संस्काराणां संबन्ध आत्मनि न भूतश्चित इति न कदाचन क्षीयेत। तथा चात्मनः शुद्धे मुक्तेर्वाशापि न संभविनो। सोऽयमाक्षेपोऽतितरां प्राचीनः सांप्रतिकैर्नवेवेषं परिधाप्योपस्थाप्यते। तथा च बौद्धानां प्राचीना कारिका।

वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्तितयोः फलम् ।
चर्मोपमश्चेत्सोऽनित्यः स्वतुल्यश्चेदसत्फलः ॥

अत्रोच्यते—

धर्मो धर्मिणो भिद्यते। न धर्मो धर्मिरूपः। ज्ञानसुखादयस्तत्संस्काराश्चात्मधर्माः। न च व्यतिरिक्तधर्माः धर्मिणो नित्यस्य विकारं संपादयितुं प्रभवन्ति। न च धर्माणामुपजनापगमाभ्यां धर्मिणो विकाराभावे धर्मसंबन्धस्य नियमोऽनुपपन्नः। सर्वथा भिन्नाः रूपरसादयोऽपि ज्ञानसुखादिवदात्मधर्माः स्युरिति चेत् न, वस्तुस्वभावो न नियोगार्हः। भेदाविशेषेऽपि आत्मसुखादीनामेव धर्मधर्मिभावो नात्मरूपादीनाम्।

धर्माणामुत्पत्तिविनाशौ नावश्यमनित्येषु धर्मिषु नियमेन भवतः। पार्थिवेषु परमाणुषु रूपादीनां व्योम्नि च शब्दस्योपजनापायौ भवतः। न चैतावता धर्मी न नित्यः। संस्कारश्चाभौतिको विनाशिस्वभाव इति न नित्यसंबन्धमात्रेण स्वभावं जहाति। दुग्धादयोऽवयविनोऽनित्याः। तेऽम्लसंसर्गेण सर्वात्मना विक्रियन्ते। निरवयवस्य नभसो वर्षातपाभ्यां न विकारलेशोऽपि। शब्दो नभस्युत्पद्यते विनश्यति चेतीयत् फलं न नित्यत्वेन विरुध्यते। तथा च रागद्वेषादीनां तत्संस्काराणां च निवृत्तावपवर्गो नित्यपक्षे समुपपन्नः। नित्य आत्मा स्वभावतो मलिनश्चेत्कथं मोक्षो न हि स्वभावोऽपैति। स्वभावतःशुद्धः सन् न रागादिभिर्दूषयितुं शक्यः। दोषरहितश्च न जन्ममरणचक्रे पतति इत्यन्यदाक्षिप्यते। अयमाक्षेपः क्षणिकज्ञानसंततिपक्षेऽपि समानः। क्षणिकानि वस्तूनि न स्वभावं परित्यजन्ति। नीलं क्षणिकं न च क्षणान्तरे नीलात्मतां जहाति। क्षणिकापि ज्ञानसन्तानपरम्परा चेत् परिशुद्धस्वभावा न क्षणान्तरे रागादिभिर्मलिना सम्पद्यते। स्वभावतः क्लिष्टा सती न निर्दोषां परिशुद्धां ज्ञानपरम्परां जनयेत्। स्वभावतो मालिन्याभावेऽपि यथा क्षणिका ज्ञानसंततिः कारणवशेन क्लिष्टा विशुद्धा च जायते तथा नित्य आत्मा स्वभावतो निर्मलोऽपि कारणोपनिपाते दूषितो निर्दोषश्च सम्पद्यते अयमेव चात्मनः क्लिष्टभावो यो रागादीनां धर्माणामाविर्भावः। धर्माणामाविर्भावतिरोभावौ न धर्मिणः स्वरूपप्रच्यवं संपादयितुं प्रभवत इति निरूपितम्।

( २ )

द्वितीयः सिद्धान्त ईश्वरो नास्तीति। यदीश्वरो जगत्कर्ता प्राणिकृतकर्मणां फलदाता चाङ्गीक्रियते तर्हि मनुष्यस्तत्परतन्त्र इति स्वीकर्तुं विवशता स्यात्। तदात्वे मनुष्यः स्वयमात्मनः स्वामी। यथेच्छमात्मानमुत्कृष्टं निकृष्टं न विधातुं समर्थ इति न संभवति। सति चैवं शुद्धयेऽपवर्गाय वा प्रयत्नानामवकाशो नास्ति। तथा च धर्मो निष्फलस्तदनुसारिणो मार्गाश्च व्यर्थाः। यदीश्वरो न स्वीक्रियते तर्हि वर्तमाने मनुष्यो यादृशः स स्वकृतेन। अनागते च यादृशो भविष्यति सोऽपि स्वकर्मणैव। ईश्वरकारणिकाः सहस्राब्दीभ्यो धर्मार्थं रुधिरधाराः प्रसारयन्ति कस्मादीश्वरो निर्णयं न विधत्ते।

अत्रोच्यते—ईश्वरवादिनो न मनुष्यं कर्मणामनुष्ठाने परतन्त्रं स्वीकुर्वते। मनुष्यः कर्तुमकर्तुमन्यथाकर्तुं वा प्रभवति। फलं भोक्तुं परतन्त्रः। ईश्वरेच्छया जनो यथाकर्म नानाविधानि जन्मानि सुखदुःखे चाप्नोति। स देशो राजन्वान् यत्र जनाः स्वेच्छया कर्माण्यनुतिष्ठन्ति फलानि चानुरूपाणि लभन्ते। ज्ञानचिकीर्षाप्रयत्ना जीवस्य स्वाभाविका गुणाः। न केवलं जीवानां जडानामपि स्वाभाविकगुणा नात्मलाभायेश्वरमपेक्षन्ते। इदमेव च परमेश्वरस्यैश्वर्यं यदयं जीवैः कर्तुमशक्यानि विश्वसर्जनादीनि कर्माणि विधत्ते भवान्तरे च तेभ्यः फलं प्रयच्छति। कर्मणि स्वातन्त्र्यमभिप्रेत्योक्तम्—

आत्मानं नावसादयेत् इति । फले परायत्ततेति प्रतिपादितम्—

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥ इति

ईश्वरवादिनो धर्मार्थं रुधिरकर्दमं कुर्वन्तीति नेश्वरस्य दोषः । ईश्वरस्याशयमनवबुध्य येऽन्याय्यं प्राणिवधं विदधते ते स्वेच्छया कर्त्तार इति गर्हणीयाः । ये कर्मकरणेऽपि मनुष्यं परमेश्वरायत्तमाहुस्तेषां पक्षेऽपरिमिता दोषाः । ईश्वराभ्युपगमे लाभाश्च भूयांसः । नानाविधाः मानवाः । केचन निसर्गतश्शुभानुष्ठाने तत्पराः । ते न परेषामनिष्टमाचरन्ति । ईदृशाश्चाल्पीयांसः । प्रायेण मनुष्याः परानिष्टेनापि स्वार्थं संपादयितुं यतन्ते । तेषां वारणाय भयमपेक्ष्यते । राजभयं च सर्वदा सर्वत्र सर्वेभ्यो नोपतिष्ठते । ईश्वरवादिनो भयं व्यापकम् । यत्र पशवः पक्षिणश्च न पश्येयुस्तत्रापि व्यापकं द्रष्टारं जानानो विरमत्यधर्मात् । यश्चेह परहितान्यनुतिष्ठन् मिथ्याज्ञानमोहितमतिभिर्जनैरातततरां पीड्यते स यातना अनुभवन्नपि परमेश्वरे श्रद्दधानः संतोषमास्थाय धर्म्ये पथि प्रवर्तमान एवावतिष्ठते । ईश्वराविश्वासिनस्तु मिथ्याकलङ्कितस्यात्मसंतोषाय द्रढीयानुपायो नास्ति । परार्थं विपदः सहमाना ईश्वरविश्वासिन उदाहरणेषु संख्यातिगाः प्रथन्ते ।

## ( ३ )

तृतीयः सिद्धान्तः—नास्ति कस्यापि पुस्तकस्य स्वतः प्रामाण्यमिति । विभिन्नधर्मानुयायिनः स्वमान्यग्रन्थानां प्रामाण्यं स्वतोऽङ्गीकुर्वन्ति । ब्राह्मणा वेदस्य प्रामाण्यं स्वत इत्यभिदधते । वेदप्रतिपादिताश्च केचन विषया इतरैः स्वतःप्रमाणतयाभिमतानां पुस्तकानां सांप्रतिकप्राकृतिकविज्ञानेन सिद्धानां मतानाञ्च विरोधेन वर्तन्ते । ईदृशग्रन्थः कथं स्वतःप्रमाणम् । वेदस्य प्राकृतिकविज्ञानेन सहाविरोधश्चेत्प्रतिपाद्यते स तर्कमपेक्षते । एतेन वेदप्रामाण्यं तर्काश्रितं सिद्ध्यति । वेदापेक्षयापि तर्कस्य स्वतः प्रामाण्यं सिद्धम् । वेदवत् स्वतः प्रमाणत्वेष्टानामिञ्जीलकुरानादीनां विषयेऽप्येषैव कथा ।

पुस्तकानां स्वतः प्रामाण्यस्याङ्गीकारेण संसारे भयङ्करा अत्याचाराः जाताः । गैलिलियोप्रभृतिविदुषां प्राणनाशो नाभविष्यत् यदि बाइबलप्रामाण्यं स्वतो नाङ्गीकृतमभविष्यत् । यदि कुरानस्य स्वतः प्रामाण्यं मुसलमाना विजेतारो न श्रद्दधास्यन् तर्हि सिकन्दरियेति प्रसिद्धनगरे यवनतत्त्वविद्भिः सहस्राब्दीनां परिश्रमेण रचितः ग्रन्थराशिर्न भस्मसादभविष्यत् । कस्यापि ग्रन्थस्य स्वतः प्रामाण्यमसहिष्णुताया उत्पादकं भवति । एतेन न केवलं वर्षसहस्रैर्मनुष्यजातिर्धर्मान्धता मिथ्याविश्वासमानसिकदासतानामवटे पातिता ज्ञानप्रसारे प्रतिबन्धोऽपि विहितः । रुधिरेण पृथिव्याः रञ्जने च साहाय्यमनुष्ठितम् । अत्रेदं विचार्यताम् । परस्परं विरुद्धानां ग्रन्थानां प्रामाण्यं स्वत इष्यते जनैरित्यत एव किं कस्यापि स्वतः प्रामाण्यं न संभवति ? परस्परविरोधिनोऽत्ततरां भूयांसो जना आचक्षते । तत्किं द्वयोरेकः प्रमाणपरिशुद्धार्थमभिदधानोऽपि जनैरुपेक्षणीयः । ये वेदस्य स्वतः प्रामाण्यं वदन्ति ते न तर्कं प्रतिक्षिपन्ति । यथाह मनुः—यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ।

यथा च गेलेलियोप्रभृतीनां वध इञ्जीलविश्वासिभिः कृतो यथा वा कुराणप्रमाणकैः सञ्चितग्रन्थराशिर्दाहितस्तथा वेदैकशरणैर्वेदविरोधिनां न हत्या विहिता न ग्रन्था दाहिताः । सोऽयमग्निना दाहे जलेन त्रासः । ईश्वरप्रणीततया स्वतःप्रामाण्यमाश्रित्यापि यैस्तर्को वष्टभ्येत ? न परीक्षणाद् बिभ्यति न च विरोधमात्रेण पराञ्जिघांसन्ति । वेदप्रामाण्यवादिनः परस्परं विवदन्ते ।

केषांचन द्वैतमितरेषामद्वैतं परेषां विशिष्टाद्वैतं चाभिमतम्। सर्वेऽपि च स्वमतस्य सत्यतां तर्केण प्रतिष्ठापयन्तस्तदनुसारेण वेदस्यानुकूल्यमुपपादयन्ति। इदं वेदप्रामाण्यस्य तर्कसख्ये बलवत्तरं प्रमाणम्। स्वतः प्रामाण्यं तर्कानुकूलमित्यादरे ग्रन्थोक्तविषयेऽन्धश्रद्धया न जिज्ञासा प्रतिहन्यते। बाइबिलोक्तमतिक्रम्य गैलिलियो इति विदुषा भुवो वर्तुलाकारता ज्ञाता। केप्लरेण बाइबिलस्य सूर्यभ्रमणमसङ्गतं निर्णीतं भूभ्रमणस्य च त्रयो नियमा आविष्कृताः। वेदे प्रामाण्यमाश्रित्यैके सूर्यस्यार्यभटादयश्च भुवो भ्रमणं प्रत्यपीपदन्। भूभ्रमणार्थमार्यभटादयो वेदप्रामाण्यस्य परिहार्यतां नापैक्षन्त।

किं च शब्दस्य स्वतः प्रामाण्यं सौगतैरपि न सर्वथा निराकृतम्। यथा भगवतश्शाक्यमुनेरादेशः—

तापात् छेदाच्च निकषात्सुवर्णमिव पण्डितैः।
परीक्ष्य भिक्षवो ग्राह्यं मद्वचो न तु गौरवात्॥

इति

तथायमपि—सन्ति भिक्षवोऽन्ये धर्मा गभीरा दुरनुबोधा शान्ता प्रणीता अतर्कावचरा निपुणा पण्डितवेदनीया इति (दीघ निकाय ब्रह्मजालसुत्त)

कश्चित्तर्कस्याशक्तिमभिप्रेत्य वैदिकैरभिहितम्-तर्काप्रतिष्ठानात् इति-इतरथा मनुना कथं धर्मज्ञानाय तर्कोऽपेक्षणीय इति निरूपितम्। ग्रन्थस्य स्वतः प्रामाण्याय कर्तुः सर्वज्ञता न परिहर्तुं शक्यते। सर्वज्ञश्च न केवलं वर्तमाने परं भूते भविष्यति चाशेषवस्तुषु स्वीकरणीयः स्यात्। यदि कश्चित् सर्वज्ञोऽस्माकं जन्मनो वर्षसहस्रात्प्रागेवास्माभिः करिष्यमाणानां कर्मणां वेदिताभूत्तर्हि साम्प्रतमपि तथाचरितुं विवशाः स्मः। इतरथा तस्य सर्वज्ञता मिथ्या भविष्यति। तथा च मनुष्यः सर्वज्ञहस्ते जडयन्त्रतुल्यः। न च जडयन्त्रस्य शुभाशुभं विवेक्तुमाचरितुं वाधिकारः। तदीदृशस्य धर्मस्य तद्ग्रन्थस्य तत्प्रतिपाद्योपदेशानां च किं प्रयोजनम्?

सोऽयमाक्षेपो वैदिकानामिव सौगतानामपि तुल्यः। सुधिया शान्तरक्षितेन तत्त्वसंग्रहे वितत्य भगवान् बुद्धः सर्वज्ञ इति प्रत्यपादि। यस्तत्र परिहारः सोऽत्रापि।

परिशुद्धये मोक्षाय च मनुष्यस्य कर्मणि स्वातन्त्र्यमावश्यकम्। कर्मणि स्वातन्त्र्यं च बुद्धेः स्वातन्त्र्यमपेक्षते। बुद्धेः स्वातन्त्र्यं च तदा संभवति यदा सा ग्रन्थस्याधीनतां नाश्रयते। अयमपि दोषो वेदस्य स्वतः प्रामाण्ये तर्कप्रसरं न कुण्ठितं करोति। तर्कविरोधे सति वैदिका न वेदस्य स्वतः प्रामाण्यं प्रतिपादयन्ति। कामं स्वतःप्रामाण्ये श्रद्धा यत्र कुत्रचिद् भवन्ती तत्त्वजिज्ञासायां प्रतिबन्धिका भवतु न सौगता आत्मनस्तर्कमात्रावलम्बितां प्रतिपादयितुं शक्नुवन्ति। साक्षाद् भगवान् बुद्धः केषाञ्चन धर्माणां तत्त्वं स्वसाक्षात्कारगम्यं प्राह। तच्च बुद्धवचनमनाशङ्कनीयमित्येवापरे स्वीकर्तुं शक्नुवन्ति नापरथा।

# दिगम्बरजैनदर्शनसिद्धान्तः स्याद्वादः

( लेखकः—विद्यावारिधिर्वादीभकेशरी न्यायालङ्कारः पं० श्रीमाखनलालजीशास्त्री,
प्रिंसिपल—गो०दिगम्बर-जैनसिद्धान्तविद्यालयः मोरेना, ग्वालियर स्टेट )

### ःआरम्भिकप्रवचनम्ः

न्यायव्याकरणसाहित्यादिशास्त्रेषु नैपुण्यपुरस्सरं स्वीयान्तेवासिसन्दोहसृष्टिमारचय्य प्रधानाधिष्ठातृ—( प्रिंसिपल ) पदे चिरं गौरवपुरस्सरं कार्यं समुन्नतिं च कृत्वा निखिलविद्वज्जनाभिगीयमानगुणगरिमसु वर्णाश्रमधर्मविलोपकानां गर्वखर्वणं कृत्वा निःश्रेयसकारणीभूतसदाचारसाधकशरीरशुद्धिविधायकवर्णाश्रमादिव्यवस्थातत्परेषु महामहोपाध्यायसम्मानितपदविभूषितेषु विद्वच्छेखरीभूतेषु श्रद्धेयसम्माननीयपण्डितगिरिधरशर्मशास्त्रिषु सफलविश्रामं जिघृक्षुषु तदुपायनीभूते जयपुरस्थप्रसिद्धसंस्कृतरत्नाकरपत्रस्य दर्शनाङ्के प्रकाशयितुं श्रीमन्माननीयपण्डितप्रवर-वृद्धिचन्द्रमहोदयैर्व्याकरणाचार्यैः प्रेरितेन मयास्मिन् महति स्वर्णावसरे विलिख्य समर्प्यतेऽयं निबन्ध इति ।

श्रीमत्परमगम्भीरस्याद्वादाऽमोघलाञ्छनम् ।
जीयात्त्रैलोक्यनाथस्य शासनं जिनशासनम् ॥

स्याद्वादमन्तरा वस्तुनः स्वरूपन्नोपलभ्यते, स्वपरोपादानापोहनव्यवस्थाप्यं हि वस्तुनो वस्तुत्वम्, तत्तु स्याद्वादेनाऽनेकान्तापरनाम्नैव सिद्धिमध्यास्ते । स च स्याद्वादो युक्त्याऽऽगमेन तु प्रतीयत एव परं स्वानुभवगम्यश्च । तत्कथमिति चेद्वस्तुस्वरूपनिदर्शकलक्षणपूर्वकं कतिपयैरुदाहरणैः प्रसाध्यते स स्याद्वादोऽस्माभिरत्र—'सद्द्रव्यलक्षणम्' 'उत्पादव्ययध्रौव्ययुक्तं सत्' इति द्रव्यलक्षणं निगदितमाचार्यैः । गुणपर्ययवद्द्रव्यमिति च तल्लक्षणम् । एतद्द्रव्यलक्षणद्वयस्यास्य व्याप्तिसमन्वयकरणेन स्याद्वादात्मकमेव वस्तुस्वरूपं सिध्यति, व्याप्तिप्रकारश्चेदृशः—गुणानां ध्रौव्येन पर्यायाणाञ्चोत्पादव्ययाभ्यां व्याप्तिः । अर्थाद्गुणा ध्रुवरूपेणैव वस्तुनि विद्यन्ते, पर्यायाश्च तत्रोत्पादव्ययरूपेण । अन्वयिनो गुणा व्यतिरेकिणः पर्याया भवन्ति, गुणपर्ययसमुदाय एव द्रव्यात्मलाभः गुणपर्ययमन्तरा द्रव्यस्य न किञ्चित्स्वरूपमस्ति । द्रव्येणानुगच्छन्तीत्यन्वयिनो गुणाः, "द्रव्याश्रया निर्गुणा गुणाः" इति सूत्रानुसारतोऽपि गुणानां द्रव्याश्रयत्वं तदन्वयित्वञ्च सिद्ध्यति । द्रव्यञ्च कथञ्चिदनाद्यनिधनम्, तत्तादात्म्यरूपा गुणा अपि तद्रूपा इति गुणाः कथञ्चिन्नित्या भवन्ति । पर्यायास्तु प्रतिक्षणं विनश्यन्त्युत्पद्यन्ते चेति कृत्वा व्यतिरेकिणः कथंचिदनित्या भवन्तीत्यभिप्रायः । द्रव्यस्वरूपनिरूपकगुणपर्याययोर्गुणानां नित्यत्वात् पर्यायाणां चानित्यत्वात् गुणपर्यायात्मकं द्रव्यं चापि कथंचिन्नित्यं ध्रौव्यात्मकं कथंचिदनित्यमुत्पादव्ययात्मकं च भवति ।

अत्रैव द्रव्यार्थिकदृष्टिर्द्रव्यविवक्षा, पर्यायार्थिकदृष्टिः पर्यायविवक्षा च जायते । द्रव्यमर्थः प्रयोजनमस्येति द्रव्यार्थिकः, पर्यायाऽर्थः प्रयोजनमस्येति पर्यायार्थिकः, उभयोर्विवक्षया वस्तुसिद्धिर्भवति । कथनमेतद्दृष्टान्तद्वारेण स्फुटीक्रियते ।

आत्मद्रव्यमनादिनिधनमत एव तन्नित्यम् । न हि जीवस्याकस्मिकरूपेणोत्पत्तिर्भवति, स तु परलोकात्पूर्वभवाद्वा समायात इति सर्वे परलोकवादिनः स्वीकुर्वन्ति । चार्वाकस्य शून्यवादिप्रभृतिकमतानुसारिणोऽत्र मीमांसा न क्रियतेऽस्माभिरकिंचित्करत्वात् । स्तन्यपानेहा पूर्वजातिस्मरणं च बालस्य कस्यापि स्वीयक्षयोपशमविशिष्टस्यावलोक्यते, जगत्याबालगोपालप्रसिद्धं चेदं

वृत्तमिति पूर्वसंस्कारमन्तरा नैतदुभयं भवितुमर्हतीति जीवस्य चैतन्योपादानोपादेयरूपस्यानादिपरम्परातः सिद्धिर्भवत्येव ।

स्वीयमनुष्यपर्यायात्पूर्वमपि स कस्मिन्नपि पर्याय आसीदेव। ततोऽपि पूर्वं ततोऽपि पूर्वमिति कृत्वा न तद्भावानां विरामः। उत्तरभवानामपि मोक्षप्राप्तेः प्राक् नान्तः। मुक्तिप्राप्तावपि जीवः सर्वज्ञो वीतरागोऽशरीरी सच्चिदानन्दस्वरूपः स्वात्मानन्तगुणविकाशमयश्च प्रतिभातीत्यनादिनिधनो जीवः सिद्ध्यति।

अत एव द्रव्यदृष्ट्या जीवो नित्य एवेति कथने कोऽपि दोषो नास्ति, यतो जीवद्रव्यस्य कदापि विनाशो न भवति, तथा जीवद्रव्यस्य सर्वदा नित्यत्वेऽपि यदि पर्यायदृष्टिर्गृह्यते चेत्तदा जीवोऽनित्य एव प्रतिभाति। कथमिति चेत्? कथ्यते—एको जीवो मनुष्यो भूत्वा मृत्वा च देवो जातः देवश्च मृत्वा पशुरभूत्, पशुश्च नारकी, नारकी पुनरपि मनुष्यः, मनुष्यो हस्ती हस्ती घोटकः, घोटकस्तु काकः, काकस्तु पिपीलिका भवति, किन्तु जीवस्यैकत्वेऽपि नानाभवेषु येऽनेके पर्यायास्ते तु पृथक् पृथगेव, यो मनुष्यः स न देवो यो देवः स न पशुर्यः पशुः स न नारकी, इति पर्यायदृष्ट्या जीवस्यावस्थाभेदापेक्षया न जीवो नित्यः किन्तु नश्वर एव। एवं रीत्या जीवद्रव्यं कथञ्चिन्नित्यं कथञ्चिदनित्यमपि सिध्यति।

यथा जीवद्रव्यं तथैव पुद्गलादिसर्वद्रव्यमपि कथञ्चिन्नित्यानित्यरूपेणैव स्वस्वरूपं प्रकटयति। एवमेवास्तित्वनास्तित्वादिधर्मा अविरोधरूपेणैकस्मिन्नेव वस्तुनि प्रतीयन्ते। यथा घटः स्वस्वरूपेणैवास्ति, न तु पररूपेण। घटस्य पररूपं पटादि। यदि घटः-पररूपेणापि अस्ति चेत् घटः पटः स्यात्। अतः प्रत्येकं वस्तु स्वस्वरूपेणैवास्ति पररूपेण तु नास्ति, इत्येकस्मिन्नेव वस्तुनि अस्तित्वं नास्तित्वञ्चेति धर्मद्वयं स्वानुभवेन युक्त्याऽऽगमेन च प्रतीत्या सिद्धमेव।

संशयरूपः स्याद्वाद इति न समीचीनम्। यत्रोभयकोटिपरामर्शि ज्ञानं जायते तत्रैव संशयो भवति। यथैकस्मिन् पादपादौ स्थाणुर्वा पुरुषो वेति ज्ञानं भवति। नत्वेतादृग् ज्ञानं स्याद्वादे भवति। तत्र तु द्रव्यार्थिकनयापेक्षया नित्यमेव वस्तु पर्यायार्थिकनयापेक्षया त्वनित्यमेव वस्तु, इति दृष्टिभेदेन निर्णीतमेव वस्तुस्वरूपम्, संशये तु निर्णीतिर्नास्तीति न संशयरूपः स्याद्वादः किन्तु स्वानुभवगम्यो युक्त्या च निर्विवादरूपेण वस्तुनि दरीदृश्यते विद्वद्भिर्विचारचतुरचेतोभिरिति दिगम्बरजैनदर्शनसिद्धान्तः।

सिद्धान्तोऽयं नैयायिकसांख्यमीमांसकादिदर्शनैरपि प्रकारान्तरेण स्वीक्रियत एव, तथा च—परमाणुरूपा पृथिवी नित्या स्कन्धरूपा चानित्येति पृथिवी कथञ्चिन्नित्यानित्या वेति नैयायिका मन्यन्त एव। तथैव प्रधानमेकं नित्यं तद्विकारान् महदहङ्कारादींश्चानेकाननित्यान् मनुते सांख्यः, तथैव मेचकं पञ्चवर्णात्मकमेकं तत्रैव पीतशुक्लाद्याकारमनेकञ्च मीमांसकोऽपि स्वीकरोति स्याद्वादमिति। लोके स्याद्वादमन्तरा वस्तु व्यवस्थैव न घटते, अन्यथा दधि खादयेति प्रेरितो जनः घृतं कथन्न भुङ्क्ते? दध्नि घृताभावो वर्ततेऽत एव तत्र दध्नि दधिस्वरूपेण स्वेनास्तित्वं पररूपघृतस्वरूपेण तत्रैव नास्तित्वमपि विद्यते एवान्यथा सर्वसङ्करः स्यादेव। एकमेव वस्तु यत्स्वस्मै रोचत इष्टम्वा तदेव परस्मै न रोचतेऽनिष्टम्वा भवतीति। एकेनैव वाक्येन स्वपक्षसाधनं परपक्षदूषणञ्च भवति तथैकस्य जयोऽपरस्य पराजय इति सर्वत्रैव वस्तुसन्दोहे स्याद्वादसिद्धान्तो वरीवर्त्त्येवेति विस्तारभयात् स्याद्वादान्तर्गतसप्तभङ्गादिभेदप्रभेदानकथयित्वाऽतिलाघवेनैव प्रकटितोऽयं स्याद्वादसिद्धान्तोऽस्माभिरिति।

# चार्वाकाणां नास्तिकत्व-परिहारः



(ले० विद्याभास्करः श्रीमांणशङ्करवसन्तराम उपाध्यायः बड़ौदा, स्नातकः श्री-ऋषिकुलविश्वविद्यापीठस्य हरद्वारस्थस्य)

निःश्रेयसप्रदपरमेश्वरास्तित्वप्रतिवादः,कामार्थव्यतिरिक्तयोर्धर्ममोक्षयोः पुरुषार्थत्वानङ्गीकारः, पृथिव्यादीनां चतुर्णाम् तत्त्वानां नित्यसत्त्वाङ्गीकारः, चैतन्यविशिष्टदेहव्यतिरिक्तस्य जीवात्मनोऽनङ्गीकारः, परलोकादिप्रतीवादः, प्रमाणत्वेन स्वीकृतानां प्रत्यक्षातिरिक्तानुमानादीनां प्रामाण्यमनङ्गीकृत्य व्यासादिविवित्त वेदत्रय्याः कर्त्रस्मरणहेतुकनित्यत्वानङ्गीकार इत्येवं सन्ति भूयांसः प्रकाराः प्रायशो जागरूकाः, यैः खलु श्रीमत्सायणमाधवादिवदनारविन्दनिर्गलद्वचनामन्दमाकन्दपानमत्तचित्ता एते वयं ( निर्विवेक ) श्रद्धाग्रन्थिबद्धा बृहस्पतिमतानुसारिणां चार्वाकाणां नास्तिकत्वमङ्गीकुर्महे।

अत्र हि यदि "अस्ति नास्ति दिष्टं मतिरिति" भगवत्पाणिनिप्रणीतसूत्रमात्रमनुसृत्य 'अस्तीति मतिर्येषां त आस्तिकाः' 'नास्तीति मतिर्येषां ते नास्तिकाः' इत्येवास्तिकनास्तिकानां परिभाषे स्वीकुर्याम तर्हि 'पृथिव्यादितत्त्वचतुष्टयमस्ती'ति मतेः सम्मानाच्चार्वाकेष्वप्यास्तिकताऽतिव्याप्नुयादतो हि अस्ति निःश्रेयसप्रदः परमेश्वरः इति मतिर्येषां तानद्य वयमास्तिकान् मन्महे। एतादृशीमास्तिकपरिभाषामात्मसात्कृत्य वन्दनीयकपिल—कणाद—गोतम—जैमिनि—व्यास पतञ्जलिप्रभृतिभगवच्चरणदर्शितदर्शनानुसारिणः कतिपयानेव महानुभावानास्तिकान् ब्रूमहे—न पुनश्चार्वाकान्। ते हि यतो निःश्रेयसप्रदे परमेश्वरे प्रत्यवतिष्ठन्ते।

यद्यपि "लोकसिद्धो भवेद्राजा परेशो नाऽपरः स्मृतः" इति सङ्ग्रहवचनेन चार्वाकाणां मतेऽपि वर्तते परमेश्वरस्तथापि पृथिव्यादितत्त्वचतुष्टयव्यतिरिक्तो वा प्रजासम्मानितराजव्यक्तिव्यतिरिक्तो वा परमेश्वरस्तन्मते नास्तीत्यत एव हि ते नास्तिका निगद्यन्ते। एतेन पृथिव्यादितत्त्वचतुष्टयव्यतिरिक्तपरमेश्वरास्तित्ववादिनो ह्यास्तिकास्तदितरे च नास्तिका इत्येव समासतः प्राप्तमास्तिकनास्तिकानां लक्षणम्।

अत्रैतच्चिन्तनीयं के नु खलु ते, ये प्रथमं तादृशपरमेश्वरास्तित्वं प्रतिपादयन्ति? इति। भगवत्कणादगोतमचरणाङ्कितसरणीमनुगच्छन्तो नैयायिका इति चेत्तदभिमतः परमेश्वरः किमीहः? किंकायः? किमुपायः? किमुपादानः, किमाधारश्च स प्रभुस्त्रिभुवनं सृजत्यवतीति सर्वमपि चिन्तनीयम्। अधुना तु समयाभावः, प्रकाशनस्थलाभावो लेखनगौरवभीतिश्चेति संक्षेपेण किञ्चिदेव तदीयं चिन्तयित्वा विरंस्यामः।

वैशेषिकदर्शनस्य द्वितीयाध्यायस्य प्रथमाह्निकस्थाभ्यां "संज्ञाकर्मत्वस्मद्विशिष्टानां लिङ्गम्", "प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः" इत्येताभ्यामेव हि सूत्राभ्यां महर्षिः कणभक्षः परमेश्वरास्तित्वं प्रतिशुश्राव। तत्र प्रथमे "संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्ग" मितिसूत्रे "अस्मद्विशिष्टानाम्" इत्येतत्पदप्रयोगकाले 'ईश्वरस्ये'तिपदप्रयोगेण "संज्ञाकर्म त्वीश्वरस्य लिङ्गम्" इत्येव महर्षिणाऽवक्ष्यत चेत्तस्य महर्षेरेताभ्यां सूत्राभ्यां परमेश्वरास्तित्वप्रतिपादनेच्छैवाऽऽसीदिति स्फुटमवगन्तुमशक्ष्यत। परं तत्र सूत्रे 'ईश्वरस्ये'ति पदमप्रयुज्य बुद्धिपूर्वकमस्मद्विशिष्टानामितिपदं महर्षिः प्रयुयुज इत्येतावता [महर्षेरेताभ्यां सूत्राभ्यां परमेश्वरास्तित्वप्रतिपादनेच्छाऽऽसीन्न वेति संशीतिः सचेतसां चेतसि जागृयादेव नैसर्गिकी।

वयन्त्वस्मद्विशिष्टानामितिपदस्य "ईश्वर-महर्षीणाम्" इत्येतेन वन्दनीयशङ्करमिश्रकृतेन केवलमुपस्कारेणैव महर्षेः परमेश्वरास्तित्वप्रतिपिपादयिषायां श्रद्धामावहामः। ते हि महानुभावाः "वेदाद्युदिताः स्वर्गापूर्वादिसंज्ञाः, यत्किञ्चित्प्रेक्षावत्प्रकल्पिताः, प्रत्यक्षदृष्टवस्तुनि ज्ञानेच्छाकृतिमता प्रेक्षावतैव।तादृशसंज्ञाप्रवर्तनात्, पितृप्रकल्पितचैत्रमैत्रादिसंज्ञावत्" इत्येतदर्थकेनानुमानेन, "क्षित्यादिकं सकर्तृकं कार्यत्वाद् घटवद्" इत्यनुमानेन च परमेश्वरास्तित्वं प्रतिपादयाञ्चक्रुः। "तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय" इति मङ्गलमाचर्य "यथा घटादिकं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि, न च तत्कर्तृत्वमस्मदादीनां सम्भवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः" इति तदीयं विवरणं च विन्यस्य महामहोपाध्यायश्रीमद्विश्वनाथपञ्चाननाः,

"सत्त्वविशिष्टं कार्यं, विशेष्यतासम्बन्धावच्छिन्नकृतिनिष्ठजनकतानिरूपितसमवायसम्बन्धावच्छिन्नजन्यताशालि, सत्त्वविशिष्टप्रागभावप्रतियोगित्वाद्, इत्यनुमानेन च श्रीमन्तो दिनकरभट्टमहोदयास्तमर्थमनुमोदयाञ्चक्रुः। एतादृशमप्रत्यक्षमनुमानसिद्धमीश्वरं चार्वाका न मन्यन्त इत्येतावता हि ते भवन्ति नास्तिकाः।

अत्रैतदुच्यते—"यस्य स्वर्गापूर्वादयः पदार्थाः प्रत्यक्षाः स एव तत्र स्वर्गाऽपूर्वादिसंज्ञाः कर्तुमीष्टे" इति यदुक्तं तत्तथ्यमस्ति तथापि प्रेक्षावान् कदाचिदप्रत्यक्षस्य (अदृष्टस्य) असतोऽपि संज्ञां प्रकल्पयल्लोके बहुधा दृष्टोऽस्ति। तथा हि द्रव्यादिषट्कवत् सप्तमोऽभावो।न सत्तां बिभर्ति तथापि तदीयाः 'पदार्थ' इति, 'प्रमेय' इति प्रागभावः, प्रध्वंसाभावः, अत्यन्ताभावोन्योन्याभावश्चेति संज्ञाः प्रकल्प्यन्ते। [यद्यपि "येनेन्द्रियेण या व्यक्तिर्गृह्यते तद्गता जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यते" इति नैयायिकव्यवहारेण सुप्रसिद्धेनाभावस्य नाप्रत्यक्षत्वं सिद्ध्यति अभावस्यापीन्द्रियग्राह्यत्वेन प्रत्यक्षत्वात्, तथापीन्द्रियगृहीता गुणा यथा हि सुखं वा दुःखं वा जनयितुं पारयन्ति।तथेन्द्रियगृहीतस्तदभावो न तज्जनयितुं प्रभवतीत्यतस्तदीयः सत्त्वेन परिग्रहः केवलं दुराग्रहविजृम्भित एवावभासते।] यद् वस्तु भूते न दृष्टं वर्तमाने न दृश्यते, भविष्यत्यपि न द्रक्ष्यते तथाविधस्य केवलं कल्पनामधिष्ठितस्य बौद्धस्यापि वस्तुनोऽदृष्टमित्यपूर्वमिति च संज्ञाः प्रवर्त्यन्ते प्रेक्षावद्भिः। वन्ध्यापुत्रस्य, शशशृङ्गयोर्गगनकुसुमस्रजश्चासत्तां विदन्तोऽपि विपश्चितः, "एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः" इत्यादीन् प्रयोगान् प्रकुर्वते। येन प्रेक्षावतां संज्ञाप्रकल्पनं केवलं प्रत्यक्षदृष्टे वस्तुन्येव प्रवर्तत इति प्रतिज्ञातुमशक्यं भवति। किं च—वेदेषु यः स्वर्गशब्दः श्रूयते स हि भाष्यकृद्भिर्विविधैः प्रकारैः परिभाषितः श्रूयते। कश्चिद्—

"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम्"॥

इत्यभिधायैतज्जन्ममात्रैकवेद्यं सुखमेव स्वर्गमाह। कश्चिद् भूर्भुवः स्वरिति महाव्याहृतिषु श्रूयमाणेन स्वःपदेनान्तरिक्षलोकात् परतः प्रवहादिनोह्यमानानि स्वतः परतो वा प्रकाशमानानि ध्रुवादित्यादिमण्डलान्येव स्वर्गान् प्राह। कश्चित् स्वर्गस्थाने सुवर्गशब्दं प्रयुज्य शोभनो जनवर्गो वसति यत्र तादृशं देशविशेषमेव स्वर्गं गदति। आधुनिकास्तु कियन्तस्त्रिविष्टपसंज्ञासादृश्यात्तिब्बतप्रदेशमेव स्वर्गं वदन्ति। इत्थं च वेदेषु श्रूयमाणस्य स्वर्गशब्दस्य यावन्तोऽपि वाच्यार्थास्ते सर्वे मन्त्रार्थद्रष्टृभिर्महर्षिभिर्दृष्टतया मन्त्रद्रष्टृमहर्षिप्रकल्पितसंज्ञाका एवेति तत्संज्ञाप्रकल्पनाद्धेतोर्यदीश्वरार्थानुमानम्, न तद् द्रुततरं विदुषां मनः प्रवेष्टुमीष्टे।

ननु मन्त्रद्रष्टृभिः प्रत्यक्षदृष्ट एवार्थो वेदेषूपवर्णित इति वेदप्रवर्तकाः सन्तु महर्षय एव, माऽस्तु तदतिरिक्तः

परमेश्वरो वेदानां प्रवर्तयिता, तथापि जन्यस्य जातस्य चैव वस्तुनः प्रत्यक्षदर्शनसम्भवान्मन्त्रद्रष्टृभिर्दृष्टोऽर्थो जन्य एवेति मन्तव्यम्। स च जन्योऽर्थो जनयितारमन्तरेण न स्वतः समुत्पत्तुमर्हतीति वेदोदितदृष्टजन्यार्थजनयिता वर्तते कोऽपि परमेश्वर इत्यनुमाने कास्ति वो विप्रतिपत्तिरिति चेच्छ्रूयताम्—प्रत्यक्षदृष्टानां वेदोदितानामर्थानां जन्यत्वं स्वीकृत्य यथा तज्जनयितुरीश्वरस्यानुमानं तथा तस्य ( ईश्वरस्य ) तज्जनयितुः ( ईश्वरपितुः ) तत्पितामहस्य, तत्प्रपितामहस्यापि चेज्जन्यत्वं परिकल्प्य समुद्भाविता जनयितृशङ्कापरम्परा कदाचिद्व्यवस्थानं न लभेत, अनवस्थादोषप्रसङ्गश्चात्र प्रसजेत्। तदनवस्थादोषपरिहारार्थमपि वेदोदितानां महर्षिदृष्टानामर्थानामेव ( भवदभिमतस्यादृष्टस्य परमेश्वरस्येव ) स्वतःसम्भवस्य कर्त्रन्तराजन्यत्वस्य च कल्पना लाघवादङ्गीकार्या। ततश्च वेदोदितमहर्षिदृष्टार्थजनको न कोऽप्यस्तीति सिद्धान्तमेव वयं वरीयांसं प्रवक्ष्यामः। येन वेदोदितार्थजनयित्रनुमानं समुन्मूलितं भवति।

एतेन "क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद् घटवद्" इतीश्वरानुमापकमनुमानमपि प्रत्युक्तं भवति। क्षित्यप्तेजोवायवः कर्तृजन्या हि भवितुमर्हन्ति यदि ते कार्यरूपा भवेयुः। कार्यन्तु प्रागभावप्रतियोगि भवति। क्षित्यप्तेजोवायूनां तु प्रागभावो न केनाऽपि दृष्टो श्रुतो वा। अतस्तेषु प्रागभावप्रतियोगित्वकल्पनं वस्तुतो गगनकुसुमायते।

"भूरसि भूमिरस्यदितिरसि०" इत्यादिरसौ नः प्रमाणभूतो वेदपुरुषः क्षितेरदितित्वं (अखण्डितत्वम्) प्रतिजानीते। "अप्स्वन्तरमृतमप्सु भेषजम्" इति वदन् वेदपुरुषोऽपाममृताधारभूततां प्रवक्ति। "अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत। स देवाँ एह वक्षति"। इत्यसौ मन्त्रोऽग्नेः प्राच्यप्रतीच्यऋषिभिरीड्यमानतयाऽनादितां लक्षयति। इन्द्राग्नीसोमसूर्यप्रभृतयो देवाः तेजःपुञ्जस्वरूपा नित्या अविनाशिनश्च वेदेषु पदे पदे अनुश्रूयन्ते। "आत्मा देवानां भुवनस्य गर्भो यथाऽवशं चरति देव एषः। घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम॥" ( १० मं० १६८ सू० ) इत्यस्यामृचि वायोः सर्वदेवात्मरूपतामवशत्वेन स्वातन्त्र्यं चाभिधाय तन्नित्यत्वं घोषयत्येव भगवान् वेदपुरुषः। इत्थं क्षित्यादितत्त्वचतुष्टयवर्तिनित्यत्वस्य प्रत्यक्षतो दर्शनान्मननाच्छ्रवणाच्च प्रागभावाऽप्रतियोगित्वेनाऽकार्यत्वे स्वतःसिद्धेऽपि यत्तस्य प्रागभावप्रतियोगित्वं, कार्यत्वं, जन्यत्वं, तदितरस्य च कस्यचिद् दृष्टस्य तज्जनकत्वं परिकल्प्यते न तच्चारुतरं प्रतिभाति।

"द्यावाभूमी जनयन् देव एकः" इत्येतेनैकदेशिना मन्त्रखण्डेनाद्य तु वयमकार्यस्यापि क्षित्यादितत्त्वचतुष्टयस्येश्वरजन्यत्वं प्रतिशृण्मः। तथापि तमेकदेशिसिद्धान्तं परिहसन् स्वयं भगवानेव यजुर्वेदस्य सप्तदशेऽध्याये "किंस्विद् वनं? क उ स वृक्ष आस ? यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छतेदुतद्, यदध्यतिष्ठद् भुवनानि धारयन्" इति जागतेन च्छन्दसा वनवृक्षादिसाधनाऽधिकरणाशङ्कां समुद्भाव्य तत्त्वचतुष्टयस्यैवाजन्यत्वेन परमेशतामभिव्यञ्जयाञ्चकार। अत एव हि स प्रभुः "स्वयंभूरसि श्रेष्ठो रश्मिर्वर्चोदा असि वर्चो मे देहि" इत्यत्र तत्त्वचतुष्टयान्तर्वर्तिविशेषस्वरूपाय भगवते सूर्याय "स्वयंभू" पदं प्रायुङ्क्त। यः स्वयम्भूर्न स कर्त्रन्तरजन्यो भवतीति त्वत्यर्थं विश्रुतमस्ति। तस्मान्नास्तिकशिरोमणिचार्वाकसम्मतस्य क्षित्यादितत्त्वचतुष्टयस्य कार्यत्वेन यत्कर्तृजन्यत्वमनुमीयते तद् यथा न्यायनयविरुद्धं तथा वेदविरुद्धमपीति वक्तव्यम्। एतेन यदि क्षित्यादितत्त्वचतुष्टयव्यतिरिक्तपरमेश्वरास्तित्ववादिनो ह्यास्तिकास्तदितरे च नास्तिका इत्येवास्तिकनास्तिकानां

परिभाषे स्वीक्रियेयाताम् तर्हि यथा भवन्ति चार्वाका नास्तिकास्तथा वेदा अपि।

किं च—यावत् तर्कविशुद्धस्य परमेश्वरस्य तर्कशुद्धमस्तित्वं नैयायिकैर्न प्रतिपाद्येत तावत्तेऽपि सम्भवेयुस्तथैव नास्तिका यथा हि बृहस्पतिमतानुसारिणश्चार्वाकाः। किन्तु नैतत्तथास्ति। नैयायिकबान्धवास्तु नित्यज्ञानेच्छाकृतिमन्तमेवेश्वरं सम्मानयन्ति। तां च नित्यज्ञानेच्छाकृतिमत्तां चार्वाकाः क्षित्यादितत्त्वचतुष्टयवर्तिनीं चक्षुषा हि पश्यन्ति। अतस्तन्मते क्षित्यादितत्त्वचतुष्टयमेवेश्वरपदमधिरोहति। आस्तिकानामप्येवदेवाभिमतमस्ति यतस्ते नित्यानित्यत्वप्रभेदेन क्षित्यादितत्त्वचतुष्टयस्य द्वैविध्यमङ्गीकुर्वते। 'नित्याऽनित्या च सा द्वेधा नित्या स्यादणुलक्षणा' इत्यादिभिर्वचनैश्चायमर्थः स्फुटो भवति। तत्र परमाणुरूपाः क्षित्यप्तेजोवायवो नित्याः, कार्यरूपाश्चानित्या इति सर्वत्र न्यायनये प्रथितमस्ति। यदि हि क्षित्यादीनां तत्त्वानां कर्तृजन्यत्वमेव सर्वथा महर्षीणामभिप्रेतमभविष्यत् तर्हि तेषां परमाणुरूपाणां नित्यत्वमपि कथंकारं प्रत्यज्ञास्यन्। न हि कर्तृजन्याः परमाणवो नित्या अपि वक्तुं सुशकाः किल। नित्याश्च ते परमाणुरूपाः क्षित्यादयः प्रोक्तास्तेन मन्तव्यं यन्न ते कस्माच्चिदपि कर्तुर्जाता इति।

परमाणूनां नित्यत्वेऽपि तेभ्यो भिन्नः कश्चन परमेश्वरो वर्तेत यः कार्यरूपस्य समस्तस्यापि जगतो निमित्तकारणं भवेत् कुम्भकार इव घटस्येति वादस्तु पूर्वपक्षकक्षामेवाधिरोहति। यत्प्रमाणगम्यं कार्यं, तत्प्रमाणगम्यमेव तदीयं निमित्तकारणं भवतीति भूयो दर्शनेनाप्रत्यक्षस्य परमेशितुः प्रत्यक्षगम्यजगदुत्पादने सर्वथैव निमित्तकारणत्वायोगात्। न हि घटसमुत्पादकाले कपालकुम्भकारादिदर्शनवदीश्वरदर्शनं कस्यापि भवति। किञ्च घटोत्पादनवेलायां घटोत्पादनज्ञानेच्छाकृतिमान् कुम्भकारो वा परमेश्वरो वेति सन्देहस्य सर्वदैव जागरूकतया न कुम्भकारो नापि परमेश्वरो घटस्य निमित्तकारणं भवितुमर्हेत्। घटोत्पत्तिकाले कालाऽऽकाशदिशां यथा भवत्यन्यथासिद्धत्वं तथा परमेश्वरस्यापि, तत्त्वे सिद्धे तु कथंचिदपि परमेशितुर्जगन्निमित्तकारणता साधयितुं न सुशका। तस्माज्जगदुत्पादने यन्नित्यं ज्ञानं या च नित्या चिकीर्षा, या च नित्या कृतिस्तदेतत्सर्वं नित्येषु परमाणुष्वेव नित्यसिद्धमस्तीति मन्तव्यम्। नित्यज्ञानेच्छाकृतिमन्तस्ते स्वयं नित्याः परमाणव एव भवन्ति। त एव समुदिता व्यवहारदशायां परमेश्वरजगदीश्वरेत्यादिभिः पदैरभिव्याह्रियन्ते। ते च सकलस्य जगतो भवन्त्युपादानकारणरूपाः।

"तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः। तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः" "पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम्।" "स एव जातः स जनिष्यमाणः" इत्यादयः श्रुतयस्तानेव समस्तजगदुपादानकारणभूतान् परमेश्वरादभिन्नान् (नित्यानविनाशिनः) परमाणूनेव स्तुवन्ति। तेषामेव बृहस्पतिमतानुयायिनस्तत्रभवन्तश्चार्वाका नित्यसत्तामङ्गीकुर्वते। उदयनाचार्यचरणसम्मतमर्थमुपन्यस्यन्तस्तत्रभवन्तो दिनकरमहोदयास्तु स्फुटमेव परमेश्वरस्य परमाणुरूपत्वमङ्गीकुर्वन्ति। "स प्रभुः किंविग्रहः संसारं सृजति" इति प्रश्नं समाधातुकामास्ते हि तत्र भवन्तः स्पष्टमुल्लिखन्ति स्म, यत् 'अस्तु चेष्टात्वेन तत्र हेतुत्वम्, अस्तु च तदनुरोधेनेश्वरस्य नित्यं शरीरं तथापि नेश्वरस्यातिरिक्तशरीरसिद्धिः परमाणूनामेव तच्छरीरत्वोपगमात्। एवं चेश्वरकृतिजन्यचेष्टावद्भिः परमाणुरूपशरीरैरेव तत्तत्कार्याणामुत्पत्तिः। परमाणुक्रियायां चेष्टात्वरूपत्वे जात्याङ्गीकाराच्छरीरलक्षणेऽन्त्यावयवित्वस्यासन्निवेशाच्च न परमाणूनां शरीरत्वानुपपत्तिः,

इति। एवं च परमेश्वरविग्रहस्वरूपैः परमाणुपुञ्जैरेवास्य समस्तस्य जगतः सम्भवात् 'तस्मै कृष्णाय नमः संसार-महीरुहस्य बीजाय' इति यदुक्तमस्ति तत्रभवता विश्वनाथपञ्चाननेन तदतीव युक्तमभिहितं प्रतिभाति, अविनश्वर-परमेश्वर-परमविग्रहस्वरूपाणां क्षित्यादितत्त्वचतुष्टयपरमाणूनां जगदुपादानकारणरूपत्वात्। एतेन बीजायेत्यस्य पदस्य निमित्तकारणायेति विवरणं विधाय तेनैव भगवता परमेश्वरस्य यज्जगन्निमित्तकारणरूपत्वमभिहितं 'बीजत्वं समवायिकारणत्वं तच्चेश्वरे बाधितम्' इति विवरणभाष्यमाभाष्य भगवता दिनकरभट्टेन च यत्तदर्थे द्रढीयो वैमत्यं नादर्शि तदेतत्सर्वं नातीव सम्भावनीयम्।

इत्थं च परमाणुरूपपरमेश्वरास्तित्वस्वीकारेण यथा हि भवन्ति प्रेक्षावन्तो नैयायिका आस्तिकास्तथैव क्षित्यादितत्त्वचतुष्टयस्य नित्यसत्तावादिनश्चार्वाकास्तदर्थं परमेश्वरादिपदप्रयोगमन्तरेणापि तदभिधेयार्थनित्यत्वाङ्गीकारेण भवन्त्येव नः सम्मता आस्तिकाः। तथा च 'नास्ति परमेश्वर इति मतिर्येषां ते नास्तिकाः' इत्येतन्नास्तिकलक्षणस्य क्षित्यादितत्त्वचतुष्टयक्षणिकत्ववादिष्वेव संघटमानतया त एव नास्तिकाः प्रवक्तुं शक्या न पुनश्चार्वाकाः। इत्थं च तेषां बृहस्पतिमतानुसारिणां चार्वाकाणां नास्तिकत्वं सुखेन परिहर्तुं प्रभूयते।

यत्तु कामार्थव्यतिरिक्तयोर्धर्ममोक्षयोः पुरुषार्थत्वानङ्गीकारेण, चैतन्यविशिष्टदेहव्यतिरिक्तस्य जीवात्मनो नित्यसत्त्वानङ्गीकारेण, परलोकादिप्रतीवादेन, कर्त्रस्मरणेन हेतुना वेदानां प्रामाण्यापरिग्रहेण च चार्वाकेषु वयं नास्तिकत्वमाक्षिपामस्तदपि लब्धेऽवसरे शनकैः परिहर्तुं सुखेन पारयिष्यते। सम्प्रति तु न साम्प्रतमनपेक्षितमधिकं वक्तुं वा लिखितुं वेति कृतं पल्लवनेनेति शम्।

---

# मुमुक्षूणामक्षराणि

( व्याकरणवाचस्पतिः पं० श्रीश्यामानन्द झा, दर्शनपोष्ठाचार्यः V.A.N.S.K.T.S.A. प्रधानाध्यापक I.V.M. सं० कॉ० मुम्बई )

(क) तीरोपेक्षी वहति जलधिः क्षेपणी नास्ति तोया-
न्यावर्त्तोऽयं विधमति मुहुर्नाविको दिग्विमूढः।
हंहो नौके! किमिह विधिना केवलं नीरपूरे
सीमादूरे मम तु सहसा पातने योजिताऽसि॥ १॥

---

(क) 'जलधिः=संसारः', 'क्षेपणी=भक्तिर्वैराग्यं वा', 'तोयानि=शमदमादीनि', 'आवर्त्तः=विषयेन्द्रियसन्निकर्षः', 'नाविकः=मनः', 'नौके=शरीर', 'नीरपूरे=तमोगुणविशिष्टे', 'सीमादूरे=पापयोनौ'।



श्रीमोहमयीप्रान्तस्य प्रसिद्धो दार्शनिकपण्डितः कविचूडामणिः
श्रीश्यामानन्द झा महोदयो व्याख्यानवाचस्पतिः प्रधानाध्यापकः
J.V.M. सं, कॉलेज. मुम्बई.

निर्णयसागर प्रेस, मुंबई.

(ख) आयातः क्व चिरेण नाविक ! तरीं त्वं वाहय नाद्याऽपि रे
तीरं दृक्पथमभ्युपैति न च दिग्भेदं मतिश्चुम्बति !
पारे स्वप्नकथाऽपि नैव वलते मे किन्त्ववारं पुन-
र्नेतुं न क्षमितासि चेत्किमु परप्राणैः समुत्क्रीडसि ॥ २ ॥

(ग) भाग्ये नैव तरीकथा ननु तथाप्युन्निष्य यष्टिं स्वयं
नीत्वा भारमिमं सुखे श्रमिक ! रे तर्तुं वृथा वाञ्छसि ।
उत्तुङ्गो जलधिस्तटं न निकटे हिंस्राः सहस्रात्परे
वृद्धोऽभूर्वयसा न साहसरसं कुर्य्या विपर्य्याकुलः ॥ ३ ॥

(घ) रूपैर्भिन्नतमैर्गुणैरभिनवैरन्यैश्च नामाक्षरैः—
स्त्वामेते भ्रमयन्ति वञ्चनबुधाः पञ्चाऽपि ते बन्धवः ।
तन्नामीषु कदापि विश्वसिहि रे पञ्चत्वमप्यञ्चता—
मेतेषां चरितानि चेतसि कथं रे मूढ ! नो चेतसि ॥ ४ ॥

(ङ) वारंवारमुपेत्य किं मम कुटीद्वारं पुनर्वारये
भिक्षो ! मत्सविधेऽस्ति किञ्चिदपि नो न क्षोभमापादय ।

---

(ख) 'क्व=मानवयोनौ' 'चिरेण=अनेकजन्ममरणेभ्यः' 'नाविक=मनः' 'तरीम्=शरीरम् ( संसाराब्धितरणे शरीरमेव तरी भवति ) 'तीरम्=संसारसीमाम्' 'दिग्भेदम्=कर्त्तव्याकर्त्तव्यविवेकम्' 'पारे=मोक्षे' 'अवारम्=पुनर्मानवशरीरम् ( पुण्येनैव मानवशरीरं लभ्यते ) ।

(ग) 'तरीकथा=जगति मिथ्यात्वग्रहस्य भावना' 'यष्टिम्=भगवद्भक्तिं' ( मिथ्यात्वग्रहस्य साक्षान्मोक्षौपयिकतया तरीत्वारोपः, भक्तौ तु साक्षात्तदनुपधायकत्वेन तदपेक्ष्य क्षुद्रसाधनत्वेन यष्टित्वारोपः, यथा यष्टेः सौलभ्यं न तथा नौकाया इत्यपि प्रत्येतव्यम् ) 'भारम्=अदृष्टम्' 'श्रमिक=आत्मन् ( जन्ममरणप्रयोज्य-श्रमवैशिष्ट्येन तत्त्वम् )' 'जलधिः=संसारः' 'हिंस्राः=कामक्रोधादयस्तामसगुणाः' 'वृद्धः=अनेकजन्म-परिग्रहग्रस्तः' 'तटम्=संसारसीमा' 'साहसरसम्=संसारविजिहीर्षाम्' ( मोक्षान्तरायाद्यपरिच्छिन्नतया नियतिसत्त्वे तदसम्भवेन तरणे वृथात्वमुन्नेयम् )

(घ) 'रूपैः=कीटपतङ्गपशुमानवादिभेदभिन्नैः स्वरूपैः' 'गुणैः=सात्त्विकराजसतामसैः' 'नामाक्षरैः= चैत्रमैत्रादिभिः' 'भ्रमयन्ति=ममतामुत्पादयन्ति' 'पञ्चाऽपि बन्धवः=आकाशादिपञ्चतत्त्वानि' 'पञ्चत्वं=निर्णयकर्तृत्वं' पक्षे स्वजातीयतत्त्वे विलयम्' 'चरितानि=आत्मानं दुःखेषु निपात्य स्वयं स्वजातीयतत्त्वे मिलन्तीति कृतघ्नताहरणानि' 'मूढ=अज्ञाननिवृत्तेरभावात्त्वम्' ।

(ङ) 'कुटीद्वारम्=हृदयमार्गम्' 'भिक्षो=महाप्रलयकाल' [illegible] सम्भवा-

एषा मे कुलकन्यका तव जरत्कङ्कालशेषं वपुः
शङ्काभिः समुदीक्ष्य जीवितमपि व्याहन्तुमाकांक्षति ॥ ५ ॥

( च ) शरारुरयमुत्कटं नहति नास्य दण्डक्षमः
क्षमासु नृपवल्लभः क्षणमपीक्षणे लक्ष्यते ।
अरे पुरुष ? किं मुधा प्रकृतिदास ? निर्लेपिता–
बलेन वनिताऽञ्चले पुरुषताचले चञ्चलः ॥ ६ ॥

( छ ) कोऽत्र क्रन्दति तं चिरेण परिघैः केऽयं मुहुर्हिंसते
कीदृक् कोपविडम्बनावहमिदं चित्रं समुन्मीलति ।
आस्वाद्येत परस्वमेव यदि वा न स्याद्विवेकोदयः
काले यत्र भजस्व पौरुषमतिं रे मूढ ! किं रोदिषि ॥ ७ ॥

( ज ) रंस्ये हन्त कया सुहृत्कुलमणे ! यात्वेकमात्रे धियं
दध्याद्द्वयभावनां च रचयेत् सा दुर्लभा वीक्ष्यते ।
भुक्ताः कोटिशतैः पुनः कतिपयैः सङ्क्रम्य दूरोज्झिता
भुज्यन्ते कतिभिः किमासु हृदय ! त्वं रन्तुमुत्कण्ठसे ॥ ८ ॥

---

देवमुच्यते ) 'किञ्चित्=सुखादि' 'कुलकन्यका—वैराग्यभावना' 'जरत्कङ्कालशेषं वपुः—भीषणं स्वरूपम्' ( प्रत्यवायस्य स्वभावादेव महाभीषणत्वं सात्त्विकप्रधानं वस्तु ततो वेपते ) ।

( च ) 'अयम्=प्रकृतिपुरुषयोरभेदाभासः ( पुरुषे असतोऽपि दुःखादेर्भासकत्वमेव शरारुत्वम् )' 'नृपवल्लभः=अभेदबुद्धिनिवृत्तिप्रयोजकप्रतीकारः' 'प्रकृतिदास=अव्यक्तायास्तस्या वशीभूत' 'निर्लेपिता=सा च सांख्यपुरुषे प्रसिद्धा' 'वनिताञ्चले=प्रकृतिसमीपे' 'पुरुषताचले=स्वस्वभावासङ्गत्वाद्यचले' ।

( छ ) 'कः=अविद्याविमुखप्रायजीवः' 'क्रन्दति=अज्ञानसम्पर्काद्दुःखीभवति' 'परिघैः=कामक्रोधादिभिः विषयसम्बन्धैर्वा' 'इयम्=माया' 'हिंसते=संसाराभिमुखीकरोति' 'परस्वम्=आत्मस्वभावभिन्नं दुःखादि' 'पौरुषमतिम्=नित्यशुद्धबुद्धादिस्वभावस्मृतिम्' ।

( ज ) 'कया=विवेकबुद्ध्या' 'एकमात्रे=परब्रह्मणि' 'अद्वयभावनाम्=अद्वैततत्त्वम्' 'कोटिशतैः=अज्ञानि-भिः' 'कतिपयैः=विवेकिभिः' 'सङ्क्रम्य=अज्ञानावस्थायां तामनुगम्य' 'दूरोज्झिता=विवेकोदये दूर-[illegible] [illegible] [illegible] [illegible] [illegible] ।

(क) दूती नो चतुरा न वैभवलवो नो याचितुं साहसं
नित्यानन्दरसे वधूकुलमणे ! त्वां केन संसाधये ।
उत्सृज्येय वपुः परे, विरचये स्वर्गेऽपि विद्वेष्यता-
मेतेनैव दयस्व देवि ! परमं दूरं कथं लीयसे ॥ ६ ॥

---

# मीमांसका ईश्वरवादश्च

( ले० महामहोपाध्याय--पं० श्रीचिन्नस्वामिशास्त्रिणः, वेदविभागाध्यक्षाः, हिन्दूविश्वविद्यालयः काशी )

जन्मक्षेमाप्ययैर्लक्ष्यं जगतोऽनन्तशक्तिकम् ।
सर्वज्ञं तमनीशानं परमेशानमीमहे ॥

शीर्षकोदीरितविषयोऽयमतिगभीरो नैतावता कालेन केनाऽपि निर्णयपथमवतारितो नाऽपि सुशकोऽल्पेनाऽऽयासेन कस्मिंश्चिन्निर्णयेऽवस्थापयितुम्, तथापि अतिसङ्कुचिते समये यथामति यथाप्रमाणोपलम्भं विषयमिमं विदुषां पुरतस्समुपस्थापयितुं प्रयत्यते ।

तत्र तावन्महर्षिणा जैमिनिना धर्मस्वरूपादिकं सपरिकरं निरूपयितुं अतिविशालसूत्रजालसन्दृब्धं मीमांसाशास्त्रं रचयता न मनागपि मुखं विवृतमीश्वरविषये । नवमाध्याये प्रथमचतुर्थाधिकरणे पुरुषानुष्ठिततत्तत्कर्मणां फलदातृत्वं सत्तत्कर्माराधिताया देवतायाः कर्मण एव वेति परं विचार्य, तत्तत्कर्मसु देवताया गुणभावमापाद्य कर्मण एव फलदातृत्वं सिद्धान्तितम् । एतावता किमायातमीश्वरविषय इति नाऽवधारयितुं पार्यते । भाष्यकारेण तु शबरस्वामिना देवताया १ विग्रहादिपञ्चकं निराकृत्य तदभावेन तद्रहिताया देवताया अनीशत्वमापाद्य कर्मण एव फलदातृत्वं तत्रैव सिद्धान्तितम् । तावताऽपि न कोऽपि निर्णय ईश्वरविषये पर्यवस्यति । तत्र परं परीक्षका एवं विवेचयन्ति । इन्द्रादीनां देवानां विग्रहादिनिराकरणेन तत्तुल्यन्यायादीश्वरस्याऽपि तन्निराकृतमेव भवति । अतो भाष्यकारो देवानामीश्वरस्य च चैतन्यस्वरूपमेव नाऽङ्गीकरोति इत्येव पर्यवस्यति । परमयमर्थस्सूत्रकारहृदयारूढो न वेत्ययमंशस्समुन्मिषति । तत्र मीमांसकेष्वेव बहवो बहुधा विवदन्ते । केचिद्देवमाशेरते--सूत्रकाराभिमतमेवाऽर्थं भाष्यकारो व्यवृणोत् स्वग्रन्थ इत्येव कथनमुचितं न्याय्यं च । सूचितश्चाऽयमर्थो बहुत्र सूत्रकारेण । २ दशमे विधिगतशब्दस्यैव देवतावाचकस्य त्यागकाले उच्चारणं नियमयन् सूत्र-

---

(क) 'दूती=बुद्धिः' 'चतुरा=सात्त्विकी' 'वैभवलवः=विवेकलेशः' 'साहसम्=ईश्वरयाचनासामर्थ्यरूपभक्तिः' 'नित्यानन्दरसे=अद्वैतभावने' 'उत्सृज्येय वपुः=मुमुक्षुः शरीरं जिहासति स्वर्गेऽपि विद्वेष्यतां निधत्ते मोक्षापेक्षया तयोरल्पत्वात्' [illegible] ।

---

१—[illegible] ऐश्वर्यं फलदानसामर्थ्यम् । [illegible] । २—पू० मी० ( १० । ४ । ३१ ) [illegible] । इति [illegible] ।

कारः शब्दस्यैव प्राधान्यावगमनद्वाराऽर्थमुपेक्षत एवेति भाति। नवमेऽपि च देवताधिकरणे "अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् तस्य प्रीतिप्रधानत्वात्" इत्यनेनाऽपि सूत्रेण देवतायाः प्रीतिर्नास्तीति वदता तदुपलक्षितं विग्रहादिकं निरस्तमेव प्रतीयते। एवं द्वितीयाध्याये १ स्तुतशस्त्राधिकरणे विधिगतशब्देनैव देवतोपलक्षणं विदधत् सूत्रकारः शब्दरूपामेव देवतां मनुत इति वक्तव्यं भवति। एवं तत्र तत्राऽभिहितं सूत्रकारेण सूचितं चार्थं भाष्यकारो नवमे देवताधिकरणे विशदयामास। अतस्सूत्रकारस्याऽपि देवताविग्रहादिकमनभिमतमेव। तदेव च स्पष्टीकृतम्-२'न हि अविग्रहायै अभुञ्जानायै च दानं भोजनं वा सम्भवति' इत्यादिना भाष्यकारेण। अत एवोत्तरतन्त्रे फलाधिकरणे ईश्वरस्यैव फलदातृत्वमभिप्रयता भगवता बादरायणेन ३ 'धर्मं जैमिनिरत एव' इति सूत्रेण कर्मण एव फलदातृत्वरूपं जैमिनिमतं पूर्वपक्षतयोपन्यस्तम्। सूत्रमेतद्विवृण्वानैराचार्यशङ्करभगवत्पादप्रभृतिभिरुपसंहृतमन्ते-'ईश्वरस्तु फलं ददातीत्यनुपपन्नम्' इति।

एवं तत्रैव देवताधिकरणे '४तदुपर्यपि' इति सूत्रे सुस्पष्टमुपपादितम्—'न तेषां (देवानां) सामर्थ्यमस्ति, विग्रहाद्यभावात्। विग्रहवन्तो हि स्मृतिध्यानादिषु समर्था' इति। 'तस्माद्देवताविग्रहादावन्तरतात्पर्यस्याऽप्यभावात् ततस्तत्सिद्धिर्नास्त्येव' इति शिवार्कमणिदीपिका। इदं च जैमिनिमतमित्येव सर्वे व्याख्यातारस्साम्प्रदायिकाः। विग्रहवती चाऽनित्या स्यात् इति पार्थसारथिः। एवं विग्रहवत्त्ववादोऽप्युपचारिक इति ध्येयम्, इति सोमनाथश्च, 'अतः कथमपि न विग्रहस्वीकारः। किन्तु शब्दमात्रं देवता। अर्थस्तु प्रातिपदिकानुरोधात् चेतनोऽचेतनो वा कश्चित्कल्प्यते न तु विग्रहादिमान्। इति जैमिनिमतनिष्कर्षः' इति खण्डदेवो भाट्टदीपिकायाम्। एतैर्वचनजातैर्जैमिनेरपि महर्षेर्देवताविग्रहाद्यभाव एव हृदयारूढ इति प्रतिपत्तव्यं भवति। तत्रैतत् स्यात् देवताविग्रहादिनिराकरणेऽपि ईश्वरनिराकरणं न सिद्ध्यति जैमिनिमते, यतस्तद्विषये किञ्चिदपि नोक्तं तेनेति। अत्रेदं विचारणीयम् विचारशीलैः—यदप्रयोजनं न तत्प्रेक्षावत्प्रवृत्त्यभ्युपगमगोचर इति घण्टापथः। तत्र यथावदनुष्ठितैस्तैस्तैः कर्मभिरेव स्वजन्यापूर्वद्वारा तत्तदुच्चावचानि प्राप्येरन् फलानि प्राणिभिरिति नाऽत्र कस्यचिच्चेतनस्य फलदत्वेन प्रवेशोऽस्तीति न तदर्थमीश्वराभ्युपगमस्साधीयान्। अवशिष्यते तु जगज्जन्मस्थितिभङ्गार्थं तदावश्यकता। अस्य हि जगतो महतो नामरूपाभ्यां विभक्तस्याऽनेककर्तृभोक्तृसंयुक्तस्य विविधविचित्रस्वभावस्य प्रतिनियतनिमित्तक्रियाफलाश्रयस्य मनसाऽप्यचिन्त्यरचनस्य कर्ता नाऽन्यश्चेतनोऽचेतनो वा भवितुमीष्ट इति तदर्थमीश्वराङ्गीकरणमिति। तदपि विवेकवतां नाऽतीव मनो रञ्जयति। यतो हि प्राणिनां तत्तत्कर्मफलभोगान्यथानुपपत्त्यैव तदपेक्षितनिखिलवस्तुजातोत्पत्तेरवश्यंभावात्। अन्यथा साधनसामग्र्यभावे कर्मफलस्य यथावदनुभवितुमशक्यत्वात्। अतः कर्मैव स्वर्गसुखादिकमिव सुखसाधनानि सर्वाण्यपि वस्तूनि निष्पादयति स्वापूर्वद्वारेति किं तदितिच्छन्नमीश्वरानभ्युपगमे ?। अङ्गीकृतस्य वा तस्य किं कार्यमवशिष्येत कर्तव्यम् ? यत् कर्मणा न साध्येत ? कीदृशं वा स्वातन्त्र्यमस्ति तस्य जगत्सर्जने

१—पू० मी० (२।१।१३।१६)। 'न श्रुति सामान्यात्' 'व्यपदेशाच्च' 'गुणश्चाऽनर्थकस्स्यात्' 'तथा याज्यापुरोरुचोः' इति चतुर्भिस्सूत्रैः विधिगतशब्देनैव देवताभिधानं सूचयामास। २—पू० मी० (६।१।६)। ३—बा० सू० (३।२।४०)। ४—बा० सू० (१।३।२४) अत्रत्यं श्रीकण्ठभाष्यं शिवार्कमणिदीपिकां तदीयां व्याख्यां समग्रावलोकनीया।

कर्मफलप्रदाने वाऽणुमात्रमपि प्राणिकर्मजन्यादृष्टसाधनरहितस्य ? विस्तरेण चेदं जगत्कर्तृत्वमीश्वरस्य खण्डितं श्रीकुमारिलभट्टैः [1]श्लोकवार्तिके—

तथा चाऽपेक्षमाणस्य स्वातन्त्र्यं प्रतिहन्यते ।
जगच्चाऽसृजतस्तस्य किं नामेष्टं न सिद्ध्यति ॥
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।
एवमेव प्रवृत्तिश्चेत् चैतन्येनास्य किं भवेत् ॥
क्रीडार्थायां प्रवृत्तौ च विहन्येत कृतार्थता ।

इत्यादिना । अतो नैकरमा अपि प्रयोजनायेश्वराङ्गीकरणमावश्यकमिति किमनेन निष्प्रयोजनेनाऽन्तर्गडुनेश्वरेणेत्येवाऽऽस्थितं कैश्चिन्मीमांसकैः । ये नाम केचन मीमांसका अपि ईश्वरास्तित्वं जगतश्चेश्वरकर्तृकत्वमुररीकुर्वन्ति ते पौराणिकैराख्यानादिभिः प्रभावितचेतसो यथाश्रुतग्राहिणः इति । तथा हि शब्दार्थसम्बन्धनित्यत्वकथनावसरे ईश्वरविषये किञ्चिदप्यवश्यवक्तव्यमनुक्तवन्तं भाष्यकारं तद्व्याख्यातारं प्रभाकरमिश्रं चाऽऽक्षिप्य तच्छिष्यश्शालिकनाथमिश्र एवं कथयति तत्रैव—'अत्र केचिदर्थवादगतसृष्टिप्रलयश्रुत्युपनिपातमात्रोपजातश्रद्धातिशयविप्रलुब्धबुद्धयः कणभक्षाक्षचरणमतप्रवणचेतसः सर्वस्य तनुभुवनादेः ईश्वरकारणतामाचक्षाणाः प्रचक्षते सर्वमित्यादि । तदिदं प्रतिपक्षकक्षामपि नाऽऽरोढुं क्षमत इत्युपेक्षितं भाष्यनिबन्धकारेण । तस्मादीश्वरवादोऽस्माभिरपि न निरस्त इति ।' तेनैव प्रकरणपञ्चिकायां निर्मलाञ्जनप्रकरणे विस्तरशो निरस्त ईश्वरकारणतावादः ।

नन्वीश्वरस्तु प्रभाकरविजयेऽपौरुषेयत्वप्रकरणे[2] ईश्वराङ्गीकरणमावश्यकं मन्वानः तदर्थमपि वेदस्याऽपौरुषेयत्वमभ्युपगन्तव्यमिति वदति । उक्तं हि तत्र तेन 'किञ्च अपौरुषेयत्वानङ्गीकारे ईश्वरसिद्धिर्न स्यात् । ईश्वरस्य वेदकरणात् प्रागप्रमाणकत्वप्रसङ्गः । अपौरुषेयत्वे सिद्धे स्वर्गादिसिद्धिवदुपपद्यते ताऽपि । एवं चेश्वरे परोक्तमनुमानं निरस्तम्, नेश्वरो निरस्तः' इति ।

पार्थसारथिमिश्रैर्जगत ईश्वरकर्तृकत्वं निषेधद्भिरपि तदस्तित्वनास्तित्वविषये मौनमवलम्बितम् । मानमेयश्लोकवार्तिककारेणाऽपि मीमांसकमतमनुवदता—

[3]अथ पुण्यापुण्यरूपकर्मशक्तिनिबन्धनाः ।
सर्वा व्यवस्थास्सिध्यन्ति कृतमीशेन तादृशा ॥

इत्येवाऽनूदितम् । अतो जैमिनेरारभ्य पार्थसारथिमिश्रपर्यन्ता मीमांसका नातीवोपयोगमीश्वराङ्गीकरणस्य पश्यन्तीति विभाति ।

अर्वाचीनास्तु केचन मीमांसकास्सूत्रकारस्य देवताविग्रहादेरीश्वरस्य निषेधे न मनागपि तात्पर्यम् । किन्तु देवताया अप्राधान्यप्रतिपादने । तदपि कर्मणि श्रद्धातिशयजननार्थमेव न वस्तुतः ।

अत एव न तादृशाश्शब्दास्सूत्र उपलभ्यन्ते यैः देवताविग्रहादिनिषेधोऽभ्यूहितुमपि शक्येत । भाष्यकारस्तु बलान्निषेधति विग्रहादिकमुत्सूत्रं प्रवृत्तः । वार्तिककारस्याऽप्यास्तिकशिरोमणेर्नैवाऽभिमतं विग्रहनिषेधादिकम् । भाष्योक्तिमवलम्ब्यैव च तत्र तत्र प्रसृता वाणी मीमांसका नेश्वरमङ्गीकुर्वन्तीति । तथा ह्युक्तं सेश्वरमीमांसायां प्रथमाधिकरणे [4]श्रीमद्वेदान्तदेशिकैः—'भगवतो जैमिनेः कर्मणः फलोपन्यासः कर्मश्रद्धासंवर्धनाय । वेदार्थसङ्ग्रहेऽपि—अश्रुतवेदान्तानां कर्मण्यश्रद्धा मा भूदिति देवताधिकरणेऽतिवादाः कृता इत्यादि ।

१—श्लोकवा॰ पृ॰ ६५३ चौ॰ सं॰ । २—वृ॰ पृ॰ १६० पं॰ १७ । पृ॰ १६१ पं॰ ३, २८ मद्रास सं॰ ३—मा॰ श्लो॰ वा॰ पृ॰ २१६ पं॰ १३ । ४—से॰ मी॰ पृ॰ २ पं॰ ५ । काञ्चीपुरे मुद्रिते ।

कुतूहलवृत्तौ मन्त्राधिकरणे वासुदेवदीक्षितैरपि—[1] ननु नवमे देवताविग्रहचैतन्यादिकं निराकरिष्यते। सत्यं निराकरिष्यत उत्सूत्रं भाष्यकृता। न तु सूत्रकृता। प्रत्युत सूत्रकारस्य देवताविग्रहादिकमभिमतमेव वार्तिकाभिमतं चेत्यादि। षष्ठाध्याये तिर्यगधिकरणे च—[2]शब्द एव देवता नत्वर्थ इति बौद्धप्रलपितमेव। तथा विग्रहरहितोऽर्थो देवतेत्यपि प्रच्छन्नबौद्धप्रलपितमेव। यागविधिसामर्थ्यादेव तद्विग्रहलाभात्। अत एव वार्तिककारो नवमे विग्रहादिविषयमस्पृष्ट्वैवाऽधिकरणं व्याख्यातवान्। अतो निरीश्वरवादप्रवादः प्रच्छन्नबौद्धैकदेशिविषय इति। भाट्टदीपिकायामपि मीमांसकमते स्थित्वा देवताविग्रहादिकं निराकुर्वतस्तज्जन्यात् पापादीशकोपाद्वा नितरां बिभ्यतः खण्डदेवस्य वचनम्—' मम त्वेवं वदतो वाणी दुष्यति। तत्र हरिस्मरणमेव शरणम्' इति।

एवं देवताविग्रहविषय ईश्वरविषये परस्परं विसंवदतां महर्षिप्रमुखानामर्वाचीनान्तानां च मीमांसकमूर्धन्यानामतिगभीरवचसां वचस्सारमुद्धर्तुं यथावद् ग्रहीतुं वाऽपारयन्तो वयमल्पमेधसः केवलममीषां वचनजातं विदुषां पुरत उपक्षिपन्तः, अनादिकालप्ररूढामतिसुदृढामच्छेद्यां प्रतिक्षणमात्मानमीशाधीनमवबोधयन्तीं वासनां केवलशास्त्रात्तरैरुच्छेत्तुमनीशाः तदस्तित्व एव दृढनिविष्टचेतसः तमेव परमेश्वरं सर्वज्ञं सर्वनियन्तारं करुणासिन्धुमनवरतमनुस्मरन्तस्तदनुग्रहैकभाजनमात्मानमापादयन्तोऽत्रैवोपसंहरामः ॥

---

# दर्शनानां नाप्यप्रामाण्यन्न चापि विरोधः

( ले० —महामहाध्यापकपञ्चाम्बुभूषण पं० श्रीबलाकिरामशास्त्रिणः विद्यासागर रत्नाकर वाचस्पतिः, अमृतसर )

दर्शनम्—इति पदं पाणिनीयव्याकरणशास्त्रानुसारं 'दृशिर् प्रेक्षणे' धातोः करणे ल्युट्प्रत्यये कृते सति सिद्ध्यति। दृश्यते प्रेक्ष्यते ज्ञायते चानेनेति दर्शनम्। 'दृष्टिर्ज्ञाने ऽक्षिणि दर्शने' इत्यनुशासनात्। प्रेक्षणं ज्ञानञ्चापि दर्शनशब्दार्थः। यथोक्तम्-'यदाभ्युदयिकञ्चैव नैःश्रेयसिकमेव च। सुखं साधयितुं मार्गं दर्शयेत्तद्धि दर्शनम्' इति। 'अस्ति नास्ति दिष्टं मतिरिति' पाणिनीयसूत्रेण तद्धितेषु ठक्प्रत्यये विहिते सति नास्ति परलोकादिकमिति मतिर्यस्य स नास्तिकः। अस्ति परलोकादिकमिति मतिर्यस्य स आस्तिक इति पदद्वयं सिद्ध्यति।

तदेवं नास्तिकास्तिकभेदेन दर्शनान्यपि द्विविधानि सन्ति। नास्तिकदर्शनानि, आस्तिकदर्शनानि चेति। तत्र च चार्वाकमाध्यमिकयोगाचारसौत्रान्तिकवैभाषिकार्हतभेदेन षड्विधा नास्तिकाः सन्ति। सर्वैरप्येतैर्वेदविरुद्धान्येव षड्दर्शनानि प्रदर्शितानि। तानि च सर्वाण्येव वेदविरुद्धत्वात् त्याज्यानीति तच्चर्चातो विरम्यते।

आस्तिकदर्शनान्यपि न्यायवैशेषिकसांख्ययोगपूर्व[धर्म]मीमांसोत्तर(ब्रह्म) मीमांसाभेदेन षडेव सन्ति।

तानि चैतानि सर्वलोकोपकारकारकैः परमकारुणिकैर्महर्षिभिरास्तिकमतसमाधानार्थं नास्तिकमतनिराकरणार्थञ्च प्रणीतानि। साक्षात्परम्परया वा यथा कथञ्चित् परमपुरुषार्थमोक्षसम्पादनमेव प्रयोजनन्तदर्थमेव

---

१—कुतूहल० वृ० १।२।४ पृ० ४७ पं ८।१० औरङ्ग मुद्रिते २—न मुद्रितोऽद्ययावदयं भागः।

सर्वेषां प्रवृत्तेरिति। किं च,

वेदे काण्डत्रयं प्रोक्तं कर्मोपासनबोधनम्।
साधनन्तत्र युग्मोक्तं तृतीये साध्यमीरितम्॥

अपिच-श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः
मत्वा च सततं ध्येय एते दर्शनहेतवः॥

इत्यादि प्रतिपादितं शास्त्रकारैः।

अत एवादौ मलदोषनिवृत्तयेऽन्तःकरणशुद्धये चापि प्रथमस्य कर्मकाण्डस्य ततश्च विक्षेपदोषापनुत्तये चित्तैकाग्रतास्थितये चापि द्वितीयस्योपासनाकाण्डस्य; तदनन्तरञ्चावरणदोषनिवारणार्थमात्मसाक्षात्कारकरणार्थञ्चापि तृतीयस्य ज्ञानकाण्डस्याप्यनुष्ठानं परमावश्यकमिति त्रिकाण्डस्यैव वेदस्यावश्यकतोपयोगिता चापि निर्विवादं प्रतीयते।

'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'—इति श्रुत्यादेशात आत्मसाक्षात्कार एव परमः पुरुषार्थस्तदर्थमेव च श्रवणमनननिदिध्यासनानि त्रीणि साधनानि क्रमशः समाश्रयितव्यानीति। तत्र च 'श्रोतव्यः'—इति श्रवणसाधनसिद्धये महर्षिजैमिनिकृतपूर्व (धर्म्म) मीमांसादर्शनं, श्रीवेदव्यासप्रणीतमुत्तर-(ब्रह्म) मीमांसादर्शनञ्चापि। तथा 'मन्तव्यः' इति मननसाधननिष्पत्तये महामुनिगौतमाचार्यकृतं न्यायदर्शनं, महर्षिकणादप्रणीतं वैशेषिकदर्शनं श्रीकपिलदेवविरचितं सांख्यदर्शनं चापि। तथा 'निदिध्यासितव्यः' इति निदिध्यासनसाधनसम्पत्तये महर्षिपतञ्जलिविरचितं योगदर्शनञ्चापि समुपयुज्यते। युक्तिप्रमाणोपपत्तिभिस्तत एव तत्तत्साधनसिद्धेरिति।

सर्वैरपि दर्शनकारैरात्मसाक्षात्कारसाधनानि श्रवणमनननिदिध्यासनानि यथाशास्त्रं प्रतिपादितानीति सर्वेषामेव दर्शनानां सम्यक्तया ज्ञानसम्पादनमतीवावश्यकमिति।

दृश्यमानेऽस्मिन्ननन्तब्रह्माण्डभाण्डोदरेऽसंख्याता एव विविधाः पदार्था दृश्यन्ते। तत्र प्रत्येकपदार्थस्य नामलक्षणपरीक्षाभिः पूर्णतया ज्ञानसम्पादनं दुःसाध्यमेव। यथोक्तमपि—

इदं ज्ञेयमिदं ज्ञेयं यः सर्वं ज्ञातुमिच्छति।
स तु वर्षशतेनापि नान्तं याति पृथक् पृथक्॥

एतदेवावधार्य्य सुविचार्य्य च साक्षात्कृतधर्माणो महर्षयः सकलपदार्थानां सूक्ष्मतयालौकिकदृष्टया सम्पूर्णमामूलचूलमनुसंधानं संविधाय स्वानुभूतज्ञानप्रचारणाय स्वाभिमतं दर्शनशास्त्रं प्रकाशयामासुः। दुःसाध्यमपि सकलपदार्थतत्त्वज्ञानसम्पादनं सुसाध्यञ्चक्रुरित्यत्र नास्ति कस्यापि विचारवतो विसंवादः। यद्यपि षण्णामेषामास्तिकदर्शनानां स्थूलदृष्ट्यापाततः परस्परं विरोधः प्रतिभाति, तथापि शास्त्रीयसूक्ष्मविचारदृष्ट्या तु न कोऽपि पारमार्थिको विरोध इत्यतीव संक्षिप्य दिङ्मात्रं संप्रदर्श्यते।

तत्र तावन्न्यायदर्शने प्रमाणादयः षोडशपदार्थाः प्रदर्शिताः, परन्तु वैशेषिकदर्शने तु द्रव्यादयः सप्तैव पदार्था निरूपिता इति महानेवायं विरोधः कथं समाधीयते?

अत्रोच्यते। नैयायिकाभिमतानां प्रमाणादिषोडशपदार्थानां वैशेषिकाभिमतेषु द्रव्यादिसप्तपदार्थेष्वेव यथायोग्यतयान्तर्भावसम्भव इति न कोपि वास्तविको विरोधइति। विशेषत आत्मनः कर्तृत्वाकर्तृत्वसगुणनिर्गुणत्वनानात्वैकत्वविचारविषये न्यायवैशेषिकसांख्यवेदान्तदर्शनानां परस्परं महान् विरोधोऽवलोक्यते।

अत्रोच्यते—मन्दमध्यमोत्तमाधिकारिभेदात् प्रथममध्यमोत्तमभूमिकानुसारं स्थूलसूक्ष्मव्यावहारिकपारमार्थिकविषयभेदव्यवस्थया न कस्याप्यप्रामाण्यन्न चापि तात्त्विको विरोधः। नैयायिकैर्वैशेषिकैश्चापि अहं सुखी दुःखीति लौकिकानुभवादात्मनि सुखादिमत्त्वस्य लोकदृष्ट्या सि

द्धत्वात् प्रमाणान्तरानपेक्षतयैव तदंशस्यानुवादान्न तत्त्वाविकं शास्त्रतात्पर्यं दुःखाज्ञानमयाधर्माः प्रकृतेस्ते तु नात्मनः। इत्यादिना शास्त्रेण न्यायवैशेषिकात्मज्ञानस्य परमार्थभूमौ बाधितत्वादिति। न चैवं तच्छास्त्रस्याप्यप्रामाण्यम् विवक्षितेऽर्थे देहाद्यतिरिक्तांशे बाधाभावादविरोधाच्चेति।

इत्थमेवान्यत्रापि 'यत्परः शब्दः स शब्दार्थः' इति न्यायात् सर्वत्रैव सुव्यवस्थया समाधीयताम्।

सांख्यानामपि प्रशंसावचनं 'नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलम्। अत्र वः संशयो मा भूत् ज्ञानं सांख्यं परं मतम्' इति। तदपि तेषां प्रकृतिपुरुषविवेकविषये विज्ञेयम्, नत्वीश्वरप्रतिषेधांशेऽपि। तत्र तु तेषां निन्दैव श्रूयते—

'असत्यमप्रतिष्ठं च जगदाहुरनीश्वरम्' इत्यादिना तथा—"यत्र पश्यन्ति योगीन्द्राः सांख्या अपि महेश्वरम्।
अनादिनिधनं ब्रह्म तमेव शरणं व्रज॥"
इत्यादिना सांख्यानामीश्वराज्ञानमेव प्रतिपादितम्।

एवं च सांख्यशास्त्रस्याप्रामाण्यन्नाशङ्कनीयम्। सांख्यशास्त्रस्य मुख्यो विषयः प्रकृतिपुरुषविवेकद्वारा परमपुरुषार्थसम्पादनमेवेतीश्वरप्रतिषेधांशबाधेऽपि नाप्रामाण्यं 'यत्परः शब्दः स शब्दार्थ' इतिन्यायात।

निरीश्वरवादस्य दौर्बल्यं प्राबल्यन्तु सेश्वरवादस्यैवेति निश्चीयते। यथा—

अक्षपादप्रणीते च काणादे सांख्ययोगयोः।
त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्येकशरणार्थिभिः॥
जैमिनीये च वैयासे विरुद्धांशो न कश्चन।
श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि तौ॥

अत एवेश्वरनिरूपणे मुख्यत्वन्तु वेदान्तदर्शनस्यैव। दर्शनान्तराणान्तु गौणत्वमिति निश्चीयते। नैयायिकैर्वैशेषिकैश्चापि प्रथमभूमिकायामात्मा कर्तृत्वेन सांख्यैर्मध्यमभूमिकायां भोक्तृत्वेन वेदान्तिभिश्चोत्तमभूमिकायां सच्चिदानन्दरूपेण निर्णीत इति नापरोक्षं विपश्चिदपश्चिमानाम्।

इत्थं च षण्णामप्यास्तिकदर्शनानां स्वस्वविषयेषु समन्वयात् सार्थकत्वात् साक्षात् परम्परया वा यथाकथञ्चित् परमपुरुषार्थमोक्षोपयोगित्वाच्च न कस्याप्यप्रामाण्यं न चापि पारमार्थिको विरोध इति

संक्षिप्यातीव दिङ्मात्रमुदाहृत्य यथामति।
षड्दर्शनमतेनैव तद्विरोधो निराकृतः॥ १॥
प्रमादतोऽत्र यत्किञ्चित् स्खलनं दृश्यते क्वचित्।
गुणग्राहितया तत्तु क्षम्यतां सुविचक्षणैः॥ २॥
इत्यभ्यर्थयते शश्वद् गुणज्ञानां वशंवदः।
शास्त्रमर्मविदां दासो बलात्क्रामबालकः॥ ३॥



# श्लाघ्यः पूर्वतन्त्रसिद्धान्तः

( लेखकः—विद्यावाचस्पति–पं० श्रीरमापतिमिश्रः पनीचावास्तव्यः )

इन्द्रजाले पटुतामुपेयुषो नटस्य कृतिजन्मसु मूषकमार्जारनकुलसर्पादिषु जन्मान्तरसंस्कारवत्वे तेषां समुपस्थितस्य सन्देहस्य निराकरणे आम्यद्भिरपि दर्शकैर्दृश्यते प्राकृतिकमूषकादिष्विव विरोधादिव्यवहारः। एतेष्यात्मनः कल्पितत्वस्य पारस्परिकविरोधकारणस्य चाधिगमे सर्वथा सन्त्यसमर्थाः। प्राकृतिकसृष्टिषु वर्त्तमानो विरोधादिव्यवहारो दंशनादिधर्मो वा गोमयाद्युत्पन्नवृश्चिकादिष्विवाकृतिसाम्यादेतेष्वपि प्रविशति इति सर्वसाधारणानुभवगोचरं विषये मन्ये मात्सर्यास्पृष्टस्य कस्यापि वादिनो न भवेद्विसंवादः। इन्द्रजालनामकशास्त्रज्ञातत्वरूपा तत्तन्मन्त्रगतसामर्थ्यप्रादुर्भावकानुष्ठानकर्त्तृत्वरूपा च नटस्येन्द्रजालपटुता। इयं साध्या। वयमपि पामराः लोकोत्तरदर्शनाश्च सर्वे दर्शनकाराः स्याम। सिद्धसंकल्पस्य कस्यापि लोकनायकस्य नटस्य कृतिजन्मानः, परन्तु न स्मः शक्ता आत्मन उत्पत्तिकारणस्योत्पादकतत्त्वस्य चेदन्तामधिगन्तुम्। इदन्ताधिगतिस्तु दूरे तिष्ठतु। अस्त्यस्माकं कोऽप्युत्पादको नास्ति वा कश्चिदुत्पादक इति विकल्पस्यापि अन्यतरकोटिकसमुचितोत्तरदानेऽपि वयमसमर्था नटकृतिजन्मान इव मूषकमार्जारादयः। न केवलं वयमेव, दर्शनकारा अपि। एतस्मादेव कारणाद्विद्वन्मूर्द्धन्येष्वपि दार्शनिकविद्वत्सु विद्यते महान् मतभेदः। अस्यैव मतभेदस्य प्रतापाज्जगत् अपश्चापरनान्नापि प्रसिध्यति। केचिद्वदन्त्यस्त्यस्य जगत उत्पादकः कश्चित्। अयमेवेश्वरादिशब्दाभिधेयः सत्यसंकल्पः। केचिद्वदन्त्यस्त्यस्य जगतः कर्त्ता कश्चित्। परन्तु न स स्वभावादेव सत्यसङ्कल्पः। एतस्यापि सृष्टेरारम्भात्प्राक् तपसि प्रवृत्तेः श्रवणात्। तपश्चापि कर्मविशेषः। तद्बललब्धोत्पादनसामर्थ्यः। केचिद्वदन्ति नैतादृशोऽस्ति समष्टिरूपेण जगतः कोऽपि कर्त्ता। अनादिरनन्तश्चायं संसारः प्रवाहरूपेण नित्यः। व्यक्तिविशेषसापेक्षश्च सादिरनन्तः।

ईश्वरकारणवादिनां मतेऽपि नेश्वरस्यैकरूपेण कारणता। केषाञ्चिन्मते साधारणं निमित्तं कारणमीश्वरः। कार्यत्वावच्छेदेन कारणमिति साधारणम्। केषाञ्चिन्मते निमित्तमुपादानं च कारणमीश्वर एव। केचित्तु पितापुत्रयोरिव जीवेश्वरयोः कार्यकारणभावं मन्यन्ते। एतेषां मते प्रकृत्यधीशाद्वासुदेवाद्भगवतो जीवस्य संकर्षणस्योत्पत्तिः। एवमन्येऽपि सन्ति प्रभूता भेदा ईश्वरकारणिनाम्। प्रवाहरूपेण जगन्नित्यत्ववादिनामपि सन्ति प्रभूता भेदाः। एषु केचन पुनर्जन्मवादिनः केचन च तद्विरोधिनः। पुनर्जन्मवादिष्वपि केचन वेदप्रमाणाः केचन निजनिजागमप्रमाणाः। वेदप्रमाणेषु विशुद्धवैदिकाः पूर्वतन्त्रानुयायिनो मीमांसकाः। एतेषामेव सिद्धान्तो भाति श्लाघ्यः। एतत्तन्त्रानुयायिनो जैमिनिभट्टपादप्रभृतयः साध्ये धर्मे शास्त्रमेव ( वेदान् ) प्रमाणं मन्यन्ते। न तर्कादि [अहं तु सिद्धे ब्रह्मण्यपि शास्त्रमेव मन्ये प्रमाणम्। श्रोतव्यो मन्तव्य इत्यस्य श्रुत्वा मन्तव्य इत्यर्थः, पक्तव्यो भोक्तव्य इतिवत्] शास्त्रतात्पर्याधिगतौ तर्कोपयोग इत्यन्यत्। संसारस्यानादित्वेऽपि आश्रयरूपतया आकाशस्येव सादित्वपतयेश्वरसिद्धावपि नास्त्यस्य तन्त्रस्य विरोधः। तस्य तस्य परमापूर्वस्य स्वातन्त्र्येण

फलप्रदत्वे स्वस्वसंप्रदानज्ञानमावश्यकं भवति तद्वत्ता च तस्य तस्यैवेति कल्पनायां त्वनन्तानां परमापूर्वरूपव्यापाराणां चैतन्यमङ्गीकरणीयं भवेदिति भवेदसह्यं गौरवं तन्माभूदिति लाघवादेकस्यैवासर्वज्ञकृतकर्मणां साक्षिरूपस्य सर्वज्ञस्य न्यायाधीशस्येव मध्यस्थस्याकाशस्येव सिद्धस्य स्वीकारे लाघवमिति साक्षिरूपेणेश्वरस्वीकारवादिनां मतम्। भोक्तॄणां चैतन्येन तु न प्रक्रियानिर्वाहः। कस्यापि क्लेशभाजो दर्शनाभावप्रसङ्गात्। को नाम चेतनः क्लेशप्रदस्यापूर्वस्य स्वसन्निधावाश्रयं दद्यात्। कर्मसापेक्ष एव तु अयमपि कर्तुमकर्तुमन्यथाकर्तुं च समर्थः। न तन्निरपेक्षः। अन्यथा वैषम्यनैर्घृण्यादिदोषप्रसङ्ग आपतेत्। व्यष्टिरूपेणोत्पादप्रलयौ लोकस्येवास्य तन्त्रस्यापि सम्मतौ। समष्टिरूपेणोत्पादप्रलयवादिभिः सममपि नास्य दुष्परिहरो विरोधः शक्यते सुखेनापादयितुम्। प्रलयो हि सुषुप्तिस्थानीयः। उत्पादश्च सुषुप्त्युत्तरजागरस्थानीयः। समष्टिरूपेणोत्पादप्रलयवादिनां मतेऽपि बीजाङ्कुरन्यायस्य स्वीकार आवश्यकः। स्वापोत्तरमुत्पाद उत्पादोत्तरं च स्वापः। एतौ चोत्पादलयौ सावधिकौ। अवधेः परिच्छेदकापेक्षायां समष्टिरूपेण सुखप्रदादृष्टविशेषादन्यो न शक्यते वक्तुं परिच्छेदकः। ईश्वरस्य निरपेक्षस्य तत्त्वे तु प्रदर्शितो वैषम्यादिदोषः। स्वापश्च सुखविशेषस्य हेतुरवस्थाविशेषः। सुखं शेते इति चानुभवः। यथासमय स्वापाभावः क्लेशहेतुः। सुखविशेषावाप्तिश्चादृष्टविशेषस्यैव फलम्। एककालावच्छेदेन जीवजातस्य स्वाप एव प्रलयः। अयमपि च जीवजातस्यैकरूपेण सुखितत्वेन सामयिकसमानताप्रयोजकस्य कस्यचिददृष्टस्यैव परिणामः। अस्य स्वापस्य चिरस्थायितया सुखदुःखसाधनभूतानां भौतिकपदार्थानां स्वस्वमूलभूततत्त्वरूपेण भूतकशरीरस्येवावस्थानम्। यदा तेषामपि परमाधिष्ठाने ब्रह्मणि लयः। बहूनां समानताप्रयोजकः प्रसिद्धो दैनिकः स्वापः। सुप्तानां दीनानां दीननाथानां च समाना परिस्थितिः।

वाक्यार्थविचारे अस्यैव तन्त्रस्य सरणिः सर्वतन्त्रमान्या। वैदिकवाक्यानि विधिमन्त्रार्थवादैर्विभज्यानेनैव तन्त्रेण विशदतया व्याख्यातानि। अपूर्वफलयोरपूर्वानुष्ठानयोरपूर्वपरमापूर्वयोश्च सनातनोऽपि कार्यकारणभावो न केनापि ज्ञातो न च ज्ञातव्यः। एतज्ज्ञापकत्वाद्विधीनां सार्थक्यम्। प्रवृत्तिप्रयोजकत्वमप्येतेषाम्। अपेक्षितयोः कर्माङ्गभूतयोर्द्रव्यदेवतयोः स्मारकत्वेन मन्त्राणां सार्थक्यम्। अपूर्वादृष्टशब्दौ समानार्थौ। अदृष्टवर्गस्तारतम्येन बहुविधोऽपि सामान्येन द्विविधः। शुभोदर्कस्तद्विपरीतश्च। प्रथमो धर्मो द्वितीयोऽधर्मः। प्रोत्साहनद्वारा प्रवर्त्तकतया निन्दाद्वारा च निवर्त्तकतया अर्थवादानां सार्थक्यम्। प्रोत्साहेनेष्टसाधनता झटित्युदेति। निन्दया चाङ्कुरितापि सा विनश्यति। धर्मविहितकर्मणोः कार्यकारणभावो नित्य इति धर्मः सनातनः। सनातन इति च धर्मस्य स्वरूपलक्षणं विशेषणं सत्यस्येव ब्रह्मणः। श्रुतिलिङ्गादिभिः सन्निहितानां विरुद्धानामर्थानां बलाबले परीक्ष्यान्यतरार्थपरिग्रहेण वाक्यार्थविचिकित्सानिवारणे पूर्वतन्त्र एव स्वतन्त्रः। किं बहु ब्रूमः सर्वाङ्गसम्पन्नः पूर्वतन्त्रसिद्धान्तः। अस्य प्राचीनता तु समाख्ययैव प्रसिध्यति वस्तुतस्तु दर्शनानां पौर्वापर्यनिश्चयकृते क्रियमाणो यत्नः परिणामशून्यः वैदिका वैदिकेषु सर्वेषु दर्शनेषु खण्डनाय मण्डनाय सहकाराय वाऽन्यदर्शनसिद्धान्तानामल्पाधिक उल्लेख उपलभ्यते। पुराणेषु ब्राह्मणेषु चायमेव दृश्यते व्यवहारः। सिद्धान्ता अनादयः। दर्शनानि च सजातीयदर्शनान्तरमूलकानि। संप्रदायाश्चाप्येवंभूताः। सर्वे वैष्णवसंप्रदाया भागवतधर्ममूला इति तु प्रसिद्धमेव पण्डितानाम्। पूर्वतन्त्राचार्याणान्तु नास्ति कलि-

करो मौलिको मतभेदः। उत्तरतन्त्रादौ प्रसिद्धोऽग्रमिति तत्प्रदर्शनकृते क्रियमाणो यत्नो जलताडनस्थानीयः।

पूर्वतन्त्रसिद्धान्ता अपरतन्त्रसिद्धान्तानामपि प्रक्रियानिर्वाहकाः। प्रधानमल्लन्यायेन निमित्तकारणवादिनामभेदनिमित्तोपादानवादिनामेव सिद्धान्ता इहोपन्यस्यन्ते। न्यायनये परमाणवोऽवयवा न च ते ऽवयविनः। घटादयोऽवयविनो न च तेऽवयवाः। द्व्यणुकादयः कपालान्ता अवयवाश्चावयविनश्च। अवयवानां संयोगेनावयविनो जायन्ते। अयं च संयोगोऽवयविनां (कार्याणां) मसमवायिकारणम्। अवयविनामुत्पादको विनाशकश्चायमेव संयोगः संश्लेषविश्लेषाभ्याम्। अर्थादुत्पादे विनाशे चायमेव हेतुः। परमाणुषु संयोगारम्भ एव सृष्टेरुत्पादारम्भः। द्व्यणुकादिषु यथाकार्यं संयोगे भोगोपभोगोपयोगिवस्तूत्पत्तिरूपसंसारोत्पत्तिः। भोक्तारस्तु नित्या विभवः। सर्वतोभावेनावयविनां संयोगस्य नाशे परमाणुरूपेणावयवानां स्थितौ लयः। आरम्भकसंयोगस्य विनाशकसंयोगस्य च प्रवृत्तिर्न स्वाभाविकी। तत्र हेतुः सुखदुःखयोः समर्पकः प्राणिनामदृष्टग्रामः। सर्वेषां भोक्तॄणां विभुत्वात्सर्वभोगोपभोगयोग्यवस्तुभिस्सह समानः संपर्कः। परन्तु न सर्वात्मभोग्यानि सर्वाणि वस्तूनि। हेतुश्चात्र भोक्तृविशेषेण सहैव देहादिवस्तूनां स्वस्वामिभावस्य स्वीकारः। अयं च सम्बन्धस्वीकारो नैच्छिकः सर्वत्रैनाशिकत्वप्रसङ्गात्। नेश्वरेच्छाकृतः, ईश्वरे वैषम्यादिदोषप्रसङ्गात्। किन्त्वन्यहेतुकृतः स च हेतुर्भोक्तॄणामदृष्टग्रामः। भोक्तार एव तु न हेतवः। दुःखवतामदर्शनप्रसङ्गात्। को नाम चेतनोऽनुमन्येतात्मनः स्वस्वामिभावं क्लेशजनकेन सह वस्तुनेत्युक्तम्, यद्वस्तु यददृष्टाधीनं तत्तस्य साक्षात्परंपरया वा सुखं वा क्लेशं वा जनयति। एवं चैतन्मतेऽपि प्रलयकाले न सर्वेषां जन्यानां नाशः। जन्यानामेव भाविसृष्टिहेतुभूतानां प्राणिवर्गादृष्टानां तदानीमपि सत्त्वात्। उत्पादलयसमर्थकस्याप्यस्य दर्शनस्य विवशस्येव निजप्रक्रियानिर्वाहायानित्यानामपि कर्मणां प्रवाहरूपेण नित्यतायाः स्वीकार आवश्यकः। कृत एवानेनापि दर्शनेनार्द्ध जरतीयन्यायेन पूर्वतन्त्रसिद्धान्तादरः।

अभेदेन निमित्तोपादानवादिभिस्तु मुक्तकण्ठैरेवमुच्यते व्यवहारे जैमिनिन्र्याय्य इति। एतन्मते द्वे दृष्टी। व्यवहारदृष्टिः परमार्थदृष्टिः। दृष्टेः शब्दान्तरं दशा। व्यवहारदशा परमार्थदशा। ज्ञानिनां दृष्टिः परमार्थदृष्टिः। पामराणां दृष्टिर्व्यवहारदृष्टिः। ज्ञानिनो बाधिते जीवजगती प्रतियन्ति। पामरास्त्वबाधिते ते पश्यन्ति। बाधितयोरपि कुतः प्रतीतिरिति तु नाशङ्कनीयम्। बाधो नाम नात्यन्तिकोऽभावः। प्रतीयमानस्यैव मिथ्यात्वनिश्चयरूपः सः। मिथ्यात्वं चोपादानसत्तातिरिक्तोपादेयसत्ताया अवास्तवत्वम्। आदिमोपादानमनुपादेयं च सर्वशक्तिमद् ब्रह्मैवेति तदतिरिक्तं सर्वमवास्तवमित्येषां मतम्। एवमपि व्यवहारदृष्ट्या वास्तवत्वेन परमार्थदृष्ट्या चावास्तवत्वेन प्रवाहो जगतः स्वीकृत एव। प्रमाणप्रमेययोर्वास्तवयोरवास्तवयोर्वा प्रक्रियाया निर्वाहकृते पूर्वतन्त्रयुक्तीनामादरः कृत एव। प्रलयकालेऽप्यदृष्टग्रामस्य तत्फलभोक्तॄणां च सत्वं केनाऽपि रूपेण स्वीकरणीयं भवेदेव। विस्तरस्तु तर्कप्रकरणे प्रदर्शितः। वैषम्यनैर्घृण्याधिकरणे सापेक्षस्यैवेश्वरस्य निर्मातृत्वमेभिरप्यङ्गीकृतम्। कर्मानुस्मृतिशब्दविध्यधिकरणे विवेककारणं कर्मेति च प्रतिपादितम्। कर्मसत्त्वे तत्फलभोक्तृसत्त्वं स्वत एव गले आपततीति तूक्तमेवेति शुभम्।

**ब्राह्मण्यमथ सौभाग्यं तावन्नात्र प्रसेत्स्यति।**
**यावन्न पूर्वतन्त्रस्य प्रवेशः प्रतिपण्डितम्॥**

# ज्ञानविज्ञानयोः स्वरूपम् ।



( लेखकाः म० म० पं०—श्रीपरमेश्वरानन्द-शर्मशास्त्रिणो विद्याभास्कराः लवपुरम् )

भगवता वासुदेवेन गीताशास्त्रस्य सप्तमेऽध्याये—

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥

इति ज्ञानविज्ञानयोरुपदेशं पार्थं प्रति प्रतिज्ञाय तयोर्ज्ञान एव सकलज्ञातव्यपरिसमाप्त्युद्घोषणेन तन्महिमापि सूचितः। तत्र किमिदं भगवदुपदिदिक्षितं ज्ञानं विज्ञानं च? अस्माकमिदं दर्शनशास्त्रमनयोः कुत्रान्तर्भवति? पृथग् वाऽऽभ्यां प्रतिष्ठते? पृथक् प्रस्थानं चेत् किमर्थमिदमपेक्षणीयम्? यावताऽऽभ्यामेव ज्ञानविज्ञानाभ्यां ज्ञातव्यस्य निरवशेषत्वसिद्धिः। इदमेवात्र किञ्चिद् विचारयामः। ज्ञानं खलु विषयनिरूप्यम्। विषयमन्तरेण तत्स्वरूपस्य दुर्निरूपत्वात्। विषयसंबन्धादेव तत्र विशेषः प्रतीयते। अतो ज्ञानविज्ञानयोर्निरूपणाय विषयस्वरूपं पूर्वं विविच्यते।

प्रत्यक्षादिप्रमाणसिद्धमिदं जगदेव विषयः। तत्र ज्ञाताः पदार्था यदि जानन्ति चेष्टन्ते च तर्हि जीवा इति प्राणिन इति वा व्यपदिश्यन्ते। न हि तेषु जीवः प्राणो वेन्द्रियगोचरः। ज्ञानचेष्टाभ्यां त्वसौ केवलमनुमीयते। विनष्टज्ञानचेष्टं जन्मनैव वाऽप्रकटज्ञानचेष्टं तु यथाक्रमं शव इति जड इति च व्याहरन्ति लोकाः। हिताहितप्राप्तिपरिहारार्थं कर्मैव चेष्टामुदीरयन्ति विद्वांसः। तदेवं निर्गलितोऽर्थो यज्ज्ञानकर्मणी एव जीवतां जीवनस्य लक्षणम्। तत्र ज्ञानकर्ममयस्यास्य जीववर्गस्य यः प्रभवः सोऽपि ज्ञानकर्मरूप एव स्यात्, कार्यकारणयोः सारूप्यात्, कारणगुणाः कार्यगुणान् आरभन्त इति न्यायाच्च। अत्रेदमाशङ्क्यते-यत्र ज्ञानं कर्म चेत्युभयं प्रमाणसिद्धं तेषां मनुष्य—पशु—पक्षि—कृमि—कीटादीनां ससंज्ञानां वृक्ष-लता-गुल्मादीनामन्तःसंज्ञानां च ज्ञानकर्मात्मककारणकत्वं शक्यमनुमातुम्, क्षित्यादयः पुनर्नितान्तमसंज्ञा अचेतना जडाः कस्मादुत्पद्यन्ते? किं तेषां ससंज्ञान्तःसंज्ञसृष्टिकारणाद् भिन्नमेव किञ्चित् कारणम्? अत्रेदमुत्तरम्—ससंज्ञान्तःसंज्ञसृष्ट्योरिवासंज्ञसृष्टेरपि तदेव ज्ञानकर्मात्मकं कारणम्, नान्यत् किञ्चित्। ये यावन्तश्च कारणगुणास्ते सर्वेऽपि सर्वात्मना कार्ये विकसन्त्येवेति नायं नियमः। न हि पितुर्मातुर्वा सर्वेऽपि गुणाः सर्वात्मना पुत्रे दुहितरि वाऽनुवर्तन्ते। क्षित्यादिषु नितान्तमप्रस्फुटेपि ज्ञाने केन वा सूक्ष्मेक्षिकाविचक्षणेन नाध्यक्षीक्रियन्त उत्पत्ति-स्थिति-विपरिणति-वृद्धि-क्षिति-विनष्टयः कर्मापरपर्यायाः षड् भावविकाराः। तथा चेयमचेतना सचेतना च सर्वापि सृष्टिर्ज्ञानकर्मात्मन एव कस्माच्चित् कारणादुत्पन्नेति निश्चप्रचम्।

नन्वेवं मा भूत् क्षित्यादिषु ज्ञानस्य विकासः। तथापि ज्ञानकर्मात्मनः कारणात् समुद्भूतानां तेषां ज्ञानकर्ममयत्वाच्चेतनत्वं प्राप्तम्—इति कथमचेतनानि तानि? निर्विषयश्चैवमयमचेतनपदप्रयोगः स्यात्, कारणस्य कार्येऽनुस्यूतत्वाद् ज्ञानकर्मशून्यस्यार्थस्यात्यन्तमभावात्। न ह्यविकसदवस्थं नास्तीति शक्यमुद्घोषयितुम्, बीजादिष्वविकसदवस्थस्यापि वृक्षादेः सत्त्वस्य दार्शनिकमूर्धन्यैरभ्युपगमात्, इति चेद् अत्रैवमाहुः प्राज्ञो महामुनयः—महयं पदार्थानां चेतनाचेतनत्वव्यपदेशो ज्ञानकर्ममयत्व-



**लाहोरनगरे सनातनधर्मकालेजे—सं० १९८० वि०**

मध्ये आसन्द्यामुपविष्टाः—

वामतः—म०म०पं०श्रीपरमेश्वरानन्दशास्त्रिणः, म०म०पं०श्रीगिरिधरशर्मचतुर्वेदमहोदयाः तात्कालिकाध्यापकाः

म०म०पं०गणेशदत्तशास्त्रिणः, पं०श्रीहीरानन्दशास्त्रिणः ।

उभयतः—प्राप्तशास्त्र्युपाधिकाश्छात्राः ।

श्री सनातन-धर्म-सभा, लाहौर का

# संक्षिप्तपरिचय

( ले०—श्रीयुत जंगीराम मेहरा मन्त्री, सनातन-सभा, लाहौर )

सनातन-धर्म-सभा, लाहौर की स्थापना सन् १८८१ ई० में हुई। इसी वर्ष सभा के प्रबल प्रयत्न से 'सनातन-धर्म-संस्कृत-पाठशाला' भी स्थापित की गई; जिसमें केवल प्राज्ञ-परीक्षा तक अध्ययन प्रचलित किया गया। यह क्रम सन् १९१८ ई० तक इसी रूप में जारी रहा। सन् १९१९ ई० में इसी पाठशाला में विशारद तथा शास्त्रि श्रेणियाँ खोल कर इसे 'सनातनधर्म-संस्कृत-कालेज के रूपमें परिवर्तित कर दिया गया, जिसके पहिले प्रिंसिपल स्वनामधन्य महामहोपाध्याय पं० गिरिधर शर्माजी चतुर्वेदी नियत हुए। आपके समय में सनातन धर्म संस्कृतकालेज व सनातन-धर्म-सभा दोनों की आशातीत उन्नति हुई। इधर चतुर्वेदीजी को भी इसी कालेज के प्रिंसिपल रहते हुए पञ्जाब गवर्नमेण्ट की प्रेरणा से भारत-सरकार द्वारा महामहोपाध्याय पद प्राप्त हुआ व समग्र पञ्जाब प्रान्त में आपका यश खूब विस्तृत हुआ। किन्तु पितृ-सेवा के उद्देश्य से आपके लाहौर से जयपुर संस्कृत-कालेज के प्रिंसिपल बनकर चले जाने के अनन्तर आप ही के सुशिष्य पं० परमेश्वरानन्द जी शास्त्री इस स्थान पर नियुक्त किये गये। उक्त पण्डितजी को भी इसी कालेज के प्रिंसिपल रहते हुए भारत-सरकार से महामहोपाध्याय पद का सम्मान प्राप्त हुआ है। यह कालेज इस समय सनातन-धर्म-कालेज-सोसाइटी के अधीन अपना कार्य कर रहा है। इसमें ६ अध्यापक पढ़ाते हैं। इसके साथ एक संस्कृत-पाठशाला भी है, जिसमें ३ अध्यापक कार्य कर रहे हैं। पाठशाला के साथ एक 'छात्रावास' भी है, जिसमें निःशुल्क रहकर विद्यार्थिगण अपना अध्ययन करते हैं।

भोजनालय—विद्यार्थियों के लिये सभा की ओर से एक भोजनालय ( लंगर ) भी स्थापित है, जिसमें दीन-विद्यार्थियों को निःशुल्क भोजन आदि दिया जाता है।

सनातन-धर्म-हाईस्कूल, लाहौर—सभा ने सन् १८९१ ई० में 'सनातन-धर्म-हाईस्कूल' भी स्थापित किया, जो कि इस समय पञ्जाब में सब से बड़ा स्कूल है। जिसमें १०००० दस हजार छात्र शिक्षा प्राप्त कर रहे हैं।

सनातन-धर्म-कालेज, लाहौर—सभा के प्रयत्न से सन् १९१६ ई० में सनातन-धर्म-कालेज की स्थापना हुई; जिसका प्रबन्ध 'सनातन-धर्म-कालेज-सोसाइटी' के हाथ में है। जिसमें एम. ए. तक की शिक्षा दी जाती है।

सनातन-धर्म-महारानी-वर्धमान-गर्ल्स-स्कूल—जहाँ भारत की प्राचीन भाषा संस्कृत की शिक्षा के लिये संस्कृत-पाठशाला तथा संस्कृत-कालेज स्थापित किये गये; राजभाषा के साथ धर्म शिक्षा देने के लिये सनातन-धर्म-कालेज तथा सनातन-धर्म हाई-स्कूल की स्थापना की गई, वहाँ कन्याओं को शिक्षा

देने के लिये 'सनातन-धर्म महारानी वर्धमान गर्ल-स्कूल' भी स्थापित किया गया। इसमें आठवीं श्रेणि तक शिक्षा दी जाती है। साथ ही भोजन बनाना, सीना-पिरोना तथा अन्य गृहकार्य भी सिखलाये जाते हैं, स्त्रियोचित धर्मशिक्षा भी अनिवार्य रूप से दी जाती है। इस विद्यालय में ४१०० के लगभग बालिकाएँ शिक्षा पा रही हैं। अन्य संस्थाओं की तरह इस स्कूल की भी अपनी निजी इमारत है।

**सनातन-धर्म-प्रेमगिरि-आयुर्वेद-कालेज, लाहौर**—इसके अतिरिक्त सभा ने आयुर्वेद की शिक्षा के लिए 'स० ध० प्रेमगिरि-आयुर्वेद-कालेज' का प्रबन्ध भी सन् १९३२ ई० से अपने हाथमें ले लिया है। इस संस्था को पहिले माननीय महन्त श्रीप्रेमगिरि, महन्त शीतलामन्दिर ने स्थापित किया था। इसके लिए एक विशाल-भवन भी उक्त महन्तजी ने ही बनवा दिया, जिसमें आयुर्वेद की शिक्षा दी जाती है। जहाँ ६ अध्यापक अपना कार्य सुचारु रूपसे कर रहे हैं।

**सनातन-धर्म-फार्मेसी, लाहौर**—

इस आयुर्वेद-कालेज के साथ ही एक फार्मेसी भी स्थापित की हुई है, जहाँ छात्रों को औषध-निर्माण का कार्य सिखाया जाता है और आयुर्वेदीय-आर्ष-पद्धति से शुद्ध दवाइयाँ तयार की जाती हैं।

**सनातन-धर्म-आयुर्वेदीय-दातव्य-औषधालय, लाहौर**—इसके साथ एक अस्पताल भी जारी किया हुआ है; जिसमें रोगियों को देखकर छात्र अपने ज्ञान में चिकित्सा की उन्नति करते हैं। यहाँ प्रायः १५० रोगियों को निःशुल्क औषध वितरण किया जाता है।

**पुस्तकालय**—सभा ने अपने प्रारम्भदिवससे ही एक पुस्तकालय स्थापित कर रखा है; जिसमें वेद, वेदाङ्ग, दर्शन, धर्मशास्त्र, इतिहास, पुराण, ज्यौतिष, काव्य, नाटक एवं सनातन-धर्म-सिद्धान्त-मण्डन तथा अन्यमत-खण्डन आदि विषयों की पुस्तकों का एक बृहत्-संग्रह है। जिससे जनता पर्याप्त लाभ उठाती है व अपने ज्ञानमें वृद्धि करती है।

**धर्म-प्रचार**—सभा प्रारम्भ से ही धर्म-प्रचार का कार्य बड़ी तत्परता के साथ कर रही है। इसमें समय समय पर भारत के प्रसिद्ध विद्वानों तथा व्याख्याताओं के उपदेश, व्याख्यान, कथा एवं शास्त्रार्थ आदि होते रहते हैं। प्रति-सप्ताह सत्संग भी होता है।

**देवमन्दिर**—सभा के अधीन ५ देवमन्दिर हैं। जिनका व्यवस्थाभार सभा के हस्तंगत है।

**प्रपा**—इसके अतिरिक्त ३ पानीयशाला (प्याऊ) भी सभा की ओर से शहर में लगी हुई हैं।

**सम्पत्ति**—स्थायी कोष के अतिरिक्त सभा की संपत्तिमें १४ विशाल भवन हैं।

**अधिकारिवर्ग**—सभा के इस वर्ष निम्नलिखित पदाधिकारी हैं—

**मुख्यप्रधान—दीवानबहादुर दीवान किशनकिशोरजी रईस, लाहौर**

**प्रधान—रायबहादुर ला० लक्ष्मणदासजी अग्रवाल, लाहौर**

**उपप्रधान—रायबहादुर ला० सोहनलालजी एम. एल. ए.**

**उपप्रधान—लाला गणपतरामजी कपूर बैंकर लाहौर-इत्यादि**

**प्रधानमंत्री—ला० जंगीरामजी मेहरा क्लॉथ-मर्चैंट, लहौर**

**मंत्री—ला० तिलकरामजी अग्रवाल ऐकाऊन्ट जनरलदफ्तर, लाहौर**

स्वीकारात्; किन्तु सेन्द्रियत्वनिरिन्द्रियत्वमूलः। केचित् सेन्द्रियाः पदार्थाः, अपरे निरिन्द्रियाः। ये न्यूनाधिकभावेन सेन्द्रियास्ते मनुष्यपशुपक्ष्याद्यस्तरुलतागुल्मादयश्च चेतना अर्धचेतना वा व्यपदिश्यन्ते। ये पुनर्निरिन्द्रिया भावाः क्षित्यादयस्ते जडा इत्यचेतना इति च प्रथन्ते। तदुक्तं चरके—

खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः।
सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम् ॥

तदित्थं सर्वप्रजाकारणभूतस्य सर्वप्रजात्मभूततया परात्मपदव्यपदेश्यस्य ज्ञानकर्मात्मनः प्रजापतेरंशभूतयोरनयोर्ज्ञानकर्मणोर्ज्ञानमेकरसं स्थिरं प्रशान्तं न कदाचिदपि विपरिवर्तते। ज्ञानस्यैकरसत्वमिदं विद्यारण्यस्वामिना पञ्चदश्यास्तत्त्वविवेकाध्याये युक्त्या स्थापितम्। तदुक्तं तत्र—

शब्दस्पर्शादयो वेद्या वैचित्र्याज्जागरे पृथक्।
ततो विभक्ता तत्संविदैकरूप्यान्न भिद्यते ॥
तथा स्वप्नेऽत्र वेद्यन्तु न स्थिरं जागरे स्थिरम्।
तद्भेदोऽतस्तयोः संविदेकरूपा न भिद्यते ॥
सुप्तोत्थितस्य सौषुप्ततमो बोधो भवेत् स्मृतिः।
सा चावबुद्धविषयाऽवबुद्धं तत्तदा तमः ॥
स बोधो विषयाद् भिन्नो न बोधात् स्वप्नबोधवत्।
एवं स्थानत्रयेऽप्येका संवित् तद्वद् दिनान्तरे ॥
मासाब्दयुगकल्पेषु गतागम्येष्वनेकधा।
नोदेति नास्तमेत्येका संविदेषा स्वयं प्रभा ॥ इति।

कर्म पुनस्तद्विपरीतमनेकमनेकविधमस्थिरमप्रशान्तं सर्वदा विपरिवर्तते। एकत्वाद् एकरसत्वात् स्थिरत्वादेवेदं ज्ञानममृतं सदिति प्रोच्यते। अनेकत्वाद् अनेकविधत्वाद् अस्थिरत्वाच्चेदं कर्म मर्त्यं मृत्युरसदिति चाभिलप्यते। तदुक्तं शातपथश्रुतौ दशमकाण्डे—'अर्धं ह वै प्रजापतेरात्मनो मर्त्यमासीद्, अर्धममृतम्' इति। गीतायामपि—

अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन।

इत्येवमहंपदबोध्यस्य परात्मनः सदसदात्मकत्वममृतमृत्य्वात्मकत्वं च प्रतिपादितम्। किञ्चेमे ज्ञानकर्मणी निरुक्तया दिशा स्वभावतः पृथग्भूते अपि अन्योन्यमोतप्रोते, नानयोरन्येन विनाऽन्यदवतिष्ठते। इमे एव ज्ञानकर्मणी आगमशास्त्रेषु शिवशक्ती इत्युच्येते। ज्ञानं शिवः, कर्म च तच्छक्तिः। शक्तिशक्तिमतोश्चाविनाभावः। अत एव श्रुतावनयोरन्तरान्तरीभावः श्रूयते—

'अन्तरं मृत्योरमृतं मृत्यावमृतमाहितम्।' इति।

तदेवमन्योन्यमोतप्रोतयोरन्तरान्तरीभावमापन्नयोरविनाभूतयोर्द्वयोरपि शक्यमेकत्वमास्थातुम्। एकस्मादेव च तस्माज्ज्ञानकर्ममयात् परात्मनोऽस्य सर्वस्य चेतनाचेतनप्रपञ्चस्य समुद्भवः। तदुक्तम् ऋक्संहितायाम्—'एकं वा इदं विबभूव सर्वम्' ८।४।२६ इति। अयमेव सर्वजगत्कारणभूतो ज्ञानकर्ममयः परात्मा पुरुष इत्यपि व्यपदिश्यते। पुरि शयनादेवास्य पुरुषत्वम्। सेन्द्रिया निरिन्द्रियाश्चेमाः सर्वाः प्रजा लोकापरपर्यायाः पूरित्याख्यायन्ते। तासामभिन्ननिमित्तोपादानतया तत्रैव शयानस्यास्य पुरुषपदवाच्यता। तदुक्तं शतपथे चतुर्दशकाण्डेऽन्यत्र च बहुत्र—

'स वा अयं पुरुषः, सर्वासु पूर्षु पुरि शयः।'
सोऽयं पुरि शेते तस्मात् पुरुषः।,

गीतास्वपि—

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

इत्यादिनात्येश्वरस्य लोकत्रयावेशः पुरुषत्वं चोक्तम्।

'तेनेदं पूर्णं पुरुषेण सर्वम्'
'पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम्'

इत्यादि मन्त्रश्रुतयोऽपि ज्ञानकर्ममयस्य तस्यैकस्य पुरुषस्यैव सर्वजगत्कारणत्वमुद्घोषयन्ति। इदं तु बोध्यम्—ज्ञानकर्मात्मनि तस्मिन् पुरुषे ज्ञानगर्भं कर्म सृष्टौ प्रवर्तते, कर्मगर्भं तु ज्ञानं ततो निवर्तते; प्रतिसर्गं प्रवर्तयति। तत् स एक एवोर्णनाभिरिव सर्गप्रतिसर्गयोः प्रवर्तयिता। कथमयमेकस्माद् नानविधः सर्गः प्रवर्तते, कथं ज्ञानकर्मात्मकमिदमेकतत्त्वं विश्वरूपतया विपरिणतम् इत्यनुभव एव विज्ञानशब्देन व्याह्रियते। एतत् प्रधानं च शास्त्रं विज्ञानं संचरः संभूतिरपरा विद्येति च बहुविधैः शब्दैर्व्यपदिशन्ति स्म पुरातना महर्षयः। कर्मगर्भं तु ज्ञानं सृष्टिपराङ्मुखं मुक्तिसाध्वि भवति। यदा चञ्चदुच्चावचवीचिमालोपमानि शक्त्यपराभिधानानि कर्माणि लीयमानान्युपरमन्ति तदायं शिवापरपर्यायो ज्ञानसागरः प्रशान्तस्तिष्ठति। कर्माणि हृद्ग्रन्थयो ज्ञानं तु तद्विमोकः। ततश्च 'पुरुष एवेदं सर्वम्' 'सर्वं खल्विदं ब्रह्म' इति सर्वस्यास्यैकरूपतो दर्शनवृत्तिर्ज्ञानमित्याख्यायते। एतत् प्रधानं च शास्त्रं ज्ञानं ब्रह्मविद्या परा विद्या दर्शनमिति च बहुधा व्यवह्रियते विबुधैः। अनयोर्ज्ञानविज्ञानयोरेव सर्वासां विद्यानामन्तर्भावः। अत एवानयोर्ज्ञाने भगवदुक्ता ज्ञातव्यस्य निरवशेषतोपपद्यते।

अयमत्र स्फुटोऽभिप्रायः—ज्ञानकर्ममयाद् एकस्मात् पुरुषतत्त्वाद् अयं समस्तोऽपि पुरपदाभिधेयो विश्वप्रपञ्चः समुत्पद्यत इति पुरस्तादुपपादितम्। उत्पन्नं च भूत्वा न भवति, अन्ततः स्वकारणे विलीयते। अत एतेनापि विश्वप्रपञ्चेन स्वकारणे विलेतव्यम्। विलये च स एव कारणात्मा ज्ञानकर्ममयः पुरुषोऽवतिष्ठते। तत्र पुरुषो मौलिकं तत्त्वम्, विश्वश्च यौगिकम्। मौलिकं तत्त्वं बृंहणशीलत्वाद् ब्रह्मशब्देन प्रख्यायते शास्त्रेषु। अनेकयोगाज्जायमानं यौगिकं तु यज्ञशब्देन। ब्रह्मापरपर्यायं मौलिकं तत्त्वं सर्वत्रानुस्यूतं सर्वाधिष्ठानं यत्र विविच्यते तच्छास्त्रं ज्ञानप्रधानत्वाद् दर्शनशास्त्रं ब्रह्मविद्यामध्यात्मविद्यां च प्रवदन्ति विद्वांसः। तस्य विस्ताररूपं यज्ञापराभिधानं यौगिकं तत्त्वं यत्र प्रतिपाद्यते तच्छास्त्रं यज्ञविद्यां विज्ञानशास्त्रं चाचक्षते तद्विदः। ज्ञाने ब्रह्मविद्यायामेकत्वं प्रधानम्, विज्ञाने यज्ञविद्यायां तु नानात्वं प्रधानम्। 'एकं वा इदं विबभूव सर्वम्' प्रजापतिस्त्वेवेदं सर्वं यदिदं किञ्च' 'तस्माद् वा एतस्मादाकाशः संभूतः' इत्यादीनि वाक्यानि विज्ञानप्रधानानि। एष्वेकत्वमुद्दिश्य नानात्वं विधीयते। 'सर्वं खल्विदं ब्रह्म' 'इमे लोकाः प्रजापतिः' इत्यादीनि वाक्यानि ज्ञानप्रधानानि। एषु नानात्वमुद्दिश्यैकत्वं विधीयते। तथा चैकस्य नानात्वानुभवो विज्ञानम्, नानात्वे चैकत्वदर्शनं ज्ञानम्। मा स्मैतज्ज्ञानविज्ञानयोः स्वरूपं व्याख्यातुरस्य स्वोत्प्रेक्षितं निराधारं वामन्यन्त विद्वांसः, अर्जुनं प्रति विज्ञानसहितं ज्ञानमुपदेष्टुं प्रतिज्ञाय भगवता कृष्णेनोक्तैर्वचोभिरेतस्यैवार्थस्य स्फुटं प्रतिपत्तेः। तथा हि गीतायाः सप्तमाध्यायस्य द्वितीयश्लोके 'ज्ञानं तेऽहं सविज्ञानम्' इत्यादि प्रतिज्ञाय—

'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च'
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥
एतद्योनीनि भूतानि सर्वाणीत्युपधारय।

इत्येवमेकस्यानेकात्मतावगमप्रवणं विज्ञानमुद्दिश्य—

अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा।
'मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ॥

'रसोऽहमप्सु कौन्तेय' इत्यादिनानेकस्यैकात्मताबगतिप्रधानं ज्ञानमुपदिष्टम्। पुनरग्रे 'ये चैव सात्त्विका भावाः राजसास्तामसाश्च ये। मत्त एवेति तान् विद्धि।' इत्येवं विज्ञानमुपक्रम्य 'बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते, वासुदेवः सर्वमिति' इत्येवं सर्वस्यैकवासुदेवात्मकत्वप्रतिपत्तिरूपे ज्ञान उपसंहृतम्। तथैव नवमाध्यायेपि 'ज्ञानं विज्ञानसहितम्' इति प्रतिज्ञाप्य 'मया ततमिदं सर्वं जगद्' इति विज्ञानेनोपक्रम्य 'सर्वाणि भूतानि मत्स्थानि' इति ज्ञानमुपदिश्य 'एकत्वेन पृथक्त्वेन' इति द्विविधमप्युपासनमुपदिष्टम्।

ज्ञाने विज्ञानमुपयुज्यते। न हि विनेया एकपद एवास्य बहुधा विभिन्नस्य जगतो मूलमेकं ग्राहयितुं शक्याः, विज्ञानसाहाय्येन तु शक्याः, अत एव भगवता विज्ञानं पूर्वमुक्तम्, विज्ञानसहितम् इति विशेषणविधया विज्ञानोपन्यासेन तस्याप्राधान्यं च निर्दिष्टम्, ज्ञानोपयोगित्वात् तस्य। अतिमहतो वृक्षस्यातिलघुबीजात्मकता तस्य प्ररोहादिक्रमेण नानारूपता निदर्शनपुरस्सरमेव कथंचिद् ग्राहयितुं शक्या, नास्त्युपायान्तरम्। एष एवार्थो भागवतस्यैकादशे स्कन्धे ऊनविंशेऽध्याये श्लोकद्वयेन सुस्पष्टं प्रतिपादितः। तथा हि—

नवैकादश पञ्च त्रीन् भावान् भूतेषु येन वै।
ईक्षेताथैकमप्येषु तज्ज्ञानं मम निश्चितम्॥
एतदेव हि विज्ञानं न तथैकेन येन यत्।
स्थित्युत्पत्त्यप्ययान् पश्येद् भावानां त्रिगुणात्मनाम्॥

अयमर्थः—स्थूणारुन्धतीन्यायेन साधर्म्यवैधर्म्याभ्याम् एकादशकं वा इदं सर्वम्, नवकं वा, पञ्चकं वा त्रिकं वा इत्येवमनन्तानां भूतानां वर्गीकरणेनान्ते 'एकमिदं सर्वम्' इत्येवमीक्षेत येन तज्ज्ञानमित्युच्यते। यद्यपि विज्ञानमप्येतदेव, परं प्रकारोऽत्र भिद्यते, येन एकेनैव त्रिगुणात्मनामगण्येयानां भावानामुत्पत्तिस्थितिप्रलयान् यत् पश्येत् तद् विज्ञानमित्याख्यायते। कूर्मपुराणेऽपि—

यया स देवो भगवान् विद्यया वेद्यते परः।
साक्षाद्देवो महादेवस्तज्ज्ञानमिति कीर्तितम्।
चतुर्दशानां विद्यानां धारणं हि यथार्थतः।
विज्ञानमिति तद्विद्याद्येन धर्मो विवर्द्धते।

उ० खं० १५ अ०।

श्रीज्ञानदेवैरपि श्रीभगवद्गीतां व्याचक्षाणैरुक्तम्—

तीरलग्ना तरिव कुण्ठीभवति शेमुषी।
परावृत्तपदो दूराद्विचारश्चापसर्पति।
तर्कोऽपि नैवोत्सहते यत्र तज्ज्ञानमर्जुन।
प्रपञ्चोऽन्यस्तु विज्ञानमज्ञानं तत्र सत्यधीरिति॥

संक्षिप्यायमभिप्रायः— एकस्माद् अनेकस्मिन्नवतरणं विज्ञानं यज्ञविद्या। अनेकस्माद् एकस्मिन्नारोहणं ज्ञानं[1] ब्रह्मविद्या। ब्रह्मविद्यातिरिक्ताः सर्वा अपि विद्या

१—स्वर्गतश्रीपरमगुरुचरणानां विद्यावाचस्पतिश्रीमधुसूदनपण्डितमहाभागानां ज्ञानविज्ञानशब्दव्याख्यामनुसृत्य गुरुचरणैः म०म० श्रीगिरिधरशर्मचतुर्वेदैः संस्कृतरत्नाकरस्य 'वेदाङ्के' अयमेवानयोः शब्दयोरर्थः प्रतिपादित आसीत्। तत्र जातां प्रमाणशङ्कामपनेतुं चैतदेव श्रीभागवतस्य श्लोकद्वयं तैः स्वीये अ० भा० व० धर्मसङ्घस्य द्वितीयमहाधिवेशनसभापतिपीठात्कृते भाषणे समुद्धृतम्। तत्र पुनः परमश्रद्धाभाजनैः सनातनधर्मधुरन्धरैः श्रीहरिहरानन्दकरपात्रिस्वामिमहानुभावैः काश्याः प्रकाश्यमानस्य हिन्दीभाषामयस्य 'सिद्धान्त'पत्रस्य चतुर्थवर्षसम्बन्धिन्यामूनविंशसङ्ख्यिकायामियं विप्रतिपत्तिरुद्भाविता 'यन्नेदं' व्याख्यानं श्रीभागवत-

अनेकत्वप्राधान्याद् यज्ञविद्यायामेवान्तर्भवन्ति। आभ्यामेव ज्ञानविज्ञानाभ्यां मानवस्य कृतकृत्यता सम्पद्यते। तत्र विज्ञानमभ्युदयहेतुः, ज्ञानं तु निःश्रेयसजनकम्। इदमेव ज्ञानविज्ञानयुगलं धर्मः। अस्यैव 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' इत्यभ्युदयनिःश्रेयससाधकत्वमाह भगवान् कणादः। पुरायुगे भारतीया ज्ञानविज्ञानयोस्तुल्यमवदधाना ऐहिकीमामुष्मिकीं च समृद्धिमलभन्त, जगद्गुरवश्चागण्यन्त। अद्य त एवात्मनोऽध्यात्मनैपुण्ये विकत्थमाना आत्मानं प्रतारयन्तो दरिद्रति। नितान्तं पारतन्त्र्यमनुभवन्तः प्रतिदिनं दीयन्ते दूयन्ते च। 'कर्मशून्या ज्ञानिन इमे' इति परैः सोल्लुण्ठमुपहस्यन्ते। 'आदर्शमात्रनिदर्शकान्येषां शास्त्राणि न कर्तव्यं किंचिदादिशन्ति' इत्येवमस्माभिरेव कलङ्कितं सर्वविद्योपदेशकं स्वकीयं शास्त्रजालम्। अपरतो विज्ञानकणिकामासाद्य बहुविधमैहिकमुत्कर्षं दधतोऽपि पाश्चात्त्या ऐश्वर्यमदावलेपेन ज्ञानमुपेक्षमाणा

---

स्य प्रसिद्धव्याख्यातॄणां श्रीधरस्वामिनां व्याख्यामनुगच्छति। ते हि स्वामिपादाः श्लोकेनैकेन ज्ञानं व्याख्याय विज्ञानमर्धेनैव व्याचक्षते "यद्यदा येनैकेनानुगतानेकात्मकान् भावान् पूर्वमैक्षत, तांस्तथा पूर्ववन्नेक्षेत, किन्तु तदेकं परमकारणं ब्रह्मैव, तदा एतदेव विज्ञानमुच्यते। एतदुक्तं भवति—परोक्षज्ञानेनापरोक्षभ्रमस्य दिङ्मोहादिष्विव निवृत्त्यभावात्तदात्मकं जगत्पश्यन्नप्यात्मनः पृथक् सदिति मन्यते, अपरोक्षज्ञाने तु बाधितमेव दग्धपटवज्जीवन्मुक्तः संस्कारशेषं पश्यति, ततः परं न पश्यति च। अतः परोक्षापरोक्षज्ञाने ज्ञानविज्ञानशब्दाभ्यामुच्येते इति।" श्लोकस्योत्तरार्द्धं तु तैरग्रिमेण श्लोकेन सह योजितम्। तस्मात्प्रसिद्धव्याख्याकृद्विरोधादेकस्यानेकात्मकताप्रकाशनं विज्ञानमित्येतस्मिन्नर्थे भागवतस्य प्रमाणीकरणं न युज्यत इति। अत्रेदमुत्तरम्—श्रीश्रीधरस्वामिनः श्रीभागवतस्य सर्वोत्कृष्टाः सर्वश्रद्धास्पदतां गता व्याख्यातार इति को न मनुते। परं स्वामिपादैरुक्त एव भागवतार्थो भवितुमर्हति नान्यः कोऽपीति तु शिष्टैर्नाभ्युपगतम्। दृश्यन्ते हि बहुत्र शिष्टपरिगृहीतेषु व्याख्यान्तरेषु श्रीश्रीधरोक्तेभ्यो विलक्षणा अप्यर्थाः। किमन्यत्—श्रीकरपात्रिस्वामिमहानुभावैरेव स्वीये श्रीभगवत्तत्त्वे रासपञ्चाध्यायीप्रथमश्लोकस्य प्रतिपदं विचित्रा अर्था विवृताः, येषां संख्या त्रिंशतोऽप्यधिका। कुत्र तेऽर्थाः श्रीधरीये व्याख्याने उपलभ्यन्ते? तस्मात्प्रसिद्धव्याख्याकृद्भ्यो विलक्षणमन्यदपि शब्दात्प्रतीयमानं युक्तियुक्तमुपादेयं भवतीत्येव ननु मन्तव्यं स्यात्। युक्तयश्चास्मदुक्तेर्थे पाठकैरनुसन्धातव्याः प्रदर्श्यन्ते—

[ १ ] सर्वेऽस्मिन् पद्ये स्फुटं प्रतीयमानैकवाक्यता नास्माभिः परित्यज्यते, न च विच्छिद्यार्द्धस्य पद्यान्तरान्वयोऽस्मत्पक्षे करणीयतामापद्यते।

[ २ ] स्फुटं भासमान एव शब्दार्थोऽस्माभिर्गृह्यते, न त्वध्याहारादिनार्थान्तरं प्रसह्यारोप्यते। यथार्थान्तरे 'अनुगतानेकात्मकान् भावान् पूर्वमैक्षत' 'तदेकं परमकारणं ब्रह्मैव' इत्येतत्सर्वमध्याहारलभ्यम्। न ह्यध्याहारमन्तरेण सोऽर्थः शब्देभ्यो निःसरति, सत्यां च गतौ नाध्याहारकल्पना युक्तेति शाब्दमर्यादा।

[ ३ ] अनुभवपर्यन्तं ज्ञानमेव विज्ञानमिति पक्षे विज्ञानं मुख्यम्, ज्ञानं तु तदर्थं गौणमित्यापतति। ततश्च 'ज्ञानं तेऽहं सविज्ञानम्' (भग० गी० ७ अ०) इत्यादौ विज्ञानस्याप्राधान्येन निर्देशो न युज्येत। अस्मत्पक्षे तु मोक्षमार्गे विज्ञानापेक्षया ज्ञानस्य प्राधान्यमिष्टमेवेति विज्ञानस्याप्राधान्येन निर्देशो युक्त एव।

[ ४ ] ज्ञानस्यानुभवपर्यवसायिता मननिदिध्यासनसाध्येति वेदान्तिसम्मतम्। ततश्च विज्ञानं न

अद्यान्योन्यविनाशे कृतसन्नाहा न केवलमात्मानमपि तु सर्वं भूमण्डलमाकुलयन्तीति न तिरोहितं लोकमनुशीलयताम्। तस्माच्छ्रेयसि साभिलाषैर्ज्ञानं विज्ञानं चेत्युभयमपि तुल्यं शरणीकरणीयम्। युक्तियुक्तं चैतत्-तथाहि 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' 'तरति शोकमात्मवित्' इत्यादिभिः श्रुतिभिः परात्मनः पुरुषस्य वेदनमेव मृत्युतरणहेतुतयोपन्यस्तम्। ज्ञानकर्मणी एव तस्य स्वरूपमिति पुरस्तात् कणेहत्य प्रतिपादितम्। तथा च तदुभयवेदिनैव मृत्युः शोको वा सुतरः, नान्येनैकतरवेदिना, अंशमात्रवेदित्वेनापूर्णवेदित्वात् तस्य। तत्र कर्मणः स्फुटं स्वरूपं कर्मप्रधानविश्वविज्ञानेन यज्ञविद्यया परिज्ञायते? कर्मप्रधानीकृत्य

---

केवलं शाब्दज्ञानमिति तस्य 'वक्ष्याम्यशेषतः' (भग०गी० ७ अ०) इति वचनकर्मता न युज्येत। न हि विज्ञानं वक्तुं शक्यम्, अपितु निदिध्यासनेन प्राप्यम्। अस्मत्पक्षे त्वेकस्यानेकरूपता, अनेकेष्वेकस्यानुप्रवेशश्चेति द्वयमपि वक्तुं शक्यमेव। यथा च तत्राध्याये द्वयं प्रतिपादितम्, तथा स्फुटीकृतमेव पूर्वमिति न काप्यनुपपत्तिः।

[ ५ ] पक्षान्तरे ज्ञानं विज्ञानस्वरूप एवानुप्रविष्टम्, शाब्दस्य ज्ञानस्यैवानुभवपर्यन्तत्वे विज्ञानरूपतालाभात्। ततश्च 'ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्' ( भग० गी० १८ अ०४२ श्लो० ) इत्यादौ द्वयोः पृथगुक्तिरनर्थिकेव। अस्मत्पक्षे तु ज्ञानप्रकारभेदाद् द्वयमपि सम्यगुक्तम्। 'इदं चाप्यनुसन्धेयम्' इदं गीतावचनं [ १८। ४० ] व्याचक्षाणैर्महामहिमभिर्बहुभिर्व्याख्यातृभिरस्मदुक्त एव विज्ञानशब्दार्थो भङ्ग्याऽङ्गीकृतः। तथा हि- श्रीमधुसूदनसरस्वतीमहाभागाः "विज्ञानं कर्मकाण्डे यज्ञादिकर्मकौशलम्, ब्रह्मकाण्डे ब्रह्मात्मैक्यानुभवः" इति व्याचक्षाणाः कौशलमेव विज्ञानं मन्वाना वीत्युपसर्गस्य विशेषार्थतां ध्वनयन्तः सर्वं शिल्पशास्त्रादिकं विज्ञानेऽन्तर्भावयन्ति।

**यत्पुनर्वैदिकीनां च लौकिकीनां च सर्वशः।**
**धारणं सर्वविद्यानां विज्ञानमिति कीर्त्यते॥**

इति देवलवचनमुपन्यस्य च तदेव द्रढयन्ति। तेनानेकविषयं ज्ञानं विज्ञानमिति स्पष्टमेव प्रतिपद्यते। यस्तु ब्रह्मकाण्डे पृथगिव विज्ञानशब्दार्थस्तैर्विवक्ष्यते, न सोऽपि पृथक्, किन्त्वत्रैवान्तर्भवतीत्युपरिष्टाद्वक्ष्यते। श्रीनीलकण्ठाचार्याः श्रीशङ्करानन्दाः, श्रीसदानन्दाश्च तमेव पन्थानमनुसरन्ति। श्रीराघवेन्द्रास्तु स्वीयेऽर्थसंग्रहे 'ज्ञानं सामान्यतः, विज्ञानं विशेषतः' इति व्याख्यायास्मत्पक्षं द्रढयन्ति। "विज्ञानं परतत्त्वगतासाधारणविशेषविषयकं ज्ञानम्" इति श्रीभगवद्रामानुजाचार्या अपि विशेषार्थविषयकं ज्ञानमेव विज्ञानमाहुः। परतत्त्वस्य ज्ञेयेषु मुख्यतया परतत्त्वगता एव विशेषास्तैर्विषयत्वेन गृहीता इत्यन्यदेतत्। शब्दप्रवृत्तिस्तु परावरतत्त्वसाधारण्येनैवेति।

[ ६ ] पक्षान्तरे विज्ञानशब्दस्यानेकार्थताऽवश्याभ्युपगन्तव्या स्यात्। 'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः' इति कोशबलेन लौकिकविद्यानामपि विज्ञानशब्दवाच्यतायाः अपरित्याज्यत्वात्। अस्मत्पक्षे तु 'एकस्यानेकताप्रतिपत्तिर्विज्ञानम्' इत्युक्ते अनेकत्वसहचराणां शिल्पादीनामपि विज्ञानान्तर्भावादेक एवार्थ उभयत्रानुगतो भवति—इति परमानुकूल्यम्। सत्यां गतावनेकार्थतास्वीकारस्य मीमांसकैः कदर्थितत्वात्।

[ ७ ] अध्यारोपापवादन्यायेन गुरूपदेशः फलेग्रहिर्भवतीति वेदान्तिप्रक्रिया। तत्राध्यारोपो विज्ञानम्, अपवादश्च ज्ञानमिति सैव प्रक्रिया गीतासु भगवताप्याश्रितेति सम्यग् युज्यते। इयमेवाध्यारोपापवादप्रक्रिया प्रभवत्यनुभवावसानतां प्रापयितुमित्यभिप्रायेण 'विज्ञानसहितम्—स्वानुभवयुक्तम्' इति श्रीशङ्करभगवत्पादा-

ज्ञानस्वरूपं तु ज्ञानशास्त्रेण ब्रह्मविद्यया। अनयोरुभयो-राश्रयेणैव सर्वात्मना पुरुषसाक्षात्कारः संपद्यते, नान्यथा। ईशोपनिषद्यपि—

विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥

इत्युभयोरेव वेदनस्य मृत्युतरणपुरस्सरममृतत्व-प्राप्तिहेतुत्वमुपन्यस्तम्। तत्राविद्या विज्ञानम्, ज्ञानसमुच्चितकर्मविचारः। विद्या तु ज्ञानम्, गुणीभूतकर्मज्ञानप्रवणा वृत्तिरिति उभयत्रान्यतरस्य समुच्चयो दुर्वारः। ज्ञानकर्मणोरविनाभावस्य पूर्वं प्रतिपादितत्वात्। तथा च भारतस्य पूर्ववज्ज्ञानविज्ञानसमृद्धिरस्त्वित्येतदेव भूयो भूयो ज्ञानविज्ञानात्मा भगवान् प्रार्थ्यत इति शम्।

---

नां सप्तमाध्याय-द्वितीयश्लोकगीताभाष्यमपि नास्मत्पक्षे विरुध्यते। तत्रैव 'विज्ञानं विशेषज्ञानम्'। 'विज्ञानं विविधतया चिदचिद्रूपतया च तत्तद्विभूतिधर्मरूपतयाऽवान्तरविशेषैश्च यथार्थज्ञानम्' 'विज्ञानसहितं ज्ञानं विशेषेण ज्ञातव्यसहितं माहात्म्यम्—सामान्यं विशेषमाहात्म्यं च' इत्यादि व्याचक्षाणाः श्रीमदानन्दतीर्थपादाः श्रीवल्लभाचार्यपादाः, श्रीराघवेन्द्राश्च स्फुटमस्मदनुकूलाः। 'विज्ञानं हि विविक्ताकारविषयं ज्ञानम्' इति श्रीभगवद्रामानुजाचार्या अपि एतदेव समर्थयन्ते, 'सामान्यविशेषरूपताया एव तैरग्रे स्फुटीकृतत्वात्। श्रीज्ञानदेवानां संमतिस्तु मूल एवोद्धृतेति।

तदित्थमनेकोपपत्तिबृंहितं श्रीभागवतश्लोकयोरस्मकृतं व्याख्यानं न दूष्यतामर्हतीति विभावयन्तु सुधियो महाभागाः। श्रीभागवतव्याख्यासु च श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपेऽर्थोऽयमनुमतः "यत्-यदा एकेन तथा नेक्षेत परमकारणेन, यद्वैक्यं न पश्येत्, किन्तु तत्तदसाधारणस्वरूपगुणादिबुभुत्सया वैलक्षण्यं पश्येत् एतदेव हि विज्ञानम्" इति तत्र व्याख्यातत्वात्। समानकर्तृककूर्मपुराणवचनं च यन्मूलनिबन्ध एवोद्धृतम् तेनास्मदुक्त एवार्थः स्फुटीभवति। न तत्समक्षं व्याख्यातृवचसां किमपि मूल्यम्।

एवं लौकिक्यां भाषायामस्मदुक्तो विज्ञानशब्दस्यार्थः सर्वत्र समनुगच्छतीति दिङ्मात्रेण निरूपितम्। वैदिक्यपि प्रक्रियातिसंक्षेपेण निदर्श्यते। उपनिषत्सु आत्मवाचकः पञ्चसु कोशेषु अन्यतमकोषवाचकश्च विज्ञानशब्दः सुप्रसिद्धः। तत्र विज्ञानं जीवः प्रज्ञानं प्राज्ञो वा परात्मेति श्रीशङ्करभगवत्पादानामभिप्रेतम्। अत्रापि एकस्मादुद्भूताः—औपाधिकेन रूपेण विभिन्नतां गताः—अनेकत्वं प्राप्ता जीवा विज्ञानविषया इति विज्ञानशब्देन गृहीताः, सर्वत्रानुगतं परतत्त्वं तु ज्ञानरूपमिति प्रज्ञानपदाभिलप्यमिति युज्यतेऽस्मदुक्तार्थसंगतिः। पञ्चसु कोशेष्वपि विज्ञानमयकोशो बुद्धिरूपत्वादनेकतां भजते, आनन्दमयस्तु सर्वत्र निगूढ एक एवेति स्फुटं श्रीविद्यारण्यस्वामिप्रभृतिभिर्व्याख्यातम्। अत्राप्यनेकरूपत्वाद्विज्ञानविषयः कोशो विज्ञानपदभागिति स्फुटास्मदर्थसंगतिः। एवमन्यत्राप्यूह्यम्। तत्सर्वत्रानुगतं विज्ञानशब्दस्य प्रवृत्तिनिमित्तमेकं संभवदप्युपेक्ष्यानेकार्थता तस्य शिरसि कुतः प्रसह्य निपातनीयेति नास्माभिर्बोद्धुं पार्यते। विद्वांसः पाठकाः सुविचार्यैतन्निर्णेष्यन्तीति कृतं विस्तरेण।

# वेद एव मुख्यं दर्शनम्

पुरस्कर्ता—भट्टश्रीबलभद्रशर्मा, कविकाव्यरत्नाकर-कविचूडामणि-शुद्धाद्वैतभूषण-कविरत्न-महामहोपदेशक-
विद्यालङ्कार-वेदान्तविद्यानिधि-सनातनधर्ममार्तण्ड-श्रीसुबोधिनीसुधाधाराधरः ।

वेद एव मुख्यं दर्शनम् । दर्शनं नाम तत्त्वदर्शनम् । आत्मा वा अरे द्रष्टव्यः । सत्यधर्माय दृष्टये । "यदङ्घ्र्यनुध्यानसमाधिधौतया धियानुपश्यन्ति हि तत्त्वमात्मनः । वदन्ति चैतत्कवयो यथारुचं स मे ऋषीणामृषभः प्रसीदताम्" श्रीमद्गायत्रीमन्त्रे च द्रष्टव्यं तत्स्वरूपं तदुपायः प्रयोजनं दर्शनस्वरूपञ्च निरूपितम् । वेदार्थदर्शनं वा दर्शनम् । अर्थदर्शनमेव वा दर्शनम् । तेन पूर्वमीमांसादीनामवैदिकदर्शनानां च दर्शनत्वप्रसिद्धिः प्रदर्शिता । तत्र वेदार्थ एवार्थोऽन्योऽनर्थस्तत्राप्यात्मैवाऽर्थ इत्यात्मदर्शनविधानादिश्रवणेन सिद्धया तत्त्वदर्शनमेव दर्शनमदर्शनमितरदौपचारिकं गौणमेव च तत्र दर्शनपदमिति स्थितमेतत् । तदिदमजानतां विद्वन्मानिनामर्थदर्शनत्वेन वा वेदार्थदर्शनत्वेन वा ततोऽन्यत्र प्रामाण्यनिर्णायकत्वादिग्रहदाढर्ये वेदार्थानवस्थितिर्मा भूदित्येतदर्थमेव भगवान् श्रीकृष्णद्वैपायनाचार्य्यो ब्रह्मजिज्ञासाशास्त्रं प्रणीय ब्रह्मदर्शनमेव तत्त्वदर्शनमदर्शनमन्यदिति व्यवस्थापयन् दर्शनान्तराणि च तद्दाढर्याय प्रतिक्षिपन् वेद एव मुख्यं दर्शनमिति प्रस्फुटं निर्दधार ।

किञ्च । वेद एव मुख्यं दर्शनमित्यवधारणं सृष्टेस्तन्मूलकत्वतदुक्तप्रकारापन्ननिर्माणत्वतद्दर्शितहेयोपादेयनिष्ठत्व-तन्निष्ठाविनाभावैक व्यवस्थितत्व-तदन्वयव्यतिरेकाधीनत्वादिभ्यः । वेदस्य पुरुषार्थप्रतिपादकत्वप्रथमपुस्तकत्व-सर्वोपजीव्यत्व-सृष्ट्यादिलीलाशीलपरमेश्वरप्रणीतत्व-सृष्टिहिताहितोपदेशार्थतत्प्रवर्तितत्व-तद्रक्षणतदुक्तधर्मसंस्थापनार्थसञ्चरणावतीर्णभगवत्परिरक्षितत्वादिभ्यः । तदितरेषां सर्वेषां दर्शनादिशास्त्राणां वेदविरोधाधीनप्रामाण्यकत्वान्यथापाखण्डत्व-तद्व्यानविशेषनापन्नत्व-विरोधभानपरित्याज्यत्वाशिष्टपरिग्रहापरिग्रहविचारगोचरत्वादिभ्यश्च ।

स च साङ्गः सपरिकर एव मुख्यं दर्शनम् न केवलः । अङ्गाङ्गिभावप्रदर्शनायैव वेदतदङ्गानां पृथग्नामभिः पृथगुल्लेखः । वस्तुतस्तु विशिष्ट एव वेदपदप्रवृत्तिः । साङ्गो वेदोऽध्येयो ज्ञेयश्च । 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानाम् । इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यतीत्यादिवचनेभ्यश्च । एषां वचनानां विशिष्टस्यैव वेदपदवाच्यत्व आशयः पर्यवस्यतीति च द्रष्टव्यम् । तत्रापि——

वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ।
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥

इत्यादिवचनस्वारस्यबलेन श्रीमद्भगवद्गीतायाः श्रीकृष्णस्यैव परात्परस्य पुरुषोत्तमस्य सकलसाङ्गोपाङ्गवेदतात्पर्यविषयस्य पूर्णज्ञानावतारेण भगवता श्रीमत्कृष्णद्वैपायनाचार्य्येण वेदार्थसन्देहवारणार्थमेव

प्रणीतत्वाद् ब्रह्मसूत्राणां समाधिभाषात्वाच्छ्रीमद्भागवत-प्रादुर्भावेनैव भगवतः श्रीमत्कृष्णद्वैपायनाचार्यस्य श्री-भागवते परितोषवर्णनात्पर्यवसितशास्त्रार्थरूपत्वान्निग-मकल्पत्वात्सर्वशास्त्रेभ्यः परत्वेन सर्वसन्देहवारकत्वात् परप्रामाण्ययोगाच्च श्रीभागवतस्य च परिकरत्वमावश्यकं समुचितं मुख्यञ्च। तेनैतन्निर्गलितं भवति—वेदाः श्री-कृष्णवाक्यानि व्याससूत्राणि चैव हि। समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम्। उत्तरं पूर्वसन्देहवारकं परिकीर्तितम्। अविरुद्धं तु यत्त्वस्य प्रमाणं तच्च नान्यथा। एतद्विरुद्धं यत्सर्वं न तन्मानं कथं च नेति। पर्यवस्यति चायमर्थः—श्रीभागवतान्त एव वेदो मुख्यं दर्शनमन्यत्र दर्शनत्वग्रहो भ्रान्तिः प्रतारणं चेति।

सर्ववैदिकविद्वज्जनपरिगृहीतोऽयमर्थो नेह कस्यापि वैदिकास्तिकस्य विसम्मतिः सम्भवति। शास्त्रैकसिद्धत्वेन सार्वजनीनत्वात् प्रातिस्विकत्वकल्पने प्रमाणाभावात्। संप्रति प्रचरद्यावदास्तिकवैदिकसम्प्रदायैः प्रतिवादाभा-वाद्विवादानधिष्ठितत्वात् प्रत्युत सर्वथैवानुमोदनीयत्वा-देव च। यद्यपि पूर्वमीमांसाद्युक्तप्रक्रिया ईश्वरानङ्गीका-रादिदूषिता वेदार्थगोचराः पृथगपि पठ्यन्ते पण्डितैः तथापि ताः शिष्टैर्न परिगृह्यन्ते। शाङ्कराद्यन्यतमवेदा-न्तमेव ते सदाचारोपासनाज्ञानादिष्वनुवर्तन्ते। न पूर्व-मीमांसाद्यनुसृत्य नेश्वराद्यङ्गीकुर्वन्ति। विरुद्धांशं विहा-यैव तेषां पूर्वमीमांसादिष्वादरो न सर्वांश-इत्येतस्या-र्थस्य परोक्षत्वाभावात्। व्यासानुसारिण्येव व्यासा-विरुद्ध एवार्थे शिष्टानां परिग्रहो न तदननुसारिणि विरुद्धार्थे इति निश्चयेन बोद्धव्यं बुभूषुभिर्न पाण्डित्य-चापलेन विरमतव्यमिति सारम्।

एवं वैदिकसर्वविद्वज्जनसिद्धान्तसाम्राज्ये विजृ-म्भमाणे वेदविरुद्धार्थवादिनां नास्तिकदर्शनानां शिष्ट-गोष्ठीबहिःष्कृत्वमप्रतिष्ठितत्वञ्च न विशिष्य प्रदर्शनीयम्। स्वतः सिद्धत्वात्। आस्तिकदर्शनैः शकलीकाराच्च। अथा-स्तिकदर्शनानां वेदप्रामाण्यपरिरक्षणबद्धपरिकराणामपि नास्तिक्यनिराकरणप्रधानतया तर्कपरिग्रहस्य वादिबुद्ध्य-नुसारितया तर्केण तर्कागोचरवेदार्थव्याकुलीकरणतात्प-र्याभावानौचित्याभ्यां प्रामाण्यानुपघातेऽपि भट्टप्रभाकरा-दयो दार्शनिकम्मन्यास्तत्कैकमुख्यप्रामाण्यपर्यवसा-यिनः साङ्गं सपरिकरञ्च वेदमन्यथैवार्थापयन्ति व्याकुली-कुर्वन्ति नावस्थापयन्ति च तदुक्तार्थश्च ते चाऽप्य-प्रामाणिका एवेति सर्ववैदिकास्तिकघण्टाघोषः।

तस्मात् साङ्गः सपरिकरः वेद एव मुख्यं दर्शनमदर्शन-मेवान्यदित्यसंदिग्धमित्यहो नु खलु सचेतसां विपश्चितां चमत्कार इति दिक्।

---

# दर्शन संदर्शनम्

बुद्धेरगोचरतया न गिरां प्रचारो दूरे गुरुप्रथितवस्तु कथावतारः।
तत्त्वं क्रमेण विदुषां करुणावदाते श्रद्धावतां हृदिपदं स्वयमादधाति ॥ १ ॥
दैन्यं क्वचित्क्वचन मन्मथजा विकाराः कुत्राप्यनेक विधबन्धुजन प्रपञ्चः।
क्वापि प्रभत्वघनकल्पितमीश्वरत्वमित्येकवैकृतमिदं जगदाविरस्ति ॥ २ ॥

'प्राचाम्'

# दर्शनानि दृश्यन्ताम्



[ घनाक्षरी ]

जानीमस्तमेतमिति वेदज्ञा विदन्ति हन्त,
यज्ञाः स्वाय घोषयन्ति १ यन्नाप्त्युपायताम्
सोऽयमभिनिबोध्य इति वेदान्तिप्रगल्भाविदो
यान्ति मुदं योगिनो वदन्तो २ यदभिज्ञताम् ।
यत्प्राप्तेर्नाहन्ति मदं तन्त्रमन्त्रसक्ता बुधाः
किन्तु सर्वमेतन्मुधा यस्य ३ विनोदारताम्
सर्वजगन्मोहनैकमायामन्त्रशाली महा-
नद्भुतेन्द्रजाली वनमाली प्रतिभासताम् ॥१॥

कुत्रचिन्निरुक्तो नाथ नित्यनिराकारो भवान्
साकारोऽथ कुत्रचिद् गृहीतो ४ वाक्यविस्तरे
कुत्रचित्तटस्थः क्वाप्यजल्पि जगत्कर्ता भवान्
कुत्रचिदगम्यः, क्वचिद् गम्यश्चित्तमन्दिरे ।
नूनं वेदवाणीष्वपि दार्ढ्यं करवाणि कथं
दुर्धराणि ५ वाक्यान्यपि, केन त्वयि संचरे
अर्वाञ्चामुदेतु बत का वाऽलीका शक्तिरत्र
६ प्राक्तनानामपि प्राचामुच्चवाचामगोचरे ॥२॥

दो०—मोहनमूर्तेर्द्युतिरद्भुताऽनिगमादि ।
मनसि वसन्नपि तदपि च जगन्ति प्रतिबिम्बितमुपयाति ॥३

मानवसमाजे सत्यमार्गमुपादिशन् यानि,
ज्योतिर्जनकानि जनजीवने विमृश्यन्ताम्
८ मानुषातिशायिनो विचारान्विमृशन्तो यत्र
चित्रमुपयन्तो विदो वैदेशिकाः स्पृश्यन्ताम् ।
आर्यसभ्यतायाः स्फुरद्विजयपताकासमा-
न्यतुलितराकाभानि परमं प्रकाश्यन्ताम्
तत्त्वानां विमर्शनानि गूढतलस्पर्शनानि
पुण्यपरामर्शनानि दर्शनानि दृश्यन्ताम् ॥४॥

भट्टश्रीमथुरानाथशास्त्री

---

१–यस्य (भगवतः) प्राप्तौ स्वस्य उपायतां घोषयन्ति–यज्ञैर्भगवत्प्राप्तिरिति। २–यस्य (ब्रह्मणः) अभिज्ञतां ज्ञातृतां वयं ब्रह्मज्ञाः स्म इति। ३–यस्य उदारतां दयालुतां विना, तस्य कृपां विना वेदादयोपि मुधा। ४–कुत्रचिद्वेदवाक्यसमूहे साकारो ज्ञातः। ५–वेदवाक्यान्यपि दुःखेन बोद्धुं शक्यानि, अत एव केन उपायेन भवन्तं प्राप्नोमि। 'समस्तृतीयायुक्ता'दित्यात्मनेपदम्। ६–प्राक्तनानामपि प्राक्तनानाम् (अतिप्राचीनमहर्षीणाम्) उच्चवाणीनामगोचरे त्वयि अर्वाचां का अलीका शक्तिरुदेतु ? ७–मनसि वसन्नपि जगद्वर्तिषु सर्वेषु पदार्थेषु निजप्रतिबिम्बं दर्शयति। यः पदार्थः कस्यचिदन्तःप्रविष्टो भवति तस्य प्रतिबिम्बो बहिर्न प्रतिफलति, किन्तु अन्तर्मानसं निवसतोपि हरेः प्रतिबिम्बो बहिः सर्वस्मिन्नपि जगति पततीत्येवाद्भुतता।
"मोहन मूरति स्याम की अति अद्भुत गति जोइ। बसत सुचित अन्तर तऊ प्रतिबिम्बित जग होइ॥" (बिहारी)
८–मनुष्यशक्तेर्बहिर्भूतान् विचारान्मीमांसमाना वैदेशिका अपि आश्चर्यं प्राप्नुवन्तो दृश्यन्तामित्यर्थः।



# ईश्वर शब्द का महत्त्व-पूर्ण इतिहास

[ लेखक—डॉक्टर मङ्गलदेव शास्त्री, एम० ए०, डा० फ़िल्० ( ऑक्सन ) ]



संस्कृत साहित्य में अभी तक हमें ऐसा दूसरा शब्द नहीं मिला जिसका इतिहास 'ईश्वर' शब्द के इतिहास के समान रोचक तथा महत्त्व-पूर्ण भी हो।

इस अनुसन्धान की ओर हमारा ध्यान कैसे गया ? इस प्रश्न का उत्तर देना यहां आवश्यक है। 'ईश्वर' शब्द का प्रयोग संस्कृतसाहित्य में, मोटे तौर पर दो विभिन्न अर्थों में पाया जाता है। साधारणतया तो 'ईश्वर'शब्द का अर्थ 'जगन्नियन्ता सृष्टिकर्ता, सर्वव्यापक, देवाधिदेव प्रभु' ही देखा जाता है। आज कल के सर्व-साधारण के व्यवहार में 'शिव' 'विष्णु' 'राम' 'कृष्ण' आदि शब्दों को छोड़कर, जो परमेश्वर के अर्थ को प्रकट करने के साथ ही संप्रदाय-वाद को भी प्रकट करते हैं ( इन शब्दों का संबन्ध विभिन्न शैव, वैष्णव आदि सम्प्रदायों से ही है ), जो शब्द साम्प्रदायिक भाव के बिना उस परमप्रभु के लिये प्रयुक्त होते हैं, उनमें 'ईश्वर' 'परमेश्वर' ही मुख्य हैं। हिन्दू-जनता, जिसका संबन्ध किसी विशेष सम्प्रदाय से नहीं है, इन्हीं शब्दों के द्वारा परमप्रभु का स्मरण करती है।

इस सर्व-साधारण के प्रयोग को छोड़ कर संस्कृत साहित्य में भी 'ईश्वर' शब्द का प्रयोग अधिकतर ऊपर के ही अर्थ में पाया जाता है। दार्शनिक साहित्य में, विशेष कर न्याय और योग से सम्बन्ध रखने वाले साहित्य में, जगन्नियन्ता, सृष्टिकर्ता परमेश्वर के अर्थ में 'ईश्वर' शब्द का ही प्रयोग बहुत कर के देखा जाता है।

दूसरी ओर पाणिनि की 'अष्टाध्यायी' और 'पातञ्जल महाभाष्य' में कहीं भी, जैसा हम नीचे दिखलावेंगे, हमें यह 'ईश्वर' शब्द, अनेक बार आने पर भी उक्त अर्थ में प्रयुक्त हुआ नहीं मिलता। इन ग्रन्थों में सर्वत्र उस का अर्थ स्पष्टतया छोटा या बड़ा 'शासक' या 'राजा' देखा जाता है।

उक्त प्रयोग-भेद से स्वाभाविकतया यह इच्छा हमारे मन में पैदा हुई कि इस शब्द के अर्थ के इतिहास की खोज की जावे। उक्त जिज्ञासा की प्रबलता 'ऐश्वर्य' शब्द के अर्थ पर विचार करने से और भी अधिक हो गई। 'ऐश्वर्य' शब्द स्पष्टतया 'ईश्वर' शब्द से निकला है। ईश्वर-पने को ही ऐश्वर्य कहते हैं।

( निबन्ध एष प्रथमतो हिन्दीभाषायामेव कतिचिद्वर्षेभ्यः प्राक् प्रयागात्प्रवर्तमानायां 'हिन्दुस्तानी' पत्रिकायां प्रकाशित आसीत्। तदनन्तरं च किञ्चित्परिवर्धनेन बडोदानगरीयेऽखिलभारतवर्षीयप्राच्यविद्यासम्मेलनस्याधिवेशने आङ्गलभाषायां लेखकेनैव पठितः, तत्सम्मेलनेन च स्वकीयविवरणपुस्तके मुद्रितः। ततोऽपि किञ्चित्परिवर्तनैः परिवर्धनैश्च इङ्गलिशभाषायामेव काशिकराजकीयसरस्वतीभवनपत्रिकाया दशमेऽङ्के प्रकाशितः। स एवायं निबन्धः 'संस्कृतरत्नाकर'सम्पादकानामनुरोधेन, अवकाशाभावेन संस्कृतभाषायामनुवदितुमपारयता मया स्वकीयमौलिकहिन्दीरूपेणैवात्र प्रकाशनार्थमनुमन्यते। आशास्यते यदेतद्विषये विशेषार्थमभिजिगांसवो विपश्चित इंग्लिशभाषारूपेणैव प्रकाशितावुपरि निर्दिष्टलेखौ पठिष्यन्तीति। —मङ्गलदेवशास्त्री

पर 'ऐश्वर्य' शब्द का प्रयोग सदा सांसारिक वैभव— रुपया, पैसा, मकान, जानवर, नौकर-चाकर आदि उपभोग की सामग्री—के ही लिए होता है। ऋषि-मुनि महात्माओं में जो अलौकिक शक्तियाँ होती हैं उन को कोई 'ऐश्वर्य' शब्द से निर्देश नहीं करता;किन्तु 'सिद्धि' 'शक्ति' जैसे शब्दों का ही प्रयोग उनके लिए किया जाता है। इससे स्पष्ट है कि 'ऐश्वर्य' शब्द लौकिक वैभव-शाली 'राजा' या 'शासक' के अर्थ को रखने वाले 'ईश्वर' शब्द से निकला है, न कि 'परमेश्वर' के अर्थ को रखने वाले 'ईश्वर' शब्द से। यदि ऐसा होता तो योग-सम्बन्धी या आत्मिक सिद्धियों या शक्तियों के लिये भी 'ऐश्वर्य' शब्द का प्रयोग देखा जाता। क्योंकि, परमेश्वर के विचार में तो लौकिक वैभव के स्थान में आत्मिक-शक्ति का ही भाव मन में आता है। यह 'ऐश्वर्य' शब्द बड़ा प्राचीन है। इसलिये 'ईश्वर' शब्द के जिस अर्थ को लेकर यह निकला है वह अर्थ भी अति प्राचीन ही होना चाहिये।

इस कारण हमारे मन में उक्त जिज्ञासा और भी तीव्र होगई। इसी से प्रेरित होकर हमने प्राचीनतम वैदिक-साहित्य से लेकर संस्कृत-ग्रन्थों को देखना शुरू किया। अबतक के अनुसन्धान से—जिसका विचार इस लेख में किया है—हम इसी परिणाम पर पहुंचे हैं कि'ईश्वर' शब्द का प्रयोग 'परमेश्वर' के अर्थ में बहुत पीछे से होने लगा है। इसके कारण का विचार भी हम अर्थ या भाव की दृष्टि से नीचे करेंगे। 'ईश्वर' शब्द के इतिहास का यह अनुसन्धान अतीत रोचक होने के साथ साथ कई दृष्टि से बड़े महत्त्व का भी है। लेखके अन्त में ही हम इसका दिग्दर्शन करावेंगे।

इस अनुसन्धान में सबसे पहले हम वैदिक संहिताओं को लेते हैं।

## ऋग्वेदसंहिता

ऋग्वेदसंहिता में 'ईश्वर' शब्द एकबार भी प्रयुक्त नहीं हुआ है। हाँ, यह शब्द जिस धातु—ईश्—से बना है उसका प्रयोग, क्रियारूप से, अनेक स्थलों में आता है। कुछ उदाहरण नीचे दिये जाते हैं—

मा नो दुःशंस ईशत (ऋ० १।२३।९)

अर्थात्, दुष्ट लोग हमारे ऊपर काबू न पा सकें, या हमारे ऊपर प्रबल न हों।

अयमग्निः सुवीर्यस्येशे महः सौभगस्य (ऋ० ३।१६।१)

अर्थात्, यह अग्निदेव सुन्दर वीर्य और बड़े सौभाग्य का स्वामी है।

दूसरा शब्द, जो 'ईश्वर' शब्द की तरह ही 'ईश्' धातु से निकला है और इस प्रकार ईश्वर का स्थानीय तथा सम्बन्धी है, 'ईशान' है। इसका अर्थ भी ऋग्वेद में सामान्य रूप से 'समर्थ' है और यह इन्द्र आदि देवताओं केलिये प्रयुक्त हुआ है। जैसे—

ईशानो यवया वधम् (ऋ० १।५।१०)

अर्थात्, हे इन्द्रदेव! तुम समर्थ हो। तुम हनन को हमसे दूर रक्खो।

'ईश्' धातु का प्रयोग उक्त अर्थ में ही दूसरी संहिताओं में भी आता है। इस लिए इसका उल्लेख हम आगे नहीं करेंगे। 'ईशान' शब्द के अर्थ में दूसरी संहिताओं में धीरे २ कुछ भेद होता गया है। यजुर्वेद और अथर्ववेद में इस का प्रयोग अग्नि-देवता के लिए विशेषण रूप से हुआ है, पर अधिक प्रयोग शिव या रुद्र के लिए ही है। यह प्रवृत्ति बढ़ती गई और अन्त में यह 'शिव' का वाचक एक रूढ़ शब्द बनगया। पिछले साहित्य में यह इसी अर्थ में प्रयुक्त हुआ है। इस शब्द का भी उल्लेख हम आगे प्रायः नहीं करेंगे,क्योंकि हमारे लेख का मुख्य विषय 'ईश्वर' शब्द ही है।

## शुक्लयजुर्वेदसंहिता

इस संहिता में भी 'ईश्वर' शब्द का प्रयोग बिल्कुल नहीं किया गया है। हाँ, इस संहिता के चालीसवें अध्याय में 'ईश्' शब्द का प्रयोग, नाम के रूप में, बहुत कुछ परमेश्वर के अर्थ में किया गया दीखता है। परन्तु इस प्रसंग में दो बातों का ध्यान रखना चाहिए। प्रथम तो यह चालीसवाँ अध्याय वास्तव में एक उपनिषद् है और 'ईशावास्योपनिषद्' के नाम से प्रसिद्ध भी है। दूसरे "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" आदि इसी अध्याय के मंत्रों के संबंध से यहाँ ईश का भाव बिल्कुल वैसा नहीं प्रतीत होता, जैसा आगे चल कर 'परमेश्वर' शब्द का है। अधिक से अधिक इस को भी हम 'ईशान' की तरह का ही शब्द कह सकते हैं। हमारा मुख्य विषय तो 'ईश्वर' शब्द ही है। इसलिये हमारे लिये तो इतना ही कहना पर्याप्त है कि यजुर्वेद में 'ईश्वर' शब्द बिल्कुल प्रयुक्त नहीं हुआ है।

## सामवेद-संहिता

इस संहिता में भी 'ईश्वर' शब्द एक बार भी प्रयुक्त नहीं हुआ है।

## अथर्व-संहिता

यह सबसे पहिली संहिता है जिसमें 'ईश्वर' शब्द का प्रयोग ५ बार आया है। वे स्थल नीचे दिये जाते हैं—

१--मा मा हिंसिषुरीश्वराः [ अथ० ७ । १०७ । १ ]

अर्थात्, स्वामी या द्युलोक, पृथ्वीलोक और अन्तरिक्ष के देवता अग्नि, वायु और सूर्य मुझको न मारें। यहाँ 'ईश्वराः' बहुवचन में है, इस पर ध्यान देना चाहिये।

२—प्राणाय नमो यस्य सर्वमिदं वशे।
यो भूतः सर्वस्येश्वरो यस्मिन् सर्वं प्रतिष्ठितम् [अथ० ११।६।१]

३—प्राणो ह सर्वस्येश्वरो यच्च प्राणिति यच्च न।
[ अथ० ११।६।१० ]

इस सूक्त में प्राण का बड़ा महत्त्वपूर्ण वर्णन है, और प्राणशक्ति का जगज्जीवनी शक्ति से ऐक्य करके वर्णन किया गया है। 'ईश्वर' शब्द यहाँ आया है, पर 'सर्वस्य' शब्द के साथ होने से ही यह स्पष्ट है कि वह यहाँ अपने पश्चात्कालीन रूढ़ अर्थ में प्रयुक्त नहीं किया गया है।

( ४ ) पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम्।
उतामृतत्वस्येश्वरो यदन्येनाभवत्सह (अथ० १९।६।४)

यह मन्त्र कुछ पाठभेद से यजुर्वेद में भी आया है; और वहां यहाँ के 'ईश्वर' के स्थान में 'ईशानः' पाठ है। इसी से स्पष्ट है कि यहाँ भी 'ईश्वर' का अर्थ सामान्यरूप से स्वामी या समर्थ ही है और अभी तक रूढ़ अर्थ परमेश्वर का नहीं है।

[५] कालो ह सर्वस्येश्वरो यः पितासीत् प्रजापतेः।
अथ० १९।५३।८

यहाँ भी काल को 'सब का स्वामी' कहा है।

ऊपर के सब स्थलों में 'ईश्वर' का अर्थ अधिक से अधिक हम स्वामी या राजा ही ले सकते हैं। यहाँ स्पष्टतया रूढ़ अर्थ परमेश्वर का नहीं है। हमारे इस कथन की पुष्टि वैदिक निघण्टु तथा यास्कीय निरुक्त ग्रन्थों से अच्छी तरह हो जाती है। ये ग्रन्थ वेदों के कोश समझे जाते हैं।

निघण्टु (२ । २२) में राष्ट्री, अर्यः, नियुत्वान् और इनः इन चार शब्दों को दे कर कहा है कि ये 'ईश्वर' के नाम हैं [इति चत्वारि ईश्वरनामानि]। यह स्पष्ट है कि 'राष्ट्री' 'अर्य' आदि शब्दों के, जो निर्विवाद रूप से

रान्धस्य जीवस्य परात् परस्माद् आत्मनः कर्माध्यक्षादीश्वरात्तदनुज्ञया कर्तृत्वभोक्तृत्वादिसिद्धिस्तदनुग्रहहेतुकेनैव विज्ञानेन मोक्षसिद्धिः। अयम्भावः, यद्यपि लोके कृष्यादिषु कर्मसु नेश्वरकारणत्वं प्रसिद्धं तथापि सर्वास्वेव प्रवृत्तिष्वीश्वरो हेतुकर्तेति श्रुतेरवगम्यते। तथा च श्रुतिः

**"एष ह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते"** ( का० । ३ । ८ )

नन्वेवमीश्वरस्य साध्वसाधुकर्मकारयितृत्वे कञ्चिदुन्निनीषमाणः साधु कर्म कारयति अपरमधो निनीषमाणोऽसाधुकर्म कारयतीति वैषम्यनैर्घृण्यदोषदुष्ट ईश्वर ईश्वरत्वं जह्यात्, कृतनाशाऽकृताभ्यागमौ च जीवस्य स्यातामिति चेन्न, "कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धाऽवैयर्थ्यादिभ्यः" (ब्र० २ । ३ । ४२) अयम्भावः, पूर्वजन्मकृतधर्माधर्मप्रयत्नापेक्ष एवेश्वरोऽपरजन्मन्येनं जीवं साध्वसाधु वा कर्म कारयति न स्वातन्त्र्येणातः पूर्वोक्तवैषम्यादिदोषानापत्तेः। इत्थञ्चातीतजन्मकृतशुभाशुभकर्मापेक्षयेश्वरस्य हेतुकर्तृत्वस्वीकारेण विधिनिषेधश्रुतीनामप्यवैयर्थ्यमनुगृह्यत इति। जीवश्चेश्वरांश एव "एतावानस्य महिमातो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतन्दिवि" ( य० । ३१ । ३ ) "ममैवांशो जीवलोके जीवभूतः सनातनः" ( गीता । १५ । ७ ) इत्यादिश्रुतिस्मृतिप्रामाण्यात्। तत्रांशत्वं न मुख्यं निरवयवस्यांशत्वासम्भवात्। न च जीवस्यांशत्वस्वीकारे जैवेन संसारदुःखोपभोगेनांशिन ईश्वरस्यापि दुःखित्वं स्यादिति शङ्कनीयम्-यथा प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसम्बन्धात्तेष्वृजुवक्रादिभावम्प्रतिपद्यमानेषु तद्भावमिव प्रतिपद्यमानोऽपि न परमार्थतस्तद्भावम्प्रतिपद्यते एवमविद्याप्रत्युपस्थापिते जीवाख्येंऽशे दुःखायमानेऽपि न तद्वानीश्वरो दुःखायते। जीवस्यापि दुःखप्राप्तिरविद्यानिमित्तैवेति "प्रकाशादिवन्नैवम्परः" ( ब्र० २।३।४६ ) इत्यादिसूत्रपर्यालोचनयाऽध्यवसीयते।

ननु शुद्धब्रह्मणो निष्क्रियत्वेन, मायाया जडत्वेन च जगत्कारणत्वाभावादस्य जगतः किं कारणमित्याशङ्कायामुच्यते "माया, मायायां ब्रह्मचैतन्याभासः, एतयोर्द्वयोराधारभूतं ब्रह्म चैतन्यञ्चेत्यंशत्रय"मीश्वरशब्देनाऽभिलप्यते। तत्रेश्वरे मायांशस्त्वस्य जगतः परिणाम्युपादानकारणं दधि प्रति दुग्धवत्। ब्रह्मचैतन्याभासो निमित्तकारणं घटम्प्रति कुलालादिवत्, आधारभूतब्रह्मचैतन्यमस्य जगतो विवर्त्ताधिष्ठानोपादानकारणं घटम्प्रत्याकाशवत्। एवमंशत्रयरूप ईश्वरोऽस्य जगतोऽभिन्ननिमित्तोपादानकारणमूर्णनाभवदिति स्वीकारेण "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यादिश्रुतिष्वात्मशब्देनेश्वरस्यैव ग्रहणेन चेश्वर एवास्य जगतः कारणमिति निश्चिनुमः। न च "यतो वेमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति श्रुत्या" "जन्माद्यस्य यतः" इत्यादि चतुःसूत्र्या च ब्रह्मण एवास्य जगतः कारणप्रतिपादनेन पूर्वोक्तेश्वरकारणवादोऽयुक्त इति वाच्यम्, विश्वतैजसप्राज्ञतुरीयेति चतुर्विधस्यात्मन इव ब्रह्मणोऽपि विराड्हिरण्यगर्भेश्वरेश्वरसाक्षीति चतुर्विधत्वेन पूर्वोक्तश्रुत्यादिषु ब्रह्मशब्देनेश्वरस्यैव ग्रहणेनाऽविरोधात्। अयम्भावः—यथाऽऽत्मनः परमार्थापरमार्थभेदेन [illegible]रूपद्वयन्तत्र विश्वतैजसप्राज्ञाख्यान्यपरमार्थस्वरूपा[illegible] जीवसाक्ष्यपरपर्यायतुरीयाख्यस्वरूपमेकम्परमार्थमेवं ब्रह्मणोऽपि विराडादिस्वरूपचतुष्टये विराडादिस्वरूपत्रयम[illegible]रमार्थमीश्वरसाक्षिमात्रमेकम्परमार्थन्तदेव ब्रह्म[illegible]देन मुख्यतयोच्यते। एवञ्च यद्यपि नित्यशुद्धबुद्धमुक्त[illegible]वमसङ्गमक्रियञ्च [illegible] सृष्टिकर्तृ न भवितुमर्हति [illegible]त्वादक्रियत्वाच्च तथापि यत्र यत्र श्रुत्यादिषु ज[illegible]रण तया ब्रह्मपदोपादानन्तत्र तत्र ब्रह्मशब्देनेश्वर[illegible]णेनादोषादिति संक्षेपः।

# दार्शनिक-विमर्शः

( प० श्रीरमापतिमिश्रमहोदयः बलिया, यू० पी० )

सत्त्वाधिदेवे तमसोऽधिदेवस्याधानमास्ते समयानपेक्षम् ।
साक्षाज्जनः पश्यतु लुप्ततर्कोऽप्येतत्कृतेऽङ्गीकृतकृष्णदेहम् ॥१॥

सत्त्वाधिदेवस्य तमोऽधिदेवेऽप्याधानमास्ते समयानपेक्षम् ।
साक्षाज्जनः पश्यतु लुप्ततर्कोऽप्येतत्कृतेऽङ्गीकृतशुक्लदेहम् ॥२॥

रुद्रं प्रहर्त्तारमनादितत्त्वं कृष्णं विधातारमनादिशक्तिम् ।
व्यक्तिं गतं व्यक्तिपरं कदाचिद् द्वाभ्यां स्थितं स्वात्मानं संश्रयेऽहम् ॥३॥

परस्परं भावयतोर्महेशयोर्न द्वेषलेशं मुनयस्स्मरन्ति ।
उत्पाद्य भेदं प्रविभज्य भक्तान् धूर्ताः स्वसाध्यं परिपोषयन्ति ॥४॥

न देहभेदो न च भोगभेदो नानात्वसाध्ये विमलोऽस्ति हेतुः ।
देशस्य भेदादथ कालभेदाद् भोगादिभेदाः सुतरां प्रसिद्धाः ॥५॥

येषामास्थास्ति विदुषा "महामिन्द्र" इति श्रुतौ । तथैव भगवद्वाक्ये 'सर्वभूताशयस्थिते' ॥६॥

न तेषां देहभेदोऽपि आत्मभेदाय कल्पते । प्रमाणं नैव तर्कोऽस्ति ह्यनपेक्ष्य श्रुतिस्मृती ॥७॥

अगण्यकीटवसतौ शरीरे समकालयोः । देशोऽवच्छेदकः क्लेशाक्लेशयोर्दृश्यमानयोः ॥८॥

अणोरणीयान्महतो महीयानत्रैकमुद्दिश्य तयोर्विधानम् ।
सौक्ष्म्यान्महेशोयमणोरणीयान्स व्यापकत्वाद् महतो महीयान् ॥९॥

द्वैतवादियतयस्तु मृषैव तारतम्यमथनाय यतन्ते ।
तन्मतेऽपि परमात्मबहुत्वं नैव नाप्यपरमस्ति निरास्यम् ॥१०॥

एकस्य विष्णोरथ शङ्करस्य मार्गादृते सन्ति भूरिभागाः ।
सिद्धान्तभेदात्तिलकादिभेदान्नेपथ्यभेदात्स्वरहस्यभेदात् ॥११॥

मन्दीकृतः स्वीकृतवैदिकाध्वा वर्णाश्रमस्याप्यमलस्वरूपम् ।
कर्मान्तरस्थापनदत्तचित्तैः स्वर्गापवर्गप्रदमन्त्रतज्ज्ञैः ॥१२॥

संन्यासिनो वाप्यनगारिणो वा न साधवो ये मठमाश्रयन्ते।
मठाधिपत्येन विलासिना समं त्यागप्रिया तिष्ठति नैव साधुता॥ १३॥
अद्वैतवादे न हि तारतम्यं प्रेतस्य वासो न च पर[illegible]
न भोगरोगो न च मोक्षपण्यं न चापि भक्तिस्सुलभा धनेन॥ १४॥
स्वयं स्वस्य सत्तामसत्तामणुत्वं महत्त्वं तथा व्यापकत्वं क्षयित्वं
विनाशाविनाशित्वमेकत्वमाहोस्विदित्याद्यनेकं प्रपञ्चं प्रकल्प्य।
मुदा क्रीडते चेतनं सर्वसारो महात्मायमात्मा धराधाम्नि, मन्दा
अवेद्यन्त्विदन्त्वं मुधा वेदनीयं विधातुं यतन्ते कलिं वर्धयन्ते॥ १५॥
को नाम धर्मोऽस्त्यथ कोऽस्त्यधर्मो ह्येतन्न यावद्विदितो भवेन्नृणाम्।
तावत्कथं कल्पितधर्मजालाद् बहिर्भवेत्सौम्यमतिर्मनुष्यः॥ १६॥
बलवानप्यशस्त्रज्ञः संगरे दुर्बलायते। विद्वानपूर्वतन्त्रज्ञो धर्माधर्मविनिश्चये॥ १७॥

# जैमिनेर्दर्शनम् ( सूत्रारूढम् )



*( निबन्धा— मैठाणीत्युपाह्वो-नेत्रमणिशर्मा शास्त्री, दर्शनाध्यापकः-श्रीमू० खै० सनातनधर्मविद्यापीठस्य, लवपुरम् )*

विदितमेवेदं विदुषां क्रिया-(प्राण)शक्तिप्रधानमिदं जगत्-ज्ञानशक्त्या यदि न नियम्येत तर्ह्यनर्थः क्रियाभिरुत्पद्येतेति। क्रिया च लोकजीवनमिति भगवान् जैमिनिः कर्मतन्त्रं प्रणिनाय। यथा चेदं कर्मतन्त्रं लौकिके व्यावहारिके पारलौकिके-आचारे-दाये-याज्ञिके विताने अस्मद्बुद्धेः पथिप्रदर्शकं भवति, यथा चास्मद्बुद्धिं धर्म्मे व्यवस्थापयति, तथा नान्यत् किमपि तन्त्रम्। एतत्त पुनस्तन्त्रं पारलौकिकविषयं प्रायश इति स्वभावतः साधारणबुद्धिदुरवगाहम्, तत्रापि मिथ्यावादप्रचारबहुले लोके किमिव वर्णनीयम्? "तथापि लब्धगुरूपदेशो यावद्विदुन्मेषं जैमिनेर्दर्शनं विदुषां पुरतः सूत्रैरुपस्थापयन् बद्धाञ्जलिः प्रतिपाद्याभिनिवेशं प्रतिमीमांसकं प्रार्थयमानः-सर्वश्रेयःसाधनं धर्म इति विज्ञापयति।

स च लिङ्लोडादिप्रत्ययैः शब्दतः, तिङ्सामान्येनार्थतः, शब्दैकगोचरोऽनधिगतस्वर्गापूर्वसाधनं, यागोनुष्ठीयमानो ध्रियमाणश्चर्यमाणो भाव्यमानः-स्वोत्पत्तौ द्रव्याणि-व्रीहि-पुरोडाशप्रभृतीनि, गुणांश्च-पश्वेकत्वद्वित्वलोहितत्वादीन्, कर्माणि बर्हिराज्यादिसंस्कारान्, सामान्यं द्विजत्वब्राह्म[illegible]त्वराजत्वादिकम्, विशेषम्-आहिताग्नित्वादिकं समपेक्षमाणो-यष्टुरात्मनः सात्त्[illegible], तत्तद्देश कालावच्छेदेन पुरुषविधां वाऽपुरुषविधां-पार्थि[illegible] वायवीं देवतां लक्ष्यीकृत्य, पार्थिवाप्य-

तैजसवायव्यद्रव्यत्यागात्मा तत्र तत्र प्रकृताद्युत्पाद्यमा-
नायां विकृत्यनुष्ठानसमवेतः प्रयाजाद्यनेकावयवानुष्ठान
पुष्ट एव फलवान् भवति। कर्मणश्च यथाविधि द्रव्यत्या-
गात्मकस्यानुष्ठानक्षण एव प्रणाशाद् अर्थिनः सम-
र्थस्य विदुषो-यजमानस्याधिकारिणः सम्भृतवेदप्रति-
पाद्याखिलयज्ञसम्भारस्य श्रद्धालोस्तत्कालं फलानुपल-
म्भात् प्रत्यक्षानुमानोपमानशब्दागोचरोऽतिशयस्तत्कर्म-
जन्योऽपूर्वनामाऽर्थात्कल्प्यते। नह्यौत्पत्तिकस्य(नित्यस्य)
स्वतः प्रमाणस्य भगवतो वेदस्याक्षरेणाप्यनृतेन भाव्य-
मिति वैदिकतत्त्वोन्मेषणनिपुणस्य महामुनेर्जैमिनेरभि-
मतः पक्षः सुधीभिर्निमीलितलोचनमालोच्यताम्।

यद् भगवतो वेदस्य भूतभवद्भविष्यत्सु मनुष्यहि-
तवेदनात् सर्वत उपरि प्रामाण्यम्। हितमात्मनोऽभी-
प्सन् लोकस्तदुपायं पर्येषते। उपायैर्ह्युपेयाः प्रापणीया इति
लोकमर्यादामनुसृत्यात्मनोऽभ्युदयमिच्छताऽवश्यं तदु-
पाये प्रवर्तितव्यम्। उपायाश्चाधिगमितार्था एवात्मनि
प्रामाण्यं दृढयन्ति, न पुनरनधिगमितार्था अपि।
अर्थाधिगमश्च वाक्येन प्रवर्तितस्य भवन् वक्तरि प्रामा-
ण्यं बलादापादयतीति लौकिकानां पन्थाः। अथ वाक्ये-
न प्रवर्तितो नार्थमधिगच्छति। ततो बलादप्रामाण्यम-
प्यापद्यते। वाक्यमपि द्विविधम्-लौकिकं वैदिकमिति।
तत्र लौकिकेष्वप्यर्थेषु गृहीतशब्दशक्तेर्लिङादिघटितवा-
क्यश्रवणमात्रेणात्र नि नियोज्य प्रैष्यादिबुद्धिरुत्पन्नेति
कृतार्थं वाक्यम्। न ह्यत्रोच्चारयितुराप्तत्वमनाप्तत्वं वा
वाक्यार्थोत्पत्तावपेक्ष्यते। पदैर्वाक्यैरपि स्वार्थमात्रावेदने
व्याकरणादिना गृहीतपदशक्तिकैस्तत्तदर्थस्य स्वयमेवा-
वेदनात्। सोऽयं वाक्यार्थ एव क्रियापरो गृह्यमाणो संग-
तिमेति [illegible] सर्वत्र वाक्यसमुदायस्य क्रियापरत्वं
[illegible] क्रियाप्रतीते-
तेनि [illegible]। [illegible] प्रवृत्तौ सत्यमर्थोप्राप्तौ

त्वप्रामाण्यं बलाद् वाक्यत आपतिष्यति। श्रुतवाक्यो
हि गृहीततत्तदर्थमात्रः प्रवर्तते। योऽयमर्थः श्रुते वाक्य-
मात्रे नियमेन प्रतीयते, भवति चैहिकामुष्मिकाभ्युदय-
करः स एव धर्मः। धर्मप्रतिपादकश्च वाक्यं सर्वतो विश्व-
सनीयं श्रौतमेव सिध्यति। तत एव "चोदनालक्षणोऽ-
र्थो धर्मः" उच्यते। स्मार्तादिवाक्येषु स्मृत्यादिप्रणेतॄणां
वीतरागाणां प्रयोजनीयाभावादपूर्वार्थप्रतिपादने प्रवृत्त्य-
सम्भवः। सति प्रयोजने कारुण्येनापि प्रवृत्तौ रक्तत्वम्।
श्रुत्यर्थानुवादकत्वे तु मूलस्यानूद्यमानस्यैव प्रामाण्य-
मुपोद्बलितम्भवति। तदुक्तं "प्रमाणमनुमानम्" "असति
विरोधे त्वनपेक्षं स्यात्।" श्रुतिं विरोधयदनुमानमप्रमाणम्।
श्रुत्यविरुद्धत्वे तु श्रुतस्यैवार्थस्यानुवदनात्प्रामाण्यमस्य
धर्मेऽपि स्यात्। न स्वतोऽस्य धर्मे प्रामाण्यम्। अनुष्ठेय-
मानस्य भाव्यमानस्य यागस्यासिद्धस्य पक्षत्वेनाप्युप-
स्थापयितुमशक्तेः। तत एव इन्द्रियाणां "सत्सम्प्रयोगे"
पुरुषस्य बुद्धिजन्मा(प्रत्यक्षम-)पि तत्र पूर्वोपस्था-
यागे न प्रमाणम्। प्रत्यक्षस्येन्द्रियसन्निकृष्ट एवोपक्ष-
यात्। न च भविष्यन्नर्थो यागोऽपूर्वं वा कस्यापीन्द्रिय-
गोचरः। मा भूवन् विशेषा इन्द्रियगम्याः। सामान्य-
न्त्वर्थत्वं-सत्त्वमस्ति-विषयत्वम्, तद् गृहीत्वा बुद्धिरुत्पाद्य-
ताम्-अस्ति यागः श्रेयःसाधनमिति। अहो! साधनत्व-
मात्रन्तु साध्यस्य मनसा तर्कयितुं शक्यते। साध्यान्तरे
साधनवत्। यागोऽस्य श्रेयसः साधनमिति तु पुरुषेण
सहस्रायुषाऽप्यशक्यावगमम्। तदुक्तं—"नेन्द्रिय-
गोचरः" धर्म इति शेषः। केन पुनरवगम्यते धर्मः?
शब्देनावगम्यते। वैदिकेन शब्देन धर्मोऽवगतः परीक्ष्यते।
नियोगमनुप्रवृत्तानामर्थाप्राप्त्या शब्दोऽप्रमाणं स्यात्।
न पुनरस्ति तत्र प्रवृत्तोऽर्थमप्राप्तः। तस्माच्छब्दः प्रमा-
णमेवाऽस्ति। यत्र चैहिकी फलोपलब्धिर्नास्ति तत्रामु-
ष्मिकी भविष्यति। [illegible]

वैकल्यात् सम्प्रति फलानुदयः सम्भवति। यथाविधि सामग्रीसाकल्यमेपणीयम्। सामग्र्यं हि सम्यक्ज्ञाप्यभाविना फलेन शक्यानुमानम्। भवन्ति छिद्राणि कर्माणि वितन्वतो बहूनीति छिद्राणि समाधाय यथाविध्यनुष्ठानेन फलोदयः स्यादिति। शब्दः प्रमाणमेवेति "अव्यतिरेकश्चार्थे" ऽनुपलब्धेऽर्थः श्रौतो नास्तीति सूत्रकाराः। प्रत्यक्षादीनि तर्हि प्रमाणानि तादृशमर्थं गमयिष्यन्ति, कस्मात्? द्रव्यगुणाश्रयत्वाद् भावस्य। भाव्यो हि यागो द्रव्येण गुणैः संस्कारैर्भवति। द्रव्याणि गुणाः कर्माणि च प्रत्यक्षमीक्ष्यन्ते, सत्सम्प्रयोगस्त्वेष स्यात्। न शब्दमात्रं धर्मे प्रमाणम्? न तर्हि धर्मे प्रमाणमपि शब्दः स्यात्? कस्मात्। द्रव्यगुणकर्मणां प्रत्यक्षेणावगमात्। अनधिगतं गमयद् हि प्रमाणम्भवति। अधिगतमेव गमयत्त्वप्रमाणमेव स्यात्। तदुक्तं—"द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते"। अहो जिज्ञासमानस्यायमुपायः शास्त्रम्। शास्त्रेण प्रत्यवस्थितस्तेनैव समाधिमर्हति। यद्यपि द्रव्यगुणक्रियाः सन्ति तथापि ताः श्रेयःसाधनतयैव जिज्ञास्यन्ते तथा चोपादीयन्ते-न हि स्वरूपसत्यो द्रव्यगुणक्रिया धर्माः। यागे तु साध्ये समन्वयात्—सम्बन्धात् तद् धर्मत्वं श्रेयःसाधकत्वेनेति—भट्टपादैः साधु निरूपितं श्रेयस्करवार्तिके—

"तेषां ( द्रव्यक्रियागुणानां ) मैन्द्रियकत्वेपि न
तादूप्येण धर्मता।
श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते।
तादूप्येण तु धर्मत्वं तस्मान्नेन्द्रियगोचरः॥
( धर्म इति शेषः )

क्रियार्थो हि समग्र आम्नायः क्रियां भावनामेव यागादिविषयां पुरस्कृत्य हितमुपस्थापयति। तदुक्तम्—भूतं भव्यायोपदिश्यते। साधनैः साध्यमुपयन्तः साध्यार्थत्वमेव साधनानामुपस्थापयन्ति। साधनानि कानि कियन्ति किंगुणानि किंफलानि इति विप्सुपायतया वर्त्स्यमानानि प्रवर्त्य प्रवर्त्तयितुं निवर्त्य निवृत्तिं भावयितुं सूयन्ते निन्द्यन्तेऽपि। सोऽयं संवादः साध्येत्यविशेषः। तथा च गुणफलपुनरुक्तिः स्तुतिनिन्दादिवादा अपि विध्यर्थत्वेनैवोपयुज्यन्ते। भाव्यमानश्चर्यमाणोऽनुष्ठीयमानो धर्मो धर्मः स्यात्। "केवलं पुस्तकस्थो बुद्धिस्थोऽपि वा धर्मो नाचर्यमाणो नाभ्युदयाय भवति न निःश्रेयसाय वा भवति" यथाशास्त्रमनुष्ठीयमानस्यैव श्रेयःसाधनत्वेन धर्मत्वात्। सोऽयं भूतानामपि भव्योपयोगः केवलं शब्दमात्रगम्यः। कस्मात्? प्रत्यक्षानुमानाभ्यां भाव्यमानेर्थे कथमपि प्रवेशानुपलम्भात्।

न तर्हि किमपि धर्मे प्रमाणम्? कस्मात्? प्रत्यक्षानुमित्यविषयस्य सर्वथाऽभावात्। न हि शशविषाणान् शब्दः प्रतिपादयन् प्रमाणम्भवति। तम्प्रति प्रत्यवतिष्ठतां भवान्—यस्य त्रिकालविषयः शब्दो नास्ति। भवन्ति चाख्यातारः शब्दैर्भूतं भवन्तं भविष्यन्तमर्थम्। प्रतियन्ति च लोका भविष्यति वृष्टिर्गुरुग्रहातिचारेणेति वृष्टेर्भविष्यत्ताम्। तस्मात्त्रैकालिकमिदम्प्रमाणं शब्दः। अहो धर्मस्योत्पादयिष्यमाणस्य भविष्यतैव सम्बन्धः। कृतम्पुनस्त्रैकाल्यग्राहिणा प्रमाणेन? अस्ति भविष्यता सम्बन्धः। भविष्यँश्चैषः धर्मो भूतैः क्रियासाधनैर्व्रीह्यादिभिर्वर्त्तमानैश्च देवतोद्देश्यकद्रव्यत्यागादिभिर्यागात्माऽनुष्ठानात्पूर्वमप्राप्तस्वरूपोऽधिगतसम्यगनुष्ठानात्मैव समस्तशास्त्रार्थः शब्दप्रमाणगोचरो भवति। एतद्धि शब्दस्य सामर्थ्यं यच्छब्द उत्पत्त्यैव अभिव्यक्त्यैव नियमेन त्रैकालिकमर्थं बुद्धावुपस्थापयति। आसीद् दाशरथिरिति श्रुतमात्रस्य कस्य न दशरथापत्ये भूततावुद्धिरुत्पद्यते। यदुक्तम् "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" औत्पत्तिकः स्वाभाविकः शब्दस्यार्थे सम्बन्धोऽनुभूयते। नाश्रुतशब्दो नाप्यकृतशब्दसंस्कारः सम्यक् शब्दात्मकस्य वेदस्य निष्कृष्यार्थं प्रतिपत्तुं शक्नोति। ततः कृताध्ययनोऽधि-

कारी स्वर्गादिकं कामयमानः स्वर्गाद्युपायमात्रं साङ्गं सेतिकर्तव्यताकं ( यागं ) यागभावनां वा शब्देन श्रुतिमात्रेण बोद्धयते। सोऽयमभ्युपायः शास्त्रं वेदोभ्युदयस्यैहिकस्यामुष्मिकस्य च उपायश्च लोकेऽपि भैषज्यं रोगं भेषजितुं न ज्ञातमात्रं पर्याप्नोति-भिषक्कृतमेन भेषजितव्ये प्रयुक्तन्तु नीरुजमुत्पादयति। तद्वद्धर्मो यागादिरपि ज्ञातोनुष्ठीयमानः स्वर्गापूर्वं उत्पादयति। न हि प्रयुज्य शब्दमात्रेण दृष्ट्वा घ्रात्वोपस्पृश्यैव वा मोदकं जिह्वालौल्यमुपशमयन्ति लोकेऽपि, श्रुतदृष्टघ्रातोपस्पृष्टं मनसा गृहीतमपि रसेनैव तदुपायेन तमधिगत्य कृतार्था भवन्ति। तद्वत्-सर्वैरप्येषणीयमात्मानुकूल्यं सुखम्। सुखञ्च निरतिशयं स्वर्ग उच्यते, असौ च साध्य उपेयः साधनेनोपायेन यागेनेत्युपायावेदने शास्त्रतात्पर्यम्। तथा चायं यागश्चर्यमाणो भाव्यमानः क्रियमाणः स्वर्गोपायः। भाव्यमानता तु पूर्वमभावात् शब्दमात्रगोचरो यागस्य स्यात्। योयं यजेतेत्यादिरूपो वैदिकः शब्दो लिङ्ङादिना नियोज्यमाथनं समर्थमधिकारिणं श्रुत्यैव प्रवर्त्तयति। धर्मं जिज्ञासमानस्य सोऽयमभ्युपायः। चोदना ज्ञानमिति। का पुनश्चोदना? "चोदना प्रवृत्तिरारम्भः" प्रवृत्तिर्हि भवन्ती शब्दश्रवणमनु प्रवृत्तकं शब्दं चोदनामाह। प्रवृत्तकस्तु शब्दो लिङ्-लोट्-लेट्-लङ्-तव्यदादि-विशिष्टो द्वैरूप्यमात्मन उपस्थापयति। नियुक्तिमधिकारितामेकत्र प्रयुक्ति फलोपायतामन्यत्र। नियोगोऽधिक्रियमाणस्य लिङ्ङादिमात्रगोचरः। प्रयोगः नियोज्यस्य व्यापाररूपो यागादिक्रियानुकूलः सर्वाख्यातगोचरः यथा-तन्दुलविक्लित्यनुकूलो व्यापारः पचतिनोच्यते। सोऽयं तत्तदनुकूलो व्यापारः सर्वैराख्यातैः स्वस्वविषये भूतत्वेन भविष्यत्वेन वर्त्तमानत्वेन यथास्वमाख्यातुं शक्यते। एतद् विलक्षणस्तु आत्मनि नियोज्यत्वादिप्रत्यायको लिङ्लोडादिप्रत्ययः। ताविमौ विलक्षणौ प्रत्ययावेव साक्षाच्छब्दश्रवणमन्वेवात्मनि बलात् प्रवृत्तिमनुभवद्भिर्विद्भिः शाब्दी प्रवर्तना आर्थी भावना चेत्युच्येते। भावनैव प्रवर्तनोच्यते। सापि प्रवर्त्यैव विधिमनुष्ठापयितुं शक्नोति न पुनरप्रवर्त्य विधिरपि स्वस्यात्मानं लभते। विधायकः शब्दः श्रुतिरिति। कश्चित् तर्हि विज्ञः प्रवर्तको नियोजक उच्यताम्? नोच्यते तादृशः सः। कस्मात्? नित्यस्य वेदस्योच्चारयित्रधीनत्वे प्रयोजनवशाद्रूपान्तरतापत्तेः। अथोच्चारयिता पूर्वपूर्वकल्पवदेवोच्चारयति, वर्णशोऽपि? कृतन्तर्ह्यस्योच्चारयितृत्वमात्रेण ज्ञात्वा (प्रयोजनमभिलक्ष्या) नुच्चारणात्, प्रयोजनाभिसन्धातुः शरीरसम्बन्धापातात्। तथा च रक्तद्विष्टत्वापत्तिः। पूर्वपूर्वाध्यापकस्यानादिकालादुच्चारयितृत्वेनैवाध्ययनपरम्परया वेदार्थग्रहणेन सर्वधर्मोपपत्तौ कृतमन्तर्गडुना विज्ञाय प्रवर्त्तकेनापि। अथ च सोऽयं धर्माधर्मौ विज्ञाय प्रवर्त्तकः प्राप्तव्ये किं वाक्यमनुच्चार्य प्रवर्त्तयिष्यति? अथ वाक्यमुच्चार्य प्रवर्त्तयिष्यति अनुच्चार्य वाक्यं प्रवर्तयँस्तु सर्वमपि प्रवर्तयेत्? न कमपि वा प्रवर्त्तयेत? अथ शब्दं विधिमुच्चार्य प्रवर्त्तयति? तर्हि ज्ञातो विधिः प्रवर्त्तयति? अज्ञातो वा? विधिज्ञानं ह्यधिकारिणं प्रवर्त्तयन् ज्ञातेन विधिना प्रवर्त्ततेऽधिकारीति व्यवस्थापयति। विधिरेव तर्हि चोदना प्रवर्त्तकः स्यात्। अज्ञातविधिं तु प्रवर्त्तयन् प्रवर्त्तकः साक्षात् प्रवर्त्तको भवेत्। ज्ञातविधिस्तु कृतशब्दसंस्कारः स्वयमेव प्रवर्त्तकं शब्दं शृण्वन् प्रवर्त्स्यति, साधीयसी ह्येषा विज्ञस्य प्रवर्त्तकता कल्प्यते-यत्र विज्ञोऽपि गृहीतसंगतिकं नियोज्यं शब्देनैव प्रवर्त्तयितुं जानाति। नह्यन्यप्रकारं सर्वज्ञोऽपि प्रवृत्तावालयति। तदुक्तं-भगवता जैमिनिना-"आरम्भस्य शब्दपूर्वत्वात्-" सू० ११।१।२० आरम्भः क्रियेत्यर्थान्तरम्। यागेनेह स्वर्गस्य क्रियोच्यते। यजेत-यागेन स्वर्गं कुर्यादिति भाष्यकारः। वस्तुतस्तु आरम्भः प्रवृत्तिः सा शब्दपूर्वा

श्रुतेन शब्देनेति शाब्दी भावना स्पष्टमुच्यते सूत्रेण। एषा हि शाब्दी भावना प्रवर्त्तयति पुरुषम्, प्रवृत्तिश्च पुरुषस्य स्वर्गविषयिणी यागेन सफला भवति। तत एव "द्रव्यगुणसंस्कारेषु"सू० ३।१।३ बादरिमतेव शेषत्वमुपस्थापयता सूत्रकारेण द्रव्य-देवता-त्यागात्मकस्य यागस्य स्वरूपोपयोगि" क्रियार्थं द्रव्यं तर्कितम्। यदि प्रयोजनवती क्रिया, व्यक्तं सा द्रव्येण निर्वर्तयितव्या तस्या निर्वृत्तिर्द्रव्याद् ऋते न भवतीति तन्निर्वृत्तये द्रव्यमेषितव्यम्। तस्मात्क्रियार्थं द्रव्यम्। तदन्यत्र स्पष्टं सूत्रम्—

"द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः" इति सू० ६।१।१।

गुणः शक्नोति विशिष्टं द्रव्यं चोदितं लक्षयितुम्, लक्षितेन तेन गुणेन प्रयोजनम्। विशिष्टस्य क्रियासाधनत्वात्। यथा—अरुणयैकहायन्येत्यत्र गुणोऽप्यरुणादिः क्रियायाः स्वसाधनभूतद्रव्यपरिच्छेदसामर्थ्यादुत्पत्त्यैव शेषः। संस्कारोऽप्यवहन्त्यादिर्यागसाधनपुरोडाशादिनिर्वृत्तये-इति भाष्ये टुप्टीकायां च द्रव्यगुणकर्मणामुपयोगः। कर्माण्यपि फलार्थानि शेषतामुपयान्ति। न कर्माण्येव, फलमपि पुरुषैरर्थ्यमानम्, पुरुषोऽपि कर्मार्थः शेषः। सोऽयं सर्वोऽर्थस्तृतीये षष्टे च स्पष्टमुच्यमानो द्रव्यगुणकर्मणां तन्त्रान्तरोक्तानां यथाप्रयोजनं जैमिनितन्त्रेऽपि स्वतन्त्रे दृष्टिं सङ्गृह्णाति। सन्ति सूत्राणि—"द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः" इत्यादीनि। तान्येतानि द्रव्यगुणकर्माणि (फलमभिसन्धाय) गुणविधि-फलविधि-फलाय गुणविध्यादिषु यागफलमुद्दिश्य विधीयन्ते तत्र तत्र। कथमेष रागः कामनावते फलमुपपादयेद् यस्यायमभ्युपायः। फलार्थन्तर्हि शास्त्रं फलं कामयमानस्य प्रवर्तकं स्यात्। को नाम न सुखं स्वर्गं कामयेत वराकः। "फलार्थत्वात् कर्मणः सर्वाधिकारं शास्त्रं स्यात्।" सू० ३।१।४। तथा च जीवमात्रमत्राधिक्रियेत। नाधिक्रियेत। कस्मात्। शास्त्रेणाधिकारपरिच्छेदात्। अधीतस्वाध्यायोऽधिक्रियते ग्रहीतशास्त्रार्थः। ग्रहणन्तु शास्त्रार्थस्य नाद्विजेन कर्तुं शक्यते; कृतोपनयनस्यैवाध्ययनविधिनाऽध्ययनविधानात्। अनधीतवेदस्तु स्वर्गम्प्रत्युपायतामपि यागस्य केन निश्चेष्यति। कुतश्चिद्वैदिकाच्छ्रुत्वा त्वितिकर्तव्यतां वैदिकस्योपायस्य न सम्यग् ग्रहीष्यति। ततोऽर्थम्प्रहास्यति प्राप्स्यति चानर्थम्। इतिकर्तव्यतापरिज्ञानमेव श्रुतेऽर्थे मीमांसाशास्त्रेण क्रियते। यागस्येतिकर्तव्यता नाम यागसाधनप्रकारः प्रयाजाद्यवयवस्य यथासमयमनुष्ठानं शब्देनैव गोचरीक्रियते। शब्दश्च द्विजातीनधिकृत्य प्रवर्त्तते ततो निवर्तते द्विरजन्मा। सोऽयं द्विजातिरेक एव कृताध्ययनोऽध्ययनविधिं चरितार्थं विधत्त इति द्विजात्यन्तरं नाध्ययने प्रवर्त्स्यति, ब्राह्मणो राजन्यो वैश्यो वा वाजपेयाद्यनुष्ठाय कृतार्थो ब्राह्मणान्तरे वाजपेयसंबन्धं निवर्त्तयिष्यति, कस्मात्? ब्राह्मणस्य राजन्यस्य वैश्यस्यैकैकस्यैव वाजपेये राजसूये वैश्यस्तोमे प्रवर्तनायाः श्रुत्या निवेदनात्। व्यामोहः खलु भवतः? न हि व्यक्तिमेकामधिकृत्य प्रवर्तते शास्त्रम्। आकृतिं तु क्रियार्थामधिकृत्य प्रवर्तते शास्त्रम्। का पुनराकृतिः? जातिराकृतिरुच्यते। आक्रियते व्यक्तिरनयाऽसावाकृतिः। व्यक्तिनिरूपणसमर्थेति न हि कश्चिद् ब्राह्मणं राजन्यं वैश्यं गां वा प्रतिव्यक्ति ग्राहयति। न च तथा शक्नोति। कस्मात्? व्यक्तीनामानन्त्यात्। गृह्यमाणायामपि कस्यांचिद् व्यक्तौ तु, व्यक्त्यन्तरे तदाकारेऽप्यग्रहाद् अज्ञानमेव स्यात्। 'न पदा गां स्पृशेत्' 'ब्राह्मणो न हन्तव्य' इत्युभयोः पादास्पर्शभावन-ब्राह्मणावधभावनयोरेकत्रकृतयोः कृतः शास्त्रार्थ इति व्यक्त्यन्तरे तद्भावनमयुक्तं स्यात्। स्यादेतदेवम्-यदि व्यक्तौ शास्त्रार्थः पर्यवस्येत। शास्त्रार्थस्तु

क्रियार्थत्वादाकृतिपर्यवसायीनि द्रव्यत्वेन गुणत्वेन कर्मत्वेन द्रव्याणि गुणाः कर्माण्युपादीयन्ते। तथा च वार्तिकम्-"यथा च द्रव्यमिच्छन्ति साधकत्वेन कर्मणाम्। तथा गुणमपीत्येवं नाकृत्यस्याम्यसंगति" रिति सूत्रित-"माकृतेः क्रियार्थत्वम्।" सेयमाकृतिर्व्यक्तेराकार एवेति नाक्रियमाणादाकारं निष्कृष्य दर्शयितुमन्यत्र शक्नोति घटात् पटमिव भिन्नमिति। व्यक्तेराकारोऽवयवसन्निवेश एव जातिशब्देनोच्यते। न जातिरपि व्यक्तेः सर्वथा भिद्यते। नाप्यभिन्नैव सर्वथा व्यक्तेरस्ति। कस्मात्? शब्दानां बुद्धेः कर्मणां भेदेन दर्शनात्। अन्यः शब्दो घटः, अन्यो घटत्वम्। न हि कश्चिद् गौरस्तीति वक्तव्ये गोत्वमस्तीति ज्ञात्वा वदति, नापि गौर्मृत इति गोत्वं मृतम्पश्यति। नापि सर्वथा जातिव्यक्त्योर्भेद एव, व्यक्त्यपाये तद्गतजातेस्तत्रादर्शनात्। यथा देवदत्तयज्ञदत्तयोः सतोरेकस्यापायेऽन्यस्य दर्शनम्भवति न तथा गोरपाये गोत्वन्तत्र शिष्यमाणं दृश्यते। गोव्यक्त्यन्तरे गोत्वप्रत्ययः समानाकारग्रहणाद् आकारमेव जातिन्निर्धारयति, आकारश्च घटादेर्न सर्वथा ततो भिद्यते। पृथगनुपलम्भात्। घटव्यक्त्यन्तरे दृष्टमात्रे घटत्वेन घटप्रत्ययश्च पूर्वत्र नष्टघटेऽप्रणाशमेव घटत्वस्य जातेर्व्यवस्थापयति। तदेतत् सामान्यमपि संगृहीतम्-सामान्यं द्विजत्वं स्वाध्यायाध्ययने प्रयोजकम्-तदेतद् द्विजत्वं सम्प्राप्तोऽधिकारी-स्वर्गस्याभ्युपायं यागं बोध्येत-यजेतेति। यो यजेतेति प्रेर्यते स न नश्वरो भूतमात्रः। यदि भूतमात्रः स्यान्न तर्ह्यामुष्मिके कर्मणि नियोज्येत, फलसंयोगोऽस्य वक्तव्यः। अर्थमुद्दिश्योपाया विधीयन्ते सत्यर्थयितरि। तथा च सूत्रम्-"तथा स्वामिनः फलसमवायात् फलस्य कर्मयोगित्वात्" सू० ६।३।१। योऽर्थी स्वत्यागेन ऋत्विजः परिक्रीणीते यश्च स्वं प्रदेयं समुत्सृजति स स्वामीति यजमानो यो यज्ञायुधी स्वर्गं लोकं याति, यज्ञपात्रेषु संस्कृतेषु यस्य संस्कारो यस्मिन् कर्मफलं समवैति, सोऽनश्वरो यजमानः परलोकगामी कश्चिदात्मैवाभिप्रेयते, यः साक्षात् संस्कारैः संस्क्रियते नाम। तदुक्तम्— 'आत्मैव चाश्रयस्तस्य क्रियाप्यत्रैव च स्थितेति' भट्टपादैः, सूत्रकारोऽपि "यजमानसंस्कारो वा" सू० ११।२।२१। शास्त्रफलं प्रयोक्तरीति पश्यति। शास्त्रफलं तु सुखं स्वर्गो मनसैवान्तःकरणेनास्वादितुं युज्यते ततस्तदपि "मानसमहरन्तरं स्याद् भेदव्यपदेशात्।" सू० १०।६।१३ इत्यत्र लोकप्रसिद्धवाङ्मनोभेदात् कर्मण्यपि "वाग्वै द्वादशाहो मनो मानसमिति भेदोपदिश्यते" भाष्यव्याख्यानात् सङ्गृहीतमेव। यदुपाश्लोकि 'आत्मा शरीरसंमिश्रस्तेनैव सह सङ्गमात्। तत्र तत्र सुखादीनि कार्याणि प्रतिपद्यते।' इति भट्टपादैरपि। तान्येतानि स्वर्गसुखादीनि न सर्वस्य जन्मनैव सह संसिद्ध्यन्तीति देशे काले नियतं कर्माणि फलं प्रसोष्यन्ति। ततः 'कालभेदात्' सू० ११।२।३। नैकदेशत्वाच्चेति प्रतिकर्मापूर्वभेदं व्यवस्थापयता दिक्कालसंग्रहः कृतः। यस्मिन् देशे यत्र काले त्रिधिर्गुणक्रियाद्रव्याणां समवायमिच्छति तस्मिन्नेव तदनुष्ठानात् फलप्रसवः— 'तेषु समवेतानां समवायात्' सू० ११।२।२। तन्त्रमङ्गानि, अङ्गाधीनमङ्गीति सिद्ध्यति। नाङ्गि सर्वथा भिद्यते। केन पुनर्भेदव्यपदेशः? भेदस्तु तद्भेदात् कर्मभेदः प्रयोगे स्यात्; तेषां प्रधानशब्दत्वात्। द्रव्यदेवनभेदादङ्गानि भिद्यन्ते— यतोऽङ्गान्यपि प्रधानेन फलसिद्धावुपदिश्यमानेन सहोपदिश्यन्ते विधानात्। ततः प्रधानानां फलं साधयतां विधानम् [ इति कर्तव्यता ] एतद् यदुताङ्गप्रयोगः। अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन्। किम्पुनरङ्गानि पृथगुपदिश्यन्ते। 'चोदना पृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात्' सू० ११।४।६। अङ्गानि मिथो विजातीयानि प्रयाजादीनि बर्हिरादीनि

चेतिपूर्वेषां (प्रयाजादीना) मदृष्टेनोपकारसम्बन्धेनोपकार-कता। उत्तरेषां वर्हिरादीनां यागद्रव्यधारणेनोपकारक-त्वमिति।प्रत्यङ्गं भेदव्यवस्थायामपि समवेत्य फलोत्पत्ता-वङ्गिनि सर्वेषां समवाय एव। सर्वोऽयमर्थः— 'अङ्गगु-णविरोधे च तादर्थ्यादि'त्यादिसूत्रेषु स्पष्टं निर्दिष्टः। अङ्गगुणेन—प्रधानगुणस्य विरोधे प्रसक्ते—अङ्गगुणो बाध्येत। कस्मात्? प्रधानं गुणवत्स्यादिति गुणवदङ्गमपि क्रियते। प्रधानमेव चेत्कृतेनाङ्गगुणेन वैगुण्यमासादयति, कोऽर्थः कृतेन गुणवताङ्गेनेति।स्पष्टमङ्गाङ्गिभावं वर्ण-यता मुनिना नात्रयवा एकान्ततोऽवयविनो भिद्यन्ते, नापि सर्वथा ततोऽभिन्ना एवेति निर्धार्यते-"प्रयोजना-भिसन्धानात् पृथक् सतां ततः स्यादैककर्म्यमेकशब्दाभि-संयोगात्" एकः शब्दः शरीरमिति याग इति सोम-याग इति। पृथगपि शब्दाः-शिरः पाणी-पादौ-अनुयाजाः प्रयाजा इति, वनं-वृक्षा इति, तन्तवः पट इति, नाङ्गान्य-समुज्झित्य यागः कश्चित् स्वरूपमपि लभेत, तस्मात् समप्राङ्गोपदेशोऽतिदेशेन क्रियते, अङ्गिनमनु स्वतोऽङ्गानि विधीयन्ते। यथैकदेशे वस्त्रस्याकृष्टे सर्वं वासोऽप्याकृष्यते। एतदेवास्यातिदिश्यमानस्याङ्गित्वम्- यत्- समग्राङ्गाति-देशः। अन्यान्यङ्गानि-अन्यदङ्गीनि शब्देनैव भेदः। तन्तवः पट इति। कर्मापि पट आव्रियते, न तन्तवः आव्रियन्ते, न तैरावृतैः शक्यः शीतापनोदः कर्तुमिति। अन्यादृश्येव बुद्धिस्तन्तुषु दृष्टेषूत्पद्यते। तन्तूनहं जानामि, तन्तुषु बहुत्वेन। पटमहं जानामीति एकत्वेन पटग्रहः। न पुनस्तन्तुष्वाकृष्टेषु दग्धेषु स पटोऽवशिष्यते। ततो निश्चिनुम उभयथा व्यवहारम्-सन्ति वृक्षाः-अस्ति वनम्। तन्तवः पटः। अङ्गानि-अङ्गीति कथञ्चिद् व्यवहारः। धारणाकर्षणे दर्शनस्पर्शने-अवयवी-अङ्गी-प्रधानः फलोत्पत्तावस्ति। सन्ति चावयवाः-बहुत्वेन विवक्षिता द्रव्यक्रियागुणाः। न सर्वथाङ्गाङ्गिनोर्भेदो नाप्यभेद एव सर्वथेति "प्रधानसमवायाद्" गुणकर्म्मणा-मतिशयविशेषोत्पत्तावुपयोगः। सोऽयं तज्जन्योतिशयः कर्मसु विनियुक्तानां द्रव्यगुणकर्म्मणामनुष्ठानकाल एवोपक्षयाद् विधेश्च फलम्प्रत्युपायतोपदेशात्, फलस्य च तत्कालमेवानुपलम्भात्, कल्प्यते विध्यन्यथानुपपत्त्ये-न्द्रियाद्यगोचरः फलोऽपपादकं तत्तत्कर्मापूर्वं नाम। यत्सूत्रयति जैमिनिः-"अपूर्वत्वाद् व्यवस्था स्यादिति" प्रत्येकस्याङ्गस्यानुष्ठितस्य यथानुष्ठानं फलेऽसाङ्कर्यमिति। तत्तत्फलमिच्छता सेतिकर्त्तव्यताकं तत्तत्कर्मैवानुष्ठेयम्। अनुष्ठितेन प्रकारभेदेनापूर्वमपि भिन्नं व्यवस्थितं भवति। "चोदनासु त्वपूर्वत्वादिति" स्पष्टं सूत्रम्। अपूर्वं चैतत्तत्कर्म्मजन्यं फलकालं यावदवस्थायि, चोदनानां सेतिकर्त्तव्यताकानामनुष्ठानात्, तत्कालमेव च स्वर्गा-द्यनुपलम्भात्, विध्यन्यथानुपपत्त्याऽर्थादेवापद्यते। तत एवार्थापत्तिं प्रमाणमुपकल्पयति—"अर्थापत्तेर्द्रव्येषु धर्म-लाभं सूत्रयन्" अन्यथा सेतिकर्तव्यताको विधिरनुष्ठितो-ऽनर्थक एव स्यात्। यदुक्तो भाष्यकृता-"इतिकर्तव्यता-विधेर्यजतेः पूर्ववत्त्वमिति" सूत्रे फलोपपत्तये यथा-विध्य-ङ्गानुष्ठानमेव यागस्य कर्त्तव्यस्येति—प्रकारः। कर्मफ-लयोः सम्बन्धे कर्म गुणतः फलं प्रधानत इति "प्रत्यर्थं चाभिसंयोग" सूत्रे। इदमपि चोक्तम्—यजिरपूर्वं साध-यति। ततश्चापूर्वात् कालान्तरे फलं भवति—इति चोदनां सूत्रयता विधिपरस्येष्टाभ्युपायस्य (शब्दस्य) भगवतः प्रत्यक्षरं प्रामाण्यमुपपादितं भवति। नैकेनाप्यक्षरेण वैदिकेनानर्थकेन भाव्यमिति प्रवर्त्यस्येष्टाभ्युपायः शास्त्रं स्तुत्यादिभिः प्ररोच्य विधिः सर्वस्योपकारं स्वत एव समानमारचयति। [illegible]धिशास्त्रमिदं विविच्यार्थान्न वदति कर्त्तव्यान्—इति कर्तव्यतां प्रकाशाति? मीमांसादर्शनम्।

दर्शनं चेदं वैदिकं धर्म्ममधिकृत्य प्रवृत्तम्। बहुत्र लौकिकेष्वप्यर्थेषूपयुज्यते। संगृह्यते च तत्र तत्र धर्म्म-

सूत्राणि व्यवस्थापयद्भिर्व्याख्यातृभिः । सूत्राण्यनुसृत्य निबद्धेष्वर्थेषु सद्भदया एव प्रमाणम् ।
किमाद्यपेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ ।
तेन प्रवर्तकं वाक्यं शास्त्रेस्मिँश्चोदनोच्यते ॥

स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम् ।
न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते ॥
श्लोकवार्तिकसिद्धान्तः
इतिशम्

# दर्शनानामेकवाक्यताप्रकारः



( ले०—स्व०पं० श्रीरामचन्द्रशमशास्त्रिपर्वतीयमहाभागाः, व्याकरणाचार्यः, ज्योतिविद्ः, मुम्बई । )

दर्शनपदप्रवृत्तं दशेर्ज्ञानसामान्यार्थतया चेतनाचेतनभेदेन विभिन्नस्यार्थसमुदायस्य तत्त्वानुसन्धानत्वमेव निमित्ततया समुन्मीलति, तत्त्वानुसन्धानञ्च प्रमाणमात्रं शरणीकुरुते; प्रमाणानि प्राधान्येन प्रत्यक्षानुमानशब्दा एव प्रतीतिविषयतामावहन्ति, यद्यपि ततोऽन्यदपि कतिपये मन्यन्ते महर्षिमूर्द्धन्याः प्रमाणं केचन तेष्वपि द्वे एकमेव वा, तथाप्येतेषु प्राधान्यमन्ये न व्यासेद्धुमीशते ।

प्रमाणगणनामविगणय्याऽपि को नाम प्रमितं पीनोऽयं देवदत्तः इत्यादौ आक्षेपसाक्षिकं रात्रिभोजनरूपमर्थं विक्षिपन्नप्याक्षेपं प्रत्याचक्षीत विचक्षणः, सोऽर्थोऽर्थापत्त्या प्रमीयतामनुमानेन वेत्यन्यदेतत्, किन्तु प्रमाणप्राबल्यतारतम्यमभ्युपगम्यैव विप्रतिपद्यन्ते परस्परं दर्शनकाराः । आध्यक्षिकाः प्रत्यक्षं, तार्किकास्तर्कं, श्रौताः शब्दं मुख्यतया तदितरञ्च गौणतया प्रमाणपदे निषिञ्चन्तस्तत्त्वानि निश्चिन्वन्ति, केचन श्रुतिमेव न विश्रम्भन्ते, तां विश्रभ्याऽपि कतिपये मन्दमाद्रियन्ते, केऽपि पुनस्तत्रैव निर्भरतामुरीकुर्वन्ति, श्रुतौ विश्वसाना अपि केचिदभिधां केऽपि लक्षणां केचन व्यञ्जनामपरे निगूढव्यञ्जनामुपजीव्य तत्तद्बोध्यविभिन्नार्थसमुदायमास्थाय तत्त्वान्यामनन्ति ।

एवं स्थितौ प्रमाणप्राबल्यस्य श्रद्धायाश्च तारतम्येन वृत्तीनां वैलक्षण्येन च दुरुद्धर इव दुरात्मा विरोध आभासते दार्शनिकैर्बोधितेषु तत्त्वजातेषु । कथञ्चित्सम्भाव्येताऽपि विभिन्नमूलमास्थितानां नास्तिकलौकायतिकबुद्धार्हतानां बुद्धिदेहलीमागम्य वैषम्यदुर्विपाकः खेलितुम्, किन्तु श्रुत्येकसेवाफलानामास्तिकानामपि कणादगौतमकपिलादीनामार्षसन्निकर्षेणातीन्द्रियं पदार्थसमुदयं मेरुमिव नेत्रपात्रीकुर्वतां कतमया विधया सन्निदध्यादचिकित्स्यः परस्परविरोधिताराजरोगः, कथं वा विश्वसिमितमां तमासेदिवांसम् ; अथाऽपि तेषामन्योऽन्यसिद्धान्तविरोधो बुद्धिपद्धतिमध्यारोहत्येव ।

नैयायिकाः षोडशपदार्थानुपदिशन्ति, वैशेषिकाः षडेव, सांख्या निरीश्वरप्रकृतिवादं वदन्ति, पातञ्जलाः सेश्वरप्रकृतिवादम्, पूर्वमीमांसकाः केवलकर्मवादमामनन्ति, उत्तरमीमांसका ब्रह्मवादम् । केचिदद्वैतवादं, केऽपि विशिष्टाद्वैतं, केचन शुद्धाद्वैतमालक्ष्य एकेषामेव भगवद्व्यासानां सूत्राणि व्याचक्षते भाष्यकाराः, इत्थमित्थं समुन्मील्य वैषम्यजीवातुः केषां न विदुषां मनीषामुत्पीडयति, तदत्र किञ्चिदालोचितुं तदेकवाक्यताप्रकारं तत्तत्पक्षाः प्रेक्षावतामधिसमक्षमुपक्षिप्यन्ते संक्षेपेण ।



चतुर्वेदमहोदयानां मित्रवर्येष्वन्यतमः, विद्यावाचस्पत्याद्यनेकविरुदावलि-विभूषितः, अनेकशास्त्राचार्यः, सनातनधर्मप्राणः, मोहमयीस्थसंस्कृत-प्रचारकविद्यालयाद्यनेकविद्यालयसंस्थापकः, (सोरोंवासी)

**श्री. पं. रामचन्द्रशास्त्री मुम्बई.**

जन्म—आ. शु. १० सं. १९५२ वि. स्वर्गमनम्—आ. शु. ९ सं. २००१ वि.

निर्णयसागर प्रेस, मुंबई.

## चार्वाकदर्शनम्—

लोकायतिकाः प्रत्यक्षमात्रं प्रमाणतया प्रमिरवन्ति, बृहस्पतिप्रणीतं सूत्रं प्रमाणत्वेन निर्णयमाना अपि ते शब्दे प्रामाण्यं नाभ्युपगच्छन्ति। अर्थं सिसाधयिषुः सूत्रकारः प्रमाणत्वेन यदन्वमोदिष्ट तादृशं प्रमाणमेकं प्रत्यक्षमेवेति तेषामाशयः। यच्चक्षुषा प्रेक्षितुं शक्यते तदेव तदीयमते तत्त्वम्, इतराणि प्रमाणान्येव ये न मन्वीरन् तेभ्योऽनुमानं शब्दो वा कथं प्रमातुं प्रसरेत्, अन्नकणैर्मदशक्तिरिव पृथिव्यप्तेजोवायुभिश्चैतन्यविशिष्टशरीरभावेनात्मा नानारूपः प्रादुर्भवति तत्र चैतन्यांशो बोधरूपः देहांशश्च जड़रूपः, एतदुभयात्मक एव सः। अङ्गनालिङ्गनजन्यं सुखं स्वः कण्टकादिवेधजं दुःखं नरकः, लोकसिद्धो राजा परमेश्वरः, देहोच्छेदश्च मोक्षः, अत एव स्थूलोऽहं कृशोऽहमित्यादौ सामानाधिकरण्यमुपपद्यते, पृथिव्यादिचतुष्टयं तत्त्वम्, तस्य मूलस्वरूपं भूतचतुष्टयपरमाणुरूपमेव। सूर्यमरीचिस्थरजांस्येव निरवयवाः परमाणवः, अत्रैवाणुत्वस्य पराकाष्ठा। ममशरीरमित्यादिव्यवहारस्त्वौपचारिकतामाश्रयते, तदेकदेशिनः इन्द्रियाणि प्राणान् मन एव वा आत्मतया निर्णयन्ति।

## बौद्धदर्शनम्—

सर्वं क्षणिकं क्षणिकं,दुःखं दुःखं,स्वलक्षणं स्वलक्षणं, शून्यं शून्यमिति भावनाचतुष्टयमुपदिष्टवानार्य्यबुद्धः, विनेयानां बुद्धितारतम्येनोपदेशभेदः,तद्भेदेऽपि तत्त्वभेदो न प्रादुरस्ति किन्तु मार्गभेद एव। तत्त्वन्तु शून्यतारूपमेकमेव, आद्यया सर्वस्थायित्वं, द्वितीयया अनुकूलवेदनीयत्वं, तृतीयया सर्वानुगतत्वं, चरमया सर्वसत्यत्वमपोहते भावनया। आर्य्यबुद्धस्य शिष्येषु अप्राप्तप्राप्त्यर्थं पर्य्यनुयोगरूपयोगाय गुरूक्तार्थाङ्गीकाररूपाचारस्य च शिष्याणां कर्त्तव्यत्वेऽपि पर्य्यनुयोगाविधानेनाधमत्वं गुरूक्तयथाश्रुतग्राहित्वेनोत्तमत्वमत एव माध्यमिकत्वेन प्रसिद्ध्यन्तः सर्वशून्यत्ववादिनः प्रथमे माध्यमिकाः, गुरूक्तं भावनाचतुष्टयं बाह्यार्थस्य शून्यत्वञ्चाङ्गीकृत्यान्तरशून्यत्वञ्चाङ्गीकृत्य कथमितिपर्य्यनुयोगकृत्या योगाचारत्वेन प्रथिता जगदान्ध्यप्रसक्त्या सर्वशून्यत्वासम्भवे विज्ञानमङ्गीकृत्य बाह्यार्थशून्यत्ववादिना द्वितीया योगाचाराः। पुनः पुनः सूत्रं ब्रुवाणमार्य्यबुद्धं प्रति कुत्र सूत्रस्यान्तः स्यादिति प्रश्नेन सौत्रान्तिकत्वेन ख्याता विज्ञेयानुमेयत्ववादिनस्तृतीयाः सौत्रान्तिकाः। विरुद्धा भाषेत्याभाषणेन वैभाषिकत्वेन प्रसिद्धा बाह्यार्थशून्यत्वे प्रात्यक्षिकस्याप्यर्थस्याभावेन व्याप्तिसंवेदनस्थानविरहे अनुमानप्रवृत्त्यनापत्त्या सकललोकानुभवविरोधेन च तत्प्रत्यक्षत्ववादिनश्चरमा वैभाषिकाः।

माध्यमिका व्यवहारदशायां यो जीवात्मा भासते तस्य मूलस्वरूपं शून्यमेव मन्यन्ते, इतरे बौद्धा विज्ञानमेवात्मेत्यातिष्ठन्ते। स च क्षणिकानां विज्ञानानां यः प्रवाहस्तद्रूप इति प्रतिक्षणं भेदादनित्यः, पूर्वपूर्वविज्ञानसंस्काराणामुत्तरोत्तरविज्ञाने संक्रमान्न स्मृतेरनुपपत्तिः। माध्यमिकाः शून्यमेव तत्त्वमङ्गीकुर्वते। योगाचारा विज्ञानैकस्कन्धमभ्युपयन्ति। सौत्रान्तिका वैभाषिकाश्च रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञा आन्तराः पञ्च स्कन्धाः, बाह्याश्च चतुर्विधा भूतचतुष्टयपरमाणवस्तत्त्वानि, रूप्यन्ते एभिर्विषया रूप्यन्ते चेति करणकर्मव्युत्पत्त्या सविषयाणीन्द्रियाणि रूपस्कन्धः, आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहो विज्ञानस्कन्धः, निरुक्तस्कन्धद्वयसम्बन्धजन्यसुखदुःखादिप्रत्ययप्रवाहो वेदनास्कन्धः, गौरित्यादिशब्दोल्लेखिसंवित्प्रवाहः संज्ञास्कन्धः, वेदनास्कन्धनिबन्धना रागद्वेषादयः क्लेशा उपक्लेशाश्च मदमानादयो

धर्माधर्मौ च संस्कारस्कन्धः, तथान्यत्तत्त्वचतुष्टयम्—समुदायसत्यं निरोधसत्यं दुःखसत्यं मार्गसत्यञ्चेति सर्वमुत्पत्तिमदस्तीति। यन्निर्णयज्ञानं तत्समुदायसत्यं, सर्वं क्षणिकमिति निरोधसत्यं, सर्वं शून्यमिति दुःखसत्यं,सर्वं निरात्मकमिति मार्गसत्यमित्येतच्चतुष्टयमार्य्यसत्यत्वेन प्रत्याययन्ति। परमाणुषु तत्संघातेषु च दृश्येषु नैकमपि सुखाकरं वा स्थिरं वा सामान्यलक्षणं वा लब्धसत्ताकं वेति वितर्क्य सर्वं दुःखमित्यादि भावयन्ति, प्रत्यक्षमनुमानञ्चेति प्रमाणद्वयमनुगृह्णन्ति च। शब्दः प्रत्यक्षानुमानाभ्यां सिद्धमेवार्थमभिधत्ते तत एव न प्रमाणान्तरं सः, आकाशं न तत्त्वान्तरं किन्तु पृथिव्याद्यभावमात्रम्, सूर्यमरीचिस्थरजःसु सावयवत्त्वमेवैते मन्वते, तस्मादेव चार्वाकापेक्षया सूक्ष्मदृश्वानः। परिमाणे पर्य्यवस्यति चातुर्विध्यं बौद्धेषु, आन्तराणां बाह्यार्थानामपि सर्वेषां पदार्थानामपलापस्य सर्वानुभवविरोधितया तेष्वधमा माध्यमिकाः, बाह्यानां घटपटादीनामपलापेऽपि आन्तरज्ञानस्यानपह्नवेन ततो ज्यायांसो योगाचाराः। आन्तरज्ञानमेव बाह्यपदार्थभावेन भासते इति ते समाशेरते। आन्तरमिव बाह्यमप्यर्थं सौत्रान्तिका अभिप्रयन्ति किन्तु बाह्योऽर्थो न प्रत्यक्षः किन्त्वनुमेय इति तेषामाशयः, तस्मादेवोक्तोभयापेक्षया ते श्रेष्ठताभाजः। वैभाषिकाः सर्वतो गरीयांसः, यस्मादेवं ब्रुवते बाह्योऽर्थः प्रत्यक्ष इति निखिलप्राणिसाधारण्येनानुभूतिपथमभ्युपैति, कल्पना हि प्रतीतिमुपगच्छति न पुनः प्रतीतिः कल्पनाम्—अतो बाह्यार्थं प्रत्यक्षमुपेक्षितुं न प्रेक्षावन्तः क्षमेरन्।

**आर्हतदर्शनम्—**

जीवाजीवभेदेन तत्त्वं द्विविधम्, तयोरेव प्रपञ्चभूतानि पञ्चतत्त्वानि जीवाकाशधर्माधर्मपुद्गलाख्यानि जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षाख्यानि सप्त तत्त्वान्यपरे व्यपदिशन्ति, तत्रैव पुण्यपापे सह संयोज्य नव तत्त्वानि केचिदाचक्षते। सप्ततत्त्ववादिनः पुण्यस्य संवरे पापस्य चास्रवे सङ्गृह्णन्ति, चेतनालक्षणो जीवस्तद्विपर्ययलक्षणोऽजीवः शुभाशुभकर्मागमद्वारमास्रवः, आत्मकर्मणोरन्योन्यावयवानुप्रवेशो बन्धः, आस्रवनिरोधः संवरः, कर्मैकदेशक्षयो निर्जरः, कृत्स्नकर्मवियोगो मोक्षः, स्पर्श-रस-गन्ध-वर्णवन्तः पुद्गलाः। इमे प्रत्यक्षमनुमानमिति प्रमाणद्वयं प्रचक्षते, तथा सप्तभङ्गीमङ्गीकुर्वते। स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति च स्यादवक्तव्यः स्यादस्ति चावक्तव्यः स्यान्नास्ति चावक्तव्यः स्यादस्ति च नास्ति चावक्तव्यः। एकवाक्यतां प्रसज्य नाधिकमत्र किञ्चिदाचष्टुमुचितमिति विस्तरवादादुदास्यते। नास्तिकदर्शनेषु न दर्शनत्वं श्रद्धातुमीश्महे न वा तत्कर्तृषु याथात्म्येन तत्त्वदर्शित्वमेव वा विश्वसिमः, तत एव नास्तिकदर्शनैर्विरोधे सत्यपि न प्रत्येति कथञ्चिदन्तरायमन्तः, परन्तु महर्षीणां नास्तिकदर्शनेषु विरोधवस्तु वस्तुतः प्रस्तुवीतैव चेतसः समुत्पीडामतो मुख्यतया आस्तिकदर्शनविरोधपरिजिहीर्षया किञ्चिदुपक्रम्यैव तदीयसिद्धान्तविवेचनौचितीमुच्चिनोतीति युक्तमुत्पश्यामः। प्रत्यक्षं स्थूलमेव नेतुं क्षमते, तदपेक्षया तर्कः सूक्ष्ममीक्षितुं प्रभवति, सूक्ष्मतमं पुनर्भगवती श्रुतिरेवाचष्टुमोष्टे, तत एव पूर्वपूर्वदार्शनिकमपेक्ष्योत्तरदार्शनिके सूक्ष्मतत्त्ववित्त्वमनुमन्वते मनीषिणः, सर्वतः स्थूलदृश्वानश्चार्वाकास्ततः सूक्ष्ममीक्षन्ते तार्किकाः, सूक्ष्मतमं श्रौता वेदान्तिनो विदन्ति, तदेवाभियुक्ताः पठन्ति—

**चेतनानां तथैवाचेतनानां तत्त्वसंज्ञितम्।**
**यथायथा येन मूलं स्वरूपमनुसंहितम्॥**

तथातथा बुद्धिसौक्ष्म्यतारतम्याद्यथोत्तरम् ।
चार्वाकादिषु विज्ञेयं ज्यायस्त्वं तत्त्वदर्शिषु ॥

आध्यक्षिकत्व-तार्किकत्व-श्रौतत्व-प्रयोजकता न तत्प्रमाणमात्रस्य शरणीकृत्यैव किन्तु प्रमाणेषु गौणमुख्यताव्याख्यानेनाऽपि । आध्यक्षिकाश्चार्वाकास्तार्किका वैशेषिकादयः श्रौता वेदान्तिनः। यद्यपि वैशेषिकादयोपि श्रुतिं स्तुवन्ति किन्तु ते तर्कमनुरुध्य श्रुतिं लापयन्तीति श्रौतत्वं तेषु नानुमन्तुं युज्यते चार्वाकमतिरिच्य अनुमानं प्रायः सर्वे स्वीकुर्वते, शब्दं पुनः केचनैव ।

ब्रह्मतत्त्वनिरूपणमेव प्रत्येकास्तिकदर्शनानामादेशनाकक्षामालिङ्गते, किन्तु यादृशं विनेयमुद्दिश्य यद्दर्शनं प्रवर्त्तते तमनुरुध्य तद्दर्शनं तावदेव निवेद्य विरमति । ततः समुत्कृष्टं विनेयं दृष्ट्वा तदग्रेतनं दर्शनमुपतिष्ठते, पूर्वपूर्वदर्शनमुत्तरोत्तरदर्शने स्वसाहाय्यमेव समर्पयति । न पुनः स्वविरोधप्रयोज्याश्रद्धेयताम् । तत्तद्दर्शनेषु प्रतिपाद्यानुगुण एव पदार्थगणः कल्प्यते, न हि बधिरं बुबोधयिषुः कश्चन शब्दापयति न वाऽन्धं बोधयितुमिच्छन् दीपं प्रज्वालयति । बोध्यानुगुण एव पदार्थोऽपेक्ष्यते, न तावता पदार्थकल्पनाभेदेऽपि विरोधो दर्शनेषु पदमाधातुमर्हति । ब्रह्मतत्त्वमेकपदे एव बोधयितुं नैव शक्यते, काशीं जिगमिषुः प्रयागाद् गन्तव्यमित्येतावतैव पन्थानं कथं बोध्येत ।

विज्ञाते स्थूले वस्तुनि सूक्ष्मे बुद्धिरध्यारोहति, ततः सूक्ष्मतमे । न हि स्थूलमविज्ञाय सूक्ष्ममवगन्तुं क्षमते विचक्षणोऽपि । यज्ज्ञापने श्रुतिरपि कातरतां निधत्ते 'यतो वाचो निवर्तन्ते' 'वेदा अवेदा' इत्यादि श्रुतिः स्वीयामक्षमतां स्वयं घोषयति तथाऽपि वात्सल्यादेव पुनः पुनः श्रुतिः 'अशब्दमस्पर्शम् अस्थूलमनणु' इत्यादि निषेधमुखेनैव ब्रह्मतत्त्वं बोधयितुमुत्सहते, तादृशं ब्रह्मतत्त्वं बोधयितुं प्रवृत्तानि दर्शनानि कथं हठादेव कृतार्थतां प्रयान्तु अत एव शाखाऽरुन्धतीन्यायेनैव महर्षयो दर्शनानि व्याचक्रुः सोपानपरम्परेव दर्शनं प्रवर्त्तते, एतदृष्ट्यैव निर्दिष्टेषु दर्शनेषु न कश्चिद्विरोधो वराकः सन्धातुमीशीत । आस्तिकदर्शनानां सिद्धान्तानुपस्थाप्य तदैकवाक्यतां चर्चितुमभिप्रयन्तः सम्प्रति संक्षेपेण तदीयपक्षानेव निक्षिपामः ।

सर्वतः पुरस्तात् शरीरमेवात्मेत्याशेरते सांसारिकाः, बृहस्पतिप्रणीतसूत्राणि व्याचक्षाणाश्चार्वाकाः सांसारिकतामुरीकृत्य शरीरमेवात्मेति व्यपदिशन्ति, इतीयं प्रथमभूमिका, यत्र उपदेशमन्तरैव स्वभावत एव विश्वसिति विश्वम् । द्वितीयभूमिकायां वैशेषिकास्ततः सूक्ष्मेऽर्थे विनेयबुद्धिं निनीषवः सुखदुःखाद्यन्तःकरणधर्मविशिष्टं शरीरात्पृथगात्मानं बोधयितुमुपतिष्ठन्ते, इदानीं शरीरं नात्मीभवितुमर्हतीत्येव बोद्धव्यं न पुनरीदृशस्तादृश आत्मेति । सुखदुःखादेरन्तःकरणधर्मत्वेऽपि तस्यात्मधर्मतया प्रतिपादने विनेयानेवानुरुन्धन्ति वैशेषिकाः । तृतीयायां तस्यां सुखदुःखादिलेशमपि न स्पृशत्यात्मेति सांख्यदर्शनं निर्देक्ष्यतीति प्रतीत्य वैशेषिकं दर्शनं स्ववक्तव्यं निवेद्य विश्राम्यति । सांख्यपातञ्जलास्तृतीयायां भूमिकायामवतीर्य्य सुखदुःखादिर्नात्मधर्मः किन्त्वन्तःकरणधर्म एवेति वैशेषिकापेक्षया सूक्ष्मेऽर्थे निवेशयन्ति धियं विनेयानाम् । चतुर्थ्यां तस्यामुपतिष्ठन्ते पूर्वमीमांसकाः । इयमेव भूमिका चित्तशुद्धेश्चरमा चकास्ति । इदानीं यावत् तर्क एव विनेयबुद्धिमितस्ततः कर्त्तुं प्रावर्तिष्ट—अधुना बोधनीये ब्रह्मतत्त्वे तर्कोऽप्यन्ध इव न किञ्चिन्निर्देष्टुमीष्टे अत एव तदनन्तरं शब्दात्मा श्रुतिरेव, साऽपि निषेधमुखेनैव ब्रह्मतत्त्वं बोधयितुं कथञ्चिल्लमते । नवोढा सख्या पतिं पृष्टा निर्देष्टुं लज्जते । पुनः सख्येव साङ्गुलिनिर्देशमयं पतिरयं वा पतिरिति

पृच्छति, तदा तदा नेति नेत्येव केवलं सङ्केतयति सा, कदाचिन् सखी पत्यावेवाङ्गुलिं निर्दिशति, तदा नवोढा तूष्णीमास्ते। एवैव स्थितिर्भगवत्याः श्रुतेरपि। सा नवोढा पतिमिवानिर्वाच्यं न वक्तुं क्षमते, किन्तु नेति नेति (बृ० ३। ९। २६) अस्थूलमनणु (बृ० ३। ८। ८) अशब्दमस्पर्शम् (का० ६। १५) इत्यादिरीत्या प्रत्याययितुं प्रयस्यति। तदेवंविधे तत्त्वे तर्को वराकः किं करोतु, शब्दोऽपि तदैव ब्रह्मबोधने प्रभवेत्, यदा चित्तशुद्धिर्वर्द्धेत। तर्क इव शब्दो बलान्न किञ्चिदपि ग्राहयितुं पारयति, अत एव चित्तशुद्धिरपेक्ष्यते, सा च तदानीं केवलं कर्मभिरेव शक्यते कर्त्तुम्। चतुर्थीं भूमिकामुल्लङ्घ्य विनेया ब्रह्मतत्त्वं वेत्तुमधिकारितामादधते। पूर्वमीमांसा च कर्मप्राधान्यं बोधयन्त्यपि वेदनीयमात्मस्वरूपं न विरुणद्धि, प्रत्युत कर्मभिश्चित्तं विशोध्य तत्तत्त्वं ग्रहीतुमधिकारयति विनेयान्—अन्यथा दर्शनशतैरपि मलिने मनसि ब्रह्मतत्त्वं नायातुं शक्यते। न हि काशीं जिगमिषुं तन्मार्गमुपदिशन् प्रयागाद् गन्तव्यमित्युदीर्य्य कश्चिदपि साफल्यमनुभवति, किन्तु यतो गन्तव्यं तत एव क्रमेण मार्गो निर्देशनीयो भवति। शरीरान्न पृथगात्मेति प्रथमं निरस्यते, तत आत्मधर्मो न सुखादिरिति व्यवस्थाप्यते इत्यादिरीत्या चरमे ब्रह्मतत्त्वं प्रज्ञाप्यते महर्षिभिः। वितण्डापटुभिर्बौद्धपण्डितैरखण्डनीयैरिव हेत्वाभासैः सर्वानास्तित्वं प्रास्तूयत। तदानीं बौद्धदुर्बुद्धिबद्धमुद्धर्त्तुं सत्वरैरवसृत्वरैर्मीमांसकैर्न कदाचिदनीश्वरं जगदिति प्रबोध्य सर्वास्तित्वमेव व्यवस्थापितम्, सर्वानास्तित्ववादेन केवलं सर्वास्तित्ववाद एव प्रत्युत्तराय क्षमते। अत एव मूलतत्त्वे मीमांसकाः समुदासीना इव प्रतीयन्ते।

बोधनीयविनेयबुद्धिवैलक्षण्यादेव भगवती श्रुतिरपि 'सदेव सोम्येदमग्र आसीत्' 'एकमेवाद्वितीयम्' 'असद्वा इदमग्र आसीत्' 'ततः सदजायत तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः' 'अजामेकां लोहितशुक्लकृष्णाम्' इत्यादि वाक्यैर्विविधमभिधत्ते। दर्शनभेदोऽपि तदेकविधमाधारस्तम्भमाधाय पुष्यतीव। पञ्चम्यां भूमिकायां वेदान्तिनो विलोक्यन्ते। सांख्यादयः सुखदुःखाद्यन्तःकरणधर्ममभ्युपगम्य पुरुषमसङ्गं कूटस्थं नानात्वेन व्यवस्थापयन्तः स्फटिकोपले जपासन्निधानेन रक्तत्वमिव अन्तःकरणसान्निध्येन पुरुषे भोक्तृभाव उपचर्य्यते। वस्तुतः पुरुषो निर्गुणो निष्क्रियः कर्त्तृत्वभोक्तृत्वादिशून्य एवेति वदन्ति। तथापि नैकात्मवादस्तैः प्रस्तूयते, तदेवैकात्म्यरूपं परमं तत्त्वं व्यवस्थापयितुं वेदान्तिनः पुरतः प्रसरन्ति। इत्येवमङ्गाङ्गिभाव एव दर्शनानां न पुनर्विरोधः। पञ्चमीं भूमिकामासाद्य न ज्ञातव्यमवशिष्यते। अत एव ततो दर्शनान्तरं न दर्शो स्पृशति तदेव सांख्यप्रवचनकारो ब्रवीति न्यायवैशेषिकाभ्यां हि सुखी दुःखीत्याद्यनुवादतो देहादिमात्राविवेचकेनात्मा प्रथमभूमिकायामनुमापितः, एकदा परमसूक्ष्मप्रवेशासम्भवात्। तदिदं ज्ञानं देहाद्यात्म्यनिरसनेन व्यावहारिकं तत्त्वज्ञानं भवत्येव। यथा पुरुषे स्थाणुभ्रमनिरासकतया करचरणादिमत्त्वज्ञानं तद्व्यवहारस्तत्त्वज्ञानमपीति। इत्थं सांख्यप्रवचनकृतां वचनमालोच्य विभिन्ना अपि अवान्तरभूमिका लापयितुं शक्यन्ते।

अपरञ्च प्रकारं विरोधितां परिजिहीर्षुः परामृशामि, आत्मतत्त्वमेव कृत्स्नानामपि दर्शनानां प्रतिपादनभूमिः, किन्तून्मार्गे प्रवृत्ता लौकिकबुद्धिमनुरुध्यैव प्रथमतो निवारयितुं शक्यन्ते, इत्येतया दशैव दर्शनकृतो व्याकार्षुस्तत्त्वानि व्याख्येयतत्त्वानुरोधेन तदनुगुणा एव पदार्थगणाः प्रतिपत्तृसौलभ्याय विभज्यन्ते तैरिति न पदार्थभेदो विरोधितामाजुहोति विविधरोगग्रस्तं पुरुषमालक्ष्य

चिकित्सापरायणो नैकेनैव भेषजेन सर्वं रोगमपाकर्त्तुं प्रवर्त्तते। प्रथमतोयं कञ्चन मूलभूतं रोगं निराकृत्य रोगान्तरापकृत्यां चेष्टते। न हि युगपदेव निखिलं भेषज प्रसक्तुमीष्टे, रोगिणः स्थितिमनुरुध्येव चिकित्सितुं युज्यते, शनैः शनैः सर्वेऽपि ते निराक्रियन्ते। तावता नेदमुदितुमर्हति यत् चिकित्सकस्य रोगान्तरनिवारणे तात्पर्य्यं न पर्य्यवस्यतीति। सर्वरोगनिवारणमिच्छन्नपि क्रमश एव यत्नमातिष्ठते। एवञ्च वेदान्तशास्त्रमेव सर्वेषां मूर्द्धन्यतामावहति शास्त्रान्तर तस्यैवाङ्गभूतमिति सुदृढं वक्तुमीश्महे।

देहाद्भिन्नं कूटस्थनित्यं विभुं बोधस्वरूपं प्रत्यञ्चं निर्विकारं निर्गुणमजडमसङ्गं कर्तृत्वादिशून्यमीश्वरपदाभिधेयमेकमद्वितीयमात्मस्वरूपं वेदान्तिनो वदन्ति। तत्र स्वस्वबोद्धव्यं विभज्य दर्शनानि शनैः शनैर्बोधयन्ति। एकपदे तत्सर्वबोधने तु लौकिकबुद्धयो विनेयाः सर्वथा तथा प्रमातुमशक्नुवानास्ततो विरज्येरन्नेव। तत्र प्रथमं देहाद्भिन्नत्वं कूटस्थनित्यत्वं विभुत्वञ्च वैशेषिकाः स्वबोध्यतया निर्णीय प्रज्ञापयन्ति न पुनर्विकारित्वादि निषेधन्ति। तन्निषेधभारं दर्शनान्तरे संस्थाप्य विरमन्ति। नैयायिका वैशेषिकानपेक्ष्य तदग्रे तनत्वकर्तव्यतयाऽऽपतितां प्रमाणान्तरगम्यतां सिसाधयिषन्ति। मीमांसका बोधस्वरूपतां निरूप्यापि अंशभेदेन जड़त्वमप्यभ्युपयन्ति। सांख्या वैशेषिकनैयायिकबोधितावशिष्टांशं स्वबोध्यतया निश्चिन्वाना निर्विकारत्वं निर्गुणत्वमजड़त्वं सङ्गराहित्यं कर्तृत्वादिशून्यत्वं प्रसाधयन्ति नानात्वं न प्रतिषेधन्ति पातञ्जला ईश्वरपदाभिधेयतामप्यनुमन्वते तेऽपि नानात्वे न विविदन्ते। ततो वेदान्तिन एकमेवाद्वितीयं ब्रह्म बोधयित्वा विनेयान् कृतकृत्यतां नयन्ति। इत्थं परामृश्यमाने मीमांसकास्तृतीयां भूमिकामेवाधिरोढुं प्रभवन्ति, चतुर्थी भूमिका सांख्यैरेवालङ्कर्त्तुं युज्यते।

दर्शनानां तत्त्वान्येव मन्ये दुःशकप्रतिपादानि तदेकवाक्यताप्रकारस्तु प्रकृत्यैव नितरां काठिन्यमात्रहति, तथापि यथामति सुधियां पुरतः स्थापयितुं व्यधिषि यत्नजातम्। विदुषामनल्पगौरवमाशासानो नन्दाङ्गणे धूलिधूसरवदनपरब्रह्मणे निवेद्यात्मानं विरमामीति।

## गौतमकणाददर्शनम्—

"प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम" इति सूत्रयाञ्चक्रुः गौतमपादाः। "द्रव्यगुणकर्मसामान्यविशेषसमवायानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसाधिगम" इति सूत्रं कलयाम्बभूवुः कणादचरणाः। निरुक्तसूत्रे तत्तद्भाष्यकृतस्तथा व्याख्यन्त यथा तयोरेकत्र अपरेण नात्यन्तभेदः कल्पयितुं शक्यते। जरन्नैयायिकाः प्रत्यक्षानुमानशब्दान् प्रमाणत्वेन संगृह्णन्ति, जरत्तरा अर्वाचीनाश्च नैयायिका उपमानमपि निरुक्तप्रमाणत्रयातिरिक्तं स्वीकुर्वते। वैशेषिकाः प्रत्यक्षमनुमानञ्चेति प्रमाणद्वयमेवेच्छन्ति। उन्मत्तप्रलपितादौ व्यभिचर्य्य शब्दो न स्वातन्त्र्येण प्रामाण्यगौरवधुरीमुरीकर्त्तुं शक्नोति, किन्तु वक्तृप्रामाण्येन तदुच्चरितशब्दे प्रामाण्यं निर्वोढुं शक्यते। एवञ्च शब्दप्रामाण्यस्यानुमानाधीनत्वेन नानुमानादतिरिच्यते शब्दः प्रमाणमिति ते ब्रुवते। द्रव्यत्वेन पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनसां संग्रहः। तत्राद्यानां चतुर्णां परमाणुभावेन नित्यत्वं तदन्यभावेनानित्यत्वम्। अपरेषां सर्वथा नित्यत्वमेव। गुणपदेन रूपादयः, परमाणुषु भेदानुमापकः स्वतोव्यावर्त्तकत्वेन विशेषोऽङ्गीक्रियते तैरत एव वैशेषिका इत्यभिधीयन्ते। नैयायिका जगतो मूलतत्त्वान्वेषणे तर्क एव प्रमाणशिरोमणिरिति स्वीकुर्वाणास्तार्किकत्वमेव स्वीयं प्रकाशयन्ति। यद्यपि श्रुतिरपि साक्षात् जगत्कारणं प्रमातुं प्रभवति न पुनरनुमानमुरीकृत्यैवेत्याचक्षते तथाप्येते श्रौता इति

निर्देष्टुं न युज्यन्ते, नैगावापृथिवी जनयन देव एकः (श्वे०) इत्यादयः श्रुतयः स्वातन्त्र्येण जगत्कारणं बोधयन्त्योऽपि अनुमानेन प्रथमतः प्रमापिते तस्मिन् पश्चात्तमर्थमनुभावयितुं गृह्यन्ते. इत्यगत्यैव प्रतीमः पक्षपातितां तर्के तेषाम्। वैशेषिकाः शब्दमेव न प्रमाणत्वेन मन्यन्ते, तत्र श्रुतिः किं विधातुमीशीत। सा च अनुमानक्रोडे क्रीडन्ती प्रामाण्यं निषेवते। अत एव श्रुतेर्नाप्रामाण्यं वक्तुं ते व्याप्रियन्ते। अन्यथा आस्तिकत्वमेव विलीयेत। तदाह भाषापरिच्छेदकारः—

शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते ॥
अनुमानगतार्थत्वादिति वैशेषिकं मतम् ।

अनुमानविपक्षे खड्गपाणिं श्रुतिं कथञ्चिदौपचारिकतया लापयन्ति तार्किकाः।

## सांख्यपातञ्जलदर्शनम्—

कश्चिदर्थः प्रकृतिरेव कश्चिद्विकृतिः प्रकृतिश्च कश्चिद्विकृतिरेव कश्चिदनुभयरूपः—तत्र प्रथमा प्रधानपदव्यपदेश्या मूलप्रकृतिः। सा च सत्वरजस्तमसां साम्यावस्था। इयं न कस्याऽपि विकृतिः। प्रधानान्महत्तत्त्वमाविर्भवति, इदमपि त्रिगुणात्मकं विकृतिः प्रकृतिश्च कथ्यते। तत्र प्रधान इव गुणानां साम्यं नास्ति किन्तु सत्त्वांशस्य प्राधान्यम्। तस्मादहङ्कारतत्वम् इदमपि प्रकृतिर्विकृतिश्च। अस्य गुणतारतम्यमङ्गीकृत्य सात्विकराजसतामसभेदभिन्नतया त्रैविध्यम्। यत्र रजस्तमसी अभिभूय सत्त्वमुत्कटं भवति तत् प्रथमम्। तत्तु राजसांशसाहाय्येन प्रवृत्तिधर्माण्येकादशेन्द्रियाणि प्रारभते पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि एकादशं मनः। यत्र सत्वरजसी अभिभूय तम उत्कटं भवति तत्तामसम्, तस्मात्पञ्चतन्मात्राण्युत्पद्यन्ते। राजसं तृतीयं सत्वतमसोः स्वतः क्रियाराहित्येन राजससाहाय्येनैव क्रियाकारितया तत्कार्य्येऽपि राजसकार्यत्वं पर्य्यवस्यति। अत एवास्य निरुक्तकार्य्यद्वयादतिरिच्य नान्यत्कार्य्यं पर्य्यालोच्यते। पञ्चतन्मात्रेभ्यः शब्दस्पर्शरूपरसगन्धरूपेभ्यः क्रमेणैकद्वित्रिचतुःपञ्चगुणानि वियदादीनि पञ्च महाभूतानि इमानि विकृतय एव, अनुभयात्मकः पुरुषः इति पञ्चविंशतितत्त्वानि सांख्यैराख्यायन्ते। एते प्रत्यक्षमनुमानं शब्दश्चेति प्रमाणत्रयं कलयन्ति। सतः सज्जायते इत्येतेषां कार्यकारणभावे सिद्धान्तः। नैयायिकादयः पुनः सतोऽसज्जायत इतीदं व्याहरन्ति। पातञ्जलाः सांख्योक्ततत्वानि यथायथं स्वीकृत्यैकमीश्वरमपरं संगिरन्ते अत एव नानयोर्दर्शनयोरत्यन्तभेदो बुद्धिगम्यतामादधाति। वैशेषिकोक्तपदार्थनिचयश्चेत्सांख्यमतेन विचार्य्येत तदैवं चेतसि प्रतिभासते—द्रव्येषु गणितानि पृथिव्यप्तेजोवाय्वाकाशमनांसि पञ्चविंशति तत्त्वेष्वेवैतैस्तत्तद्रूपेणैव निरूप्यन्ते। आत्मा च पुरुषपदेन व्यपदिश्यते, दिक्कालौ आकाश एव क्रोडीकरोति। तदाह प्रवचनरचयिता "दिक्कालावाकाशादिभ्यः" (सू० २।१२) गुणकर्मसामान्यानि तत्त्वेष्वेवान्तर्भवन्ते धर्मधर्मिणोरभेदात्, विशेषसमवायौ न किञ्चिदुपयुज्येते. अभावो भावान्तरतामेवानुभवति, घटप्रागभावो भूरेव, घटध्वंसः शकलान्येव, घटात्यन्ताभावः केवलाधिकरणमेव. घटान्योऽन्याभावः पटादिरेव। सांख्यास्तार्किकत्वेनैव कीर्त्त्यन्ते। वैशेषिकाः सूक्ष्मात्सूक्ष्मतमं तत्त्वं परमाणुं प्रमिण्वन्ति, सांख्याः पुनः प्रकृतिम्। तयोः स्वरूपनिरूपणे किञ्चिद्वैषम्यमुन्नटेदपि तत् तादृशं सीमां नाश्रयते यत्र परिहर्तुमेव न शक्येत। कार्य्यकारणभावे सतोऽसत् इत्येके सतः सत् इत्यपरे तर्कयित्वाऽपि प्रथमे बहिरसत्त्वेन सत्त्वम्परे अन्तःसत्त्वेन सत्त्वमिति व्यादिशन्तो नैकान्ततो बहिरसत्त्वे अन्तःसत्वे च विप्रतिपद्यन्ते। एवञ्च वैशेषिकसांख्ययोः पदार्थजल्पितानि न स्वल्पतोऽपि विरोधतल्पं कल्पयन्ति

## पूर्वमीमांसादर्शनम्—

मीमांसाशास्त्रं प्राधान्येन वेदार्थमेव विवेचयति। कर्मानुष्ठानार्थमपेक्षितो वेदार्थनिचयो मीमांसामतिरिच्य नोच्यते चारुतया दर्शनान्तरेण। विभज्यैव बोद्धव्यानि दार्शनिकास्तत्त्वानुसन्धाने प्रयतन्ते। अत एव वेदार्थं कथयन्तोऽन्येऽपि कथमिव महर्षयः पिष्टं पेषयत्सु निपतेयुः। पदन्यायतत्त्वान्यातत्याऽपि नान्यैः श्रुतिवाक्यश्रवणसमनन्तरमन्तःप्रतिभाते कश्चिदर्थो बाधितो विवक्षितो वा न वेति विशीतिमींमांसामुपेत्य सर्वांशतो विच्छेत्तुं शक्यते। अत एव तैस्तत्त्वानि न मुख्यतया व्याख्यायन्त। केवलं स्वमतप्रत्यर्थिनो वैशेषिकोक्तपदार्था एवात्यर्थतामनीयन्त। अप्रतिषिद्धमनुमतं भवतीति न्यायं संमान्य वक्तुं शक्यते—वैशेषिकवदेव तत्त्वान्येतेऽप्यनुमन्यन्ते। मतभेदस्तयोः क्वचिदेव चित्ते पदं निधत्ते। समवायादिपदार्था नैतेभ्यो रोचन्ते। शब्द एव विश्वस्य सर्वस्वम्, पृथिव्यप्तेजोवाय्वाकाशानां मध्ये क्रमेण पूर्वपूर्वस्योत्तरोत्तरं कारणम्, आकाशस्य शब्द एव हेतुः, मनसो विभुत्वमेव, आत्मा बोधाबोधरूपस्तद्विशेषैरिष्यते परमाणवो नानित्याः, प्रत्यक्षानुमानशब्दोपमानार्थापत्तयः पञ्च प्रमाणानीति प्राभाकराः समुदीरयन्ति। अनुपलब्ध्या सह षट् प्रमाणानीति भाट्टा व्याचक्षते, एते श्रौता एव। वैशेषिकवत् एतेषामपि सांख्योक्ततत्त्वेष्वन्तर्भुक्तिः शक्यते विधातुम्।

## वेदान्तदर्शनम्—

अत्र दृग्रूप एक एव पदार्थ आत्मा परमार्थतया स्वीक्रियते, द्वैतन्त्वनाद्यविद्यया प्रतिपद्यते, तदनुरुध्यैव दृग्दृश्यश्च पदार्थद्वयं कल्प्यते। तत्रादिम ईश्वरजीवसाक्षिभेदभिन्नतया त्रिविधः। कारणीभूताज्ञानोपाधिरीश्वरः, सोऽपि ब्रह्मविष्णुमहेश्वरभेदेन त्रैविध्यमध्यास्ते। अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानोपाधिविशिष्टो जीवः। ईश्वरो जीवश्च तत्तदुपाधिसंयुक्तः केवलः साक्षीति व्याचक्षते। अव्याकृतमूर्तामूर्तभेदेन दृश्यपदार्थस्य त्रैविध्यम्। अविद्या तया सह चितः सम्बन्धः। तस्यां चिदाभासः, जीवेश्वरविभागश्चेति चतुष्टयमनादित्वादव्याकृतपदेन व्यपदिश्यते। अविद्यातः समुत्पद्यमानानि शब्दस्पर्शरूपरसगन्धात्मकानि सूक्ष्मपञ्चभूतानि, अविद्याप्रभवोऽन्धकारश्चामूर्तवाचा निरुच्यते, अमूर्तावस्थानाञ्च भूतानां प्रत्येकं सात्त्विकांशादेकैकं ज्ञानेन्द्रियमुत्पद्यते, सर्वेषां सात्त्विकांशेभ्यो मिलितेभ्यो मनः संजायते, तस्यामेवावस्थायां प्रत्येकराजसांशादेकैककर्मेन्द्रियं प्रभवति, मिलितेभ्यो राजसांशेभ्यः प्राणोत्पत्तिः, अनन्तरं भूतानां पञ्चीकारेण मूर्तावस्था सम्पद्यते, ततो भौतिकमेतद् भूमण्डलं प्रादुर्भवति, इति वेदान्तिनो वदन्ति। आविद्यिकत्वमापाद्याऽपि दृश्यतत्त्वानां विवर्त्तवादिनस्तथा तत्त्वान्यङ्गीकुर्वते, यथा न तेषु सांख्या विशेषतो विप्रतिपद्यन्ते। वस्तुतो वेदान्तसंमततत्त्वेषु लोकानुरुद्धप्रायदर्शनोक्तानि तान्यन्तर्भूषन्ति न वेति विचारः काकदन्तपरीक्षामेवाऽऽह्वयते, अत एव ततो विराम एव युज्यते। लौकिकैरिन्द्रियैर्गृह्यमाणं वस्तु सर्वतः पुरस्तान्मनीषां स्पृशति, विश्वसित्यपि विश्वं तदेव विना विशीतिम्, इदं खलु प्रत्यक्षस्यैव प्रभुत्वं प्रतीयते, तत एव प्रकृतिरियं प्राणिनः शरीरमात्मतया निश्चेतुमुत्कण्ठते, देहमात्मतया जिघृक्षुरेकपदे चेत्तत्त्वमसि, अहं ब्रह्मास्मि, एकमेवाद्वितीयं ब्रह्मेत्युपदिश्येत तदाऽवश्यमेवोपहास्यता प्रसज्येत। न हि एकद्व्यादिसंख्यामविदुषं चलनकलनादि शिक्षयन्ति विचक्षणाः। वनौषधिसुधियो वामे शाल्मलिर्दक्षिणेन रसाल इत्येवं रीत्यैव प्रत्ययं नीयन्तेऽध्वनः पक्षिविचक्षणाः पूर्वं मयूरवनं ततः कोकिलनीडनिचयः, अनन्तरं कुरङ्गमण्डली, इत्थमेव पन्थानं बोधयन्ति बालाः पुनर्हस्तं धृत्वैव मार्गं बोधयितुं शक्यन्ते। विनेय-

बुद्धितारतम्यमवगम्य विभज्य च बोद्धव्यं शनैः शनैरावेदयितुमवतरन्ति दर्शनानि । सर्वश्रेष्ठं किञ्चिद्ब्रह्मतत्त्वमिति बुबोधयिषया प्रस्तुत्य एकत्र सर्वश्रेष्ठत्वबाधे तदपेक्ष्य तत्सूक्ष्मे परत्र विनेयबुद्धिमनुप्रवेशयितुमिच्छन्ति दर्शनकृतः। पूर्वत्र तद्बाधमवधार्य्य शिष्या उत्तरत्र तद्बुद्धिं निवेशयन्ति । तत्राऽपि तद्बाधे विज्ञाते ततोऽन्यत्रेत्येवंक्रमेण ब्रह्मतत्त्वं तन्निश्चिन्वन्ति । यत्र भगवती श्रुतिरपि निषेधमुखेनैव प्रवर्त्तते। इत्थं पूर्वस्योत्तरोपकारितया परस्परमङ्गाङ्गिभाव एव दर्शनानां न पुनर्विरोधितालेशः। तदाहुर्मधुसूदनसरस्वतीपादाः "सर्वेषां प्रस्थानकर्त्तॄणां मुनीनां विवर्त्तवादपर्य्यवसानेनाद्वितीये परमेश्वर एव प्रतिपाद्ये तात्पर्य्यम् । न हि ते मुनयो भ्रान्ताः सर्वज्ञत्वात्तेषाम् , किन्तु बहिर्विषयप्रवणानामापाततः पुरुषार्थे प्रवेशो न सम्भवतीति नास्तिक्यवारणाय तैः प्रकारभेदाः प्रदर्शिता" इति।

शरीरस्यान्नाधीनसत्ताकतयाऽन्नमेव सर्वश्रेष्ठत्वेन पूर्वं ग्राहयितुं शक्यमित्यभिप्रेत्य भगवती श्रुतिः प्रथमममन्नं ब्रह्मेति ब्रूते,अनित्यता तत्र प्रतीत्याऽपि यो विकार्य्यंवान्नरूपं ब्रह्मेति निश्चिनोति सोऽनधिकारीति श्रुतिस्तमुपेक्षते। यः पुनर्विकारित्वादन्नं न ब्रह्मेति प्रत्यवतिष्ठते तं तत्सूक्ष्मः प्राणो ब्रह्मेति सा बोधयति। ततो मनो ब्रह्मेत्यादि यथाधिकारं ज्ञापयितुं प्रसरति श्रुतिः, पूर्वंपूर्वं वञ्चयितुं नाभिप्रैति सा, किन्तु स्थूलदृष्टानामपि स्वसर्वस्वभूतमनिर्वाच्यं ब्रह्मतत्त्वं वेदयितुं वत्सला श्रुतिः शनैःशनैः सन्मार्गं निनीषति। एकपदे ब्रह्मतत्त्वञ्चेत्प्रतिपाद्येत उन्मत्तप्रलपितमिव तदुपेक्ष्येतसांसारिकैः। यथा अन्नं ब्रह्मेति वचसा प्राणो ब्रह्मेति वचो न विगृह्णाति न वा प्राणो ब्रह्मेति श्रुत्या मनो ब्रह्मेति श्रुतिविरोधमन्वभवत्। किन्तु परमार्थगत्या परस्परमङ्गाङ्गिभाव एव तासां विरुद्धत्वेनाभातानामपि श्रुतीनामित्येव कश्चिदपि विपश्चिदपश्चिमो निश्चेतुमीष्टे ।

मर्त्यं मर्त्येनैव यथा नावगमयितुं शक्यते। तदाहुः—
'अमर्त्ये वर्त्मनि स्थित्वा ततः मर्त्यं समीहते'

अत एव—यद्यपि ऋषीणां दर्शनं तत्त्वविषयकं भवति, तथापि तत्त्वभूतेन वस्तुना व्यवहारासम्भवेन व्यवहारकाले तेऽप्यदृष्टतत्त्वसदृशा नानाप्रकारैः व्यवहरन्तीति नागेशभट्टो व्याचष्ट। तदेवं हरिरपि सूचयति—

ऋषीणां दर्शनं यच्च तत्त्वे किञ्चिदवस्थितम् ।
न तेन व्यवहारोऽस्ति न तच्छब्दनिबन्धनम्

व्यवहारकाले महर्षयोऽपि सांसारिकवदेव प्रवर्त्तन्ते इत्येव पुञ्जराजो ब्रवीति—

रूपेण व्यपदेशाभ्यां लौकिके वर्त्मनि स्थितौ
ज्ञाने प्रत्यभिलापे च सदृशौ बालपण्डितौ ।

पश्वादिभ्यश्चाविशेषादिति सूत्रयता भगवता व्यासेनाऽपि व्यवहारकाले विवेकिनामपि पश्वादिवदविवेकित्वं दर्शितम् ।

वस्तुतो व्यवहारदशायां मानवा लौकिकरीतिमुरीकृत्यैव कृतकृत्यतां नेतुं शक्यन्ते। तेषां स्वप्रगत्याऽपि प्रत्येतुमशक्येऽलौकिकतत्त्वे धियो हठान्नानुप्रवेष्टुमीशते, तत्र पुनः पर्य्याकुला अपि किं प्रतिकुर्य्युरार्य्यपादाः। अत एव तेऽपि शर्करेदमिति विश्वास्य कटु भेषजं बालकान् पाययन्त इव तत्त्वमिदमिति विश्वास्य शनैः प्रबोधयन्ति ब्रह्मतत्त्वं विनेयान् इति ।

# दर्शनानां व्यवहारोपयोगिता

[ ले० जगदीश-शास्त्री व्याकरणतीर्थः लवपुरीय प्राच्य-महाविद्यालयस्थः ]

दर्शनशास्त्रीयस्य पदार्थसार्थस्य कृत्स्नस्यापि लोकव्यवहारोपयोगित्वम्, ऋते मोक्षसाधनभूतेभ्यः पदार्थेभ्यः। वस्तुतस्तु मुमुक्षूणामपि लोके विद्यमानत्वात्तद्व्यवहारे वर्तमाना अपि पदार्थाः सुतरां व्यवहारोपयोगिनः सन्ति। स्वल्पकलेवरेऽत्र लेखे निखिलस्यापि दार्शनिकतत्वजातस्य प्रत्येकं लोकव्यवहारोपयोगिता दर्शयितुं न शक्यतेऽतो दिङ्मात्रमुदाह्रियते। तथाहि—अस्ति दर्शनशास्त्रे परमेश्वरसत्तास्वीकारः। तेन प्रभुशक्त्येव नियम्यते व्यवहारे लोकः। तद्यथा राजदण्डभयेन चौरा लुण्ठकाश्च न प्रभवन्ति साकल्येन लुण्ठयोल्लुण्ठनाय। तेभ्यो रक्षितेभ्यो दारागारकेदारस्वापतेयादिभ्यो निर्वहति लोकयात्रा। अन्यथा त्वन्यथैव स्यात्। एवं परेशसत्तासंत्रस्ता अपि मानवा नेतरेतरविनाशाय प्रवर्तन्ते। अलौकिकनियन्त्रणशालिन्याः परमात्मनः सत्ताया अस्वीकारे त्वकिञ्चित्करं स्याद्राजभयं तथा सति लुप्येत लोके साधुता तस्यां लुप्तायां लुप्येत, लोकोऽपि, कुतो लोकव्यवहारः क्व च दर्शनानि स्युः।

दर्शनशास्त्रे जोघुष्यमाणः कर्मवादोऽपि परस्य परर्द्धिदर्शनेन क्षणं क्षुब्धहृदयस्यापि जनस्य न ममास्ति तादृशं कर्म येन परैरिव मयापि भाव्यमृद्धिमतेति परस्ताद्भवति तस्य सन्तोषायालम्।

अनादृत्य कर्मवादं महति यत्ने कृतादरास्तदनुरूपस्य फलस्यालाभेन खिन्नमनसो भूयांसो यवीयांसः प्रत्यक्षं विगतस्नेहं स्वदेहं कूपगर्तादिपातेन महतो जनयन्ति मनोज्वरं वयस्यानां सुहृदयानामिति। एतेन निश्चीयते सम्यक्तरां व्यवस्थाप्यते लोकमर्यादा कर्मवादेन।

नित्यं न्यायालयेषु, छलजातिनिग्रहस्थानानि, वादजल्पवितण्डाः, सहेत्वाभासान् पञ्चावयवान्, पक्षप्रतिपक्षौ, प्रमाणानुग्राहकन्तर्कम्, विमर्शनिर्णयसिद्धान्तप्रयोजनादींश्चार्थिप्रत्यर्थिभ्यां प्राड्विवाकधर्माधिकारिभ्याञ्च तत्तद्व्यवहारेषु प्रयोयुज्यमानाञ्छृण्वन्तः कथं प्रतिपद्यमहि यन्नैते पदार्था लोकव्यवहारमर्हन्तीति।

गुरुत्वाश्रयस्य सुवर्णादिद्रव्यस्य समं गुञ्जादिभिस्तुलामारोप्य तदीयगुरुताज्ञानान्तरं यत्क्रयविक्रयादिषु तदपेक्षतानारतम्यज्ञानं तत्रापि (आद्य) पतनासमवायिकारणं गुरुत्वमित्यर्थकः, "संयोगाभावे गुरुत्वात्पतनम्" वै० द० अ० ५ आ० १ सू० ७ संस्काराभावे गुरुत्वात्पतनम्, वैशेषिक द० अ० ५ आ० १ सू० १७ आभ्यां सूत्राभ्यां संगृहीतो दार्शनिकसिद्धान्त एव मूलम्। नह्यज्ञातपतनासमवायिकारणकेन केनापि तुलाव्यवहारः शक्य प्रवर्तयितुम्।

प्रमेयप्रत्ययाय किञ्चिन्न्यूनाधिकभावेन दर्शनशास्त्रे प्रमाणान्यङ्गीक्रियन्ते तानि च प्रत्येकं व्यवहारे महान्तमुपयोगमाकलयन्ति। तद्यथा चाक्षुषादिभेदभिन्नं षड्विधं प्रत्यक्षं तस्य षडपि विधाः स्वस्वविषयभूतस्यार्थस्य स्वरूपनिरूपणाय क्षमन्ते। निरूपिते स्वरूपे तदीयहेयतोपादेयतयोः प्रवृत्तिः। प्रवृत्तिरेव व्यवहारः।

( १ ) रत्नादिजातिज्ञाने, सुवर्णादिवर्णज्ञाने च चाक्षुषम्।

( २ ) कस्तूरिकामोदस्य, पुष्पसार (इतर) स्य चोत्रोत्तमरोमतम्यत्वप्रतिपत्तये तु घ्राणजम्।

( ३ ) अहिदष्टस्य चिकित्सार्थमौषधार्थं निम्बपत्रचर्वणादिजं रासनम्।

( ४ ) ज्वरादिरोगार्त्तानां रोगिणां रोगविनिश्चयाय त्वाचम्।

( ५ ) शब्दोत्पत्तिदेशस्य परत्वापरत्वयोरनुमाने हेतुभूतयोः शब्दनिष्ठतारत्वमन्दत्वयोर्ग्रहणे श्रावणम्।

( ६ ) आत्मनि समवेतानां सुखदुःखेच्छाज्ञानयत्नादीनामध्यवसितये मानसम् प्रत्यक्षं कारणम्। तदित्थं नास्ति प्रत्यक्षस्य कापि सा विद्या यां नोपयुञ्जीरन् व्यवहारार्थिनः।

एवमेवानुमानमपि पाकाद्यर्थी पावकादिलिप्सोर्धूमादिदर्शनानुमितधूमध्वजादेर्जनस्य संवादिप्रवृत्तौ निमित्तभावमाश्रित्यापादयति स्वस्मिन् व्यवहारोपयोगिताम्।

मुद्गपर्णीमाषपर्ण्यौ स्वरूपतोऽपरिचिन्वानस्तदुत्पत्तिप्रदेशमुपेतो 'यथा मुद्गास्तथा मुद्गपर्णी, यथा माषास्तथा माषपर्णी'त्याद्युपमानवाक्यार्थं स्मरन्, तयोर्वाच्यवाचकसम्बन्धज्ञानानन्तरं क्षमते तद्ग्रहणरूपव्यवहारायेत्युपमानमपि व्यवहाराङ्गम्।

आप्तवाक्यात्मकस्य शब्दस्य प्रयोज्यप्रयोजकप्रवृत्तिनिवृत्त्यादौ प्रात्यहिकव्यवहारोपयोगस्तु सर्वजनीन एवेति नार्हत्युपपादनायासं भूयसा।

इह गेहे विषधरवासः, इह जलाशये नक्रनिवासः, इत्याद्यैतिह्यानि तादृशगेहजलाशयप्रवेशप्रतिषेधपराणि आद्रियमाणः, निरुद्धसद्यःप्राणप्रयाणश्चिरंजीवति भद्रशतानि च पश्यति। एतेनैतिह्यानि प्रसह्य लोकव्यवहारोपयोगिवर्गे संख्यावृद्धिं कुर्वन्ति[१] न केनापि रोद्धुं शक्यानि। पञ्चाशच्छोऽधमर्णाय रूप्यकाणि द्विर्दत्वा दिनान्तर उत्तमर्णेन प्रत्यर्पणायार्थितोऽधमर्णो यदा श्वः शतं प्रदायानृणोस्मि भवितेति प्रतिभाषते तदाऽऽप्तानां प्रश्ने को विदाराचष्टे इतीमं न्यायमनुसरत्येषः, पञ्चाशत्प्रतिदानायोक्तः प्रतिपद्यते शतप्रतिदानमिति नासौ स्वस्थचेता इति तस्मै भृशाकुप्येनोत्तमर्णः। सम्भवाख्यं प्रमाणमूरीकुर्वाणं प्रति नोपतिष्ठते तादृशमसामञ्जस्यम्।

शत्रुक्षेत्रे ( बम्ब ) अस्त्रमात्रवर्षणायेतः प्रयातानि विंशतिवायुयानानि तेषु चत्वारि प्रत्यावृत्तानि इत्युक्ते षोडशानां तेषां विनाशोऽर्थापत्तिसिद्धतया न शब्दान्तरेणाभिधेयो न वा लेखनीय इत्यभिधाने लेखे च लाघवमुपस्थापयन्त्या अर्थापत्तेर्लोकव्यवहारोपयोगितायां को नाम कुशलः सन्दिहीत।

सम्भावितस्थितिकेषु स्थानेषु राजद्रोहिणोऽन्विष्य ताँश्चाप्राप्य, प्रणष्टा इमे दास्याःपुत्राः प्रदेशतोऽमुतः। अत्रैव यद्यभविष्यँस्तर्ह्यद्रक्ष्यन्त यथेतरे जनाः। न दृश्यन्ते तस्मान्न सन्तीति ज्ञात्वा निर्व्यूढराजाज्ञा राजपुरुषास्तुष्यन्तः परावर्तन्ते। सत्स्वेवंविधेषूदाहरणेषु व्यवहारे प्रविशमानाया अनुपलब्धेः कस्कः स्वागतं न कुर्वीत।

अविनीतानां विनयाधानाय "सर्वे भावाः परिणामिनः ऋते चितिशक्तेः" इति सांख्ययोगाभिमतो राद्धान्त एवाराधनीयस्तद्धितैषिणा। यदा क्रोधाभिभूतोऽविनीतः क्रियासमभिहारेण दुष्कार्यं कुरुते, मोहमुपगतो वा तिष्ठति निष्क्रियस्तदा सदुपदेशादिभिर्महत्तत्त्वाभिधानायां तद्बुद्धौ जातेन रजस्तमसी अभिभूय वर्तमानेन सत्त्वोद्रेकाख्येन परिणामेन साधुकार्यकारितायाः योग्यता जन्यते। तथा चोपदेष्टा कृतकृत्यमात्मानं मन्यते। सर्वदैकरूपं तिष्ठति बुद्धितत्त्वमित्येतादृशनिश्चये तु न प्रकल्पेरन्नुपदेशादयो व्यवहाराः।

१—शतमन्तमेतत्।

दार्शनिकाग्रणीनां कणभक्षाक्षचरणमतानुयायिनां शब्दविषयकोऽयमन्यतमो विचारसारः-तद्यथा-तडागोदरे प्रक्षिप्तो लोष्ठः पानीयं विक्षोभ्य मण्डलान्मण्डलान्तरं विरचयति। इमानि मण्डलानि लोष्ठप्रक्षेपप्रदेशात् स्वाकारविस्तारं संपाद्य स्यन्दमानानि तटमभिहत्य भूयो विक्षेपप्रदेशं प्रत्यावर्तन्ते।

क्रिया चैषाऽसकृत्सरोवरे सञ्जायते। मण्डलाकाराश्चेमे क्रमेण स्वस्वरूपे स्थूलतां विमुञ्चन्तस्तनिमानमासादयन्ति। इत्थमेव शब्दोऽपि विभौ व्योम्नि जनिमासाद्य "वीचितरङ्गन्यायेन" कदम्बमुकुलन्यायेन वा शब्दपरम्परां वितन्वन् प्रथमोत्पत्तिक्षणे तारतरोपि द्वितीयादिपूत्पत्तिपूत्तरोत्तरं मन्दतां विन्दन् स्वाश्रयस्यानन्तत्वान्न क्वचिद्विश्रान्तिमेतीति। अमुमेव राद्धान्तमाराध्य वैदेशिकैर्वैज्ञानिकैर्ध्वनिग्राहक( रेडियो ) यन्त्रस्य ध्वनौ तारतरतासम्पादक( लाउडस्पीकर )स्य यन्त्रस्य चाविष्कारः कृतः। अथश्चान्यस्तेषां निश्चयः-यत् कुरुक्षेत्रे भगवता वासुदेवेनार्जुनम्प्रति ये कृता उपदेशास्तेऽद्यत्वेऽपि न विरताः स्वपारात्। ते च ध्वनिनो ध्वन्यन्तरमुद्भावयन्तोऽविकला एव व्योम्नि विद्यन्ते। ध्वानतारतासम्पादकसूक्ष्मयन्त्रसाहाय्येन कियतश्चित्कालादनन्तरं तेषामपि श्रावणं सुकरं क्रियेतास्माभिर्यन्त्रानुसन्धाननिरतैः। अनेन च दार्शनिकसिद्धान्तेन दूरस्थानां शब्दानामादानप्रदानरूपे लोकव्यवहारे विहितो भूयानुत्कर्षः।

पूर्वमीमांसा तु कृत्स्नाऽपि याज्ञिकव्यवहारोपयोगिनीत्यत्र न कस्यचिद्विमतिः। उत्तरमीमांसाऽपि श्रवणमननादिना ब्रह्म सत्यं जगन्मिथ्येति वेदान्तिव्यवहारप्रयोजिका। याज्ञिका वेदान्तिनश्च लोकमध्यवर्तितया लोकएव।

व्याकरणशास्त्रस्यापि नागेशेन मञ्जूषायां दर्शनेऽन्तर्भावो निरूपितः। तेन तस्यापि साधुपदवाक्यप्रयोगरूपलोकव्यवहाराङ्गता निरूपितप्रायैव। अथ शब्दानुशासनमित्यत्र केषां शब्दानां लौकिकानां वैदिकानाञ्चेत्यादिकं ब्रुवाणः पतञ्जलिरप्यत्रानुकूलः।

तदित्थं नारूयेकोऽपि लोकव्यवहारस्तादृशो यत्र तत्प्रवर्तकतया दर्शनसिद्धान्तेष्वन्यतमोऽपि भवेन्नानुस्यूतः लोकव्यवहारश्च दर्शनसिद्धान्ताननुस्यूतश्चेति विप्रतिषिद्धं वचः।

यथा आपातः समुत्पन्नमपि शब्दशास्त्रं तस्या रक्षणे समुपयुज्यते तथैव लोकव्यवहाराज्जातं दर्शनमपि तदीयं स्थेमानं पुष्णाति।

सर्वत्र लोकव्यवहारे निदानानि दर्शनानीति मते भारतभिन्नेषु देशेषु कथन्नु स्यादप्रतिषिद्धप्रसरा लोकव्यवहारः। तत्र दार्शनिकतत्त्वावबोधकशास्त्रस्याधीत्यादेरभावादिति मा वोचत। यतो न केवलं सुरभारत्युपनिबद्धस्य सूत्रसमूहस्यैव 'दर्शनम्' इत्येतदभिधानम्। अपितु कारणवादापरनाम्ना निर्दिश्यमानस्य व्यवहारोत्पादप्रचारेऽपेक्षितस्य नियमनिवहस्य साऽऽख्या। स च नियमनिवहः समान एवार्य्यम्लेच्छादिषूपवर्त्तनेषु।

व्यवहाराभिवृद्ध्या दर्शनज्ञानाभिवृद्धिः, दर्शनज्ञानाभिवृद्ध्या च व्यवहारस्य तथात्वमित्यन्योन्याश्रयिणाविमावर्थौ परस्परं जन्यजनकभावं पोष्यपोषकतां च मिथो वहन्तौ जगतो महतः कल्याणाय प्रवर्तेते।



# विचारों का मधुमय उत्स



[ ले०—श्रीवासुदेवशरणजी अग्रवाल, एम. ए. क्यूरेटर, प्राविंशलम्यूज़ियम, लखनऊ ]

## शब्द और अर्थ

शब्द है। शब्द के पीछे उसका सत्य स्वरूप अर्थ है। शब्द रटो, केवल अल्प फल है। शब्द के साथ उसके अर्थ से टक्कर लेने का ऋजु प्रयत्न करो, महती संप्राप्ति है। उससे रस का अनुभव होगा। रस का स्वाद लेना योग है। रस योगियों का भाग है। योगी अर्थ के साथ जूझते हैं, पंडित शब्द के साथ। इसलिये पंडितों के भाग में तक्र ही आया। योगी रस पी रहे हैं, पंडित छाछ पीकर रह गये। पंडित के सामने शब्द आया— सविता। शब्द की बाहरी परिधि में घूमघाम कर पंडित ने संतोष माना। सविता कहां है, क्या है, इस अर्थ को जिसने बूझा वह योग की ओर बढ़ा। मन को अर्थ के साथ बार-बार टकराओ। बिजली की परस्पर चटचटाती हुई ऋण-धन जिह्वाओं की तरह शब्द को अर्थ की सन्निधि में लाकर स्फुरित करो। वहीं अमृत स्वाद, रस और आनन्द है।

शब्द ईंधन की तरह भारी। अर्थ अग्नि के समान फूल की तरह हल्का। शब्द पृथिवी की ओर गिरता है, अर्थ प्रकाश की ओर उठकर तैरता है। शब्द भूमि का सरीसृप है, अर्थ प्रकाश का व्योमविहारी गरुड़। शब्द परिमित, अर्थ अपरिमित है। शब्द मूर्त अर्थ अमूर्त है। शब्द निरुक्त, अर्थ अनिरुक्त है। शब्द कहने में आगया, अर्थ कथन से परे अनुभव या दर्शन चाहता है। शब्द जब अर्थ की ज्योति से चमकता है तब उसके सान्निध्य में आनन्द की धारायें छूटती हैं। जन्मभर शब्द की सेवा की तो 'डुकृञ् करणे' ही हाथ रहा। एक मुहूर्त के लिये भी अर्थ का दर्शन मिलगया तो जन्म-जन्म के कल्मष भक् से उड़गये।

शब्द के द्वार पर सुनसान है। अर्थ के आँगन में अमृतभावों की कल्लोल है, आनन्द का अमृत गद्‌गद भाव है। शब्द के नेत्र बाहर की ओर हैं। अर्थ की दृष्टि अन्तर की ओर होती है। अर्थ के पास पहुंचकर आनन्द के आंसुओं की झड़ी लग जाती है। शब्द दशग्रीव रावण की तरह परिमित सिर वाला है। अर्थ सहस्रशीर्षा शेषकी तरह अनन्तविस्तारी है। शब्द होकर भी नहीं रहता; अर्थ विश्वभुवन का अभिभव करता है। शब्द दो चार पग रेंगता है, अर्थ सुपर्ण की तरह दूरंगम है। शब्द कुम्भकर्ण की तरह महानिद्रालु है, अर्थ लक्ष्मण की तरह जागरण शील है। अर्थ का प्रजागर जिनके हाथ लग गया वे जगत् की रात में जागते रहते हैं।

शब्द जड़ाऊ आभरणोंकी भाँति है, अर्थ सहज लावण्य की तरह मोहक है। शब्द को पास बैठे हुए भी अपना पता बोलकर देना पड़ता है, अर्थ का सौरभ सौ कोस से अपनी ओर खींचता है। शब्द परकोटे खींचकर भेदभाव उत्पन्न करता है, अर्थ के उदार प्रांगण में स्थान की कमी नहीं। शब्द शरीर है, अर्थ प्राण है। शब्दरूपी शरीर की श्री अर्थरूपी प्राण में है।

अर्थ से विरहित शब्द 'अश्रील तनू' वाला हो जाता है। अश्रील ही अश्लील है। शब्द के पचड़े में विषय हमें अपनी ओर खींचते हैं, हम अश्लील रहते हैं। अर्थ का जीवन में जितना साक्षात् अवतार होता है, उतना ही हम श्रीयुक्त होकर सुसंस्कृत और सम्भ्रान्त बनते हैं। अर्थ शब्द का शिर है, केवल शब्द कबन्ध है। शिर में श्री निवास करती है। शरीर में सौन्दर्य का प्रतीक सिर है। शब्द में आकर्षण का हेतु अर्थ है। अपने कर्म और संस्कारों से मनुष्य ने विश्व के पुष्कल सौन्दर्य में जो भाग पाया है, उस श्री का निवास सिर में रहता है। शब्द को भी कल्याण-साधन का जो वरदान मिला है, उसका स्रोत अर्थ में है। शब्द कमल की भांति उमंगते हुए सौन्दर्य से सुहावना लगता है, पर अर्थ उस पद्मनाल के भीतर का संचारी जीवन रस है। पद्म के शतदलों पर जो श्री विहार करती है, उस इन्दिरा का निवास तो वस्तुतः वहां है जहां इन्दीवर के गुह्य सप्तस्रोतों में रस का अजस्र प्रवाह है। शब्द का माधुर्य अनन्त होता है, पर काव्य में रस का मधुमय सोता तो उस अर्थ में है जिसके साथ शब्द हमारा परिचय करा देता है।

अर्थ कहां है? क्या अर्थ के साथ जीवन में हमारा परिचय हो चुका है? अर्थ अव्यक्त भाव है सही, पर है नितान्त सत्य। वह कहाँ नहीं है? क्या अर्थ के संप्राप्ति के लिये हमारा हृदय आन्दोलित होता है? ब्रह्मचर्य, तप इन शब्दों का मूर्तरूप क्या सहस्रवार भी हमने नहीं देखा है? पर इन शब्दों के पीछे जो अर्थ है उसके साथ हमारा सम्पर्क कितनी बार हुआ है? ब्रह्मचर्य किस स्थिति का नाम है, क्या हमें एकबार भी उस आनन्द से गद्गद् होने का सौभाग्य प्राप्त हुआ है। अर्थ में जो मिठास, जो अमृत जैसा स्वाद है, उसको चक्खे बिना शब्द के चावने से भी क्या होगा? शब्दों से भरा हुआ यह महान् आकाश है। सत्य-धर्म-तप-ब्रह्मचर्य-दीक्षा-ज्ञान-कर्म-प्राण, कैसे कैसे अनमोल शब्द इस गंभीर प्रदेश में भरे हैं? विचित्र महिमा है कि हम जब चाहते हैं इन शब्दों का आवाहन कर लेते हैं। शब्दों के पीछे उनकी व्यंजना से समवेत अर्थ का महान् अर्णव है। शब्द और अर्थ ये सरस्वती के दो बड़े फौव्वारे हैं। शब्द वाक् है और अर्थ मन है। शब्द और अर्थ के बीच में जब प्राण का मेरुदण्ड जुड़ता है तभी जीवन में कर्म के द्वारा अर्थ की तहें खुलने लगती हैं। शब्द के अध्ययन का फल अर्थ का ज्ञान है। अध्ययन का व्रत लेकर भी जिसने अर्थ को नहीं जाना, या जानने का सचाई से कभी प्रयत्न नहीं किया, या प्रयत्न करता हुआ भी जो अपने सङ्कल्प को विजयी नहीं बना सका, उस अधीती के लिये शोक है। अर्थ का साक्षात्कार ज्ञान का सार और साहित्य का अन्तिम फल है। हे मनीषियो! मन से इस अर्थ को बूझो और रस के दिव्य स्वाद को प्राप्त करो।



# धर्मे वेदप्रामाण्यं मीमांसोपकारश्च

[ पं० श्रीमद्रामभवानीशर्माणः, वेदरत्नम्, वेदान्तकेसरी, मीमांसाशास्त्राचार्यः, मीमांसकाध्यापकाः, संस्कृतकालेज, ग्वालियरः ]

( मीमांसोपकारः )

इहानादौ संसारे प्रत्यक्षं प्रतिक्षणव्यभिचारिसुखदुःखप्रवाहमनुभवतो जीवलोकस्य प्रतिनियततत्तज्जन्मान्तरीयसंचितकर्मानुरोधेनैवोत्थानपतनसुखदुःखसायनत्वेन जगत्सृज्यमानं मात्रयाप्यनतिलङ्घ्योपभोगं जाघुष्यते मर्मरपि प्रमाणसरणिमनुरुन्धानैरिति नातीव वक्तव्यमास्मवताम् ।

इदमपि नातीव तिरोहितं यत् सर्वोऽप्यालोकेशमुत्तमेषु चेतनेष्वागोपालाङ्गनं मध्यमेषु चाकीटपुत्तिकं चाधमेषु आत्मनः कल्याणमेवाशास्ते जीववर्गः 'सुखं मे भूयात्, दुःखं मे मा भूत्' इति । प्रत्युत नैसर्गिकाज्ञानेन रागाद्याविष्टचेतस्कतया कर्तव्याकर्तव्यविवेकविरहेण वा सत्यपि तस्मिन्नालस्येनौदासीन्येनाश्रद्धया वा शाश्वतमपि कामयमानः सुखमापातसुखसाधने वस्तुतस्त्वत्यन्तमात्मनो विनिपातकारण एव शलभ इव प्रदीपे प्रवर्तते; जलस्येव नीचप्रवणतास्वाभाव्यादान्तरस्य करणस्य तदनुसारित्वाच्चेतरेषामक्षाणामिति ।

तत्र सुखं हि नामाल्पीयसापि दुःखेनासंभिद्यमानं स्वरसप्रवृत्तिविषयीभूतं सन्ततानन्दैकरसानुभवप्रवाहरूपम् । तथा चोक्तम्—"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्पदं स्वःपदास्पदम्" इति । एवंभूतस्य च निरतिशयानन्दस्यावाप्तये नान्यमुपायं पश्यामो विना सनातनवाणीजलधिसमधिगतधर्मरत्नसेवनम् । न हि लौकिकेषु स्वप्रतिभैकप्रमाणेषु व्यापारेषु अयं नियमो वरीवर्ति, यः अयं सुखहेतुरयं नेति । सर्वो हि व्यापारो विना धर्मनिश्चयेन नित्यैप्रसुखाशया विधीयमानोऽपि स्वोद्देश्यं व्यभिचरति ।

तथोदासीनेनापि केनचिदैहिकं सुखं नित्यमेवानुभूयते केनचिच्च नित्यमेव दुःखं येन न जातुचिदेतत्कलेवरप्रादुर्भावप्रभृति कश्चित्तादृशव्यापारः समाचरितः सुखाय दुःखाय वा । अन्यस्तु सुखायापि यतमानो दुःखमनुभवति, दुःखाय च सुखम् । अतोऽवश्यमेवाकामैरप्यभ्युपगन्तव्यं यदव्यभिचारिसुखदुःखासाधारणकारणभूतौ पुरातनजन्माचरितौ धर्माधर्मावेवेति । तत्र च स्वल्पे महति वा दुःखेऽधर्मः कारणं तथाल्पीयसि निरवधिके वा सुखे साक्षात् परम्परया वा धर्म एव कारणमिति ।

एतादृशात्यन्तिकश्रेयःसाधनेष्वपि धर्मेषु सत्यामपि फलेच्छायां आलस्यादिना विमुखीकृतचित्तवृत्तिकान् रागादिदूषितान्तरत्वेन, तात्कालिकसुखसाधनेषु प्रवर्तमानान् जनान् तात्कालिकसुखाभासजनकेभ्योऽपि दुःखैकावसानेभ्योऽधर्मेभ्यो निवर्तयितुं नान्तरीयकतात्कालिकदुःखकारणेष्वपि धर्मेष्वेकान्तेन निरतिशयानन्दावसानेषु च प्रवर्तयितुं प्रवर्तकप्रमाणेष्वनुसन्धीयमानेषु भगवान् सनातनः श्रीवेदपुरुष एव सर्वातिशायिनं महिमानमनुभवन् स्वानुचिन्तनैकशालानां यथाकालं व्यवसायानुगुणं षड्जादिरिव गायकानां रत्नमिव च तत्परीक्षकाणामात्मोत्कर्षमनन्यसाधारणमाविष्कुर्वन् ससंभ्रमं प्रमाणगणयितृकठिनीपातविषयतामनुभवति ।

स च क्षीरार्णवोपवेलं प्ररूढमूलतया तदीयदुग्धपानेनैवाव्याजं प्रवृद्धरसकलदिगन्तपरिमाणोत्साहेनेव अशेषभुवनतलान्तरालप्रसारितशाखाबाहुसहस्रसंकलितः कल्पपादप इव दिगन्तविश्रान्तशाखासहस्रसम्पन्नः स्वानुध्यातृभ्यो यथेप्सितं प्रयोजनमर्थिसादापादयन्ननादिरनन्तोऽनितरसाधारणो विजयते वेदमहापुरुषः।

तासां चानेकजन्मसहस्रैरप्यशक्यसमग्राध्ययनानां पर्वतपर्यायपरिभाष्याणां भगवद्भरद्वाजेनायुषां त्रयेणाप्यधिगतमुष्टित्रात्रीणामस्मदादिभिश्च मनसाप्यचिन्त्यप्रभावाणां शाखानां सारमुद्धृत्य लोकोपकारैकदृष्टिभिराप्तप्रयोजनपराङ्मुखैर्मन्वव्यासजैमिन्यादिमुनिभिः केवलमस्मदुद्धिधीर्षयैव स्मृतिग्रन्थाः पुराणेतिहासषडङ्गमीमांसान्यायग्रन्थाश्च तत्तत्पुरुषबुद्धियोग्यतानुसारेण च धर्मं प्रतिपादयितुं प्रणीताः पल्लवितपुष्पितादिपरम्परयाद्ययावदमन्दतीमाग्यमहिम्नैव प्रलयकालायमानविप्लवसमयेऽप्यनुच्छेद्यात्मानो विजयन्तेतराम्। एतेऽपि महामहिमशालिमहर्षिप्रणीताः पुरुषविनिर्मितत्वेऽपि अद्ययावत्सकलशिष्टदृढपरिगृहीता अत एव स्वमूलभूतवेदवाक्यकल्पनया प्रत्यक्षोपलभ्यमानवेदाविरुद्धांशे धर्माधर्मयोः प्रमाणम्।

तथाहि—

पुराणन्यायमीमांसा, धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥
यावदेकं श्रुतौ कर्म स्मृतौ वान्यत् प्रतीयते।
तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते॥ इति च।

प्रत्यक्षवेदविरोधे तु सर्षमेवाननुष्ठापकत्वेनाप्रमाणम्। तत्र च शतशो विचारितोऽप्यनिर्ज्ञातकर्तृको भ्रान्त्यादिसंशयगन्धेनाप्यसम्पृक्तः स्वयंभूरिव स्वयंभूर्हितैकचिन्तको वेदशब्दराशिः कुतः कथमित्यादिप्रश्नासहः स्वोपष्टम्भनोचिततर्कमात्रसहायः, पूर्ववर्णितदिशा प्रवर्तनादिद्वारेण स्वतःप्रमाणं धर्माधर्मयोः। स्मृत्यादयस्तु तद्द्वारा। एतद्व्यतिरिक्तास्तु ग्रन्थाः स्वमतिमात्रविलासिताः सर्वथाप्यप्रमाणमेव धर्माधर्मयोः। तेषां प्रलोभादिमूलकत्वसम्भवात्।

परमार्थतश्चोपपन्नमेतत्। यतः तत्तन्मनुजोचिताधिकारानुरूपं नियमानुपालनादिरूपलोकयात्रानिर्वाहायानिवार्याभ्युपगमयोर्धर्माधर्मयोः नियमसिद्धये प्रमाणापेक्षायां सुखसाधनत्वं दुःखसाधनत्वञ्च यथाक्रमं धर्माधर्मयोर्नियामकमित्यादीनां च मद्यसेवादण्डादौ व्यभिचारादनियामकत्वे स्वतन्त्रपुरुषनिर्मितग्रन्थेषु च भ्रमप्रमादप्रलोभादिमूलसंभवेनानाश्वासदोषदुष्टेषु, अगत्या नित्यो निरतिशयः सम्भाव्यमानसकलदोषासंस्पृष्टः ऐदंपर्येण चात्र प्रवृत्तोऽखिलसंशयच्छेत्ता सकलविद्याकलाज्ञानरत्नाकरः सर्वज्ञकल्पो वेद एव शरणीकरणीय इति तन्मूलकत्वेनैवेतरेषां प्रामाण्यमिति। तत्र चाम्नायः प्रतिशाखं निषेधार्थवादमन्त्रनामधेयभेदेन पञ्चधा भिन्नः। तेषु च प्रतिविभागमसुकरनिश्चयानि बहुप्रकाराणि परस्परविलक्षणानि वाक्यानि समुपलभ्यन्ते। तथाहि—

विधिः— उत्पत्तिविनियोगाधिकारप्रयोगाख्यभेदेन, विशिष्टकर्मकेवलकर्मगुणफलोद्देश्यकगुणादिविधायकत्वेन, क्रत्वर्थपुरुषार्थविकल्पसमुच्चयादिबोधकत्वेनोपदेशातिदेशभेदेनोत्सर्गापवादप्रतिप्रसवाभ्यनुज्ञोपसंहारादिरूपेण चोत्पत्तिनियमपरिसंख्याख्यकार्यवशेन, चैतत्सर्वाभासरूपेण च, बहुविधः श्रूयते।

तथा निषेधश्च— प्रतिषेधपर्युदासतदाभासरूपेणानेकप्रकारः।

अर्थवादाः पुनः—विधिनिषेधशेषत्वेन गुणवादोऽनुवादो भूतार्थवाद इति परकृतिः पुराकल्प इति च नानाप्रकाराः।

मन्त्रास्तु दृष्टार्थाऽदृष्टार्थसार्थनिरर्थसमवेतार्थासमवेतार्थकरणानुमन्त्रणादिभेदेन ऋग्यजुस्सामात्मना च बहुधा भिन्नाः।

नामधेयान्यपि—स्वरूपेणाभासरूपेण च तत्प्रख्यतद्व्यपदेशयौगिकवाक्यभेदनिमित्तकानि नानाप्रकाराणि। एवं स्मृतयोपि बहुप्रकाराः।

तदेतत्प्रतिपाद्या धर्माः—याग-दान-होम-स्नान-व्रतादयः। अधर्मास्तु अनृतवदन-कलञ्जभक्षणादयः। एवञ्चानाविधभिदा समुल्लसितवेदरत्ननिकुहरवर्तिनोऽर्थरत्नस्य स्वरूपतो यथावत् सप्रमाणं तत्तत्स्वरूपभेदेन शेषशेषिभावेन प्रयोज्यप्रयोजकभावेन नियतक्रमवत्त्वेनाधिकारिविशेषवत्तयाऽऽतिदेशोहबाधतन्त्रानुष्ठानप्रसङ्गोपकारसहितत्वेन तद्रहितत्वेन चाधिगमो नास्माभिः परिमितमतिकान्तिभिरनादृत्य मीमांसाभास्करस्य न्यायसहस्रकरनिकरं स्वयमेव शक्यते कर्तुम्।

तथा हि—धर्मो विधिवाक्येन विध्यंशप्रतिपाद्यप्रेरणापरपर्यायशाब्दीभावनाविषयीभूतां साध्यसाधनेतिकर्तव्यतायुक्तां पुरुषप्रवृत्त्याख्यामार्थीभावनां बोधयता प्रयोजनोद्देशेन साङ्गोऽनुष्ठेयतया बोद्ध्यते। यथा 'यजेत स्वर्गकाम' इत्यादौ स्वर्गोद्देशेन यागकरणकभावनाविधानाद्यागादिर्धात्वर्थः स्वर्गसाधनत्वेन कर्तव्यतया विधीयत इति यागादिर्धर्मः। स च कथमनुष्ठेयेति कर्तव्यस्य प्रकारविशेषाकाङ्क्षायां पूर्वोक्तप्रकारेण विविधैर्वाक्यैर्नानाप्रकाराण्यङ्गानि विभिन्नप्रमाणकानि क्रमादिबहुपदार्थसंवलितानि बोध्यन्ते। तानि चानेकशङ्काकलङ्कितानीति निर्णयं विना तेषां नानुष्ठानं संपत्स्यते। तद्गतशङ्कोच्छेदनेन विवक्षितार्थनिर्णयाय विमलविचारापेक्षायां तादृशधर्मविचाररूपा मीमांसैव तां सकलामपि शङ्कां दूरीकुर्वाणा धर्मस्याऽनुष्ठेयत्वस्वरूपं समर्पयन्ती भवति तत्पूरणी।

तथाहि—मीमांसा याथार्थ्येन पदार्थस्वरूपबोधने प्रकाश इवाक्षियुगलस्यान्तरस्य करणस्योपकारं विदधती स्वान्तर्निगूढाशेषसारस्वतसारा पूर्वोपपादितप्रकारेषु विधिमन्त्रादिरूपेषु निखिलेषु चिरन्तनेषु वेदवाक्येषु श्रुतिलिङ्गादिप्रमाणैः प्रवर्तमाना तत्तद्विषयानुरूपं स्वकीयान् न्यायान् व्यापारयन्ती प्रकाशयन्ती च याथातथ्येन तत्तदर्थस्वरूपं तत्तद्विधिविहितधर्मापेक्षितकर्तव्यताप्रकारविशेषमवबोधयन्ती अनुष्ठापयन्ती च सर्वानपि धर्मानस्मान् सर्वथा परमुपकरोति।

सा चैवमेवाध्यात्मिकतत्त्वावेदकेष्वागमेषु श्रुतिहृदयप्रकाशयितृषु च धर्मनिबन्धेषु निखिलेषु च नीतिबोधकेषु निगमेषु आन्वीक्षिकीदण्डनीतिप्रमुखेषु व्यावहारिकेषु च ग्रन्थेषु समस्तेषु च पद्शासनेषु परेषु च तत्तत्सम्प्रदायमात्रप्रवृत्तेषु तन्त्रेषु दैनिकेषु च भावैकप्रधानेषु व्यावहारिकेषु वाक्येष्वात्मानमावेश्य प्रकाशमानाप्रकाशमानाऽपि क्वचित् तत्तदायतनकृतपदं सहजकृत्रिमादिसकलशङ्कापङ्कं स्वकीयसहस्रन्यायकरनिकरैर्यथोचितफलजलासेकेन जननीव पुत्रस्याङ्गलग्नं पङ्कादि प्रमार्जयन्ती प्रकाशयन्ती च याथार्थ्येन तत्तदर्थस्वरूपं जगन्मातेव स्कन्दमाना परमार्थप्रदानेन सर्वथाऽस्माननुगृह्णाति।

तथाहि—प्रपञ्चो ह्यर्थरूपः, शब्दप्रपञ्चोपजीव्यः। सर्वेऽपि खलु पदार्थाः, शब्दाधीना एव सुस्पष्टं भासन्ते। न हि कश्चित् शब्दव्यवहारमन्तरा पदार्थजातं सम्यगवगन्तुं प्रभवति। नैव च कश्चिदपि पदार्थोऽशब्दको विद्यते प्रमीयते वा।

अतश्च पदार्थावगमे शब्दाधीने बोधकानां च शब्दानां वैदिकानां लौकिकानां वा प्रयोगवैचित्र्येण

प्रायः संशयविपर्ययकुतर्कादिसंवलितत्वात्; विना च तदपनयनं बोधनासामर्थ्ये विना च विचारमन्थनं विशुद्धनिर्णयनवनीतानिर्गमे, जातायां च सुनिपुणविचारसरण्यपेक्षायां या खलु भगवद्भिः करुणावशंवदैः बादरायणादिसकलतीर्थकृत्संभावितैः, वेदोत्तमसामशाखाप्रचारभास्करैः शारीरकादिशास्त्रेष्वपि समर्पितस्वाभिप्रायविशेषैः शाखासहस्रतरङ्गतरङ्गितचतुर्वेदागाधपारावारावगाहनालोडनपारगमनपरमनिपुणैः, स्वप्रज्ञोपनिबद्धज्योतिश्शास्त्रैः सन्ततसन्तन्यमानसामगानसन्तर्पितसदाशिवैः साक्षात्कृताधोक्षजैः, समवगतानागतमानवमानसमान्द्यैः तत्सुखबोधचिकीर्षाकृतावधानैः, सर्वेश्वरचतुर्मुखादिपरंपरासमासादितमीमांसाशास्त्रसारैः, पदवाक्यादितात्पर्यविचारचातुरीधुरीणैः, महर्षिश्रीजैमिनिपरमाचार्यैः सर्वसाधारणवाक्यविषयन्यायाविष्काराशयवद्भिरपि अनित्यत्वादसर्वगसमानप्रयोगत्वादनियतरूपत्वादल्पफलत्वाच्च लौकिकवाक्यानां, नित्यानि सर्वगतनियतैकप्रयोगाणि अविकाराणि आब्रह्मणो मात्रामात्रापरित्यागेन परिपाल्यमानानि धर्ममूलानि वैदिकान्येव वाक्यानि न्यायतौल्येन महाफलतया प्रदर्शनमात्रेणोदाहृत्य तत्तद्वाक्यार्थनिर्णयैदंपर्येण प्रणीता धर्मविचारात्मिका मीमांसा निखिलेष्वपि वाक्येषु यथोपयुज्येतेति; सेयमन्येष्वपि जिज्ञासितेषु वाक्येषु यथारुचि यथायोगं सञ्चाल्यमाना तत्तत्पदकदम्बनिष्यन्दिस्वरसनिर्णयामृतमुद्धृत्य निखिलान्पाययन्ती सर्वतः प्रेक्षावतामुपकरोतीति सर्वावलम्बनार्हा भगवती मीमांसा।

सा हि—विधिमन्त्रार्थवादनामधेयस्मृतिसदाचारैः प्रमाणैः स्वरूपेण धर्माधर्मौ प्रमाणयन्ती, शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तरैः कर्माणि मिथो भेदयन्ती, श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिरङ्गाङ्गिभावं ज्ञापयन्ती, श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिभिरनुष्ठानक्रमं व्यवस्थापयन्ती, क्रत्वर्थपुरुषार्थत्वमुखेन प्रयोजनतश्च प्रयोज्यप्रयोजकभावमवगमयन्ती, फलेच्छानिमित्तादिकारिविशेषणैः कर्मस्वधिकारं गमयन्ती, प्रत्यक्षानुमानिकवचननामधेयैः सामान्यतः प्रकृतितो विकृतिषु धर्मानतिदेशयन्ती, द्रव्यदेवतादिविशेषसादृश्याद्विशेषतश्चातिदेशं नियमयन्ती, मन्त्रसामसंस्काराणां द्वारान्तरसंबन्धात्तानूहयन्ती, प्रत्याम्नानार्थलोपादिनाऽङ्गानि बाधयन्ती, एकदेशकालकर्तृत्वेन प्रधानेष्वङ्गानि तन्त्रयन्ती, तानि चासमाप्तोपकारत्वेनान्यत्र प्रसञ्जयन्ती सर्वनिर्णयकरी। न हि सस्यार्थप्रवर्तितापि नदी स्नानादौ नोपयुज्यते। नह्ययं मीमांसाशास्त्रस्यापराधो यदद्यत्वे केचनादसीयान्न्यायान् धर्मादिनिर्णये व्यवहारेऽन्यत्र वा बोधकदलेषु न सञ्चारयन्ति, बोधञ्च यथावन्न विन्दन्तेऽन्यथा वोपलभन्तेऽज्ञानादनादराद्वेति। समधिगतवन्त एव किलास्मत्पूर्वतना याथातथ्येन वाक्यार्थं श्रीमदाचार्यबादरायणकात्यायनशङ्कररामानुजकर्कविज्ञानेश्वरमाधवशूलपाणिकमलाकरभट्टप्रमुखा दर्शनादिप्रबन्धप्रणेतारोऽतिदिशन्त एवैतदीयान्न्यायानबोधयंश्च तथा।

तथा हि शरीरके बादरायणाचार्या दर्शयन्ति सूत्रग्रन्थे—

"उपसंहारोऽर्थभेदाद्विधिशेषवत्समाने च"

"लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि"

"अतिदेशाच्च"

"श्रुत्यादिबलीयस्त्वाच्च न बाधः"

"मन्त्रादिवदविरोधः"

इत्यादीन्बहून् न्यायातिदेशान्।

तथा भाष्यग्रन्थेऽपि श्रीशङ्कररामानुजादिभिराचार्यैरामूलचूडं मीमांसान्यायैरेव बहुशः सञ्चालितैः

पदार्था विग्राकृता इति नाविदितं तद्ग्रन्थानां विद्वताम्। तथा मिताक्षराकालमाधवबीरमित्रोदयनिर्णयसिन्धुस्मृतिषु धार्मिकनैतिकनियमव्यवस्थापकत्वे च प्रमाणत्वेन राजशासनेषु राजकीयैर्न्यायविभागे परिगृहीतेषु न तिरोहितं विज्ञानां यत् ते प्रानिर्णयं नैकविधान् मीमांसाशास्त्रसिद्धान् न्यायान् अर्थवादोपक्रमोपसंहारइविरार्तिपशुपाशग्रहैकत्वश्रुत्यादिप्राबल्यादीनुदाहरन्ति, प्रमाणत्वेन प्रकृतविषयनिर्धारणार्थमिति। अतो वाक्यार्थतत्त्वबुभुत्सुभिस्सर्वथैव समादरणीया मीमांसा।

एतेन—यत्पुनः कैश्चित् अज्ञात्वैव मीमांसाशास्त्रस्वरूपं 'यज्ञैकविषया हि सा, तया व्यवहारे ऽन्यत्र वा किं प्रयोजनं' इत्यादि प्रजल्पितं तन्निरस्तम्। प्रदर्शितमेवास्माभिरधस्ताद्वाक्यशास्त्रत्वादस्य सर्वलोकोपकारकत्वमिति।

लोकेऽपि हि कस्मिंश्चित्पदे कञ्चन नियोजयितुं पदाधिकारिणां सकाशे कश्चिदीदृग्वाक्यं प्रयुङ्क्ते यत्—'अयममरवाण्यां सर्वदर्शननिकषायितो बृहस्पतिरेव स्वयम्। आङ्गले तु भाषैव सा मूर्तिमती समागतेवानेनाकारेणेति। न वक्तव्यं गणितशिल्पचित्रकलादिषु च सर्वानप्यतिशेते। अतश्चैवं सर्वज्ञोऽयं स्थानमिदमर्हति' इति। पदग्रन्दानान्त्वेतेषां यथाश्रुतो योऽयमर्थोऽवधार्यते स विचार्यमाणो न हि कोऽपि वस्तुतो भवितुमर्हति विना परमेश्वरम्। अथ चान्य एवास्य वाक्यस्यार्थोऽभिप्रेतः प्रकल्प्यते। यथा—'अयमेतत्पदाधिकारे प्रशस्तः' इति। तस्य प्राधान्येन विवक्षितत्वात्। एवमाद्यर्थावसाने चार्थवादाधिकरणन्याय उपयुज्यते। वेदेऽपि विरुद्धानुपयोग्याद्यर्थाभिधायिपदकदम्बस्य प्रकृतविधेयप्रशंसार्थत्वमित्येव मीमांसाशास्त्रस्यार्थवादाधिकरणे व्युत्पाद्यते।

एवं च धर्मापेक्षितेतिकर्तव्यतासमर्पकत्वेन धर्मबोधकवाक्यतात्पर्यावधारणसाधनत्वेनास्य शास्त्रस्य अशक्यत्वाच्चैतदनभिज्ञानां वाक्यतत्त्वावगमस्य पूर्वोपपादितप्रकारेण शब्दप्रपञ्चाधीनत्वाच्च सर्वव्यवहाराणां तत्त्वजिज्ञासुभिः विशेषतश्च धर्ममवजिगमिषुभिः सर्वथा समुपचरितव्या बोधमाता धर्ममीमांसा।

तथा चोक्तं सर्वतन्त्रस्वतन्त्रैः श्रीकार्तिकेयांशावतारभूतैः श्रीमद्वार्तिककारैः कुमारिलभट्टपादैः स्वकीयवार्तिके—

"धर्मे प्रमीयमाणे हि वेदेन करणात्मना।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति" ॥

---

# ज्ञानस्य सप्त भूमिकाः

[ लेखकः—कथाभट्ट-नन्दकिशोरशर्मा साहित्याचार्यः, साहित्यप्रधानाध्यापको महाराजसंस्कृतकालेजे जयपुरे ]

इह संसारे आबालवृद्धं सर्वे जना बुभुत्सवो दृश्यन्ते। तेषु केचनाधिभौतिकम्, केचनाधिदैविकम्, केचनाध्यात्मिकं वस्तु जिज्ञासितुं चेष्टन्ते। भगवती श्रुतिरप्युपदिशति यत् "ऋते ज्ञानान्न मुक्तिः" इति। तच्च ज्ञानं कीदृशं येन मुक्तिः स्यादिति समुपस्थितायां जिज्ञासायां

"कुलं पवित्रं जननी कृतार्था
विश्वम्भरा पुण्यवती च तेन।
अपारसच्चित्सुखभूम्न्यनन्ते
लीनं परे ब्रह्मणि यस्य चेतः ॥

इत्यभियुक्तानां प्रतिपादनेन परब्रह्मसाक्षात्कार एव परमार्थज्ञानमिति निश्चप्रचम्। तच्च ज्ञानं वेदान्तोक्तचतुर्महावाक्यश्रवणमनननिदिध्यासनपरिबृंहितसंप्रज्ञातासंप्रज्ञातसमाधिलीनतया समुद्भवति। असंप्रज्ञातसमाधिशीलानां प्रथमकल्पिक-मधुभूमिक-प्रज्ञाज्योति-रतिक्रान्तभावनीयानां चतुर्णां योगिनां प्रथमकल्पिका-मधुमती—ज्योतिष्मती-विशोकानाम्न्यश्चतस्रोऽवस्थाः परिस्फुरन्ति। (योगभाष्ये ३ पादे ४८-४९ (५१।)

अयं चासंप्रज्ञातसमाधिरकृतब्रह्मसाक्षात्काराणां ब्रह्मसाक्षात्कारहेतुः, कृतब्रह्मसाक्षात्काराणां च जीवन्मुक्तिसुखोपभोगहेतुरिति सर्वदोपयोगी। अत एवोक्तं स्वाराज्यसिद्धिनामकव्याख्यायां गङ्गाधरसरस्वत्याख्यभिक्षुपादैः "यद्यपि ब्रह्मसाक्षात्कारेणैव सकार्याविद्याबाधान्मुक्तिः संपन्ना तथापि प्रारब्धशेषभोगाय ब्रह्मविद्यासम्प्रदायानुच्छित्तये च तस्य "तावदेव चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्ये" इति श्रुत्या दग्धपटन्यायेनाविद्यालेशप्रयुक्तबाधितप्रपञ्चानुवृत्तिर्यावदायुरभ्युपगम्यते। तत्र च कर्मवैचित्र्याच्चित्तविक्षेपे सत्यपरोक्षीकृतमप्यात्मसुखं न सम्यगनुभवितुं शक्यमिति समाध्यभ्यासस्तत्त्वज्ञानामपि न निष्फलः" इति। उपरिप्रतिपादितेषु चतुर्षु योगिवर्येषु कृतसाक्षात्काराणामतिक्रान्तभावनीयानामपि योगिनां योगशास्त्रोक्तासु सप्तज्ञानभूमिकासु चतुर्थीं भूमिकामारभ्य क्रमेण भूमिकाचतुष्टयं प्राप्तानां तेषामेव विक्षेपोपशमतारतम्यात् क्रमशो ब्रह्मविद्, ब्रह्मविद्वरः, ब्रह्मविद्वरीयान्, ब्रह्मविद्वरिष्ठ इति संज्ञाः समुत्पद्यन्त इति ज्ञानस्य सप्तानां भूमिकानां स्वरूपमिदमाकरग्रन्थेभ्यो विविच्यते।

पुरुषस्य द्वेधा परिस्थितिः—स्वरूपावस्थितिर्व्युत्थानरूपा चेति। तत्र स्वरूपावस्थितिर्ज्ञानदशायां व्युत्थानरूपावस्थितिश्चाज्ञानदशायां वर्तते। एवं यथा ज्ञानस्य सप्त भूमिकास्तथैवाज्ञानस्यापि सप्तैव। ज्ञानभूमिकानां स्वरूपनिरूपणमज्ञानभूमिकास्वरूपप्रदर्शनसापेक्षम्। अज्ञानभूमिकानिरसनपुरस्सरज्ञानभूमिकोदयस्याधिकलाभप्रदत्वात्। अतोऽत्र पूर्वं ताः प्रदर्श्यन्ते। यथा योगवाशिष्ठरामायणे (उत्पत्तिप्रकरणे ११७ अध्याये)—बीजजाग्रत्-जाग्रत्-महाजाग्रत्-जाग्रत्स्वप्न-स्वप्न-स्वप्नजाग्रत्-सुषुप्त्याख्याः सप्ताज्ञानभूमिकाः प्रतिपादिताः।

(१) तत्र सृष्टेर्जाग्रदवस्थायाश्चादौ यन्मायाशबलितं चिदाभाससंवलितं जाग्रद्बीजरूपं चित्तजीवादिशब्दैर्वेद्यमाणं चैतन्यं तदेव बीजजाग्रदुच्यते। अर्थात् जाग्रदवस्थायाः सुषुप्तेरन्ते चाज्ञानोपहिता चेतनस्यावस्था बीजजाग्रदुच्यते। यथोक्तम्—

" प्रथमे चेतनं यत्स्यादनाख्यं निर्मलं चितः
भविष्यच्चित्तजीवादिनामशब्दार्थभाजनम् ॥
बीजरूपं स्थितं जाग्रद् बीजजाग्रत्तदुच्यते"। इति
(यो० वा० उ० ३। १३-१४)

(२) बीजजाग्रदवस्थाया अनन्तरमयं स्थूलो देह एवाहम्, अयं च भोग्यसमूहो ममेत्यादिजाग्रज्जन्मान्तरोदितो दृढः संस्कारो जाग्रत्।

(३) यथा कश्चिद् ब्राह्मणः सत्स्वप्यनेकेषु ब्राह्मणकुलार्हकर्मकर्तृषु स्वयं ब्राह्मणयोग्य-कार्येष्वधिकाग्रहशीलो निपुणश्च विभाव्यते, तथैव विषयप्रपञ्चे स्थूलभावेन तन्मयीभवनं महाजाग्रदवस्थोच्यते।

(४) द्विचन्द्रदर्शनम्, शुक्तिकायां रजतज्ञानम्, मरुमरीचिकासु मृगतृष्णादिज्ञानं च जाग्रत्स्वप्नावस्थोच्यते।

(५) अल्पकालं यावन्मया यद्वस्तु दृष्टं तदपि सत्यं नास्त्येतादृशं ज्ञानं निद्रायां तदन्ते च जायते यत्सा स्वप्नावस्थोच्यते।

( ६ ) उक्ता स्वप्नावस्थैव दृढाभिमानजन्यचिरकालव्यापिस्थायित्वकल्पनया महाजाग्रद्रूपतां प्राप्ता जाग्रद्रूपतया दृश्यमाना स्वप्नजाग्रदुच्यते ।

( ७ ) उक्ताभ्यः षडवस्थाभ्यो भिन्ना भविष्यद्-दुःखबोधजनकवासनासमन्विता जीवस्य जडरूपा स्थितिः सुषुप्तिरुच्यते । एताः सप्ताज्ञानस्य भूमिका निरस्य सप्त ज्ञानभूमिकाः परिशीलनीयाः । एताश्च वेदान्तसिद्धान्तादर्शे निर्दिष्टाः ।

**भूमयः सप्त तद्वत्स्युर्ज्ञानस्योक्ता महर्षिभिः ।**
**शुभेच्छा ननु तत्राद्या ज्ञानभूमिः प्रकीर्तिता ॥**
**विचारणा द्वितीया तु तृतीया तनुमानसा ।**
**सत्त्वापत्तिश्चतुर्थी स्यादसंसक्तिश्च पञ्चमी ॥**
**पदार्थाभावनी षष्ठी सप्तमी चाथ तुर्यगा ।** इति
( १६०–१६२ )

( १ ) संसारवैराग्यभावनया स्वात्मानं मूढंमन्यमानवो यदा शास्त्रमनन-सज्जनसङ्गद्वारा सत्यज्ञानप्राप्तिं समीहते सैषावस्था शुभेच्छापदेनोच्यते । (यो० वा० रा० ३ प्र० ११८ अ० ८ श्लो० ।

( २ ) शास्त्रमननेन सज्जनसंपर्केण तथा संसारासद्भावनया दृढाभ्यासेन च या सदाचारप्रवृत्तिः सा विचारणा प्रोच्यते । ( यो० वा० ३।११८।६ )

( ३ ) शुभेच्छाया विचारणायाश्च दृढाभ्यासेन विषयप्रपञ्चे इन्द्रियाणामनासक्तिः, निदिध्यासनाभ्यासेन मनस एकाग्रतया सूक्ष्मवस्तुग्रहणयोग्यता च तनुमानसोच्यते । एतस्मिन् भूमिकात्रये पुरुषस्य ज्ञानोत्पादनयोग्यता जायते न तु स ज्ञानी भवति । नन्वत्र जीवब्रह्मणोर्भेदप्रतीतिः स्फुटेत्यासां गणनाऽज्ञानभूमिकासु कर्तव्येति चेन्न । ज्ञानप्राप्तयेऽत्यन्तावश्यकत्वादासाम् । आसु भूमिकासु वर्तमानो मानवो ज्ञानेतरकर्मानधिकारी सन् केवलं ज्ञानाधिकार्येव जायते । इयं जाग्रदवस्था ।

( ४ ) उक्तानां तिसृणां भूमिकानां दृढाभ्यासेन चित्तस्य सांसारिकविषयेभ्यः पूर्णतया विरक्तत्वे निर्विकल्पकब्रह्मात्मैक्यसाक्षात्कारः सत्त्वापत्तिः । इयं सिद्धावस्थोच्यते । अत्र सिद्धो महापुरुषः "ब्रह्म सत्यं जगन्मिथ्या" इति वास्तविकमनुभवं कुरुते । मायावशेन जीवो यज्जाग्रत्सत्यरूपं पश्यति तदयं मिथ्यारूपं जानाति । इयं स्वप्नावस्था । स्वप्नपदार्थसमजगत्पदार्थप्रतिभासात् ।

( ५ ) सविकल्पसमाधेर्दृढाभ्यासेन सति मानसवृत्तिनिरोधे या निर्विकल्पकसमाधेरवस्था साऽसंसक्तिः । अस्यामवस्थायां जगत्प्रपञ्चविस्मरणं जायते । अत इयमवस्था सुषुप्तिः । अस्यामवस्थायां समये कदाचित् स्वयमेव योगी व्युत्तिष्ठते । सति प्रश्ने चोपदिशति, देहक्रियां च निर्वहति ।

( ६ ) असंसक्तिभूमिकापरिपाकजन्यपटुताहेतुकं दीर्घकालावधिप्रपञ्चास्फुरणं पदार्थाभावनी भूमिका । असंसक्तिभूमिकायां विश्वप्रपञ्चविस्मरणमल्पकालिकमत्र तु दीर्घकालिकमित्येवानयोर्भेदः । इयं गाढसुषुप्तिः । एतस्यामवस्थायां योगी व्युत्तिष्ठमानो देहनिर्वाहक्रियां स्वयं न तनुते किन्तु परप्रयत्नेनैव भोजनादि कर्म कुरुते ।

( ७ ) षण्णां भूमिकानां दृढाभ्यासजातेन प्रपञ्चविषयाननुभवेन वास्तविकस्वरूपे निरन्तरस्थितिर्योगिनस्तुर्यगावस्था । ब्रह्मचिन्तननिमग्नस्य योगिनः कदापि विषयान्तरपरिस्फूर्तिर्न जायते । स्वयं परप्रयत्नेन वा कदापि न व्युत्तिष्ठते किन्तु ब्रह्मात्मैक्यसाक्षात्कारे सदा रमते । जीवन्मुक्ता अनुभवन्तीमामवस्थाम् । विदेहमु-

किरेतदवस्थापरभाविनी । एतद्विषयेऽभियुक्तैरुक्तं स्वाराज्यसिद्धौ—

"निरवधिसुखभूमानन्तसंवित्परात्म-
न्यनुभवमधिरूढे वाक्यतो योगतो वा ।
भवतु दृढसमाधिर्लोकसंग्राहको वा
भजतु विषयजातं नैति भूयोऽपि बन्धम्" इति

निष्कर्षस्त्वयम्—साधनचतुष्टयसम्पत्तिः प्रथमावस्था, संन्यासपूर्वकश्रवणसिद्धिर्द्वितीया, मनननिदिध्यासनसंपत्तिस्तृतीया, साक्षात्कारश्चतुर्थी, निर्विकल्पसमाधेः स्वत एव नियतकालमुत्थाने पञ्चमी, पार्श्वस्थबोधनेन व्युत्थाने षष्ठी, स्वतः परतोऽपि चिरमनुत्थाने सप्तमी भूमिका। तत्राद्यभूमिकात्रयं प्रपञ्चे सत्यताबुद्ध्यबाधनाज्जाग्रदित्युच्यते। चतुर्थी तु ज्ञानबाधितप्रपञ्चस्य स्वप्न इव संस्कारमात्रेण मिथ्याभूतस्य भानात्स्वप्न इति। पञ्चमी सुषुप्तिरिति। षष्ठी गाढसुषुप्तिरिति द्वैतैक्यवर्जितावस्था चेति। सप्तमी तु परानन्दभूमिका चेत्याख्यायते। आसां भूमिकानां विस्तरशो वर्णनं योगवासिष्ठरामायणे (उत्पत्तिप्रकरणे ११८ अध्याये, निर्वाणप्रकरणपूर्वार्धे १२०, १२६ अध्याये च) वर्तते। पातञ्जलयोगदर्शने याः सप्त भूमिकाः प्रत्युदितविवेकख्यातीनां योगिनां प्रतिपादिताः—"तस्य सप्तधा प्रान्तभूमिप्रज्ञा" (२।२७) सूत्रे, तासां स्वरूपं यथा व्यासभाष्ये—

(१) परिज्ञातं हेयं नास्य पुनः परिज्ञेयमस्ति,

(२) क्षीणा हेयहेतवो न पुनरेतेषां क्षेतव्यमस्ति,

(३) संप्रज्ञातावस्थायामेव मया निश्चितं निरोधसमाधिसाध्यं हानम्, न पुनरस्मात्परं निश्चेतव्यमस्ति,

(४) विवेकख्यातिरूपो हानोपायो भावितो नास्मात्परं भावनीयमस्ति । एषा भूमिकाचतुष्टयी प्रज्ञाकार्यविमुक्तिरुच्यते, वक्ष्यमाणभूमिकात्रयी च चित्तविमुक्तिरूपा।

(१) कृतभोगापवर्गकार्या बुद्धिः।

(२) गिरिशिखरकूटच्युता ग्रावाण इव गुणा निरवस्थानाः स्वकारणे प्रलयाभिमुखाः सह तेनास्तं गच्छन्ति, न चैषां प्रविलीनानां पुनरस्त्युत्पादः। प्रयोजनाभावात्।

(३) गुणसम्बन्धातीतः स्वरूपमात्रज्योतिरमलः केवली पुरुषः। एतां सप्तविधां प्रान्तभूमिप्रज्ञामनुपश्यन् पुरुषः कुशल इत्याख्यायते। एवमत्र ज्ञानस्य योगस्य च सप्त भूमिकाः संक्षेपतः प्रदर्शिताः। एतासां च सन्त्यनेके भेदाः। यथोक्तम्—"एकैका शतशाखात्र न नाविभवरूपिणी" इति।

# गोविन्दे सन्देहनिरासः

[ देवघनाक्षरी ]

कुत्रचन कर्मसु प्रवृत्तिमनुमोदयसे क्वचन निवृत्तिमुपदर्शसि मनांसि मनांसि
गात्रमिदं गेहधनधान्यसुखालप्सापरः सर्वं जगन्मिथ्येति प्रगल्भसे वचसि वचसि।
मञ्जुनाथ! जाने तव शुककथाकथामिमां चेतयसे किं मां स्वयं मुह्यसि [१]रह स रहसि
नूनमवधानं देहि, संदेहे न मज्ज मनाक्, गोविन्दे निरस्तसर्वसंदेहो [२]भवसि भवसि॥

१—प्रत्येकगूढस्थाने स्वयं मुग्धो भवसि मां च चेतयसे। २—'निरस्तसंदेहो भवसि, पुनर्भवसि' इति द्व्यर्थसूचनाय।

# दर्शन-महिमा

( ले० — विद्यावाचस्पतिः पं० श्रीसूरजभाशास्त्री, वेदान्तसाहित्याचार्यः, व्या० का० तर्कतीर्थः,
राजकीयसंस्कृतकालेजाध्यक्षः, जयपुरम् )

**सामान्यतो भारतीयदर्शनानां महत्त्वम् :—**

( १ )

यज्ज्ञानवैभवभृतः कृतिनो जगत्या-
मत्यादृतां सपदि सम्पदमप्यनर्घाम् ।
हित्वा हलाहलमिवात्मजयं श्रयन्ते
तद्दर्शनं विजयते भुवि भारतीयम् ॥

**तत्रापि—षड्दर्शनी जयति तत्त्वधियो निधानम् :—**

( २ )

धर्मात्पदार्थनिचयस्य यथार्थबुद्धिः
सञ्जायते जनिमतामथ चापवर्गः ।
सर्गश्च यत्र परमेशकृतः पराणोः
काणाददर्शनमदः प्रथते पृथिव्याम् ॥

( ३ )

काणाददर्शनतुलां विपुलां दधान-
मप्यागमं गमयते ननु मानभावम् ।
विद्याः प्रदीप इव दीपयते यदन्या-
स्तद्दर्शनं जगति राजति गोतमीयम् ॥

( ४ )

साम्यं गतात् त्रिगुणतो जगदाविरस्ति
तत्रैव याति च लयं पुरुषस्त्वसङ्गः ।
ज्ञात्वा स्वमन्यमधिगच्छति यत्र मोक्षं
तत्कापिलं लसति दर्शनमत्र लोके ॥

( ५ )

यद्बोधिता अधिगतो विविधा विभूती-
र्योगी चमत्कृतिशतानि वितत्य लोके ।
कैवल्यमाकलयते च समाहितात्मा
पातञ्जलं जयति दर्शन-तल्लजं तत् ॥

( ६ )

कर्मैव वेदविहितं वितनोति यत्रा-
नुष्ठानसौष्ठवमितं पुरुषार्थवर्गम् ।
वेदश्च धर्मनिधिरस्ति न पौरुषेय-
स्तद्दर्शनं जगति दीव्यति जैमिनीयम् ॥

( ७ )

यद्भाति भौतिकमिदं जगदीक्ष्यमाणं
चञ्चच्चमत्कृति कृतिप्रवरैरपीड्यम् ।
तत्स्वाप्नदृश्यमिव येन विभाव्यतेऽसत्
वैयासिकं विजयते भुवि दर्शनं तत् ॥

इति शम् ।

# दर्शनानामेकवाक्यताप्रकारः



[ ले०—पं० श्रीबदरीनाथशुक्लमहोदयः, न्यायाचार्यः, हिन्दूविश्वविद्यालयः, काशी ]

दर्शनशास्त्रं हि भारतवर्षस्य सर्वोत्तमो निधिः। एतदेवापायःपतितं परतन्त्रं परमुखापेक्षं भारतन्देशान्तरेभ्यस्समुत्कर्षयति, स्वकीयविचारगौरवेण सामाजिकसुव्यवस्थासदुपायप्रकाशनेन च देशान्तरीयविदुषां वस्तुविवेचनचातुर्यस्य सार्वजनीनसमस्यावैषम्यविनिवर्तनोपायप्रतिपादनपाण्डित्यस्य चाभिमानं समूलमुन्मूलयति च। एतच्च नास्तिकास्तिकत्वाभ्यां द्विविधम्। तत्र वेदप्रामाण्यानभ्युपगन्तृभिश्चार्वाकबुद्धजिनैः प्रवर्तितानि षड् दर्शनानि नास्तिकानि, वेदबद्धादरैः गौतम-कणाद-कपिल-पतञ्जलि-बादरायणैर्विरचितानि षड् दर्शनान्यास्तिकानीति व्यवह्रियते। आस्तिकदर्शनेषु पूर्णप्रज्ञ-पाशुपत-शैव-प्रत्यभिज्ञा-रसेश्वर-पाणिनीयप्रभृतीनां समावेशेऽपि ततो न्यायादिदर्शनानामतिप्रसिद्धतया भूयस्त्वेन श्रुत्यनुरोधितया च तेषान्तदुद्धारकं षाड्विध्यं विशेषतश्श्रद्धीयते।

अत्र नास्तिकास्तिकदर्शनेषु दुर्भेदं मतभेदं, नास्तिकदर्शनेष्वप्यवान्तरमतनानात्वम्, आस्तिकदर्शनेष्वपि बहुतरं सिद्धान्तप्रभेदम्, एकप्रतिपाद्यप्रमेयस्य प्रत्यवस्थानेऽपरस्य महान्तमभिनिवेशञ्च विलोकयतां सचेतसां चेतो नितरां चेखिद्यते। भारतस्य सर्वस्वतयाऽभिमतानामपि दर्शनानामेवं मिथःकलहमूलतामालोकयताञ्जनानां जायते तेष्वनादरबुद्धिरिति तेषामेकवाक्यतामुपदर्शयितुमुपक्रम्यते।

चतुष्प्रकारन्तावदेकवाक्यत्वं शास्त्रकारैर्विभिन्नप्रस्तावेषु निरदेशि। तद् यथा—(१) परस्परसहकारेण विशिष्टैकार्थप्रतिपत्तिप्रयोजकतात्पर्यविषयत्वम्, (२) तदुत्थाप्याकाङ्क्षानिवर्तकत्व-तन्निवर्तनीयाकाङ्क्षोत्थापकत्वान्यतरवत्त्वम्, (३) अवच्छेद्यावच्छेदकभावापन्नविषयिताविधुरशाब्दबोधजनकत्वम्, (४) एकप्रयोजनकत्वञ्च। एतेषामाद्यत्रितयासम्भवेऽपि तुरीयं निर्विरोधन्निर्वहत्येव। तत्कथमिति चेत्? उच्यते—

स्पष्टमनुभूयते यदपरिमितया सुखसम्पदा परिपूर्णेऽपि जगति बहवोऽहर्निशं भृशं परिश्राम्यन्तोऽपि निजोदरपूर्तिमपि कर्तुं न पारयन्ति। शीतातपवर्षासु शरीरसंरक्षणाय शरणं किमपि नाधिकुर्वन्ति, गोप्याङ्गगोपनमात्रायापि पटन्न प्राप्नुवन्ति। प्रावृषेण्यमण्डूकवच्चिकित्सकानां प्राचुर्येऽपि दीर्घामयपरीता अनेके तेषान्दर्शनमपि नासादयन्ति। तत्र को हेतुः? इति प्रश्ने अदृष्टवादेन सह बहूनामधीनीकृतनिःसीमधनानां बद्धवर्गाणां कियतां जनानामत्याचारोऽप्यवतरत्येवान्तरतया मतौ सहृदयानाम्। तथा हि कियन्तो नराधमाः परमात्मना सर्वसाधारण्येन समुत्पादितेष्वपि पदार्थेषु पृथिवीपारावारप्रभृतिषु कथञ्चिन्निजाधिपत्यं संस्थाप्य परान् तदीयसुविधातो वञ्चयन्ति। सहस्रजनभोगयोग्यं भोग्यजातमेकाकिन एव संगृह्णन्ति। एष तुच्छतमो भावः कथमिव शिक्षितानपि पराभवति! कथमेष भावो मानवसमाजाद् बहिर्भवेत्! कथञ्च सर्वे जनाः निर्मत्सरतया पारस्परिकेण सौहार्देनेतरेतरहितमनुचिन्तयन्तः सुखशान्तिमयं विगलितसंघर्षं जीवनं यापयन्तु! कथं वा निखिलानन्दसामग्रीसङ्घटितं जगदिदं जनाना-

मन्योन्यसहानुभूतिमयेन निष्कपटव्यवहारेण अज्ञानन्धाभिवर्धनप्रवीणतामुपयातु ! एवमादि विचारयितुं कतिपये कृपालवो भावुकास्तत्तत्समये प्रववृतिरे। तेषां प्रदर्शितासामञ्जस्यसमाधानपरतया प्रवृद्धो विचारप्रवाह एव दर्शनशास्त्रात्मना पर्यणमत्। तत्र केचिन्नैरात्म्यवादं केचिच्च नित्यातिरिक्तात्मवादं सकलप्राणिहितावहतयाऽनुचिन्तयामासुः।

तदुक्तम्—

"नैरात्म्यदृष्टिं मोक्षस्य हेतुं केचन मन्वते।
आत्मतत्त्वधियन्त्वन्ये न्यायवेदानुसारिणः॥"

तार्किकशिरोमणिना श्रीरघुनाथेन "आत्मतत्त्वविवेक" दीधितौ प्रदर्शितो नैरात्म्यवादिनामाशयस्तावदेवम्। तथा हि—सर्व एव हि भोगभाजं स्थिरतरमात्मानं तनयादिकं चात्मनो मन्वानाः सुखादिकं कामयन्ते।

यदाहुः—

"सुखी भवेयं दुःखी वा मा भूवमिति तृष्यतः।
येवाहमिति धीः सैव सहजं सत्त्वदर्शनम्॥" इति

सत्त्वम्-आत्मा। कामयमानाश्च सुखादिकं विहितं निषिद्धं वा साधनमस्यानुतिष्ठन्तः कर्माशयानाचिन्वानाः जन्मान्तरमनुभवन्ति। वर्तमानजन्मन्यपि उत्तरस्मिन् वयसि स्वयं स्वसन्ततीनां वा सुखोपभोगायोत्तममध्यमाधमैरुपायैर्धनराशिमुपार्जयन्ति। यदि पुनरमी किमपि नाहम्, नाहमास्पदमस्ति किञ्चिदपि वस्तु स्थिरम्, विश्वमेव क्षणभङ्गुरमलीकं वा, न कश्चिन्मम, न च कस्यचिदप्यहमित्यादिकमवधारयेरन्, न किञ्चिदपि कामयेरन्, न चाकामयमानाः केचिदपि प्रवर्तन्ते, न चाप्रवर्तमाना अपि कर्माशयेन संबध्यन्ते, न चान्तरेण कर्माशयं सम्भवो भोगस्येति।

नित्यातिरिक्तात्मवादिनामयमभिसन्धिः—

यदि वस्तुतो नास्ति आत्मा कस्तर्हि "नास्ति कश्चन स्थिर आत्मा, जगदेव जलबुद्बुदवत् प्रतिपलप्रलयि गगनवनसमानं वेति" संवेद्यते ! य आत्मनः स्थैर्ये विपर्यस्तः स प्रबोध्यत इति चेन्, नैरात्म्यवादे वस्तुतस्तादृशस्य कस्यचिदभावेनोक्तप्रकारेण यत्तत्पदाभ्यामपि निर्देशासम्भवात्। किञ्चात्मनः क्षणिकत्वमलीकत्वं वाऽवधारयन् प्राणी शुभकर्मस्वपि न प्रवर्तेत, किन्तु स्वभावतः पूर्ववदेव लोकयात्रां निर्वर्तयन् तथैवानवरतं विषीदेत्। अत एष एव निश्चयो जगन्मङ्गलावहो यदस्त्यात्मा देहादिव्यतिरिक्तो नित्यश्च। तस्य सुखदुःखादिर्न नैसर्गिकः किन्तु कलेवरसम्बन्धात्। स च सम्बन्धः पुरातनकर्मणः प्रभावात्। तच्च मिथ्याज्ञाननिमित्तानादिवासनासहकृताद् विहितनिषिद्धकर्मानुष्ठानात्। यदि पुनर्जनः पुरोपार्जितपुण्यपुञ्जपरिपाकात् परमेश्वरानुग्रहाद् वाऽऽत्मानं देहादिभिन्नतया साक्षात्कुर्यात् तदा काये कोमलकठोरवस्तुसम्पर्केऽप्युदासीनमात्मानं भावयन्न प्रहृष्येन्न वा मनागपि क्लिश्येत्। न च जन्मान्तरयन्त्रणायां भूयोऽपि परिपतेत्। तत्त्वज्ञानेन मिथ्याज्ञान उन्मूलिते सञ्चितकर्मणां नाशेऽनागतस्याप्यनुत्पत्तेः। तदुक्तमाचार्यवाचस्पतिमिश्रैः "मिथ्याज्ञानसलिलावसिक्तायामात्मभूमौ कर्मबीजं धर्माधर्माङ्कुरमारभते, न पुनस्तत्त्वज्ञाननिदाघनीतसलिलतयोपरायाम्" इति। एवञ्चात्मानात्मवादिनामुभयेषामपि दर्शनेषु न कस्यचित् स्तोकतोऽपि विप्रतिपत्तिरेकप्रयोजनकत्वरूपायामेकवाक्यतायाम्। जनानां विषयासक्तिं शिथिलीकृत्य शमप्रणयमयजीवनयापने प्रवर्तनात्मनः प्रयोजनस्याविशेषादिति।

ननु नास्तिकदर्शनानां केवलतर्कमूलकतया निम्ननिर्दिष्टया दिशा मतभेदः स्थाने स्यात्। तथा हि—प्रसिद्धनास्तिकचार्वाकचरणानुचरेषु केचित् कार्यकारण-

प्रमाणप्रमेयभावादिकं सर्वमेवापलपन्त एवमाचक्षते, कार्यकारणभावे प्रत्यक्षं न तावन्मानम्; धर्मिस्वरूपे साक्षात्कृतेऽपि तत्र सन्देहात्। अन्वयव्यतिरेकानुविधानज्ञानसहकृतन्तत् प्रमाणमिति चेन्न, तन्मात्रस्य व्यभिचारिसाधारण्यात्। नियमानन्यथासिद्धत्वयोः ज्ञानमपि सहकारिकोटावन्तर्भवतीत्यपि न शक्यवचनम्, तयोः शङ्काकवलिततयाऽनिश्चयात्। अनुमानादिना तत्सिद्धिरित्यपि वक्तुं न पार्यते, तदीयप्रामाण्यस्यात्यन्तमसिद्धत्वात्। न वा प्रत्यक्षस्यापि प्रामाण्यं प्रमापूर्वोत्तरयौगपद्यविरहात्। एतदेव मतं "प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः" इति सूत्रेण न्यायदर्शनकारेण निरसनीयतयोपन्यासि। तथा चैतन्मते पदार्थानां लक्षणविभागपरीक्षाभिर्निरूपणं निष्प्रयोजनम्। विश्ववैचित्र्यं कथमपि स्यात्। जगतो विविधाः घटनाः कथंचिदपि जायेरन्। देहेषु सचेष्टतोपपादिका चेतनता यथा तथा वा स्यात्। न किञ्चित् प्रयोजनमीदृशेषु शेमुषीसङ्क्षालनायासस्य। मानवेन निश्चिन्तचित्ततया संसारस्य रमणीयानि भोग्यजातानि येन केनापि प्रकारेण सञ्चित्य सुखेन वर्तितव्यमिति। केचित्पुनः प्रत्यक्षमात्रस्य प्रामाण्यमभ्युपगम्य प्रत्यक्षवेद्यमेव वस्तु सदिति वदन्ति। तथा च "सामान्यलक्षणप्रत्यासत्त्यजन्ययोगजधर्माजन्य – जन्यसर्वविषयकसविकल्पकाजन्य — जन्यसाक्षात्कारविषयत्वं प्रमेयत्वव्यापकम्" इत्येवंन्यायभाषया निबन्धस्तदं र्यसिद्धान्तस्य "न्यायकुसुमाञ्जलिप्रकाशे" समपादि श्रीवर्धमानोपाध्यायेन। एतन्मते पृथिव्यप्तेजःपवनरूपाणि चत्वारि भूतानि। एतेषां परमाणवो वातायनवितिवासरकरकरनिकर-सहपरिस्पन्दमानत्रसरेणुसमपरिमाणाः परस्परमेलनान्निखिलं जगज्जनयन्ति। त एव देहाकारेण परिणमन्तो देहे चैतन्यमुत्पादयन्ति। चैतन्यविशिष्टो देह एवात्मा। मृतवितावनितादिसम्पर्कप्रभवसुखास्वाद एव मानव-जीवनस्यान्तिमं लक्ष्यम्। देहपातावमानमेव जीवात्मनाशनमिति।

बौद्धप्रस्थानप्रवर्तयितारो बुद्धस्य चत्वारो विनेयाः सौत्रान्तिक–वैभाषिक–योगाचार–माध्यमिकाः। तत्र प्रथमस्य मते वस्तु द्विविधं बाह्यमान्तरं च। बाह्यं पुनर्द्विविधं भूतं भौतिकञ्च। आन्तरमपि द्विविधं चित्तं चैत्तञ्च। पृथिवीप्रभृतीनि भूतानि चत्वारि। तेषां क्षणभङ्गुराः परमाणवः स्थूलपृथिव्याद्यात्मना संहन्यन्ते। रूप, विज्ञान, वेदना, संज्ञा, संस्काराः पञ्च स्कन्धाः। एतेषु अहमाकारालयविज्ञानप्रवाह एव विज्ञानस्कन्धः। तदेव चित्तमात्मा च। अपरे चत्वारः स्कन्धाश्चैत्ताः। सर्वे च बाह्या अर्थाः प्रत्यक्षाः, अखिलं बाह्यमान्तरञ्च वस्तु सत् क्षणिकं दुःखरूपञ्च। विषयेषु क्षणिकत्वादिभावनापरिपाकेण ततो विरक्तस्य विषयोपप्लवरहित्येन विज्ञानात्मनः प्रवहणं मोक्षः। वैभाषिकनये बाह्यानामर्थानां परोक्षता प्रत्यक्षप्रत्ययानुमेयता च विशेषः। सर्वमन्यत्समानमेव। योगाचारमते तु विज्ञानमेव वस्तु सत्। क्षणिकस्य तस्यावस्थान्तरमात्रमितरत्सर्वम्। तच्चानादिबाह्यविषयकवासनाप्रभवम्। माध्यमिकानां सिद्धान्ते तु सर्वशून्यतैव पारमार्थिकी। अखिलमन्यदनाद्यविद्याकल्पितम्। अहमाकारविज्ञानात्मनो निरन्वयो नाश एव निर्वाणपरनामा मोक्ष इति। आर्हतनये वस्तु द्विविधं जीवाजीवभेदात्। जीवो बोधात्मकः, अजीवो जडः। अदृष्टविशिष्टानामणूनां पुद्गलनाम्नां मेलनेन जगतो जन्म। सम्यग्ज्ञानदर्शनचारित्राणि निर्दहनिदानस्य मध्यमपरिमाणस्य जीवस्य सततोर्ध्वगमनात्मनो मोक्षस्य साधनानि। सर्वञ्च वस्त्वनेकान्तात्मकमिति संक्षेपः।

परन्तु ऋतम्भरां प्रज्ञां बिभ्रद्भिर्मुनिभिः प्रणीतेषु दर्शनेषु मतनानात्वं कथम्? तथा हि न्यायादिदर्शनानि तत्तन्मुनिवर्यैः योगविध्यनुष्ठानासादितपुण्यातिशयलक्षणयोगजधर्मसन्निकर्षसहितेन शुद्धेन मनसा वस्तुतत्त्वं साक्षात्कृत्य प्रणीतानि? उत तैरपि तर्कप्रधानया धिया विचिन्त्यैव? प्रथमपक्षाभ्युपगमे दार्शनिकसिद्धान्तानां परस्परप्रतिकूलता न संगच्छते। न ह्येकमेव वस्तु बहुभिर्मिथोविरुद्धबहुलाकारतया विलोकयितुं शक्यम्। साधारण्यापि दृशा दृश्यमानमेकं वस्त्वेकाकारमेव दृश्यते किं पुनर्दिव्यया। द्वितीयपक्षपरिग्रहे दर्शनानां प्रेक्षावदुपेक्षणीयताऽऽपत्तिस्तर्कस्याप्रतिष्ठानात्। प्राचीनैस्तर्कबलात् समर्थितस्यार्थजातस्यार्वाचीनैस्तार्किकैरन्यथाप्रथनसम्भवात्। अत्रोच्यते—सर्वाणि तावदास्तिकदर्शनानि योगजयथार्थप्रत्यक्षप्रभवाणीत्येष भारतीयसनातनधर्मावलम्बिविबुधसमाजस्य समुद्घोषः। अथ कथं सदृशानामेव पदार्थानां विरुद्धतया प्रतिपादनम्? यथा न्याये वैशेषिके च द्रव्य, गुण, कर्म, सामान्य, विशेष, समवायाभावाः सप्त पदार्थाः। पृथिवीप्रभृतीनां चतुर्णां भूतानां नित्यनिरवयवपरमाणूनां परस्परसंयोगाद् द्व्यणुकादिक्रमेण स्थूलस्य जगतो जनिः। नित्यविभूनामात्मनां पूर्वपूर्वजन्मार्जितादृष्टवशात् तत्तद्देहैः सह भोगनियामकः संयोगविशेष एव तेषां जन्म। समनस्कसप्राणसेन्द्रियशरीरसम्पर्क एव तेषां चैतन्यस्य सुखदुःखादेश्च नियामकः। दिक्कालाकाशमनःपरमाणुभिन्नानां निखिलभूतमूर्तानामितरस्याखिलस्य कार्यकलापस्य च महेश्वर एव प्राग्भवीयजैवकर्मसापेक्षः कारकः पालकः संहारकश्च। तदीयसाक्षात्कारलक्षणोपासनया परिमार्जितेन मनसा योगजधर्मपुरस्कृतेन देहादिभिन्नतयाऽऽत्मसाक्षात्कार एवानादिमिथ्याज्ञानोन्मूलनक्रमेणात्यन्तिकदुःखनिवृत्तिरूपामशेषविशेषगुणोच्छेद - रूपां वा मुक्तिमुपानयति। सर्वज्ञसर्वशक्तिमत्परमकृपालुपरमेश्वररचिता श्रुतिश्च सर्वस्यैतदर्थसार्थस्य साक्षिणी।

सांख्ययोगयोः पुम्प्रकृतिमहदहङ्कारपञ्चतन्मात्रैकादशेन्द्रियपञ्चभूतानि पञ्चविंशतितत्त्वानि। सत्त्वरजस्तमोरूपायाः प्रकृतेः कालविशेषक्षोभितायाः प्रथमः परिणामो महत्तत्त्वम्। एतदेव सत्त्वबुद्ध्यादिशब्दवेद्यं स्वाविवेकाद् वस्तुतो भोक्तृत्वादिविधुरं पुमांसं भोक्तृत्वादिभिर्बध्नाति। परमार्थतः कर्तृत्वाद्यसंस्पृष्टस्य तस्य बुद्धौ चैतन्याभिमानान्यथाऽनुपपत्या कल्पितस्य कूटस्थनित्यस्य अन्तःकरणान्यतया योगोपदिष्टदिशा साक्षात्कृतस्य स्वस्वरूपावस्थानं मोक्षः। सांख्याद् योगे परमेश्वरास्तित्वस्वीकारो विशेषः।

पूर्वमीमांसामते जीवो जडाजडरूपो नाना चेति भाट्टाः। स्वभावतो जडो देहेन्द्रियादियोगादागन्तुकचैतन्योऽनेकश्चेति प्राभाकराः। शब्द एवाकाशादिक्रमेण सर्वस्य जगतो मूलकारणम्। स्वर्गप्राप्तिः नित्यसुखाभिव्यक्तिर्वा मुक्तिः। सा च प्रतिषिद्धपरिहारपुरस्सरविहितकर्मणां वैधानुष्ठानात् तेषां जगदीश्वरचरणेषु निष्कामं समर्पणाद् वा। निखिलञ्चैतदपौरुषेयस्वतःप्रमाणश्रुतिसाक्षिकम्।

रामानुजमते सर्वं जगत् त्रिगुणात्मिकायाः प्रकृतेः परिणामभूतम्। जीवः परमात्मपरतन्त्रः प्रतिशरीरं भिन्नो नित्योऽणुः वैग्रहेण विकारेण विकारी च। निरन्तरनारायणोपासनया प्रलीनपुनर्भवनिदानस्य तस्य परमेश्वरकृपाऽऽसादितजगत्कर्तृत्वव्यतिरिक्तसकलेश्वर - गुणगणस्य साकल्येनानुभूतभगवत्स्वरूपस्य तस्य श्रीवैकुण्ठप्राप्तिर्मुक्तिः।

मध्वमते जगत् सत्यं प्रकृतिजन्यञ्च। जीवो नानाऽणुः विकारविवर्जितश्च। भगवद्भक्तिप्रकर्षेण सृष्टिक-

दृत्वकमलापतित्वप्रभृतीतरनिखिलपारमेश्वरैश्वर्यशालि-नस्तस्य विशुद्धपूर्णसुखाविर्भावो मोक्षः। एतन्मते जीवः सर्वथा परमेश्वराद् भिन्न एव।

वल्लभमते जगद् वासुदेवाधिष्ठिततदीयमायाजन्यम्। जीवः सोपाधितायां सोपाधेर्भगवतो भिन्नोऽपि निरुपाधितायां निरुपाधेस्तस्मादभिन्न एव। एतन्नये पुरुषोत्तमे प्रवेश एव मोक्षः। स च परया परमात्मपरायणतया साध्यः।

शाङ्करदर्शने सजातीयविजातीयस्वगतभेदत्रयरहितं देशकालाद्यपरिच्छिन्नं सच्चिदानन्दं ब्रह्मैव पारमार्थिकम्। निखिलमन्यद्वैतस्यैव ब्रह्मणो विवर्तभूतमनाद्यविद्यायाः परिणामभूतञ्च। तदेवाज्ञानजनितान्तःकरणविशिष्टतया जीवभावं प्राप्तम्। मूलाविद्या, तदीयाशेषविलासविलय-विशिष्टं ब्रह्मैव मोक्षः। स च काम्यप्रतिषिद्धपरिवर्जनपूर्वकनित्यनैमित्तिककर्मानुष्ठानपरिशोधितमनःसाधनकेन श्रवणमननिदिध्यासनसहकृततत्त्वमस्यादिमहावाक्य-प्रसूतेनाज्ञानतत्कार्यान्यतराविषयकब्रह्मसाक्षात्कारेण विशेषणनिवर्तनमुखेन साध्यः। एवमादयोऽनन्ता मतभेदाः सन्ति।

अत्रोत्तरम्—"यत्परः शब्दः स शब्दार्थः" इति न्यायात् मुख्यतात्पर्यगोचरीभूतेऽर्थे एव शास्त्राणां प्रामाणिकतया तत्तद्दर्शनप्रतिपाद्यपदार्थसार्थे वैमत्यनिबन्धनं तेषामप्रामाण्यञ्च संशयार्हम्। निखिलदर्शनानामद्वैतसिद्धान्त एव प्रधानतात्पर्यात्। निरूपणप्रकारभेदश्च प्रतिपाद्यपुंसां ग्रहणादियोग्यतातारतम्यात्। तथा हि— साधारणो जनो देहादिकमेवात्मानं मन्वानो विश्वस्य बहुलेषु व्यापारेषु सज्जते। स च न सहसाऽवाङ्मनसगोचरसच्चिदानन्दब्रह्मात्मतया बोधयितुं शक्य इति गौतमकणादाभ्यामेवमावेदितो यज्जनो यदात्मानं कर्तृत्वभोक्तृत्वादिमन्तं प्रतिपद्यते तत्सर्वथा सत्यम्। परं यदात्मानं देहाद्यभिन्नमभिमन्यते, तन्न सङ्गतम्। किन्तु बाल्ये विलोकितस्य वार्द्धक्ये स्मृतेः सद्योजातस्य शिशोर्जननीस्तनचूषणे प्रवृत्तेश्चान्यथानुपपत्त्याऽऽत्मा देहेन्द्रियमनःप्राणादिव्यतिरिक्तो नित्यश्च। स चानादिदेहात्मताविपर्याससजनितवासनासहितशुभाशुभकर्मप्रभावादुच्चावचयोनिषु जायमानो जगति संक्लिश्यति। स एव पुनः पुरातनपुण्योदयान्महेश्वरकृपया सदाचार्यचरणसामीप्यमवाप्य तत्प्रसादाज्जातं तत्त्वतः प्रतिपद्य श्रवणादिसहकृतेन मनसाऽऽत्मानं देहादिभिन्नतया साक्षात्कृत्य दुःखजन्यप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदव्यवहितपूर्वापायक्रमेण निसर्गसुन्दरं शाश्वतनिरामयनिःश्रेयसमधिकुरुते। अत्र परमाणुभिर्जगदुदयस्त्यादिकं जगतो जन्यताप्रतिपादनद्वारा तदीयाविनश्वरताप्रत्ययमूलायाः जगति जीवासक्तेः शिथिलीकरणाय प्रत्यपादि। अपरमपि जीवनानात्वविभुत्वादिकं प्रतिपाद्यस्य जिज्ञासायोग्यतयोरनुसारेण न्यरूपि।

देहपातान्तमेव भोगं भावयित्वाऽनेकेषु कुत्सितेष्वपि कर्मसु निस्त्रपं निर्भयञ्चासज्जमानं मानवमवलोक्य मुनिर्जैमिनिरपि तदीयकर्तृत्वभोक्तृत्वाभ्यां तस्य मतिमपरिचालयन्नेव तस्य नित्यताप्रतिपादनेन जन्मान्तरलोकान्तरयोरपि तदीयभोगसम्भवं प्रतिपाद्य तदीयां प्रवृत्तिं कर्ममीमांसाशास्त्रप्रणयनेन कमनीयेषु कर्मसु नियमयामास। असुखायां मुक्तौ जनानामभिरुचिराहित्यं प्रतिसंध्याय विशुद्धस्थिरसुखाभिव्यक्तिं मुक्तितया निरूपयामास।

कपिलपतञ्जली चात्मनः कर्तृत्वभोक्तृत्वाभ्युपगमं प्राणिनां कल्याणकारिणमनाकलय्य तस्य निसर्गतो निर्गुणत्वं सत्त्वोपाधितश्च सगुणत्वमाख्याय सत्त्व-पुरुषयोरन्यतादर्शने जीवजातन्नियोजयन्तौ तस्य स्वस्व-

रूपावस्थानलक्षणां मोक्षमुपदिदिशतुः, प्रतिपादयामासतुश्च त्रिगुणात्मकप्रकृतेर्महदादिद्वारेणाविर्भावं भुवनस्य क्रमेण विश्वस्याविद्यकत्वे विविदिषूणां बुद्धेरुपारोहणाय।

बादरायणस्तु आत्मनानात्वे जगतः सत्यत्वे च समाजे नक्तन्दिनं समेधमानं वैषयिकसङ्घर्षं समुपशमयितुमनर्हमाकलयन् लोकेषु निर्व्याजप्रीतेः शुभायाश्च शान्तेः प्रसिसारयिषया निखिलानर्थनिबर्हणनिपुणमुपनिषदां परमरहस्यभूतं ब्रह्मात्माद्वैतं समस्तस्य जगत एव मायामात्रत्वञ्च ब्रह्मसूत्रैः प्रकाशयामास तदनु। वेदान्तसिद्धान्तमपि शङ्कररामानुजमध्ववल्लभनिम्बार्कप्रभृतयो निजसमानकालिकानां प्रतिपित्सूनामधिकारतारतम्येन भिन्नाध्वना प्रचारयाञ्चक्रुः। तत्र श्रीशङ्करभगवत्पादप्रथितमद्वैतमेव सर्वोत्तमाधिकारिवर्गाय समुचितं समग्रस्य जगतो मङ्गलकरञ्च। तथा हि—यदि जनोऽखिलानेव देहानेकेनैवात्मनाऽधिष्ठितान् सम्यगवधारयेत्तदा तथैव सकलमेव शरीरं परिपोषयितुं परिवर्धयितुञ्च प्रयतेत, यथैकः पुमान् बहून्यपि निजनिकेतनानि निर्विशेषं परिपालयितुं प्रयतते। यदि चात्मनः स्वतन्त्रतां निर्विकारतां सच्चिदानन्दताञ्च निश्चिनुयात्तदाऽविद्याविलासान्मिथ्याभूतादन्तर्विषाद् बहीरमणीयाद् विषयव्राताद् विरज्यात्मन्येव रमेत। न चैवं संसारस्य सर्वविधा समुन्नतिरेव निरुध्येतेति लेशतोऽपि भेतव्यम्। इष्टत्वात्। तदुक्तं समन्वयाधिकरणभाष्ये भगवत्पादैः—

"अलङ्कारो ह्ययमस्माकं यद् ब्रह्मात्मावगतौ सत्यां सर्वकर्तव्यताहानिः कृतकृत्यता चेति"।

बृहदारण्यकश्रुतिरपि संवदति वक्तव्यमेनम्—

"आत्मानं चेद् विजानीयादयमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेत्॥"

अशेषदेशविपश्चिद्भिः प्रचुरमादृता विश्वस्य सकलसाहित्येषु सर्वश्रेष्ठग्रन्थभूता भगवद्गीताऽपि गायत्येतदेव तत्त्वम्—

"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते॥
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः॥
एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत॥"

---

# छात्रोपदेशः

* प्रकाण्डपाण्डित्यमवाप्तुमुत्सुका यदि स्थ वेदोदितकर्मकाण्डके।
तदा मुदाधीध्वमतीव दुर्गमं गुरोरमेयं ननु जैमिनेर्नयम्॥
चकासति द्वादश लक्षणानि तान्यवेत भाष्योल्लसितानि वर्णशः।
तथैव भट्टोदितवार्तिकद्वयं सुदीपिकामप्यथ पार्थसारथेः॥
अथाधिगन्तुं यदि वोऽस्ति वस्तुतः स्पृहाद्वयज्ञानदकाण्डभागमे।
अनाकुलं तर्हि समर्हिताद् गुरोरधीध्वमच्चोपनिषत्कदम्बकम्।
समन्ततो वित्त च बादरायणप्रणीतमद्व्रह्मविचारदर्शनम्॥

---

* स्वर्गतपण्डितप्रवर घूटरभामहोदयस्याप्रकाशित, 'छात्रकल्पवल्ली'तो चयितानि पद्यकुसुमानि। —संपादकः



मृ०श्वै०सनातनधर्मविद्यापीठे लाहौरनगरे—

वामतः—पं०श्रीचन्द्रभानुशास्त्री–पुराणाध्यापकः, पं०श्रीललिताप्रसादडबराली व्याकरणाचार्य.–दर्शनाध्यापकः, म०म०पं०श्रीगिरिधरशर्मचतुर्वेदमहोदयः–अध्यक्षः, म०म०पं०श्रीपरमेश्वरानन्दशास्त्री विद्याभास्करः–उपाध्यक्षः, पं०श्रीनेत्रमणिशास्त्री मैडाणी–दर्शनाध्यापकः, पं०श्रीदेवसहायत्रिवेदः एम. ए. पी. एच. डी. इतिहासाध्यापकः, चि०श्रीशिवदत्तशर्मा "चरितनायकस्य कनिष्ठपुत्रः"

पृष्ठे स्थिताः—विद्यालयच्छात्राः शास्त्रिणः आचार्याश्च।

[सं० २००२ वि०]

# दर्शन-शब्दार्थः

[निबन्धा—पं० ललिताप्रसादशर्मा डबराल:, व्याकरणाचार्यः उपाध्यायः श्री०म० वै० सनातनधर्मविद्यापीठस्य, लवपुरम् ]

प्रत्यक्षे चाक्षुषे धातुर्दृशिः सर्वैः प्रयुज्यते ।
शास्त्रशक्येऽक्षशक्ये च दर्शनेऽत्र कथं दृशिः ॥

अयमभिसन्धिः—शाब्दप्रमाजनकशब्दात्मकन्यायादिशास्त्रप्रत्यायके दर्शनशब्दे प्रेक्षणार्थको दृशिर्न समन्वेति, न हि शब्दैश्चक्षुषं जन्यते । "गावो घ्राणेन पश्यन्ति चारैः पश्यन्ति भूमिपाः" इत्यादावपि यथेतरेषां रूपानुगृहीते प्रत्यक्षे समाश्वासस्तथा गवां गन्धानुगृहीते । एवं राज्ञामपि स्वाभेदेनाऽभिमतैः प्रणिधिभिः साक्षात्कृते स्वदृष्ट इव समाश्वास इति पर्यवसिते तात्पर्ये चाक्षुषमुपजीव्यैव दृशिः । प्रकृते तु नैषा वाचो युक्तिः सम्भवति । शाब्दप्रमायामुपजीव्यविषयाऽपि चाक्षुषत्वस्याऽप्रवेशादिति ।

समाधिश्चात्र—

दृष्टं त्वद्धृदयं भद्र, शास्त्रैः पश्यन्ति पण्डिताः,
द्रष्टव्य आत्मा चेत्यादौ साक्षात्कारात्मको दृशिः ।
शास्त्रशक्ये दर्शनेऽपि दृशिः संगच्छतेतमाम् ,
रूढौ न मानं पश्यामस्तस्माद् योगोऽत्र दर्शते ।

अयमाशयः—विशिष्टवाचकपदानामपि विशेष्यमात्रांशे स्वारसिकः प्रयोगः सम्प्रदायविदां सम्मत एवेति प्रकृतेऽपि साक्षात्कारमात्रार्थको दृशिः, करणे ल्युट् । तथा च दृश्यते-साक्षात्क्रियतेऽध्यात्मपरिज्ञानपुरस्सरं परमपुरुषार्थोऽपवर्गो येन तद् दर्शनम्-इति व्युत्पत्तिबलात्सुतरां दर्शनव्यपदेशः समञ्जसः कापिलकाणादादिप्रणीतसूत्राणाम् , तत्तद्व्याख्यानभूतानां चेतरेषां निबन्धानाम् । काव्यनाट्यालंकारादिसूत्राणि नैवंविधानि इति न तेष्वतिव्याप्तिः । अत एव "अखिलं विदुषामनाविलं सुहृदा च स्वहृदा च पश्यताम्" इत्यादि संगच्छते । गावो घ्राणेनेत्यादावप्ययमेवार्थ इति न काऽपि हानिः । कोऽविमनः परमपुमर्थः कीदृशश्चेत्यत्रानवसरत्वान्नाभियुज्यते । प्रत्येकं पर्यायेण वा विशेषणविशेष्यभावात्तत्र आत्यन्तिकदुःखनिवृत्ति-परमानन्दावाप्ती परमपुरुषार्थ, इत्यत्र न काऽपि विमतिः ।

शाब्दी प्रमा न साक्षात्कार इति नैव राजाऽऽज्ञास्ति । "दशमस्त्वमसि" इत्यादौ साक्षात्कारजनकत्वस्य सर्वानुभवसिद्धत्वात् । मानसः स इति तु न समीचीनम् । मनसः शब्दश्रवणात्प्रागपि सत्वात् । मानसत्वे च "यन्मनसा न मनुते" इत्यादि श्रुतिविरोधः स्पष्ट एव ।

हन्तभोः !

दर्शनेऽद्वैतवेदान्ते निर्विकल्पोऽर्थ इष्यते ।
सविकल्पग्राहिशब्दैः कथं स्यात्सङ्गतिग्रहः ॥

शङ्कितुरिदमत्र हृदयम्—स्याच्छब्दैरपि साक्षात्कारः, परन्तु शाङ्कराद्वैतदर्शने तु नैतत्सम्भवितुमर्हति । यतस्तन्मते सर्वधर्मशून्यो निर्विकल्पोऽविद्यानिवृत्त्युपलक्षित आत्मा-मोक्षः । स एव परमपुरुषार्थः । नैतन्मतं सम्भवदुक्तिकं दर्शनयोगार्हं च । तथा हि—

१—नित्यसिद्धेऽहेयानुपादेये तादृश आत्मनि कामनानुदयेन साधनाऽपेक्षा न स्यात्स्याच्च नित्यमोक्षापत्तिः ।

२—अविद्यानिवृत्तिरपि दुर्निरूपा । (क) अविद्याया आत्मवदविनाशित्वादनादिभावत्वेन । (ख) अविद्यानिवृत्तेर्नित्यत्वात्तथैव द्वैतापत्तेरनित्यत्वेऽनिर्मोक्षाऽऽपत्तेश्च । ३—अविद्यानिवर्तकज्ञानस्य दुर्निरूपत्वाच्च । तथा हि—(क) नित्यचैतन्यस्वरूपत्वे तु तस्य सर्वदैव

विद्यमानत्वात् कदापि विच्छेदानुपलब्धौ शास्त्रारम्भानुपपत्तिरनुभवविरोधश्च। (ख) वृत्तिस्वरूपत्वेऽपि तस्य सत्यत्वे तत्कारणान्तःकरणाविद्यादीनामपि सत्यत्वेऽद्वैतहानिः। मिथ्यात्वेऽपि न तस्य भ्रमनिवर्तकत्वं सेत्स्यति। (ग) सप्रकारकत्वे तु तस्य निष्प्रकारके ब्रह्मणि यथार्थत्वाभावान्न भ्रमनिवर्तकत्वम्। यथार्थस्यैव भ्रमनिवर्तकत्वदर्शनात्। यथार्थत्वस्वीकारे तु निष्प्रकारकाऽद्वैतासिद्धिः। सप्रकारकस्यैवाज्ञाननिवर्तकत्वमिति—तस्य निष्प्रकारकत्वमप्यङ्गीकर्तुमशक्यम्। (घ) न चाश्रयस्तस्य-आत्मा-निर्धर्मत्वात्। नाप्यन्तःकरणम्-समानाश्रयज्ञानाऽज्ञानयोरेव विरोधात्। पूर्वसिद्धस्याऽज्ञानस्य तु नाश्रयोऽन्तःकरणम्। तस्य अज्ञानकार्यत्वात्। (ङ) विषयोऽप्यस्याशक्यनिर्वचनः। न चान्तःकरणम्—विभिन्नविषयत्वादज्ञाननिवर्तकत्वाऽसिद्धेः। समानविषयकयोरेव ज्ञानाऽज्ञानयोर्विरोधात्। नाप्यात्मा। मानाऽभावात्। मनस्तु 'नायम्मनसा न मनुते' इतिश्रुतिविरोधात्—मानसप्रत्यक्षत्वे तार्किकमतप्रवेशादपसिद्धान्तापत्तेरद्वैतवादहानिः। 'तं त्वौपनिषदं पुरुषम्' इत्यादिश्रुतिवाक्यमपि न। आत्मनो निर्धर्मकत्वात्। वाक्यस्य तादृशेऽर्थे प्रमाजननासामर्थ्यात्। तथा हि—पदार्थज्ञानं द्वारीकृत्यैव वाक्यं स्वार्थं बोधयति। पदनिष्ठवृत्तिप्रयोज्यं पदार्थज्ञानं च पदार्थसङ्गतिग्रहमन्तरा न सम्भवति। स च प्रमाणान्तरोपस्थापितेऽर्थे भवति। न च प्रकृतेऽर्थे प्रमाणान्तरोपक्रमसंभवः। रूपाद्यभावात्प्रत्यक्षानुपक्रमः। लिङ्गाद्यभावेन तत्पूर्वकानुमानस्याप्यनवसरः। सादृश्याऽभावान्नोपमानमवकाशं लभते। तेन विनाऽनुपपद्यमानार्थाऽभावे नार्थाऽऽपत्तिः प्रभवति। तस्य भावत्वेनाऽभावस्य तु नावसरः। तस्मात् अर्थोपस्थापकं प्रत्यक्षादि प्रमाणान्तरम्।

४—सर्वधर्मविनिर्मुक्तेऽस्मिन् पदवृत्तीनामपि नावसरः। वृत्तयस्तावद् शक्तिलक्षणाव्यञ्जनातात्पर्याख्याभिश्चतस्रः। तासां वृत्तीनां स्वरूपनिर्वचनं विस्तरभियानेह प्रतन्यते। किन्तु तासु कापि वृत्तिर्निर्विकल्पमर्थं बोधयितुन्नेष्टे। प्रथमं तावत् प्रथमैवाऽऽलोच्यताम्, तदनवसरप्रकाशनेनैव तन्मूलिकानामन्यासामप्यवसरभङ्गः सुतरां प्रसेत्स्यति। सा हि क्वचित् प्रवृत्त्यादिलिङ्गानुमानाद् व्युत्पित्सुना परिच्छिद्यते।

यथा "घटमानय" इति वाक्यश्रवणानन्तरं व्युत्पित्सुर्बालः कम्बुग्रीवादिमन्तमर्थमानयतः प्रयोज्यस्य क्रियां प्रत्यक्षत उपलभ्य 'एषाऽस्याऽऽनयनक्रियैतत्कृतिजन्येत्यनुमिनोति, पुनश्च तां कृतिं स्वकृतिदृष्टान्तेन प्रवर्तकज्ञानजन्यामनुमिनोति। तच्चाऽनुमितं प्रवर्तकं ज्ञानं कारणान्तरानुपस्थितेः शब्दान्वयव्यतिरेकानुविधायित्वाच्च कम्बुग्रीवादिमत्कर्मकाऽऽनयनक्रियारूपार्थबोधने "घटमानय" इत्याकारकपूर्वश्रुतवाक्यस्य सामर्थ्यमवधारयति। अन्यथा तादृशकर्तव्यतायां तस्य प्रवर्तकत्वं न स्यान्न च प्रवर्तकाऽभावे कृतिरिति निर्द्धारणानन्तरमावापोद्वापाभ्यां "घट"पदस्य कम्बुग्रीवादिमदर्थबोधने "आनय"पदस्य च दूरदेशावधिकसमीपदेशकर्मकक्रियारूपाऽऽनयनबोधने सामर्थ्यमिति प्रत्येकपदस्य पृथक्पृथगवधारयति इति अर्थसङ्गतिग्रहः क्रमः।

तथाऽत्र हेयोपादेयातिरिक्ते निर्धर्मके वस्तुनि प्रवृत्त्यादिजनकत्वाऽऽभावान्मानान्तराऽगोचरत्वाच्च शक्तिग्रहावकाशः।

अत्र लिङ्गाद्यभावाच्च नानुमानादपि शक्तिग्रह प्रत्याशा। सर्वधर्मपरिवर्जिते वस्तुनि साधर्म्यवैधर्म्यवैकल्यादुपमानमपि सङ्गतिग्रहे न प्रभवति। उद्देश्यांशस्याप्राप्यसिद्धेः। कम्बुग्रीवादिमान् घटपदवाच्य इत्यादिवद्ग्रवाक्यस्याऽपि नावसरः। सहकारतरौ

मधुरं पिको रौति" इत्यादौ प्रत्यक्षावगम्यमानकृतिकर्तृवाचकरौतिपदस्य समभिव्याहारवदत्र निर्धर्मके ब्रह्मणि न संभवति। नादृशोऽर्थः कस्यापि पदस्य प्रसिद्धार्थकत्वाऽभावात्।

न च यथा "यन्न दुःखेन संभिन्नमि" त्यादिवाक्यशेषात्, अलौकिकस्वर्गादिरूपार्थविशेषेऽपि स्वर्गादिपदशक्तिग्रहस्तथा प्रकृते संभवः। यज्ञादिविधिविषयवाक्यशेषेण ब्रह्मविषयशक्तिग्रहायोगात् "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिवाक्यशेषघटकसत्यादिपदेभ्योऽपि निर्धर्मकार्थोपस्थितये वाक्यशेषान्तराऽनुधावनेऽनवस्थापात एव।

न च "अस्थूलमनणु" इत्यादिनिषेधात्मकवाक्यशेषात्संगतिग्रहः। कथंचित्स्वीकृतेऽपि सकलविशेषनिषेधे तु पदविषयत्वस्यापि निषेधात्। यत्किञ्चिद्विशेषनिषेधे तु निर्धर्मकस्याऽसिद्धेः। "यदाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सन्ततो भावस्तस्मादात्मेति कथ्यते" इति पुराणप्रदर्शितात्मशब्दयोगात्, तथा, "बृह बृहि वृद्धौ" इत्यस्मादौणादिकेन मन्प्रत्ययेन ब्रह्मपदस्य व्युत्पन्नत्वात्, योगवृत्तिमाश्रित्य बृहद्वाचकत्वनिश्चयाच्च पर्यवसाने सर्वव्यापकं देशकालवस्तुपरिच्छेदशून्यं च वस्तु आत्मपदेन ब्रह्मपदेन योगवृत्त्याऽभिधीयत इति योगवृत्त्याऽपि न संगतिग्रहे प्रत्याशा कर्तव्या। ब्रह्मात्मपदयोः पर्यायत्वाऽऽपत्तेरन्यतरशब्देन पौनरुक्त्यात् सत्यादिपदवैयर्थ्याच्च।

तदेवं शक्यसंबन्धरूपलक्षणायाः अपि नावसरः नापि निःसंबन्धार्थप्रतिपादनेऽसमर्थाया व्यञ्जनाया अवकाशः। पदपदार्थोपस्थित्यनन्तरं तदन्वयमात्रबोधनोपयुक्तायास्तात्पर्याख्यायास्तु सुतरामसामर्थ्यम्। तस्मान्नैतन्मतं दर्शनप्रतिपाद्यतामर्हतीति

एवं चेद् विचार्यते—

> एष आडम्बरः सर्वो मिथ्या विजृम्भणं स्फुटम्।
> स्वप्रकाशे चिदानन्दे सङ्गता दर्शनश्रुतिः॥

अत्रेयं विचारपद्धतिः—यदुक्तं नित्यसिद्धेऽहेयानुपादेये कामनानुदय इति तदयुक्तम्। नित्यसिद्धोऽप्यात्मानन्दोऽविद्यावृतत्वान्न भासते। निवृत्तायान्त्वविद्यायामन्यनिरपेक्षतया स्वयं प्रथतेऽतोऽविद्यानिवृत्तिविशिष्टत्वेन नित्यप्राप्तेऽपि ब्रह्मणि कामनोदयस्य संभवात्। न हि सिद्धत्वमात्रेणेच्छाविरहः किन्तु अप्रतिबद्धसाक्षात्कारविषयत्वमेव तत्प्रयोजकम्। तच्च प्रकृते नास्ति। (१) असंभावनादिप्रतिबन्धकसद्भावात्।

अत एव पित्तोपहितस्य सिता मधुरेति जानतोऽपि तामश्नतो माधुर्यप्रयुक्तस्तृप्त्यानन्दो न भवति। इह हि प्राप्ताऽप्राप्तभेदेन द्विविधोपीच्छाविषयो भवति (२)।

---

१—असंभावना प्रमाणगता प्रमेयगता च द्वेधा। एवं विपरीतभावनाऽपि ज्ञेया। तथा विषयाऽऽसक्तिश्चेति चत्वारः प्रतिबन्धकाः। ते च यथायथमात्मयाथार्थ्यं शमदमसाधनानि च प्रतिबध्नन्ति। तत्र विषयाऽऽसक्तेः शमदमादिपरिशीलनं निवर्तकम्। असंभावनायाः श्रवणं मननं च। विपरीतभावनाया निदिध्यासनम्।

२—नत्र ग्रामादिरूपाऽप्राप्तप्राप्त्यर्थं तदनुकूला काचित्क्रियाऽपेक्ष्यते, किंतु नित्यप्राप्तस्य भ्रमादिस्मृतस्याऽप्राप्तकल्पस्य प्राप्त्यर्थं न क्रियाऽपेक्षा, केवलं भ्रमनिवर्तकसाक्षात्कारोऽपेक्ष्यते। एवम् जिहासितमपि किंचित् कण्टकादिवदपरिहृतम्। तत्परिहाराय व्यवधिरपेक्षिता। किञ्चिच्च नित्यपरिहृतम्, पादसंलग्नभ्रमात्मकरज्जुसर्पादि। तदेवं नित्यप्राप्ते नित्यव्यक्तेऽपि च वाञ्छिता परिजिहासा च न विरुद्धा। तदुक्तम् वार्तिककारैः—

> ग्रामादिकिञ्चिदप्राप्तं प्राप्तुमिष्टमिहेच्छति। हेमादि विस्मृतं किंचित् कण्ठस्थमपि लिप्सते॥ १॥
> परिहार्यं तथानिष्टं कण्टकादि जिहासति॥ रज्ज्वां सर्पादि किंचिच्च व्यक्तमेव जिहासति॥ २॥
> नियतोपायसाध्यत्वादवाप्यपरिहार्ययोः। विधितः प्रतिषेधाच्च साधनापेक्षिता भवेत्॥ ३॥
> आज्ञानान्तरितत्वेन संप्राप्तत्यक्तयोः पुनः। याथात्म्यज्ञानतो नान्यत्पुरुषार्थाय कल्पते॥ ४॥

२—मुनिरूपा चाऽविद्यानिवृत्तिः। आत्मनि तु अबाधितत्वं स्वप्रकाशत्वं वाऽविनाशित्वे प्रयोजकम्, न स्वनादिभावत्वम्। विनाशित्वे हि बाधितत्वमेव सर्वतन्त्रैकमत्येन प्रयोजकमिति लाघवात्। नचाऽविद्यानिवृत्तेः सत्यत्वाद्द्वैतश्रुतिविरोधः, भावरूपद्वैतस्य निराकरणात्। अभावप्रतियोगिकाभावस्यातिरिक्ताभावत्वस्य नैयायिकैरप्यनङ्गीकारात्। तथाऽत्र मतेऽपिऽविद्यानिवृत्तेः सच्चिदानन्दरूपत्वाच्च *३—मुनिरूपञ्चाऽविद्यानिवर्तकं ज्ञानम्। तथा हि (क) मास्तु नित्यं चैतन्यात्मकं स्वतस्तन्निवर्तकम्, किन्तु वृत्तिप्रतिबिम्बितं सत्कथं न तृणतूलादिकमणिसंक्रान्तः सौरालोक इवाऽविद्यां निर्दहेत्। एतेन वृत्त्यात्मकं ज्ञानं सत्यं मिथ्या वा, सप्रकारकं निष्प्रकारकं वेत्यादिविकल्पसन्दोहोऽपि निरस्तः। वृत्तेश्च कारणतावच्छेदकत्वेन कारणकोटावप्रवेशात्। तस्याः कल्पितत्वेऽपि अवच्छेद्यस्य चैतन्यज्ञानस्य वास्तवत्वाऽविघातात्। तार्किकैरपि नभसः शब्दग्रहणे कर्णशष्कुलीसंबन्धात्मकस्य संबन्धस्य कल्पितस्यैवाङ्गीकारात्। किञ्च—पारमार्थिकत्वाऽभावेऽपि व्यावहारिकसत्यायाः प्रमाणजन्यान्तःकरणवृत्तेरेवाज्ञाननिवर्तकत्व स्वीकारेऽपि न दोषः। स्वप्नादिज्ञानस्य बाधितविषयत्वान्न तथात्वम्। ज्ञानस्य अधिष्ठानप्रमात्वेनैवाऽनुगतेनाऽज्ञाननिवर्तकत्वात्। सप्रकारकत्वनिष्प्रकारकत्वे नाऽऽत्र प्रयोजके। सप्रकारकाधिष्ठानके सप्रकारा, निष्प्रकारकाधिष्ठानके निष्प्रकारा प्रमाऽज्ञाननिवर्तनेऽलमेति विशेषेऽपि अधिष्ठानविषयकप्रमात्वमुभयत्र समानतयाऽनुगतमेव। न चेदं प्रमेयं, द्रव्यं वेत्यादिज्ञानादपि घटादिविशिष्टाकाराज्ञाननिवृत्तिप्रसङ्गः। तस्य विशिष्टविषयत्वाभावात्। तदुत्तरकालेऽपि संशयदर्शनात्। तथा च †सामान्यधर्ममात्राऽप्रकारकसमानविषयकदोषविशेषाऽसहकृताऽपरोक्षप्रमात्मकं ज्ञानमज्ञाननिवर्तकमिति स्वरूपतस्तत्प्रसिद्ध्यति। (ख) आश्रयतश्च सिद्ध्यति। तथा हि—

निरुक्तप्रमायाः प्रमाणजन्यत्वेनाऽन्तःकरणधर्मत्वेऽपि चिराश्रयत्वेनाऽनुपपत्तिः। चैतन्यान्तःकरणयोस्तादा§त्म्याध्यासादन्तःकरणधर्माणामपि चैतन्यधर्म-

*कूटस्थाऽसङ्गस्वभावस्य यथार्थसम्बन्धाभावात्सर्वं काल्पनिकमेव संबन्धादिकमविद्यामूलमेवेति। निवृत्तिकल्पनाऽपि तथैवेति। तदाह वार्तिककारः—निवृत्तिस्तावदेवास्य नावगत्यात्मनोऽपरा। "अस्थूलमनणु" इत्यादिश्रुतिवाक्यैरपि स्थूलादिविलक्षणमात्मस्वरूपमात्रं बोध्यते, न तु स्थूलाद्यभावस्तात्पर्यीक्रियते। कल्पितपदार्थसत्त्वाऽसत्त्वयोरधिष्ठानस्वरूपमात्रत्वं भवति। यथाऽज्ञाता शुक्ती रजतात्मिका ज्ञाता च रजताभावात्मिका, ज्ञाताज्ञातयोरुभयत्र शुक्तिरेव वस्तुभूता। एवं प्रकृतेऽपि यथा मण्यादिसमवहितो वह्निर्न दहति काष्ठादिकम्-एवमविद्याऽवृतोऽप्यात्मा न प्रथते तदेवमज्ञात आत्मा सकलप्रपञ्चभावात्मकः ज्ञातश्च न त्रिवृत्तिरूप इति आत्मचैतन्यात्मकाऽसाधारणस्वरूपा एवाविद्यातद्विलासरूपप्रपञ्चनिवृत्तिरित्यर्थः।

†प्रमेयत्वस्य केवलान्वयित्ववादिमते 'इदं प्रमेयमित्यादिज्ञानस्याधिष्ठानविषयकप्रमात्वत्तन्मात्रादपि विशिष्टाकारभ्रमनिवृत्तिवारणाय सामान्येत्यादि। प्रमेयो घट 'इत्यादिज्ञानेऽव्याप्तिवारणाय' मात्रपदम्। असंभावनादिदूषिते ज्ञानेऽतिव्याप्तिवारणाय दोषविशेषेत्यादिपदम्।

§प्रतिबिम्बवादिनां मते नीरूपस्याप्याकाशस्य प्रतिबिम्बदृष्टान्तेन नीरूपस्यात्मनोऽविद्यायां प्रतिबिम्बः संभवति, तथा चाऽविद्याश्रयत्वं ब्रह्मण्येव तन्मते संभवति। बिम्बस्थानीयमुखस्य दर्पणाश्रयणं विना यथा प्रतिबिम्बो न शक्यते उपलब्धुम्। एवमविद्यारूपोपाध्याश्रयणं विना प्रतिबिम्बोऽन्तःकरणं जीवो वा न शक्यत उपलब्धुमिति अविद्याऽऽश्रयणानन्तरमुपलब्धस्य कथमविद्याया आश्रयणम्। तदुक्तम्-संक्षेपशारीरके—"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला। पूर्वसिद्धतमसो न पश्चिमो नाश्रयो भवति नापि गोचरः।" इति वृत्त्याश्रयस्तु अन्तःकरणमेवेति सामानाधिकरण्यं तादात्म्याध्यासेनोपपादितम्।

संभवात् ३ ( ग ) विषयतोऽपि लब्धपदमिदम्।

ब्रह्मणो ज्ञानाविषयत्वेऽपि अन्तःकरणपरिणाम-रूपायां प्रमायां ब्रह्मविषयतायास्तत्प्रतिबिम्बग्राहकत्व-रूपाया अनिर्वचनीयाया वा निष्प्रत्यूहं स्वीकारात्। अथवा परमार्थे सति ब्रह्मण्यपि व्यवहारसत्या, ज्ञानीय-कल्पितविषयतायाः स्वीकारेऽप्यदोषात्, घटादिवद् जडत्वापादकज्ञानकर्मत्वापत्तिस्तु न, स्वसमानसत्ताक-विषयताया एव तथोपपादकत्वात्।

( ४ ) वस्तुतो चैतन्यविषयतैव जडत्वापादिका न तु वृत्तिविषयताऽपि, प्रकृते चैतन्यविषयताया अभा-वात्। अयमाशयः। घटादिजडात्मकप्रमेयजातप्रत्यक्षप्र-मायामिन्द्रियार्थसन्निकर्षे तत्प्रणालिकया विषयदे-शेऽन्तःकरणं गत्वा तदाकारेण परिणमते। सोऽयं परिणामो वृत्तिरित्युच्यते। सेयं वृत्तिः परोक्षप्रमायामपि भवति। किन्तु इन्द्रियादिप्रणालिकाऽभावेन बहिर्वि-षयदेशे गमनाऽसम्भवात्स्वदेश एवान्तःकरणपरिणाम इयानेव विशेषः। तत्र प्रमाणजन्यान्तःकरणवृत्तौ चैत-न्यमभिव्यज्यते। इयमेव चैतन्याभिव्यक्तिर्विषय-प्रकाशस्वरूपा प्रमाणफलत्वेन व्यपदिश्यते। तदाश्रय-त्वाद् विषयस्य जडत्वं दृश्यत्वं कर्मत्वं वा सम्भवति। स्वप्रकाशश्चिदानन्दः ब्रह्मप्रकाशस्तु श्रुतिवाक्यैरन्तः-करणस्य ब्रह्माकारायां वृत्तौ सत्यां तद् विषयाज्ञानविग-लने सति स्वयं प्रथते। न तत्र चिदभिव्यक्तेरपेक्षेति। ( घ ) फलाभावोऽपि न शङ्क्यः। अज्ञाननिवर्तनस्यैव फलत्वात्। प्रमाणं चात्र श्रुतिः श्रुतार्थापत्तिश्च। ( ५ ) ( ङ ) प्रमाणञ्चाऽत्र भगवती श्रुतिरेव ग्राह्या। तादृशे-ऽपि ब्रह्मणि शब्दानां सङ्गतिग्रहस्य सुकरत्वात्। तथाहि-यथा "स्वर्गकामो यजेत" इत्याद्यव्यभिचरितप्रामा-ण्यायाः श्रुतेर्बलाददृष्टोऽपि स्वर्गादिः पदार्थः कल्प्यते तथा प्रकृतेऽपि श्रुतिबलाद् ब्रह्मपदार्थः कल्प्यः। 'तद् ब्रह्म' इति प्रकृत्य 'तद् विजिज्ञासस्व' "आत्मा वाऽरे द्रष्ट-व्यः" इत्यादिश्रुतिषु जिज्ञासादर्शनाद्यर्थकानां विजिज्ञा-सस्व-द्रष्टव्य-इत्यादीनां प्रसिद्धपदानां समभिव्याहारा-त्तदन्वययोग्यार्थस्यैव कल्पनौचित्याञ्च जात्याद्यर्थोप-रिग्रहाशङ्काऽपि। "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादि श्रुत्यन्यथानुपपत्त्याऽपि चिद्रूपमपरिच्छिन्नं वस्तु ब्रह्मशब्दार्थ इत्यवधारयितुं शक्यत्वेनार्थसङ्गतिग्रहा-ऽसंभवोऽपि निरस्तः। तथा बृंहतेर्बृहतेर्वा धात्व-र्थानुगमाञ्च महत्त्वमवगम्यते—बाध्यत्वादिदोष-विरहितो देशकालवस्तुपरिच्छेदशून्य एव महत्व-योगमर्हतीति व्युत्पत्तिबलादपि शक्यतेऽर्थसङ्गतिः। एकस्यैव पदार्थस्य बृहत्त्वेन, व्यापकत्वेन, अन्तः शून्यत्वेन, सत्यत्वेन येन केनाऽप्यपरेण यथासंभविना तत्तद्विशेषरूपेणाप्यभिधाने न पर्यायत्वापातादिदो-

---

३—अन्तःकरणतादात्म्याध्यासबलादेव पञ्चपादिकायामुक्तम्—आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा अभेदेऽपि चैतन्यात्पृथगिव भासन्ते इति।

४—चैतन्यविषयताया ब्रह्मणि सम्भवमनाश्रित्य निषेधश्रुतिः कल्पितवृत्तिविषयतामाश्रित्य तत्त्वौपनिषदमित्यादिश्रुति-रिति न विरोधः॥

५—"भूयश्चान्ते विश्वमायानिवृत्तिः" 'तमेव विदित्वातिमृत्युमेति" "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः" इत्यादिश्रुतिस्मृतयो ज्ञानेनाऽज्ञाननिवृत्तिं स्पष्टं प्रतिपादयन्ति। मृत्युरत्राविद्या। तथा "ब्रह्मविद् ब्रह्मैव भवति" इत्यादि श्रुतार्थापत्तिश्च। न हि ब्रह्मभावव्यवधायकाविद्यानिवृत्तिं विना ब्रह्मज्ञानाद् ब्रह्मभाव उपपद्यते, इति ज्ञानादज्ञाननिवृत्तिं प्रत्याययति अतोऽत्र न दृष्टान्तान्वेषणेच्छा। अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः इत्यविद्यैव तद् व्यवधायकमिति स्पष्टम्।

षलेशः "अहमित्यात्मत्वसामान्यपुरस्कारेण लोके प्रत्यक्षतोऽपि सिद्धाऽर्थसङ्गतिः। न चैतावता ब्रह्मणः शास्त्रैकगम्यत्वं विरुध्यते, सामान्यरूपेण सिद्धेपि तत्तद्विशेषरूपस्य विप्रतिपन्नस्य प्रत्यक्षतोऽसिद्धेः। यद्यपि ब्रह्मणि नास्ति पारमार्थिकः सामान्यविशेषभावस्तथापि यथा रज्जुपदार्थस्य दण्डधारासर्पादिविभ्रमेषु प्रतीयमानत्वं सामान्यमनुभूयते, तथा विप्रतिपन्नेषु शरीरेन्द्रियमनोबुद्धिशून्यकर्तृभोक्तृसर्वज्ञब्रह्माभिधेषु पदार्थेष्वन्वीयमानं प्रतीयमानत्वरूपं सामान्यमस्त्येव। प्रत्यक्षदृष्टेपि विप्रतिपत्तयः समुद्भवन्त्यो दृश्यन्त एव। यथा जातिगुणक्रियाद्रव्येषु प्रत्यक्षसिद्धेषु पदार्थेषु प्रयुज्यमानस्य गोशब्दस्य जातिर्वा व्यक्तिर्वा उभयं वा गुणो वा क्रिया वार्थं इत्यादि विप्रतिपत्तयो वादिनां भवन्त्येव। तथा प्रत्यक्षसिद्धेपि शरीराद्यर्थे प्रयुज्यमानस्यात्मवाचिनोहंशब्दस्यार्थे विप्रतिपत्तय उपपद्यन्त एव। शब्दानां परोक्षजननस्वभावभङ्गदोषो न सावकाशः। मनस इव परोक्षापरोक्षजननस्वभाववत् शब्दानामपि तथा सम्भवात्। १।

शब्दादेवापरोक्षे जाते विचारासङ्गतिरपि न शङ्क्य। असम्भावनादिदोषनिराकरणेन चरितार्थ्यात्। विचारेण असंभावनादिप्रतिबन्धकनिवृत्तौ शब्दजन्यस्यापरोक्षज्ञानस्या प्रतिबद्धतया स्वकार्यजनकत्वं प्रसिध्यति। अशेषदोषविरहितेति निर्मलमुकुरोपमे मनसि वेदान्तवाक्यजाखण्डधीः सविलासमज्ञानं निवर्तयति। "यतो वाचो निवर्तन्ते" इत्यादिनिषेधश्रुतयस्तु पूर्वप्रदर्शितजडत्वापादकचैतन्यव्याप्ते मुख्यया वृत्त्या वा भिधानस्य निषेधपरा लक्षणयान्व भिदधत्येक शब्दा ब्रह्म। तथोदाजह्रुः श्रीवाचस्पतिमिश्राः—

विगलितपरागवृत्त्यर्थत्वं पदस्य तदस्तदा<br>
त्वमिति हि पदे नैकार्थत्वे त्विमिप यत्पदम्।<br>
तदपि च तदा गत्वैकार्थ्यं विशुद्धचिदात्मताम्<br>
त्यजति सकलान् कर्तृत्वादीन् पदार्थमलान् निजान्॥

तथा दर्शनशास्त्राणि तथादर्शनपारदृश्वनां तत्रभवतां सुगृहीतनामधेयानां म. म. श्री पं० गिरधरशर्मणामभिनन्दनञ्चाधिकृत्य समुदयं प्राप्तवत्ययमङ्कोऽपि सदन्वयं दर्शन भिधानांलभते।

दर्शनानि समस्तानि विदुषामभिनन्दने।<br>
रत्नाकरस्य पत्रस्य दर्शनान्यधिकृत्य चँ॥<br>
प्रकाश्यमानोऽयमङ्को लभते दर्शनान्वयम्।<br>
दर्शनार्थप्रवचनं स्याचेदं विद्वदर्पणम्॥

इतिशम्।

१—सुखादिप्रमास्थले मनसः साक्षात्कारजनकत्वम् लिङ्गदर्शने वन्ह्याद्यनुमितिस्थले परोक्षजनकत्वम्.। एवम् सन्निहितविषयप्रमावसरे शब्दानां प्रत्यक्षजनकत्वमसंनिहितविषयस्थले परोक्षजनकत्वम्।

# सत्य महिमा

†छात्रा व्रतं वचसि धारयतेदमच्छं 'कृच्छ्रेऽपि सत्यगदनं रसनं न जह्यात्'।<br>
भाव्येत भव्यममुनोभयतो मतंवः सत्यंहि काममिह कामगवीव दुग्धे॥ १॥<br>
सत्यव्रतस्य चरितं प्रथितं पुराणे व्याकर्ण्य कर्ण परितर्पण माश्रयध्वम्।<br>
यो वागृहन्द्रियकथा प्रथनेन पथ्यं तथ्यव्रतं कृतिनुढतं निरबोढ बाढम्॥ २॥

† स्वर्गतपण्डितप्रवर घूटरमामहोदयस्याप्रकाशित, 'छात्रकल्पवल्ली'तो-वचितानि पद्यकुसुमानि। —संपादकः

# चक्षुषः प्राप्यकारिता



प्रणेता-सीतारामभिश्रः शास्त्री, सा० व्याकरणाचार्यः, न्यायवेदान्तमीमांसादि-समतीर्थः,

भू०पू०फतेहपुरस्थशे०संस्कृतकालेजाध्यक्षः ।

नेदमस्ति तिरोहितं दर्शनाम्बुनिधिस्नाननिर्मलमतीनां विपश्चित्प्रवराणां यन्निखिलेष्वपि पदार्थेषु प्रमाणपदार्थः कीदृशं महनीयं स्थानमालम्बत इति । सन्ति सहस्राधिकानि वस्तूनि जगतीतले,किन्तु यदवधि तेषां केनचन प्रमाणेन नावबोधो भवेत्तदवधि तेषां सत्त्वं कूर्मक्षीरायितमेवावतिष्ठेत । अत एव प्रत्यपादि भगवता महर्षिणा वात्स्यायनेनापि स्वीये न्यायभाष्ये सर्वतः प्रथममेव-"प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणम् । प्रमाणमन्तरेण नार्थप्रतिपत्तिः नार्थप्रतिपत्तिमन्तरेण प्रवृत्तिसामर्थ्यम् । प्रमाणेन खल्वयं ज्ञातार्थमुपलभ्य तमर्थमभीप्सति जिहासति वा ।" अत एव च षोडश पदार्थान् व्याचक्षाणेन मुनीनां प्रवरेणाक्षपादेनापि स्वीये न्यायदर्शने प्रमाणस्य सर्वातिशायि प्राधान्यमाकलय्य तदेव सर्वतः पूर्वं व्याजह्रे-"प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति सूत्रेण । एवञ्च विद्यते किञ्चन निरुपमं माहात्म्यं प्रमाणस्य सर्वपदार्थेष्वित्यत्र न कोऽपि प्रेक्षावान् मन्ये विप्रतिपद्येत ।

प्रमाणपदार्थश्च यद्यपि बहुभिर्दार्शनिकैर्बहुधा विभक्तो व्याख्यातश्च । तथा हि-चार्वाकाः प्रत्यक्षमेकमेव प्रमाणं संमन्वते, बौद्धा वैशेषिकाश्च प्रत्यक्षमनुमानञ्चेति द्वे एव प्रमाणे संगिरन्ते, सांख्या वैयाकरणाश्च प्रत्यक्षमनुमानं शब्दश्चेति प्रमाणत्रयं स्वीकुर्वते, नैयायिकाः प्रत्यक्षमनुमानमुपमानं शब्दश्चेति चत्वारि प्रमाणान्यातिष्ठन्ते, प्राभाकरा हि प्रत्यक्षमनुमानमुपमानं शब्दोऽर्थापत्तिश्चेति पञ्च प्रमाणानि समामनन्ति, भाट्टा वेदान्तिनश्च प्रत्यक्षमनुमानमुपमानं शब्दोऽर्थापत्तिरनुपलब्धिश्चेति षट् प्रमाणानि स्वीकुर्वन्ति, तथापि प्रामाण्ये प्रत्यक्षस्य नास्ति कश्चन केषामपि तेषु विप्रतिपत्तिलेशोऽपीति नापरोक्षं प्रेक्षावताम् । किञ्च प्रत्यक्षं हि सर्वेषां प्रमाणानामुपजीव्यतामाश्रयदात्मनः सकलप्रमाणमूर्धाभिषिक्ततां विस्पष्टमाचष्टे । एवञ्च निखिलप्रमाणोपजीव्यतया वा सर्वदार्शनिकसमवायसम्मततया वा प्रमाणेष्वपि सर्वेषु प्रत्यक्षस्यैवातितरां कोऽपि विलक्षणो महिमेति वस्तुस्थितिकथनमिदम् । तदिदं प्रत्यक्षप्रमाणं प्रत्यक्षप्रमामुत्पादयत् लौकिकानां परीक्षकाणाञ्च सर्वेषामेव महदुपकरोतीति नः प्रत्यक्षम् । यद्यपि प्रत्यक्षप्रमाया लक्षणे सन्ति दार्शनिकानां परस्परमनेके मतभेदास्तथापि तस्याः करणं प्रत्यक्षप्रमाणं भवतीत्यत्र सर्वदार्शनिकानामैकमत्यम् । प्रत्यक्षप्रमा च चाक्षुषरासनत्वाचघ्राणजश्रोत्रजमानसभेदात् षड्विधा । तत्र हि चक्षुषा चाक्षुषज्ञानं जायते, रसनया रासनप्रत्यक्षमुत्पद्यते, एवमेव त्वचा त्वाचं घ्राणेन घ्राणजं श्रोत्रेण श्रोत्रजं मनसा मानसमि-

ति तेन तेनेन्द्रियेण तत्तत्प्रत्यक्षमुत्पादितं भवति। न्यायवेदान्तादिसकलास्तिकदर्शनाचार्याः घ्राणसंसृष्टस्य घ्राणेन, रसनासन्निकृष्टस्य रसनया, चक्षुःसंनिकृष्टस्य चक्षुषा, त्वक्संयुक्तस्य त्वचा, श्रोत्रप्रत्यासन्नस्य श्रोत्रेण, मनःसंनिकृष्टस्य मनसा ग्रहणात् सर्वाण्येवेन्द्रियाणि प्राप्यकारीणीति राद्धान्तयन्ति। बौद्धास्तु न सर्वेषामिन्द्रियाणां प्राप्यकारित्वं किन्तु रसनात्वग्घ्राणानामेव, रूङ्घटते हि तेषामेव विषयेण साकं सम्बन्धः। चक्षुःश्रोत्रे तु स्वस्य विषयदेशगमनासंभवात् विषयस्य च तद्देशागमनासंभवात् स्वस्थानस्थिते सती अप्राप्यैव दूरावस्थितं विषयं प्रकाशयतोऽतस्ते न प्राप्यकारिणी भवितुमर्हत इति प्रतिपद्यन्ते। जैना यद्यपि आणविकस्य सावयवस्य सक्रियद्रव्यस्य शब्दस्य श्रोत्रदेशागमनसंभवात् श्रोत्रस्य नाप्राप्यकारित्वम्। अत एव महता शब्देनाभिहतस्य कर्णपटहस्य विभेदेन बाधिर्यमपि दृश्यमानं जनानां संगच्छते इति प्रक्रियाजालमास्थाय श्रोत्रस्याप्राप्यकारितां बौद्धैः प्रतिपद्यमानां नानुवर्तन्ते; तथापि चक्षुषोऽप्राप्यकारित्वे तेषां बौद्धैः साकमस्ति सुमहन्मतसाम्यमिति तद्विषये तेऽपि तेषां सतीर्थ्या एवेति न ते पृथग्वचनमपेक्षन्ते। एवञ्च चक्षुषः प्राप्यकारिताया विषये बौद्धानां जैनानाञ्च वैदिकदर्शनकारैः सार्धं सुबहुरेव विद्यते दृष्टिभेद इति सुप्रत्यक्षं प्रेक्षावताम्। सौगतादीनां तमिमं दृष्टिभेदं चक्षुषः प्राप्यकारिताविषये तदुक्तरीत्यैव यथायथं संक्षेपतः प्रतिपाद्य वैदिकदर्शनाचार्यवर्यैः उद्द्योतकर-कुमारिलभट्ट-वाचस्पतिमिश्रोदयनप्रभृतिभिर्विलक्षणविचक्षणैः महता संरम्भेण सुतीक्ष्णतर्कप्रकरैश्च विरचितां तद्विखण्डनाञ्चोपदर्श्य वैदिकदर्शनोक्तरीत्या चक्षुषः प्राप्यकारितैवास्मिन्निबन्धे सुदृढप्रमाणबलेन समुपस्थापयिष्यते दर्शनशास्त्रप्रणयिनां "रत्नाकर"पाठकानां समनुरञ्जनायेति तैरत्र सुप्रदीयमानमवधानदानं साञ्जलिबन्धं समभ्यर्थ्यते।

तत्र पूर्वं वैदिकदर्शनाचार्याश्चक्षुषः प्राप्यकारित्वे प्रत्यपीपदन्—यथेतराणीन्द्रियाणि ग्राह्यं विषयं प्राप्यैव प्रत्यक्षमुत्पादयन्तीति प्राप्यकारीण्युच्यन्ते, तथैव चक्षुरपि प्राप्यैव स्वीयं ग्राह्यं समुपजनयति प्रत्यक्षम्। चक्षुर्हि प्रदीपवत्तैजसं द्रव्यं वरीवर्ति। यथा हि प्रदीपस्य रश्मयो बहिर्निर्गत्य दूरस्थेनाव्यवहितेन च द्रव्येण साकं संयुज्य तत् प्रकाशयन्ति तथैव नायनो रश्मिरपि बहिर्निर्गम्य दूरस्थेनाव्यवहितेन च द्रव्येण संसृज्य तस्य प्रकाशमातनुते। न च नायनः स रश्मिर्न समवलोक्यते अतो नास्ति, यदि स्यात्तर्हि परिदृश्येतापीति वाच्यम्, तस्य प्रत्यक्षेणानुपलम्भेऽपि अनुमानप्रमाणेन समुपलम्भात्। न च प्रत्यक्षेण यदुपलभ्यते तदेवास्ति, नास्तीतरदिति वक्तुं शक्यम्। तथा सति अनुमानेनोपलभ्यमानानां सर्ववस्तूनामेव सत्त्वस्य समुच्छेदप्रसङ्गात्। न च प्रत्यक्षतः समुपलभ्यते चन्द्रमसः परभागः पृथिव्याश्चाधोभागः। अनुमानेन हि तौ समुपलभ्येते, न चैतावता तौ न स्त इति केनाप्यप्रमत्तेन वक्तुं शक्येत। सतोपि हि पदार्थस्य केनचन प्रतिबन्धविशेषेण न भवितुमर्हति प्रत्यक्षम्। अस्ति च कारणं प्रत्यक्षे कश्चन रूपविशेषो यस्मिन् सति तद्भवति, असति च तस्मिन्न भवतीति। नायने च रश्मौ स रूपविशेषो नास्तीति चाक्षुषो रश्मिर्नोपलभ्यते, विद्यते च स रूपविशेषो मार्तण्डमयूखे दीपप्रभायाञ्चेति समुपलभ्येते तौ। न च तेजसः सर्वत्र एकरूपत्वेन तद्वैसादृश्यमनुपपन्नमिति समाशङ्कनीयम्, तद्धर्मभेदेन तस्यापि विभिन्नतोपपत्तेः। दृष्टः खलु धर्मभेदेन धर्मिणोऽपि भेदः। दृश्यते हि तेजसो धर्मभेदः। चतुर्विधञ्च नाम तेजो लोके समालोक्यते— (१) उद्भूतरूपस्पर्शम्। (२) उद्भूतरूपमनुद्भूत-

३ ) उद्भूतस्पर्शमनुद्भूतरूपम् । ( ४ ) अनुद्भूतरूपस्पर्शञ्च । प्रथमं यथादित्यरश्मिः, द्वितीयं यथा प्रदीपप्रभा, तृतीयं यथा वारिस्थितं तेजः, चतुर्थं यथा नायनो रश्मिः । तेषु पूर्वं द्वयं प्रत्यक्षन्तत्र रूपस्योद्भूतत्वात् । अन्तिमं द्वयञ्च न प्रत्यक्षं रूपस्य तत्रानुद्भूतेः । एवञ्च विद्यमानोऽपि नायनो रश्मिरुद्भूतरूपवत्त्वाभावाद्धि न चक्षुषो विषयतामापद्यते इति न तस्यासत्त्वं समाशङ्कनीयम्, अनुमानेन तत्सत्तायाः सुनिरूढत्वात् । तथा चात्र भवति प्रयोगः—चक्षुस्तैजसं परकीयस्पर्शाव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रभावत् । एवमनुमानेन सिद्धे तैजसत्वे तदधीनरश्मिवत्तापि चक्षुषः सुसाधा । अत एव मार्जारादीनां नेत्रेषु रश्मिरुपलभ्यमानः साधु सङ्गच्छते । तथा च प्रदीपवत्तस्य सिद्धं प्राप्यकारित्वम् । प्राप्यकारित्वादेव च चक्षुषः कुड्यकटादिभिरन्तरितस्य वस्तुनो नोपलब्धिर्भवति तेन, कुड्यादिभिश्चक्षूरश्मेः प्रतीघातात् । काचाभ्रपटलादिभिस्तु चक्षुस्तेजसो नाभिघातो द्रव्यस्वभावनियमात् । तथा च सिद्धं चक्षुषः प्राप्यकारित्वमिति ।

तामेतां वैदिकदर्शनकारैरूरीक्रियमाणां चक्षुषः प्राप्यकारितामसहमाना बौद्धादयोऽवैदिकदर्शनकृत इत्थमत्र प्रत्यवतिष्ठन्ते—ननु चक्षुषः प्राप्यकारिता नैयायिकादिभिरभिधीयमाना न कथञ्चारमपि समुपपद्यते । प्राप्यकारि हि तद्भवति यद् ग्राह्यं विषयं प्राप्यैव प्रत्यक्षं निष्पादयेत् । न च चक्षुषो ग्राह्येण विषयेण साकं संनिकर्षः संभवत्यपि, कृष्णसारापरनामधेयस्य चक्षुर्गोलकस्यैव चक्षुरिन्द्रियत्वात् । न च कृष्णसारातिरिक्तं किमपि चक्षुरिन्द्रियमुत्पश्यामः । अत एव केनचनामयेन समाक्रान्ते चक्षुरिन्द्रिये कृष्णसार एव सुचिकित्स्यते, न तु कृष्णसाराधिष्ठानं तदतिरिक्तं किमपि भौतिकम् । एवञ्च योयं कृष्णसारलक्षणो भूतविशेषः स एव बाह्यभूतविशेषस्यालोकस्य इन्द्रियाऽप्रत्यायकत्वरूपेण प्रसादेन समनुगृह्यमाणस्तत्तृष्णापूर्वककर्मापेक्षश्चक्षुरभिधीयते इति न बहु वक्तव्यमपेक्षते । न चैवं प्रसन्नान्धस्यापि कृष्णसारोपलब्धेस्तस्यापि चाक्षुषं ज्ञानमतिप्रसज्ज्येतेति वाच्यम्, तत्तृष्णापूर्वककर्मापेक्ष इति विशेषणादानेन तस्य सुदूरपराहतत्वात् । भूतविशेषः कर्मापेक्षः सन् रूपञ्च चक्षाणश्चक्षुरित्युच्यते । कर्मक्षयात्तु प्रसन्नान्धस्य कृष्णसारः स न रूपं चष्टे इति न चक्षुरित्याख्यातं भवति । तथा चैवं गोलकस्यैव सुनिश्चिते चक्षुरिन्द्रियत्वे न तस्य विषयेण साकं प्राप्तिः संभाव्येतापि । अनुभूयते च तथैव लोके विषयाद् विच्छिन्नं चक्षुर्गोलकम् । तस्माद्विप्रकृष्टस्य वस्तुनः चक्षुषा ग्रहणात् चक्षुर्न प्राप्यकारि । किञ्च प्राप्यकारीणि यानि घ्राणादीन्द्रियाणि सन्ति न तेषां विषयग्रहणं कदाचन सान्तरं दृष्टम्, चक्षुषस्तु सर्वदावलोक्यते ग्रहणं सान्तरमेवेति न चक्षुषः प्राप्यकारिता । अपि च चक्षुषः स्वस्मादतिमहत्तराणि भूधरभूमण्डलकाननादीनि परिगृह्यन्ते, न चाल्पीयसश्चक्षुषः पृथुतरैस्तैः सार्धं प्राप्तिरस्ति । द्वयाश्रयो हि संयोगोऽल्पमेव संयोगिनमनुरुध्यते न महान्तम् । न जातु रथादिसंयोगाः कृत्स्नं नभो व्याप्नुवन्ति । तथात्वे हि सर्वत्रैव नभःप्रदेशे रथादीनां तत्संयोगादीनाञ्च समुपलब्धिः स्यात् । इत्थञ्च चक्षुषः प्राप्यकारित्वे यावान् प्रदेशो वनपर्वतादेर्गोलकेनं परिव्याप्तस्तावत एव चक्षुषा ग्रहणं स्यान्न ततो विशालस्य । दृश्यते च पृथुतरस्यापि गिरिकाननादेर्ग्रहणं चक्षुषा लोके, न च चक्षुषः प्राप्यकारित्वे तत् संभवति । तस्मात् पृथुतरग्रहणान्न प्राप्यकारि चक्षुरिति ।

किञ्च चक्षुषः प्राप्यकारित्वे दिग्देशव्यपदेशो न स्यात्, प्राप्यकारिषु हि घ्राणादिषु नायं दिग्देशव्यप-

देशो दृष्टः पर्यवेक्ष्यते हि विषये दिग्देशव्यपदेशोऽयं चक्षुषि पूर्वस्यामिदं दृश्यते पश्चिमायामिदं दृष्टम्, दूरमिदमवलोकामहे, समीपमिदं पश्याम इत्यादिः। न चैतादृशो व्यपदेशो घ्राणादिषु प्राप्यकारिषु संदृष्टस्तस्मान्न चक्षुः प्राप्यकारि। अपि च चक्षुषः प्राप्यकारित्वे चक्षुषा संनिकृष्टविप्रकृष्टयोस्तुल्यकालग्रहणं न सम्भवेत्। यानि रसनादीनि प्राप्यकारीणि वर्तन्ते, तानि समीपस्थितं दूरस्थितञ्च पदार्थं समकालमेव न गृह्णन्ति, गृह्येते च चक्षुषा शाखाचन्द्रमसौ संनिकृष्टविप्रकृष्टौ नयने विस्फारिते समकालमेव; तस्मान्न चक्षुषः प्राप्यकारित्वम्। नन्वत्र शाखाचन्द्रमसोर्ग्रहणे नास्ति तुल्यकालता, क्षणभेदस्य तत्रापि स्वीकारात्। यथा हि कमलशतपत्रभेदस्थले वर्तमानोऽपि कालक्रमोऽतिसूक्ष्मत्वान्न लक्ष्यते, तथात्रापि चाक्षुषतेजसोऽतिशयितवेगवत्त्वेन विद्यमानोऽपि कालक्रमो न प्रतीयते। यथा च तत्र कालक्रमाग्रहणनिबन्धनः सह भिनद्मीति अनुव्यवसायस्तथात्रापि चाक्षुषतेजसोऽतितीव्रवेगवत्तया क्रमानाकलनहेतुकः तुल्यकालं पश्यामीत्यनुव्यवसायस्तथा चात्र स्वरूपासिद्धो हेतुरिति चेन्न, सर्वमेव भवत इदं मनोऽभिलषितं तदा साधु सिध्येत् यदा हि श्रीमता चक्षुषस्तैजसत्वं साध्येत, तदेव तु भवता दुःसंपादम्। तथा हि कथं चक्षुषस्तैजसता, न च तत्र भास्वररूपादिः प्रतीयते येन तस्य तैजसतां वयं प्रतिपद्यामहि। न चानुद्भूततया तत्र वर्तमानोऽपि भास्वररूपादिः न नयनातिथीभवतीत्यनेनापि तव मनोरथसिद्धिः अनुद्भूतस्य तस्य सुवर्णादेरिव वस्तुप्रकाशकत्वायोगात्। ननु मा भवतु निःसहायस्य तस्य वस्तुप्रकाशकत्वमालोकसहकारेण तु तत् साधु संपत्स्यते अत एव चाक्षुषं तेज आलोकसाहाय्यकमपेक्षत इत्यपि न मनसि करणीयम्, तथात्वे हि घटपटादीनामपि आलोकसहकारेण पदार्थसार्थप्रकाशकत्वप्रसङ्गात्। किञ्च भवत्कल्पितालोकसहकारितापि तत्र नातीव समञ्जसा, आलोकसहायतां विनैव मार्जारोलूकादीनां गाढान्धकारेऽपि निर्विघ्नं चाक्षुषप्रत्यक्षोदयात्। तस्मान्न नेत्रस्य तैजसत्वसिद्धिः। किञ्च चक्षुषो रश्मिवत्त्वे चक्षुर्दृष्टकाचकूपोदरस्थितजलानां चक्षूरश्मिप्रवेशमार्गेण एष्टनमपि समापद्येत। यच्च चक्षुषस्तैजसत्वसाधकमनुमानं चक्षुस्तैजसं परकीयस्पर्शाव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वादिति, तदपि न रमणीयमञ्जनादिषु व्यभिचारात्। अपि च यदि भवत्कथनानुसारं चक्षुषो रश्मिरस्ति स च बहिर्निःसृत्य विषयं समासादयन् जनयति प्रत्यक्षं तदा हि पूर्वमुन्मील्य पश्चान्निमीलितनयनस्यापि रूपोपदर्शनप्रसङ्गः नयने निमीलितेऽपि नयनरश्मेः बहिः सत्त्वात्। न च तद् दृश्यते, तस्मान्न चक्षुषो रश्मिवत्ता, नापि च तदधीनं प्राप्यकारित्वम्। वृषदंशकादीनां नेत्रेष्वपि न रश्मयः सन्ति, किन्तु तत्र चाकचक्यमात्रमेव। एवञ्चैतत् सुदृढतर्कबलेन निःसन्देहं वक्तुं शक्यते यच्चक्षुषः प्राप्यकारिता न कथमपि साधयितुं शक्यत इति। तथा चात्र सौगतानां भवति संग्रहश्लोकद्वयम्—

"सान्तरग्रहणं न स्यात् प्राप्तौ ज्ञानेऽधिकस्य च।
अधिष्ठानाद्बहिर्नाक्षं तच्चिकित्सादियोगतः ॥१॥
सत्यपि च बहिर्भावे न शक्तिर्विषयेक्षणे।
यदि च स्यात्तदा पश्येदप्युन्मील्य निमीलनात् ॥२॥
इति

तदिदं सर्वं तथागतानामापातरमणीयमाशङ्कावचनम्। यदि सूक्ष्मया दृशा क्षणमपि बौद्धानाममूनि शुष्कतर्कजालानि प्रमाणपरीक्षोपले सुपरीक्षेरन् तदा तत्कालमेवैतत् सुखं समवबुध्येरन् विवेचनाचतुरा विमत्सरा विद्वांसो यत्ते कीदृशे सुगभीरे जले निष्क-

रश्मयः सन्तीति। अधस्तादनुपदमेव समुल्लिखिते बौद्धानां चक्षुषः प्राप्यकारित्वखण्डनसन्दर्भे समीचीनतया रश्मिनिक्षेपणेन साधितं विज्ञायते यत्तैश्चक्षुषः प्राप्य-कारित्वस्य खण्डने प्राधान्येनामी पञ्चैव हेतवः सुनिर्दिष्टाः। यथा १—सान्तरग्रहणात्, २—सान्तराद् ग्रहणात्, ३—पृथुतरग्रहणात्, ४—दिग्देशाव्यपदेशात्, ५—शाखाचन्द्रमसोस्तुल्यकालग्रहणाच्चेति। त इमे पञ्चापि हेतवः सूक्ष्मया दृशा सम्यक् पर्यवेक्ष्यन्ते क्रमेण। तत्र सान्तरग्रहणादिति योऽयं हेतुश्चक्षुषः प्राप्यकारित्वाभावे निरूपितो भवता तत्र तावदिदं भवान् प्रष्टव्यो यत् सान्तरग्रहणमित्यस्य कोऽर्थो भवतः समभीप्सितः? सान्तरस्य = अप्राप्तस्य ग्रहणमिति वा, उत सहान्तरेण ग्रहणं सान्तरग्रहणमिति वा? तत्र नाद्यः प्रतिज्ञाहेत्वर्थयोरेकत्वात्। चक्षुरप्राप्यकारि अप्राप्तस्य ग्रहणादित्यत्र नातिरिच्यते हेत्वर्थः खलु प्रतिज्ञार्थेन। द्वितीयं तु किमिदमन्तरं नाम यद्धि चक्षुषा विषयेण सह समुपलभ्यते। किमिदमाकाशम्, उताभावः, अथो रूपवत्किमपि द्रव्यान्तरम्। तत्र यद्याकाशं न तच्चक्षुषा गृह्यते, वाय्वादिवत्तस्यारूपिद्रव्यत्वात्। नाप्यभावः तस्य स्वातन्त्र्येण चक्षुर्गोचरत्वाभावात्, तेन सहोपलब्धौ च हेतोरनैकान्तिकत्वम्, गृह्यते हि प्राप्यकारिभिरपि त्वगादिभिरिन्द्रियैरौष्ण्याभावविशेषणं शिशिरतरं वारि, न चेन्द्रियाणामत्राप्राप्यकारिता। न च किञ्चन रूपवद् द्रव्यान्तरम्। तस्य व्यवधायकत्वेन सहग्रहणानुपपत्तेः। न चैतदतिरिक्तः पन्थाः, तस्मात् सान्तरग्रहणादिति हेतुर्न विचाररमणीयः। यदपि सान्तराद् ग्रहणादिति द्वितीयं कारणं बौद्धानां तदपि निःसारम्। यतो हि न सान्तरनिरन्तरे इन्द्रियप्राप्त्यप्राप्तिनिमित्ते स्तस्तत्र। अपि तु शरीरावधिनिमित्ते ते। यत्र हि शरीरमिन्द्रियञ्चोभय-मप्यर्थेन सम्बध्यते तत्र निरन्तरमिति ग्रहणं भवति। यत्र तु पुनरिन्द्रियमेव केवलं संयुज्यतेऽर्थेन, तत्र सान्तरमिति ग्रहणं व्यपदिश्यते। एवञ्च चक्षुषा यत्सान्तरं गृह्यते न तेन मन्तव्यं यच्चक्षुषो विषयेण सह प्राप्तिर्नास्तीति। न खलु तत्र सान्तरशब्देन विषयचक्षुषोरन्तरं विवक्षितमपि तु शरीरविषययोस्तत्रान्तरं समभिधित्सितम्। तस्मात्सान्तरग्रहणस्यान्यनिमित्तत्वान्न तेन चक्षुषोऽप्राप्यकारितायाः भ्रान्तिः कर्तव्या। योऽपि तृतीयो हेतुः पृथुतरग्रहणादिति निर्दिष्टो बौद्धैः सोऽपि न विवेचनसुन्दरः। यस्मात्तत्र हि सम्बन्धमात्रेण महदण्वोर्ग्रहणं समुपपद्यते। दृष्टो नाम लोके महति वाणौ वा सम्बन्धमात्रेणैव विषयभेदानुविधायी प्रत्ययः समुपजायमानः। इदमत्राकूतम्—चतुर्विधो ह्यत्र विषयेन्द्रिययोः सम्बन्धः परिदृश्यते—यथा इन्द्रियेणार्थस्य इन्द्रियावयवैरर्थस्य, अर्थावयवैरिन्द्रियस्य इन्द्रियावयवैरर्थावयवानाम्। न चेदं निर्गच्छत इन्द्रियस्यान्तरेण पृथग्गतां संभवति। तस्मात् यथा वर्तिप्रदेशे पुञ्जीभूतमपि तेजः प्रसर्पत् सकलमपि भवनोदरं व्याप्नोति पृथक्त्वात् तथा स्वभावतः प्रसरन्नपि चाक्षुषो रश्मिर्न स्वपरिमाणानुविधायिनं प्रत्ययमाधत्ते, किन्तु विषयभेदानुविधायिनं प्रत्ययमेव। दृष्टानि खलु ज्ञानानि विषयनिरूपणाधीननिरूपणान्येव न तु इन्द्रियनिरूपणाधीननिरूपणानि। तस्मान्नानेन हेतुना चक्षुषोऽप्राप्यकारिता कथमपि सुसाधा। दिग्देशाव्यपदेशोऽपि हि चाक्षुषज्ञाने शरीरावधि निमित्त एव, न विषयाप्राप्तिनिबन्धनः। यत्र हि शरीरमिन्द्रियञ्चार्थेन संयुज्यते तत्र न भवति दिग्देशाव्यपदेशः दूरान्तिकानुविधानं वा। यत्र तु केवलमिन्द्रियमेवार्थेन सम्बध्यते तत्र शरीरात् यदर्थस्य दूरत्वं नैकट्यं वा पूर्वत्वं पश्चिमत्वं वा तन्निबन्धनमत्र संनिकृष्टविप्रकृष्टत्वव्यवहारो दिग्देशव्यवहारश्च समुपपद्यते

तस्माद्दिग्देशव्यपदेशादपि हेतोर्न सिद्ध्यति चक्षुषोऽप्राप्यकारिता। यश्च शाखाचन्द्रमसोर्युगपद्ग्रहणादिति पञ्चमो हेतुः सौगतानां तत्र निगदामः युगपद्ग्रहणं खल्वसिद्धं तत्रापि कालभेदस्याङ्गीकारात्। तुल्यकालं पश्यामीत्यभिमानस्तु चाक्षुषतेजसोऽतिवेगवत्त्वेन क्रमानाकलननिबन्धनो न तु युगपद्ग्रहणनिमित्तः। दृश्यते हि विलक्षणो लाघवातिशयेन तेजसो वेगातिशयो यदुदयाचलशिखरमधिरोहत्येव तपनमण्डले गृहप्राङ्गणे प्रकाश इत्यभिमानो लौकिकानाम्। पूर्वं हि भास्वानुदेति तदनु च भवति भवनोदरेष्वालोकः। परं लौकिकास्तु तेजसोऽतिलाघवेन क्रमानाकलनेऽप्रभविष्णवः युगपदेव तद्द्वयं भवतीति समभिमन्यन्ते। तथाविधमेवास्ति चाक्षुषमपि तेजोऽतः क्रमेणापि गच्छत्तत् लाघवातिशयेन युगपत्तत्र तत्र प्राप्तमिति प्रतीयते। नचैकस्मादेव कर्मणो युगपद् दूरान्तिकसंयोगाः संभवितुमपि शक्नुवन्ति। स्वकार्यं साधयद्धि कर्मावश्यं स्वाश्रयप्रत्यासत्तिमपेक्षते, अन्यथा काश्यां स्थितस्य देवदत्तस्य कर्म प्रयागेणापि तं संयोजयेत्। वेगाख्यसंस्कारजापि क्रिया न सहसा बाणं लक्ष्येण मध्यवर्तिदेशेन च संबध्नाति। तस्मादुत्पलदलशतव्यतिभेदवन्मिथ्याज्ञानमेतद् यद् युगपत् शाखाचन्द्रमसोर्ग्रहणमिति। न चायमसति बाधकज्ञाने-कथं मिथ्याप्रत्ययो बाधज्ञानं विना मिथ्यात्वायोगादिति वाच्यम्, बाधस्य विद्यमानत्वात्। तथा हि चक्षुर्यदि अगत्वानागतमर्थं गृह्णीयात्तर्हि किमस्य कुड्यकटाद्यावरणमपकुर्यात् येन तदावृतमिदं न गृह्णातीति। चक्षुषो गतिस्वीकारे तु प्रसादरहितेन कुड्यकटादिनास्य गतिरवरुध्यत इति नेदं विषयं प्राप्नोति अप्राप्तं च न गृह्णातीति युक्तमेव। प्रयोगश्चात्र भवति—चक्षुरिन्द्रियं प्राप्य स्वविषयं कार्यं कुरुते जनकत्वे सति तदप्राप्तावजनकत्वात्। यज्जनकं सद् यदप्राप्तौ यन्न जनयति तत् तत्प्राप्तावेव तज्जनयति। यथा कुम्भजनको मृदामप्राप्तावकुर्वन् कुम्भं तत्प्राप्तावेव करोति तथा चेदं तस्मात्तथेति।

किञ्च चक्षुश्चेदप्राप्यार्थं गृह्णीयात्तदातिदूरवर्तिनमप्यर्थमिदं गृह्णीयादेव अप्राप्तेस्तत्राप्यविशेषात्, न चातिदूरवर्तिनमर्थं चक्षुरुपलभते। यद्युच्येत-सम्बन्धाभावादतिदूरवर्तिनं न गृह्णात्यर्थमिति तर्हि समीपस्थितमपि वस्तु सम्बन्धाभावाच्चक्षुर्न गृह्णीयादेव। प्राप्यकारित्वस्वीकारे तु चक्षुषः समाधिः सुकरः-दूरं गच्छत् प्रक्षीणं सच्चक्षुस्तैजसं पदार्थं न गृह्णाति तैजसमपि अभिभूतं न गृह्णाति यथोल्काप्रकाशं मध्यन्दिने। अनभिभूतन्तु दूरवर्तिनमपि तैजसं पदार्थं गृह्णात्येव। यथा मार्तण्डमण्डलमिति। न च यच्चक्षुषो विषयो भवति तद् गृह्णाति चक्षुर्यच्च न भवति विषयश्चक्षुषस्तन्न गृह्णातीति विषयीभावाभ्युपगमेन व्यवहितातिविप्रकृष्टयोश्चक्षुर्विषयीभावाभावेन अप्राप्यकारितापक्षेऽपि समाधिरीषत्कर इति वाच्यम्, इन्द्रियार्थसम्बन्धव्यतिरेकेण विषयीभावस्यान्यस्य असत्त्वात्। विषयीभाव इति सम्बन्ध इति नार्थान्तरम्, शब्दमात्रन्तु केवलं भिद्यते, भवता कथ्यते विषयीभाव इति मया तु कथ्यते सम्बन्ध इति नार्थतस्तु कश्चिद् भेदः। तस्मादगत्या चक्षुषः प्राप्यकारित्वं स्वीकर्तव्यम्। अस्ति च चक्षुषः प्राप्यकारित्वे सुदृढमनुमानं प्रमाणं यथा चक्षुः प्राप्यकारि इन्द्रियत्वात् घ्राणादिवत्, चक्षुः प्राप्यकारि करणत्वात् कुठारादिवदित्यादि। यच्च कृष्णसारानुग्रहोपघाताभ्यां दर्शनादर्शनयोर्दर्शनात् कृष्णसारस्यैवेन्द्रियत्वमिति प्रत्यपादि बौद्धैस्तदपि न समीचीनम्, अधिष्ठानस्यानुग्रहोपघाताभ्यामपि अधिष्ठेयस्यानुग्रहोपघातदर्शनात्। दृश्येते हि कूष्माण्डलतासेचनच्छेदनाभ्यां तत्फलस्यानुग्रहोपघातौ। अत एव निर्गतपक्ष्म[illegible] चक्षुःसन्तति-

कार्याय समर्था न च्छिन्नमूला। अत एव च चक्षुषि रोगाक्रान्ते तदधिष्ठानकृष्णसारस्य चिकित्सादिप्रयोगोऽपि सूपपन्नः। एतेन चक्षुषो रश्मिवत्त्वे रश्मिनिर्गमनानन्तरं निमीलितनयनस्यापि रूपोपलब्धिप्रसङ्ग इति बौद्धानामाशङ्कापि परास्ता; अच्छिन्नमूलाया एव चक्षूरश्मिसन्ततेः रूपोपलम्भनसामर्थ्यात्। यत्तु नैयायिकोक्ते चक्षुषस्तैजसत्वानुमाने अञ्जनादिषु व्यभिचारः प्रादर्शि सौगतैस्तदपि तेषां भ्रान्तिविलसितमेव यतो हि नाञ्जनादीनामर्थप्रकाशकत्वमपि तु तेषां मालिन्यादिप्रतिबन्धकापनायकत्वमात्रमेव, तस्मान्न तत्र व्यभिचारः। किञ्च प्रभादृष्टान्ते अञ्जनादिषु नास्ति व्यभिचारशङ्कापि। मार्जारादिनेत्रेष्वपि रश्मिरेव समासाद्यते न चाकचक्यमात्रम्। अन्यथा चाकचक्यविशिष्टकाचरजतादीनां यथान्धतमसे प्रत्यक्षं न भवति तद्वत् मार्जारादिनेत्राणामपि गाढे तमसि प्रत्यक्षं नोदयेत्। अत एव खद्योताङ्गारवत् पदार्थान्तराप्रकाशकत्वेऽपि स्वयं तेजस्त्वादेव तन्नेत्रं गहनेऽपि अन्धकारे सुप्रकाशते। तस्मादगत्या तत्र रश्मिः स्वीकरणीय एव। यत्तु चक्षुषो रश्मिवत्वे चक्षूरश्मिमार्गेण काचकूपोदरगततोयानां प्रपातः सम्भवेदिति समाशङ्कितम्, तदिदं तेषां बालिशतामेव सुव्यनक्ति। प्रखरतररविकिरणनिकरसरण्या चेन्न प्रपातो भवति काचकूपोदरगतजलानां सोऽयं नयनरश्मिमार्गेणैव कथं संभविष्यतीति। तस्मान्न चक्षुषो रश्मिवत्वे कश्चन विप्रतिपत्तिलेशोऽपीति सुनिर्व्यूढा चक्षुषः प्राप्यकारितेति सर्वमवदातम्।

इति सच्छास्त्रमार्गेण साधिता प्राप्यकारिता।
चक्षुषस्तेन प्रीणातु सोऽयं गिरिधरः प्रभुः॥

---

# शब्द और नाम

[ले० डा० राजा श्रीबलदेवदासजी बिरला, काशी]

ग्रन्थ में, पुस्तक में, किताब में और छापा में मनुष्य के हाथ से लिखा हुआ रहता है। इन चारों चीजोंको कानसे सुनकर और आँख से देखकर आपके शरीरमें मनके, चित्तके ज्ञानसे शब्द समझता है और शरीर के बाहर में नाम का रूप देख कर पहचानता है और दूसरों को कहकर बतलाता है, यह बात शरीर के बिना नहीं होती।

## व्याख्या

"अनाश्रितः कर्मफलं कार्यं कर्म करोति यः"

बो शरीर उनके आसरे है और बो शरीर उनके आसरे है। क्योंकि कर्म शरीर से होता है। कर्म फल दूसरे शरीर को देता है और दूसरे का आप लेता है। फल शरीर भोगता है जिससे जीता है। संसार में शरीर ही आप आपको कार्य है। कर्म शरीर से होता है और वही कर्मफल दूसरे के काम आता है। जैसे कारखाना है। कारखाने का मालिक मजदूरों से न्यारा है। बाकी मालिक मजदूरों को देता है और मजदूर मालिकको देते हैं। जिससे मालिक और मजदूर एक दूसरे के आसरे है या समझ लीजिये, शरीर अन्न बोता है, पैदा होता है तब दूसरा खाता है इससे सब शरीर ही अन्न है। वह उसके वास्ते है और यह उसके वास्ते है; यही 'अनाश्रितः कर्मफलं' हुआ और शरीर है तभी दूसरे का काम बनता है और दूसरे से आपका कार्य बनता है क्योंकि कार्य ओतप्रोत है। यही 'कार्यं कर्म करोति यः' हुआ।

# दर्शनानां विरोधः

लेखिता-स्वर्गीयविद्यावाचस्पतिः पट्टरम्भा शास्त्री, वेदान्तसाहित्याचार्यः, व्याकरण-तर्क-काव्यतीर्थः, पुराणरत्नम्
भू० पू० महाराज० संस्कृत-कालेजाध्यक्षः, जयपुरम्

## ( उपोद्घातः )

इह खलु जगत्यशेषा अपि पुरुषा वपुषा वचसा चेतसा चानवरतं धर्मार्थकाममोक्षाणामेकैकतमं कमप्यर्थयमानाः प्रतीतिपथमवतरन्तीति पुरुषैरर्थ्यमानत्वात्त एव ( धर्मार्थकाममोक्षा एव ) पुरुषार्था इति जागर्त्ति तैर्थिकानां निर्णयः। इत इतर इवापि ये केचन पदार्थाः पुरुषैरर्थ्यमानाः समुपलभ्यन्ते ते समेष्वेष्वेव समाविशन्त इति चत्वार एव पुरुषार्था इत्यवधारणं न खलु नोपपद्यते प्रेक्षावताम्। तेषु च चतुर्षु पुरुषार्थेषु पुरुषैरर्थ्यमानत्वाविशेषेऽपि निरपायत्वान्निरुपमनिर्वृतिरूपत्वात् 'न स पुनरावर्त्तते', इत्यादि श्रुतिशतोपगीतत्वाच्च मोक्ष एव परमत्वं ( परमपुरुषार्थत्वं ) श्रयतीत्यत्र न श्रयते कश्चिदपि विपश्चिल्लेशतोऽपि संशीतिम्। को हि समीक्षादक्षचक्षुरनपायिनममन्दमानन्दं विहाय सापायं तदवरं च तमासादयितुं प्रयतेत? एवञ्चोदीरितेषु धर्मादिचतुर्षु मोक्ष एव निकामं काम्यतेऽधिगन्तुं चेतनाचुञ्चुभिरिति को वा न मन्वीत मतिमान्? तदधिगमश्च नान्तरेण तत्त्वज्ञानमर्हति जातु सम्भवितुमिति चास्ति निश्चप्रचमेव। 'तमेव विदित्वातिमृत्युमेति। नान्यः पन्था विद्यतेयनाये'ति श्रुतिरपि निरुक्तमेवार्थं समर्थयते। तत्त्वज्ञानञ्चोदयशिखरिशिखरादन्यतो भानुमानिव नोदयते जातु दर्शनशास्त्रीयतत्त्वविवेचननिचयादन्यत इति हन्त पर्यन्ते दर्शनेष्वेवायतते मनुजनुषां परमं श्रेय इति निगमने न मनागप्यादधाति पदमर्थवादगन्धः।

## दर्शनशब्दार्थनिर्वचनम्

तानि च दर्शनानि दृश्यते-साक्षात्क्रियते तत्त्वमेभिरिति निरुक्त्या तत्त्वसाक्षात्कारकरणतामाकलयन्तीति जानन्त्येव संख्यावन्तः। तेषु चास्तिकनास्तिकप्रस्थानपार्थक्येन द्वैताद्वैतादिराद्धान्तभेदेन चान्योन्यभिन्नतया भासमानेष्वपि भूयस्सु दर्शनेषु सूक्ष्मसमीक्षया वस्तुतः षडेव दर्शनानीति मनीषिभिर्निर्णीतत्वात्, परमप्रसिद्धत्वाद्, गभीरतरविचारचणत्वाद्, अध्ययनाध्यापनयोरतिप्रथितत्वाच्च काणादादिषड्दर्शनीमेवाधिकृत्य लघुकायेऽस्मिन् निबन्धे किञ्चन विविनच्मि। 'संस्कृतरत्नाकरो'यदर्शनाङ्कसमितिसञ्चालकमहाभागैः प्रकाशितं 'दर्शनानां विरोध' इति विषयमालक्ष्य समीक्षे किञ्चिदिति यावत्।

षड्दर्शनीशब्देन चात्र काणाद-गौतम-कापिल-पातञ्जल-जैमिनीय-वैयासिक-दर्शनानि विवक्ष्यन्त इति नो न ज्ञास्यन्ति प्रज्ञावन्तः। एतान्येव च प्राधान्येनास्तिकदर्शनत्वेन समाख्यायन्ते संख्यावद्भिः।

## षड्दर्शन्या आस्तिकत्वव्यवस्थापनम्—

अथैषा केषांचिद् विदुषां विप्रतिपत्तिरत्रोदयते—यद् अस्ति परलोक इति वाच्ये। 'अस्ति नास्ति दिष्टं मति'-रितिपाणिनिसूत्रेण व्युत्पादित आस्तिकशब्दो यद्यपि परलोकमात्रास्तित्वमभ्युपगच्छतः पुरुषस्यास्तिकत्वं वगमयति तथापि परलोकपदस्य तत्रोपलक्षणत्वेन परलोकं वेदमीश्वरं च सत्त्वेनावगच्छन्नेव पुरुषः प्रथते लोके शास्त्रे चास्तिकव्यपदेशेन। तथा च

तादृक्पुरुषप्रणीतैरेव दर्शनैरास्तिकव्यपदेशभाग्भिर्भवितव्यमिति सुतरामेव पर्यवस्यति। ततश्च ज्ञानविज्ञाननिधानमाम्नायं साक्षात् परम्परया वा मूलमाकलयन्ति परलोकमीश्वरं चाभ्युपगच्छन्ति दर्शनान्येवास्तिकदर्शनत्वेनास्थातुं शक्यन्त इत्यकामेनाप्यूरीकर्तव्यमापतति। एवञ्च गौतम-पातञ्जल-वैयासिकदर्शनेषु वेदेश्वरयोरुभयोरभ्युपगमेन सङ्गच्छतान्नामास्तिकदर्शनत्वम्। काणाद-कापिल-जैमिनीयदर्शनेषु पुनः कथङ्कारमास्तिकत्वं शक्यमास्थातुम्? आद्ये ईश्वराङ्गीकारेऽपि शब्दप्रमाणानङ्गीकरणेन वेदप्रामाण्यानङ्गीकारात्। अन्त्ययोर्वेदप्रामाण्याभ्युपगमेऽपि ईश्वरानभ्युपगमात् इति चेन् सत्यम्। देहादिव्यतिरिक्तमात्मानमीश्वरं चामन्यमानानां चार्वाकादीनां मतनिरास एव नितरां परायणेन महर्षिणा कणादेन देहादिव्यतिरिक्तात्मेश्वरयोः साधनेन तन्मतमपाकृत्य कृतकृत्यम्मन्येन वेदप्रामाण्यानङ्गीकारेऽपि "यतो वा इमानि भूतानि जायन्ते" "विश्वस्य कर्ता भुवनस्य गोप्ता" इत्यादिश्रुतिशतगीतमेव जगतः कर्त्तारमीश्वरमूरीकुर्वता कण्ठतो वेदप्रामाण्यानभ्युपगमेऽपि स्वरसतोऽभ्युपगमनमेव तदिति भूयत एव तेन कथञ्चिदास्तिकव्यपदेशभाजा।

कापिलं तु दर्शनं भगवदन्यतमावतारेण महर्षिणा कपिलेन वेदमाधृत्यैव प्राणायीति भवति निर्विचिकित्समेवास्तिकम्। ईश्वरासिद्धेरिति सूत्रेणेश्वरप्रत्याख्यानं तु गुणत्रयसाम्यावस्थारूपया प्रकृत्यैव प्रपञ्चोत्पत्तिनिष्पत्तौ न तदर्थमीश्वरोऽङ्गीकरणीयो यथा तार्किकैस्तदर्थमेव सोऽङ्गीक्रियत इत्यभिप्रायकम्। अत एवोक्तं विज्ञानभिक्षुभिः—

"सांख्यशास्त्रस्य पुरुषार्थतत्साधनप्रकृतिपुरुषविवेकावेव मुख्यो विषय इतीश्वरप्रतिषेधांशबाधेऽपि नाप्रामाण्यम्। यत्परः शब्दः स शब्दार्थ इतिन्यायात्।"

अथ जैमिनीयं तु दर्शनमामूलचूलं वेदार्थं—धर्ममेव विचारयितुमारब्धमिति न शक्यते तत् कथङ्कारमपि नास्तिकतां लम्भयितुम्। ईश्वरः किमिति तत्र नाभ्युपगम्यत इति चेन् सत्यम्। कर्मण एव पुरुषार्थचतुष्टयसंसारस्थित्याद्युपपत्तौ नावश्यकत्वमीश्वरस्येति कर्मस्तुत्यर्थमेव तैस्तथाऽभ्युपगम्यते। द्रव्यदेवतारूपं कर्मस्वरूपद्वयं स्वीकुर्वाणास्ते मन्त्रमय्या देवतायाः स्वीकरणेन प्रकारान्तरेण स्वीचक्रुरेवेश्वरमिति न तद्दर्शनमपि शक्यं लेशतोऽपि नास्तिकतयाऽभियोक्तुम्। तदुक्तं पराशरोपपुराणे—

> 'अक्षपादप्रणीते च काणादे सांख्ययोगयोः
> त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्येकशरणैर्नृभिः।
> जैमिनीये च वैयासे विरुद्धांशो न कश्चन
> श्रुत्या वेदार्थविज्ञाने श्रुतिपारङ्गतौ हि तौ॥

एवञ्च काणादादीनि षडपि दर्शनानि सन्त्यास्तिकानीति सुतरामेव व्यवतिष्ठते।

## समासतः षड्दर्शन्याः स्वरूपप्रदर्शनम्

अथैतेषां प्रागुदीरितानां दर्शनानां पारस्परिको विरोधो नावधारयितुं शक्यते, ऋते तत्स्वरूपोपदर्शनादिति प्रथमं तेषां स्वरूपमेवोपदर्शयामि समासेन—

### १—काणाददर्शनम्

कणादेन महर्षिणा प्रणीतं दर्शनं काणादमिति निगद्यते। एतदेव च विशेषनामकमेकं पदार्थमधिकृत्य कृतमिति वैशेषिकमित्यपि व्यपदिश्यते। अथ कथमिदं दर्शनमौलूक्यदर्शनेतिनाम्ना व्यपदिश्यत इतिचेन् अत्र केचिन् उलूक इति कणादस्य कौलिकमुपनामासीदिति तदाधृत्यैवौलूक्यनाम्ना दर्शनमिदं व्यपादेशि माधवाचार्येण। अपरे तु—उलूको यथा दिवाकरकरप्रकरभास्वरेऽपि वासरे भासमानानपि पदार्थान्

नाखिलत्रीकर्तुं प्रभवति तथा कणादोऽपि निखिलप्रमाणप्रकाशे देदीप्यमानमपि वेदं प्रमाणतया नावलोकयितुमशक्नोदिति स उलूक इति व्यपदिश्यते सादृश्येनोपचारात्। तदीयं च दर्शनमौलूक्यदर्शनमिति सोपहासं सङ्गिरन्ते वैदिकदर्शनपक्षपातिनः प्रेक्षावन्तः। शारीरकभाष्यकारास्तु कणादमर्धवैनाशिकं प्रचक्षते।

दर्शनेऽस्मिन् महर्षिः कणभक्षो द्रव्यगुणकर्मसामान्यविशेषसमवायाख्यान् षट् पदार्थानभ्युपगम्य तेषामेव सविशेषज्ञानादुपगम्यतेऽपवर्गो जनिमद्भिरित्युररीकरोति। अत एवासौ "धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसमिति" सूत्रयाञ्चकार। प्रमेयाणामेषां प्रमितये प्रत्यक्षमनुमानं चेति द्वे एव प्रमाणे सोऽभ्युपगच्छति। चेतनादीश्वराद् ब्रह्मणो वोपादानाद् जगदुत्पत्तौ स्वीक्रियमाणायां जगतश्चैतन्यमापद्येत कारणगुणप्रक्रमेण कार्यगुणारम्भस्य दृष्टत्वात्। यथा शुक्लेभ्यस्तन्तुभ्यः शुक्ल एव पटो जायते न जातु कृष्णः। एवमेव चेतनारब्धमाकाशादि सर्वं चेतनमेव जायेत नत्वचेतनम्। तस्मादचेतनेभ्यः परमाणुभ्य एवासौ जगदुत्पत्तिमाशिष्टते। परं तदुत्पत्तौ निमित्तहेतुन्तु परमेश्वरमेवोररीकरोति। कः खलु परमेश्वरमन्तरेणोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वरूपं प्रपञ्चकर्तृत्वमधिगन्तुमीशीत। अपेक्षाबुद्धिजन्यं द्वित्वादि पाकजोत्पत्ति विभागजविभागञ्चायमङ्गीकरोति। अत एवैतद्विषये प्रसिद्धयतीदमाभाणकम्—

**द्वित्वे च पाकजोत्पत्तौ विभागजविभागजे।**
**यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदुः॥ इति**

मोक्षश्चैतेन एकविंशतिविधदुःखध्वंस इत्युपगम्यते सत्यपि मोक्षे जीवो न परमेश्वरेणैक्यमाकलयति किन्तु साम्यमेवेति चेति दिक्।

## २—गौतमदर्शनम्।

गोतमेन महर्षिणा प्रणीतं दर्शनम् गौतमदर्शनमित्युदीर्यते। एतदेव दर्शनमाक्षपाददर्शनमपि भण्यते। अक्षपाद इति भगवतो गोतमस्यैवान्वर्थमभिधानान्तरम्। एवं हि तत्राख्यानकं प्रचरति यद् गुरुकुले विद्याध्ययनाय निवसन् निरतिशयतीक्ष्णधिषणोऽतितरां वस्तुतत्त्वभावनशीलश्च गोतमो जातु मार्गे गच्छन् भावनापरायणतया पुरः समापतितमपि कूपमपश्यँस्तत्रैव निपपात। आसीच्चासावतिभूमिं गतः शीतर्तुरिति शीतेनातितरां बाध्यमानोऽप्यनायत्याधिकूपमेवाहोरात्रं निनाय। प्रातः कूपादुदकमुद्धर्तुमागतवत्या कयाप्युदकहारिण्या व्यथमानतया मन्दं क्रन्दन् व्यज्ञायि। तया चाहूतैर्जनैः कथञ्चित् कूपादुदधारि। आनायि च तदनागमनेनातिचिन्तितस्य गुरोः सकाशम्। ततस्तदीयक्लेशेनातितरां तस्य दयमानो गुरुस्तस्मै 'अद्यप्रभृति तव पादावपि चक्षुषी इव चाक्षुषं ज्ञानं जनयितुं प्रभवेताम्; त्वं यथेच्छं पदार्थान् भावयन् व्रज' इति वरं प्रादात्। ततोऽसावन्वर्थेनाक्षपाद इति नाम्ना पप्रथे। इदमेव च दर्शनमान्वीक्षिकीशब्देनाऽपि च व्यपदिश्यते या खलु तैर्थिकैरेवमुपस्तूयते—

**प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्;**
**आश्रयः सर्वधर्माणां विद्योद्देशे परीक्षिता। इति।**

अथैतद्दर्शनं न्यायशब्देन कथमुच्यत इति चेत्? इत्थम्—'प्रतिज्ञाहेतूदाहरणोपनयननिगमनान्यवयवाः' इति सूत्रोक्तावयवपञ्चकस्य परार्थानुमानस्यास्ति न्याय इति संज्ञा, सैव लक्षणया शास्त्रेऽपि प्रयुज्यते

इति। तर्कशब्दप्रयोगेऽप्ययमेव गतिः, तर्कस्य तच्छास्त्रीयान्यतमपदार्थत्वात्।

दर्शनेऽस्मिन् तार्किकमतज्ञो भगवानक्षपादः प्रमाणादीन् षोडश पदार्थानभ्युपगच्छति। तांश्च षोडशापि द्रव्यादिषु सप्तस्वेवान्तर्भावयन्त्यर्वाचीनाः। तेषामेषां प्रमाणे प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रोदितानि चत्वारि प्रमाणान्यूरीकरोति। एष च भूम्ना काणाददर्शनमनुसरन्नपि तद्वैलक्षण्येन प्रमाणद्वयमधिकमूरीकृत्य वेदमपि प्रमाणं मन्वानः स्वीयामास्तिकतां द्रढयाञ्चकार। जगतः सृष्टिञ्चायमपि कणभक्ष इवैव परमाणूनामुपादानत्वेन परमेश्वरस्य निमित्तत्वेन चाभ्युपगच्छति। जगत्कर्तृत्वेनैव च परमेश्वरमनुमिनोति। अनुमित्या साधितं च तं श्रुत्यापि द्रढयति। न तु प्रथममेव श्रुत्या साधयति। ईश्वरोच्चरितत्वेनैव श्रुतेः प्रामाण्याङ्गीकारात्। अपवर्गञ्च दुःखात्यन्तविमोक्षमेव मनुते— 'तदत्यन्तविमोक्षोऽपवर्गः' इति सूत्रेण लक्षितत्वात्। आत्मानञ्चायं ज्ञानाधिकरणं मन्यते न तु वेदान्तीव ज्ञानस्वरूपम्। सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि ज्ञानात्माभेदप्रतिपादिकाः श्रुतीः अभेदभावनयैव यतितव्यमित्युपस्ताविकाः श्रुतयः सङ्गच्छन्ते। अत एव निरञ्जनः परमं साम्यमुपैतीत्यादयः साम्यप्रतिपादिकाः श्रुतयः सङ्गच्छन्ते। मोक्षदशायामपि न जीवपरमेश्वरयोरैक्यं सम्भवति भेदस्य नित्यत्वात्। वेदञ्च पौरुषेयं मन्यते। कर्तुरस्मरणादपौरुषेयत्वं तु न शक्यते व्यवस्थापयितुम्—"छन्दांसि जज्ञिरे तस्मात्" इति श्रुतेरेव छन्दसां ततः ( परमेशात् ) जन्यत्वसिद्धेः।

## ३—सांख्यदर्शनम्

कपिलेन महर्षिणा प्रणीतं दर्शनं कापिलमित्युच्यते। एतदेव दर्शनमन्वर्थतया सांख्यमिति संगीयते। तथा हि—सम्यक् ख्यानं संख्या ( आतश्चोपसर्गे इत्यङ् ) साऽस्त्यस्मिन्निति सांख्यम् —तत्त्वज्ञानविधानसमर्थं दर्शनमित्यर्थः।

अथवा संख्या पदार्थानां गणना-तत्प्रधानं दर्शनं सांख्यम्। भवति चात्र व्यक्ताव्यक्तज्ञसंज्ञानां महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपञ्चमहाभूतेति त्रयोविंशतेर्व्यक्तानामेकस्या अव्यक्तनाम्न्याः प्रकृतेरेकस्य ज्ञस्य पुरुषस्य चेति तत्त्वानां निखिलदर्शनान्तरापेक्षयाऽधिकानां गणना प्राधान्येनेति। सास्त्यस्मिन्निति सांख्यम्।

दर्शनेऽस्मिन् सत्वरजस्तमसां साम्यावस्थास्वरूपायाः प्रकृतेरेव प्रपञ्चकर्तृत्वम्। पुरुषस्य तु पुष्करपलाशवन्निर्लेपस्यापि चेतनतया जडायां प्रकृत्यां चैतन्याभिमानसम्पादकत्वम्। अचेतनानां भोग्यानां भोक्तृत्वञ्चेति द्वयमेव कृत्यम्। जगत आरम्भश्च प्रकृतेरेव। तदुक्तम्—

'प्रकृतेर्महान् महतोऽहङ्कारस्तस्माद् गणश्च षोडशकः।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि'

ततश्च प्रकृतेरेव जगदुत्पत्तौ सिद्धायामीश्वरो नावश्यक इत्याचष्टे। आधिभौतिकाधिदैविकाध्यात्मिकेति दुःखत्रयात्यन्तिकनिवृत्तिमेवापवर्गमङ्गीकरोति। स चापवर्गो व्यक्ताव्यक्तज्ञविज्ञानात् सत्वपुरुषान्यताख्यातिरूपः परिणमते। सति चापवर्गे स्वरूपविनिवृत्तिः पर्यवस्यति। अचेतनाच्चेतनोत्पत्तिञ्च वत्सविवृद्धयेऽज्ञस्य क्षीरस्य प्रवृत्तेर्दृष्टान्तेन समर्थयति।

## ४—पातञ्जलदर्शनम्।

योगिनो हि सांख्याभिमतामेव सृष्टिप्रक्रियां तदभिमतान्येव तत्त्वानि त्रीणि प्रमाणानि चाभ्युपगच्छन्तोऽपि तद्वैलक्षण्येन 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति लक्षणलक्षितमीश्वरमुररीकृत्य स्वीयं दर्शनं नास्तिकताकलङ्कपङ्कतः क्षालयाम्ब-

भूवुः। चित्तवृत्तिनिरोधरूपं समाधिं संप्रज्ञातासंप्रज्ञातत्वाभ्यां सविकल्पकनिर्विकल्पकत्वापरपर्यायं द्विधा भिद्यमानं कैवल्यं मन्यते। चित्तवृत्तिनिरोधरूपस्य-योगस्य यमनियमासनप्राणायामप्रत्याहारधारणाध्यान-समाधयोऽष्टावङ्गानि स्वीकुर्वते। निरुक्तयोगस्य प्राधान्येन कैवल्यफलकत्वेऽपि अवान्तरफलानि निरुपमसिद्धिरूपा विभूतयो विजृम्भन्ते। अत एव समाधिसाधनविभूतिकैवल्याख्यान् चतुरः पादान् प्रणिनाय भगवान् पतञ्जलिः।

## ५—मीमांसादर्शनम् ( जैमिनीयदर्शनम् )

अथातो धर्मजिज्ञासेत्यादिना द्वादशलक्षणीं मीमांसां निर्म्मिमाणो भगवान् जैमिनिस्तु स्वानुष्ठितादखिलमभीष्टं सिद्ध्यतीति स्वीचकार। तत एव च निष्कामरूपेणानुष्ठितादपवर्ग इति नावश्यकमीश्वरोपासनादेरिति मुधा तदभ्युपगम इत्यातिष्ठते। एष शब्दस्य नित्यतां वेदस्यापौरुषेयताञ्चाभ्युपगच्छति। यागादिमेव च धर्मं मनुते—'चोदना लक्षणोऽर्थो धर्म' इति तल्लक्षणात्। चोदना च विधिवाक्यमेव। चोदनापदस्य च वेदमात्रपरत्वमभ्युपगम्य विधिमन्त्रनामधेय-निषेधार्थवादानां पञ्चानामपि वेदभागानामविशेषेण यागादिधर्मार्थकतां ब्रूते। उत्पत्तिविनियोगप्रयोगाधिकारभेदेन विधेश्चातुर्विध्यमूरीकुरुते। तत्र विनियोग-विधेरङ्गत्वेन श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्या-संज्ञानि षट् प्रमाणानि प्रयोगविधेरङ्गत्वेन श्रुत्यर्थ-पाठादीनि षट् क्रमबोधकानि च प्रमाणानि संगिरते। मीमांसाशब्दस्य च विचारे लक्षणया धर्मविचारशास्त्रमेतदिति व्यवस्थापयति।

## ६—वैयासिकदर्शनम्

अथातो ब्रह्मजिज्ञासेत्यादिना चतुर्भिरध्यायैः शारीरकं मीमांसमानो भगवान् व्यासश्च सकलानां वेदान्तानाम् ( उपनिषत्प्रमाणानाम् ) अद्वये ब्रह्मणि तात्पर्यं सङ्गिरमाणो ब्रह्मैवाद्वितीयं वस्तु तद्भिन्नं सर्वं मिथ्येति प्रतिजानीते। संसारावस्था पारमार्थिकावस्था चेत्यवस्था-द्वयं भावानामुपगच्छति। पारमार्थिकी व्यावहारिकी प्रातिभासिकी चेति सत्तात्रयं पदार्थानामुररीकरोति। प्रत्यक्षानुमानागमार्थापत्त्यनुपलब्धिसंज्ञानि षट् प्रमाणानि मनुते। पारमार्थिकावस्थायां तत्त्वमस्यादि-वाक्यमखण्डमेवाखण्डब्रह्म प्रतिपादयति। व्यवहारावस्थायां व्यवहारभट्टनय इति सिद्धान्ताद् भट्टमीमांसकवदेव पदार्थजातमुपगच्छति। जीवब्रह्मणोश्चाविद्याकृतमेव भेदं संगिरते। तत्त्वमस्यादिमहावाक्यैर्ब्रह्मसाक्षात्कारे जाते जीवब्रह्मणोरैक्यं सम्पद्यते। 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' इति श्रुतेः। इत्यादि—

इत्थञ्च समेषामेषां दर्शनानां मोक्षोद्देश्यकत्वेऽपि पारस्परिको विरोधो निर्विरोधं जागर्तितराम्। तथा हि वैशेषिकः शब्दप्रमाणमेव नोरीकरोति, दूरे तन्मते तत्त्वमस्यादिवाक्यैर्ब्रह्मसाक्षात्कारस्य वार्त्ता। अथ चासौ निश्श्रेयसेऽपि जीवेश्वरयोर्भेदमभ्युपगच्छन् द्वैतमेव डिण्डिमघोषमुद्घोषयति। परमाणोश्च सृष्टिमुररीकुर्वाणो जड़ादेव जगदुत्पत्तिमुपगच्छति।

नैयायिकश्च शब्दप्रमाणमभ्युपगच्छन्नपि ईश्वरोक्तत्वेन वेदस्य प्रामाण्यमनुमनुते। वैशेषिक इवैव च मोक्षेऽप्याचष्टे जीवेश्वरयोर्भेदम्। परमात्मानञ्च ज्ञानाधिकरणं स्वीकरोति न तु ज्ञानस्वरूपम्। यतो वा इमानि भूतानि जायन्त इति श्रुतिसिद्धं ब्रह्मणो जगदुत्पत्तिमवधूय परमाणोस्तामुररीकुर्वन् सुतरामेव अवैदिकीं सृष्टिप्रक्रियामाकलयति। एतस्मादात्मन आकाशः सम्भूत इत्यादि श्रुतिसिद्धमाकाशस्योत्पन्नत्वमवधूय तस्य नित्यत्वं प्रतिजानीते। इत्यादि

सांख्यस्तु 'तदैक्षत बहु स्यां प्रजायेय' सोऽसृजत् प्रधानाज्जगत उत्पत्तिमङ्गीकुरुते। 'विज्ञानं ब्रह्म' इत्यादि इत्यादिश्रुतिसिद्धं चेतनकर्तृकत्वं जगतोऽनादृत्याचेतनात्. श्रुतिषु जाग्रतीष्वपि बुद्धेरचेतनत्वमानिष्ठते *।

---

# भारतीयं दर्शनम्

( पं० पुरुषोत्तमशर्मा चतुर्वेदी, साहित्याचार्य, शुद्धाद्वैतालंकार, शास्त्री, संस्कृताध्यापक, मेयोकालेज, अजमेर )

योऽज्ञानसंतमससंवृततुच्छबुद्धे-
विद्याविवेकरहितस्य मनुष्यजन्तोः।
ज्योतिर्दिदेश निगमाभिधमप्रकम्प्य-
मिष्टार्थदं, विजयते स कविः स्वयम्भूः॥ १॥

आसन् जना जनपदेष्वितरेषु यर्ह्या-
हारव्यवायपरमाः परमार्थहीनाः।
तर्ह्यात्मबोधधियमेषु समासृजद्यत्
तद्दर्शनं विजयते भुवि भारतीयम्॥ २॥

प्रादर्शि येन निखिलागममूलभूतं
'ब्रह्मैव सर्वमिदं' मित्यविवेकनाशि।
ज्ञानं,जयत्यवितथार्थविरोधि तथ्य-
तत्त्वं तदौपनिषदं ननु दर्शनं नः॥ ३॥

ज्ञानं च कर्म च परेश्वरभक्तिरेत-
च्चक्षुर्योविधायि निखिलार्थसदोपयोगि।
योगत्रयं प्रकटयत् सकलोपजीव्यं
गीताभिधं जयति तत्किल दर्शनं नः॥ ४॥

संख्याय तत्त्वसमुदायमनात्मवस्तु-
संमोहमुत्कटमहंममबुद्धिजन्यम्।
उन्मूल्य संदिशति यच्चिदचिद्विवेक-
बुद्धिं विदां जयति कापिलदर्शनं तत्॥ ५॥

यत्तद् यमप्रभृतिसंयमसाधनानि
संदर्शयत् प्रणववाच्यपरात्मतत्त्वे।
चेतोनिरोधमवबोधयति प्रकृष्टं
योगाभिधं जयति तत्खलु दर्शनं नः॥ ६॥

वैनाशिकादृतमसत्त्वमशेषवस्तु—
जातस्य यत् प्रबलयुक्तिभिरुन्निरस्य।
लोके प्रकाशयति सत्परमाणुवादं
वैशेषिकाभिधमिदं ननु दर्शनं नः॥ ७॥

यच्च प्रमाणपरिशोधितवस्तुतत्त्व-
निर्णीतिसाधनमनाकुलयुक्तिवादम्।
सम्यक् समादिशति विप्रतिपत्तिरोधि
न्यायाभिधं न विदितं नहि दर्शनं तत्॥ ८॥

---

* जयपुरमहाराजसंस्कृतकालेजाध्यक्षपदमधितिष्ठन् झामहाभागो निजुगुम्फ निबन्धमिमम्, किन्तु यावत्समापयितुं प्रयतते तावदेव देवभूयमुपगतो दौर्भाग्यात्। हन्त, दुर्विधेया भगवती नियतिः। सर्वदा स्मर्तव्यमिममपूर्णमप्यन्तिमनिबन्धं सविषादगौरवमुपस्थापयामः पाठकानां पुरतः। दुर्लभानीति कृत्वा निबन्धकमहाभागस्य अप्रकाशित'छात्रकल्पवल्ली' तः पद्यान्यपि कानिचित्प्रकाशयेरन्विशेषाङ्केऽस्मिन्यथावसरम्। कल्पवल्ली सेयमपि हन्त न पूर्णा दौर्भाग्यात्। अस्तु, वयापीकर्यं न जानीमः कदा सेयं प्रकाश्येत, ततः पूर्वमेव 'वर्णिका' रूपेण पद्यानीमानि स्युरित्याशास्महे।

—सम्पादकः

यत् संशयान् क्रतुविधेरखिलान्निरस्य
श्रुत्युक्तकर्म विगताबकरं करोति ।
वाक्यार्थबोधनविधौ तुलनातिगामि
तज्जैमिनीयमिह दर्शनतल्लजं नः ॥ ९ ॥

अन्यान्यदर्शनविमर्शकृतावधानं
यत् संशयाञ्छ्रुतिगतांश्च समादधानम् ।
ब्रह्मस्वरूपममलं प्रकटीकरोति
वेदान्तदर्शनमिदं विदितं न कस्य ? ॥१०॥

देहाभिमानिलषितार्थसमर्थनाय
येनार्थकारि समगृह्यत तर्कवृन्दम् ।
प्रत्यक्षवादिविदुषां प्रथमोपदेष्टृ
चार्वाकदर्शनमपि प्रथते पृथिव्याम् ॥ ११ ॥

शून्यं जगत्तडिदभिज्वलनावभासि-
विज्ञानमात्रशरणं परमार्थशून्यम् ।
सत्कर्म तदमदयादिकमाश्रयध्व-
मित्यादिशल्लसति सौगतदर्शनं तत् ॥ १२ ॥

यन्मूलमस्य जगतस्तदशक्यमेव
निर्णेतुमित्यशुभदं परहिंसनादि ।
संत्यज्य सच्चरितबोधदृगादि सेव्य-
मित्थं समादिशति तज्जिनदर्शनं नः ॥ १३ ॥

यावद्विशेषरहितामलचित्स्वरूपं
ब्रह्मैव सत्यमितरत्त्वनृतं समस्तम् ।
बोधैकगम्यमिदमव्यतिरिक्तमात्म-
तत्त्वाददो जयति शाङ्करदर्शनं नः ॥ १४ ॥

स्थूलं जगच्चिदचितोर्भगवत्स्वरूप-
संविष्टयोः परिणतिः स च देवदेवः ।
शाश्वोकभक्तिसुलभः शुभधर्मशोभी
रामानुजीयमिति दर्शनमस्मदीयम् ॥ १५ ॥

उत्पन्नमप्यखिलजीवजडादि सर्व-
शक्तेर्हरेः सुत इवेदमभिन्नभिन्नम् ।
भक्त्याऽऽप्यते स खलु शाश्वतविष्णुलोको
निम्बार्कदर्शनमिदं विवृणोति तत्त्वम् ॥१६॥

सर्वेश्वरः स हरिरस्ति नियामकोऽथ
जीवा जडाश्च निखिला ननु तन्नियम्याः
धर्मोऽस्य दास्यमथ तत्सहवाससौख्यं
मध्वार्यदर्शनमिदं हरिभक्तिशंसि ॥ १७ ॥

एकैकधर्ममवशेष्य विरुद्धधर्मा-
धारो हरिर्भवति विश्वमिदं स्वरुच्या ।
प्रेमप्रपत्तिपथिकैः कृपयैव लभ्य
इत्यादिशज्जयति वाल्लभदर्शनं नः ॥ १८ ॥

इत्येवम्—

श्रुत्येकमूलकलितोऽपि विचारभेद-
शाखाशतैः परिवृतः सुमनोमनोज्ञः ।
सज्ज्ञानभक्तिकृतिभिः फलितो न कस्य
चेतो विलोभयति दर्शनकल्पशाखी ॥१९॥

तदेतत्—

तर्कैरतर्क्यविषयेष्वपि बुद्धिभेद-
मासज्य साम्प्रतिकपण्डितपुङ्गवा ये ।
मुह्यन्ति तेष्वपि शुभां धियमादधानं
सद्दर्शनं जगति राजति भारतीयम् ॥ २० ॥



# ज्यौतिषमपि दर्शनशास्त्रेषु परिगणितं चेत्



[ ले०—पं० श्रीकेदारनाथशर्माणः, ज्योतिर्विदः, जयपुरम् ]

इह हि संसारं दुःखमूलं मन्वानैर्भारतीयैरार्यैराध्यात्मिकं ज्ञानमेव दुःखं सुखमूलं वेति निश्चितम्। अत एवामुष्मिकोत्तमफलाशयैव सर्वाणि कर्माणि क्रियन्ते।

"वेदोऽखिलो धर्ममूलम्" इति सिद्धान्तानुसारं वेद एवास्माकं परमं निधानम्। तत एव दर्शनादीनामुपनिषदां च विकासः। दर्शनषट्कमपि तदनुयायि। षड्दर्शनेषु प्रतिपादितानां विषयाणां ज्ञानमेव मोक्षाबालम्।

वर्तमाने वैज्ञानिके युगे काण्टप्रभृतिपाश्चात्त्यदार्शनिकमतदीक्षिताः कणादादिमहर्षिप्रणीतेषु भारतीयदर्शनेषु विश्वासं दधाना अपि—

'जहांपर दुनियां की फिलासफी खतम होती है, भारत की वहां से आरम्भ होती है' इति लोकोक्तिं श्रद्दधाना अपि—

'प्रत्यक्षमेकं चार्वाकाः' इति प्रत्यक्षमेव प्रमाणं प्रमाणत्वेनोररीकुर्वन्ति। अस्तु नाम, कालेऽस्मिन् भवतु यः कोऽपि सिद्धान्तः पाश्चात्त्यानाम्। परं यदस्मदीयं ज्ञानं पाश्चात्त्यैः संगृह्य पुष्पित-पल्लवित-फलितावस्थासु क्रमशः समुन्नीतं तदुपयोगि ज्ञानमधुनास्माभिस्ततः संपाद्यमेव।

'संस्कृतरत्नाकरस्य' अष्टमवर्षीयदशमैकादशसंख्ययोः 'ज्यौतिषं विज्ञानम्' इति शीर्षके लेखे ईश्वरोऽपि दूरवीक्षणयन्त्रद्वारा प्रत्यक्षं संदृष्टः स्यात् इत्याशासितमस्माभिः।

दर्शनाङ्केऽस्मिन् सोऽयं नवोऽस्माकं प्रस्तावः, यद् 'ज्यौतिषं शास्त्रमपि दर्शनेषु परिगणितं चेत्' इति।

किमिति ज्यौतिषं शास्त्रं नाद्यापि दर्शनपङ्क्तावाकलितमिति समाश्चर्यम्। यतः शास्त्रमेतत् प्रत्यक्षं सत्यं चेति, समुन्नतकोटिकमिति नात्र कस्यापि संशयलेशः।

अमेरिका ( सिद्धपुरीय ) देशे दशहस्ताधिकव्यासं ( २०० इंच ) दूरवीक्षणयन्त्रं सज्जप्रायम्। पृथ्वीवासिनां दृढो विश्वासो यदेतेन किमप्यद्यावध्यलक्षितं प्रत्यक्षं दृष्टं स्यादेव।

यद्यपि स्वर्गीय—जगन्मान्यपण्डितश्रीमधुसूदनझामहाभागानामेष सिद्धान्तो यद्दर्शनसंख्या षडेव भवितुमर्हति नाधिकेति विज्ञानचक्षुषा सत्यम्। यतो यत्किमपि वस्तु इतस्ततो दक्षिणतो वामत ऊर्द्ध्वाधरं चेति वारषट्कमेवावलोकितुं शक्यते। अतो दर्शनसंख्यापि षडेवेति समीक्षाचक्रवर्तिनां श्रीगुरुचरणानां परमः सिद्धान्तः। अत एव भारतीयदर्शनानां षडिति संख्या दृढमूला। तथापि यथान्धे तमसि प्रकाशमन्तरा न किमपि वस्तु शक्यते विलोकितुं तथैव षड्विधदर्शनेषु प्रकाशाभावो ज्यौतिषदर्शनद्वारैव निवारयितुं शक्य इति नात्र संशयलेशोऽपि। विश्वस्मिन्नस्मिन् जगदाधारभूतपरात्परसंज्ञेन किमेतदाश्चर्य सोऽयं मनुष्यजन्तुः कस्मिन् चक्रे निपातित इति समाश्चर्यम्।

ज्यौतिषं ज्ञानं कालेऽस्मिन्नधिकं समुन्नतम्। अहरहो नूत्ननूत्नैरधिकाधिकसामर्थ्यधारिभिर्दूर-

वीक्षणादियन्त्रैरद्यापि समुद्योगलग्नाः पाश्चात्याः किमपि कुर्वत एव।

वयं संस्कृतभाषिणो जले तैलबिन्दुवद् वेदेषु पुराणेषु दर्शनेषु रममाणाः, वैज्ञानिके युगेऽपि पश्चात्पदं दधानाः, स्वपूर्वपुरुषैरारचितेषु तेषु तेषु विषयेषु परमं ज्ञानं वहन्तोऽपि, पण्डिता अपि, सामयिक—'जनरलनालेज' वञ्चिताः, 'पण्डितजी महाराज' इति सान्नेपं पाश्चात्यज्ञानो नेत्रसनाथैरुपहस्यमाना न किमपि कर्तुं पारयाम इति खेदास्पदम्।

भूमौ वर्त्तमानानां सर्वजनोपभोग्यानां वस्तूनां भ्रमे निपतिता मनुष्या जगत्सुखानुभवतुष्टाः पृथिव्यामेव सर्वं मन्वाना जगज्जालकवलिता अनेकजन्मसंसिद्धाः कदापि मोक्षमार्गपथिका भविष्यन्ति न वेति संशयस्थानमेव ।

दार्शनिकैः स्वीकृतोऽयं विषयो यत् पृथिव्या अर्चिरादिमार्गेषु गच्छन्नयं जीवो प्रथमं चन्द्रलोकमेव गच्छति । अथ—

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ।
यश्च योगेन युक्तः स्यात् संमुखे च रणे हतः॥

इति प्रमाणानुसारं सूर्यमण्डलगामिनो विरला एव मोक्षमार्गं गन्तुं पारयन्ति ।

पृथिव्याश्चन्द्रमण्डलं सूर्यमण्डलं च कियद्दूरमिति ज्यौतिषविज्ञानद्वारैव ज्ञातुं सुशकम् ।

अथ सूर्यकेन्द्रतः पृथिव्याः परमाधिकमन्तरं नवकोटि-सप्तविंशतिलक्षसंख्याक (९२७०००००) क्रोशार्द्ध-(माइल) परिमितम्। एकस्मिन् सैकिण्डाख्ये काले प्रकाशगतिः एकलक्षषडशीतिसहस्र (१८६०००) क्रोशार्धपरिमिता। अतः सूर्यप्रकाशेन पृथिव्युपरि सार्धाष्टमिनिटपरिमितकालेनागतमिति सिद्ध्यति ।

सूर्य-दूरता कथमाधुनिकैर्ज्ञाता इति कौतूहलस्थानम्। यतो यदा कदा शुक्रग्रहो भास्करबिम्बमध्यगो विलोक्यते तदानीमेव सूर्यान्तरज्ञानस्य सुलभता।

विषयोऽयमन्यस्मिँल्लेखे समवलोकनकोटिमवगाहत इति चन्द्रमण्डलान्तरज्ञानमत्र विलिखामः।

पृथ्व्या व्यासोऽष्टसहस्रक्रोशार्ध(माइल)परिमितः। एतावतान्तरेण स्थितौ द्वौ दूरवीक्षणधरौ नरौ एककालावच्छेदेन चन्द्रमण्डलं पश्यतश्चेत् तदानींतनवेधद्वयद्वारा चन्द्रान्तरज्ञानं केवलं गणितमात्रसापेक्षम्।

यथा चन्द्रमण्डलं सूर्यमण्डलं च कियतान्तरेण वर्तते इति ज्ञानं गणितमात्रापेक्षम् तथैवेतरनक्षत्रान्तरज्ञानं दूरवीक्षणयन्त्राधीनम्।

दूरवीक्षणादिसाधनैरेव ज्ञातमधुना यद् ध्रुवनक्षत्रस्य प्रकाशः ४७ $\frac{1}{3}$ प्रकाशवर्षैः पृथिव्युपरि समागच्छति। एवमन्येषामपि नक्षत्राणां सूर्यवत् सूर्याणां तारारूपेण भासमानानामन्तरमेतैः प्रकाशवर्षैः परिगण्यते।

सोऽयमस्माकं सूर्यः पृथिव्यपेक्षया स्थिरोऽपि बुध-शुक्र भौम-गुरु-शन्यादिग्रहपरिवृतः सामन्तै राजेव परिदृश्यमानो हरकुलीशापरपर्यायं शौरिमण्डलनाम्ना परिज्ञातं महासूर्यं परिक्रामति। सोऽपि च भारतीयैरभिजिन्नाम्ना परिज्ञातं नक्षत्ररूपेण परिदृश्यमानं नक्षत्रसूर्यं पर्येतीति ज्यौतिषिकज्ञानम्।

एवं सूर्यं स्थिरं पृथ्वीं च चलां मन्यमाना अपि पाश्चात्याः सूर्यस्यापेक्षिकं स्थिरत्वं मत्वा सूर्यस्य शौरिमण्डलं परितो भ्रमणं तस्य चाभिजित्परिक्रमेति सिद्धान्तयन्ति । एवमुत्तरोत्तरम्—'यद्भासा भासते सर्वम्' सिद्धान्तानुसारमभिजिन्नक्षत्रस्यापि कस्यचन महामहिमसूर्यस्य परितः परिक्रमणम्, तस्यापि

चैवमेव कस्यापि परितो भ्रमणं सिद्धं स्याद्चिरेणैव कालेनेत्यनुमितिः।

कदाचन सहस्रकोटिब्रह्माण्डनायको महामहिमशाली विश्वस्यास्य नियन्तावश्यमेव चर्मचक्षुषापि दूरवीक्षणयन्त्रद्वारा वीक्षितः स्यादिति नाश्चर्यम्।

नूत्नं द्विशत-इंच-व्यासं दूरवीक्षणयन्त्रं कियदत्रोपयोगि स्यादिति सकौतुकं प्रतीक्षा।

अत्र ज्यौतिषं शास्त्रं कियदुपयोगीति "ज्यौतिषमपि दर्शनेषु परिगणितं चेत्" इति लेखनसाहसमस्मदीयम्।

---

# आत्मनिरूपणम्

( ले०—जयपुरमण्डलान्तर्गतडागग्रामाभिजनः, स्वर्गीय—पं० जगदीशशर्म्मा खाण्डलः, व्याकरणाचार्यः )

नायं वेद स्वमात्मानं यच्छक्त्याहंधिया हतम्।
तं दुरत्ययमाहात्म्यं भगवन्तमितोऽस्म्यहम्॥

इह खलु जगतीतले केचन रोगग्रस्ताः, परे दारिद्र्यार्दिताः, केऽपि पुत्रचिन्तातुराः, केचन दारपरिग्रहविचारपरायणाः, केचन राजदुःखदुःखिताः, परे प्रजापालनाधिपीडिताः, केचन काणाः, केऽपि पङ्गवः, केचन खञ्जाः, परे पाणिविरहिताः, अपरे मूकाः, अन्ये पारतन्त्र्यपरिपीडिताः, इतरे मानवहानिहेयजन्मानः, केचन गृहाभावखिन्नचेतसः, केऽपि अरिकृतनानापत्निमग्नाः; एवमनुदिनं विविधामपि दुःखततिमुपभुञ्जाना विलोक्यन्ते प्राणिनः। न चैष निश्चयो विश्वासः सिद्धान्तो वा यदग्रे कियत्कालानन्तरमापद्भ्य एताभ्यो विमुक्ता भविष्यन्तीमे। यतोऽत्रैव वर्तमानकालिक्या नानाविधकर्मपरिणामोपलब्ध्या यथा पूर्वजन्मविनिश्चयस्तथा भाविजन्मनोऽपि चेतसि दृढो विश्वासः। अतो यथा यादृशैः प्राक्तनकर्मभिरत्रेदानीं दुःखोपलब्धिस्तथा तादृशैरेवाधुनिकैः कर्मभिर्भाविन्यपि जन्मन्यवश्यं दुःखावाप्तिरिति समुचितमनुमानम्, उचिता विचारणा, भवितव्या चेयं सम्भावना च। यतो हि शास्त्राण्यपीममेवार्थं द्रढयन्ति। यथा हि—

कुर्वते कर्म भोगाय कर्मकर्तुं च भुञ्जते।
नद्यां कीटा इवावर्त्तादावर्त्तान्तरमाशु ते॥
व्रजन्तो जन्मनो जन्म लभन्ते नैव निर्वृतिम्।
यथा तृणजलूकैवं देही कर्मगतिं गतः॥

न चात्र पुण्यकर्मभिर्निरन्तरं सुखावाप्तिरेव भविष्यत्यग्रे इति वाच्यम्—आसंसारं त्रिविधदुःखाभिघातस्यावश्यंभावित्वात् पुण्यकर्मभिः सुखावाप्तावपि तत्फलभोगानन्तरं दुःखोपलब्धेरनिवार्यत्वाच्च। न च कस्मैचिदपि दुःखमिष्टम्, आपच्च सुसहा, विपच्चापरिहरणीया। एवं सति प्राक्तनैर्महर्षिभिः सम्यगवबुद्धं साधु परीक्षितं सुप्रतिपादितं सुनिश्चितं सुसिद्धान्तितं चात्मज्ञानमेवात्यन्तिकदुःखोपघातायोपस्थापयामो वयम्।

न च तद्विना दुःखहानिः सुखावाप्तिश्च सम्भवति कथमपीतरथेति समुद्घोषणा श्रुतीनाम्। यथा हि—

'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' 'ऋते ज्ञानान्न मुक्तिः' इति।

सर्वमपीदं मानवजन्मन्येव सम्भवति। यतो हि विहाय मानवमाकीटाद्देवाश्च सर्वासामपि योनीनां भोगयोनित्वमस्ति। धातुः सृष्टेर्वैचित्र्यान्मानव एव केवलमीदृशोऽस्ति यो हि विचिन्त्य स्वशुभाशुभे विमोक्तुमर्हत्यात्मानं मृत्युपाशात्। अत एव सृष्टिनिर्माणावसरे विधातुरपि मानुषादेव सन्तोषः। यथोक्तं श्रीमद्भागवते एकादशे स्कन्धे—

सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या
नानासरीसृपपशून् खगदंशमत्स्यान्।
तैस्तैरतुष्टहृदयः पुरुषं विधाय
ब्रह्मावलोकधिषणं मुदमाप देवः॥

अतः संप्राप्य मानुषजन्मावश्यं विज्ञेयं परमतत्त्वमात्मा। अयमेव परमः पुरुषार्थः, उत्कृष्टा सिद्धिः, श्रेष्ठा च सम्पत्। अनेनैव जन्मनः साफल्यम्, एनेनैव कृतार्थोऽयं जनः। अवश्यमेनेनैवेयं वसुंधरा वसुंधरा। अत एवोक्तमुपनिषदि—

"इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः।" श्रीमती भगवद्गीतापि—

ततः पदं तत् परिमार्गितव्यं
यस्मिन् गता न निवर्तन्ति भूयः। इति

श्रीमच्छंकराचार्यचरणा अपि—

लब्ध्वा कथंचिन्नरजन्म दुर्लभं
तत्रापि पुंस्त्वं श्रुतिपारदर्शनम्।
यस्त्वात्ममुक्तौ न यतेत मूढधीः
स ह्यात्महा स्वं विनिहन्त्यसद्ग्रहात्॥

भगवानृषभदेवोऽपि स्वपुत्रेभ्योऽस्यैवार्थस्य परमोत्कृष्टतां समुचितोपशिक्षणं परमोपदेशत्वं च प्रतिपादयति।

गुरुर्न स स्यात् स्वजनो न स स्यात्
पिता न स स्याज्जननी न सा स्यात्।
दैवं न तत् स्यान्न पतिश्च स स्यान्
न मोचयेद् यः समुपेतमृत्युम्॥

एतत् सर्वमेव लक्ष्यीकृत्योक्तं वेदेषु—

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः।' अत आत्मज्ञानं प्रत्येकमानवस्य प्रधानं कर्म।

अत्र विभ्रान्तमतयः केचित् स्थूलशरीरात्मकमन्नमयकोशमेवात्मानमङ्गीकुर्वन्ति। कथयन्ति च ते यदहंबुद्धिविषय आत्मास्ति। सा चाहंबुद्धिः—अहं मनुष्यः, अहं ब्राह्मणः, अहं शूरः, इत्येवंरूपेण स्थूलशरीर एव। अतः अहंप्रत्ययविषयः स्थूलशरीरमेवात्मा। किञ्च यस्मिन्नतिशयप्रेम भवति स एवात्मा। स्वशरीरे च सर्वेषामेव सर्वतोऽधिकं प्रेम। स्त्रीपुत्रादयोऽपि स्थूलशरीरस्यैवोपकारकत्वात् प्रियाः प्रतीयन्ते न तु सूक्ष्मशरीरस्योपकारकास्ते। अतः शरीरमेवात्मा। तस्यैव सर्वदा सर्वप्रकारेण पोषणं पालनं च विधातव्यम्।

अपरे कथयन्ति यद्यदि स्थूलशरीरमेवात्मा स्यात्तदा बाल्ये विलोकितस्य स्थाविरे स्मरणं न स्यात्। शरीराणामवयवोपचयापचयैरुत्पादविनाशशालित्वात्। किञ्चेष्टसाधनताज्ञानाभावाद् बालस्य स्तन्यपाने प्रवृत्तिर्न स्यात्। अतः स्थूलशरीरमात्मा नास्ति, किन्तु स्थूलशरीरे येषां स्थित्या जीवनव्यवहारः, येषामभावे च मरणव्यवहारः स एवात्मा। जीवनमरणे चेन्द्रियाधीने। यावच्छरीरे इन्द्रियाणि तावदेव जीवनं तेषामभावे च मरणम्। किञ्च, अहं पश्यामि, अहं शृणोमि, इत्येवमहम्मतिरपीन्द्रियेष्वेव। अत इन्द्रियाण्येवात्मा।

परे हिरण्यगर्भोपासकाः प्राणानेवात्मानं मन्यन्ते। यतो हि प्राणस्थितिपर्यन्तं शरीरे जीवनव्यवहारः,

प्राणाभावे च मरणव्यवहारः। अतः प्राणा एवात्मा। इन्द्रियाणामात्मत्वे तु चक्षुषा साक्षात्कृतानां पदार्थानां चक्षुषोऽभावे स्मरणं न स्यात्। अन्येनानुभूतस्यान्येन स्मरणासम्भवात्। अहंप्रत्ययोऽपि च न केवलमिन्द्रियेष्वेव किन्त्विन्द्रियविशिष्टव्यक्तिष्वेव। किञ्च सुषुप्ताविन्द्रियाणामभावेऽपि प्राणस्थित्या जीवनव्यवहारः। अतः प्राणा एवात्मा।

केचन कथयन्ति यत् प्राणास्तु जडाः, अतो जडत्वहेतोर्घटादिवदनात्मान एव ते। मनोऽधीनौ च बन्धमोक्षौ। विषयासक्तमनो बन्धाय विषयानासक्तं च मोक्षाय। मनसः सम्बन्धेनैव चेन्द्रियाणि ज्ञानहेतूनि। अतो मन एवात्मा।

क्षणिकविज्ञानवादिनो बौद्धाश्च कथयन्ति यन्मनसो व्यापारो बुद्ध्यधीनः। यतो हि बुद्ध्याकार एव मनोऽस्ति। अतः क्षणिकविज्ञानात्मिका बुद्धिरेवात्मास्ति। तेषामयमभिप्रायो—यत् सर्वे पदार्थाः, सर्वा व्यक्तयः, सर्वाणि च वस्तूनि विज्ञानात्मकान्येव। विज्ञानं च तत् प्रकाशात्मकं क्षणिकं च। पूर्वविज्ञानसदृशोत्तरविज्ञानोत्पत्त्या पूर्वविज्ञानस्य नाशो भवति। एवं विज्ञानधारानवच्छिन्नैव प्रवर्तते। विज्ञानस्य चालयविज्ञानप्रवृत्तिविज्ञानभेदेन द्वैविध्यम्। 'अहम् अहम्' इत्याकारकमालयविज्ञानम्। 'घटोऽयम्' 'पटोऽयम्' इत्याकारकं च प्रवृत्तिविज्ञानम्। आलयविज्ञानधारातः प्रवृत्तिविज्ञानस्योत्पत्तिर्भवति, मनःस्वरूपमपि च प्रवृत्तिविज्ञानधारायामेव। अतस्तन्मन आलयविज्ञानधारात्मिकाया बुद्धेः कार्यम्। तेषां मते आलयविज्ञानधारायां प्रवृत्तिविज्ञानधाराया बाधचिन्तनेन निर्विशेषक्षणिकविज्ञानधारायाः स्थितिरेव मोक्षः। एवं क्षणिकविज्ञानवादिनो बुद्धिमेवात्मानं कथयन्ति।

भाट्टाश्च कथयन्ति यद् विद्युद्वत् क्षणिक आत्मा नास्ति किन्तु स्थिर एव। स च जडश्चेतनश्च। यतो हि सुषुप्त्यनन्तरं प्रबुद्धो जनः कथयति यद् "अहमद्य जडो भूत्वा सुषुप्तौ न किञ्चिदवेदिषम्" एतेन तस्य जडात्मकत्वं चेतनात्मकत्वं च स्पष्टमेव। एवं तस्य मते आत्मा खद्योतवत् प्रकाशरूपोऽप्रकाशरूपो ज्ञानात्मकश्चास्ति। प्रकाशाप्रकाशरूपश्चानन्दमयकोशोऽस्ति। यतो हि सुषुप्तौ चेतनाभाससहितमज्ञानमेवानन्दमयकोशोऽस्ति, तत्राभासः प्रकाशरूपः अज्ञानं चाप्रकाशरूपम्। अतस्तन्मते आनन्दमयकोश एवात्मा।

शून्यवादिनो बौद्धाश्च कथयन्ति यदात्मनि प्रकाशाप्रकाशोभयसिद्ध्यर्थं खद्योतवत्तस्य साङ्गत्वं स्वीकरणीयम्। साङ्गश्च पदार्थो घटपटादिवदुत्पत्तिविनाशशाल्येव। यश्चोत्पत्तिविनाशशाली स उत्पत्तेः पूर्वं विनाशोत्तरं चासन्, यश्चाद्यन्तयोरसन् स मध्येऽप्यसदेव। अत आत्मा तदितरे च सर्वे पदार्था असत्त्वेन शून्यरूपाण्येव। एतन्मतेऽपि अज्ञानस्वरूप आनन्दमयकोश एवात्मास्ति।

प्रभाकरो नैयायिकाश्च शून्यवादिनः पृच्छन्ति यद् भवद्भिः शून्यरूपमात्मानुभूतो न वा? अननुभूतश्चेत् शून्यं नास्ति, अनुभूतश्चेच्छून्याद् विलक्षण एवात्मा। एतस्मिन् शून्याद् विलक्षण आत्मनि मनसः संयोगेन ज्ञानमुत्पद्यते ज्ञानगुणत्वेनात्मा चेतनत्वेनोच्यते स्वरूपेण च जडोऽस्ति। एवं सुखदुःखेच्छादय आत्मनो गुणाः सन्ति। यथा चोक्तम् "इच्छाद्वेषप्रयत्नसुखदुःखज्ञानानि आत्मनो लिङ्गम्"। वैशेषिकदर्शनेऽपि "प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तर्विकाराःसुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि"। एतेषां मतेऽप्यानन्दमयकोश एवात्मास्ति। विज्ञानमयकोशे च या बुद्धिः स आत्मनो ज्ञानगुणः। इमे प्रभाकरादय आत्मानं सुषुप्तौ ज्ञानविहीनं मत्वा जड-

मङ्गीकुर्वन्ति। अतो गुणत्वेन आनन्दमयकोश एव तेषा-मात्मनो भ्रान्तिः; आत्मस्वरूपं नित्यज्ञानं तु ते जीवे न स्वीकुर्वन्ति किन्तु अनित्यज्ञानमेव। तदनित्यज्ञानं च वस्तुनोऽन्तःकरणवृत्तिबुद्धिरूपमेव। एवमेषां मतेऽप्या-नन्दमयकोश एवात्मास्ति बुद्धिश्च तस्य गुणोऽस्ति।

मतमपीदं न समीचीनम्। यतो हि ज्ञानाद् भिन्नं यद् घटादिकं जड़वस्तु सर्वमपि तदनित्यम्। अतो यथा घटादिकं जड़त्वादनित्यं तथायमात्माप्यनित्यो भवि-ष्यति। अनित्यत्वे च तस्य मोक्षार्थं प्रयत्न एव विफलो भविष्यति।

एवं बहिर्मुखा ज्ञानिनोऽप्यात्मनि भ्रमन्तः पञ्चको-शेष्वेवान्यतममात्मानं स्वीकुर्वन्ति। सर्वेषामेषां साक्षिभू-तमात्मानं च नैव जानन्ति। नैतदेतैर्विज्ञायते यदन्नम-यादयः कोशा आत्मावरकत्वेनैव कोशा इत्युच्यन्ते। नैष एषां दोषो यतो हि भगवतो मायातत्त्वेन विमोहि-ता मूढधिय एवमेवान्यस्मिन्नन्यमारोपयन्ति। यदा खलु नाट्यकलाकुशलेनैकेनापि नटेन विभिन्नानि रूपाणि ध्रि-यन्ते तदा न खलु मानव एतन्निश्चेतुं शक्नोति यदयं स एव, तदा पुनर्लीलेश्वरस्य परमात्मनो लीलां को जनो याथातथ्येन विज्ञातुं प्रभुः।

योगे सांख्ये चैतदधिको विचारः कृतः। तत्र पुरुषमसङ्गं नित्यशुद्धं मुक्तं च प्रतिपाद्य तस्यानाद्यवि-द्ययैवोपचारिकं सम्बन्धमङ्गीकृत्य कर्तृत्वभोक्तृत्वाद्य-वस्थाविशेषं जीव इति कथयन्ति ते। विवेकेन चापचारिकं सम्बन्धं प्रविलाप्य पुरुषः स्वनित्यज्ञाने मोक्षभावं विजानाति। योगदर्शने उक्तमिदं यत् 'स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः'। अत्र भाष्यकारः (पुरुषः स्वामी दृश्येन स्वेन दर्शनार्थं संयुक्तः। तस्मात् संयोगात् दृश्यस्योपलब्धिर्या स भोगः। या तु द्रष्टुः स्वरूपोपलब्धिः सोऽपवर्गः। दर्शनकार्यावसानः संयोग इति दर्शनं वियोगस्य कारणमुक्तम्) तात्पर्यमिदमस्ति स्वश-क्तिर्दृश्यं यश्च स्वामिशक्तिपुरुषः एतयोर्दृश्यस्य द्रष्टुश्च स्वरूपविज्ञानार्थं यः सम्बन्धः स दर्शन-संयोगः पुरुषस्य (स्वामिनः) दृश्येन सह संयोगो हेतुः। संयोगेन च या दृश्यस्योपलब्धिः अर्थात् यद्दृश्यस्वरूपविज्ञानं शब्दादीनां साक्षात्कारो भवति स भोगः। विवेकख्यात्या च या पुरुषस्योपलब्धिः स मोक्षः। येन संयोगेन द्रष्टुर्भोगस्यापवर्गस्य चाप्ति-र्भवति स संयोगोऽनागतदुःखहेतुत्वाद् हेयः। तस्य संयोगस्य कारणं दर्शनशास्त्रे 'तस्य हेतुरविद्या' इति सूत्रा-दविद्योक्ता। तदभावात् संयोगाभावो हानं तद्दृशेः कैव-ल्यम्। अस्या अविद्याया अभावेन बुद्धेः पुरुषस्य च सं-योगमपहाय यो दृश्येन द्रष्टुः संयोगाभावः स एवात्यन्ति-को दुःखाभावः। एषैव दृक्शक्तिः पुरुषस्य कैवल्यमस्ति। अविद्याया अभावस्य कारणं तु विवेकख्यातिरेव। यथा चोक्तम्–'विवेकख्यातिरविप्लवा हानोपायः' मिथ्याज्ञानेन रहितः पुरुषो बुद्धिश्च भिन्नौ इत्याकारकं ज्ञानमेव विवे-कख्यातिः। इयमेव दुःखस्यात्यन्तिकाभावे कारणम्। एतत्संसिद्धौ 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' अर्थात् द्रष्टुः स्वरूपेणावस्थितिर्भवति।

सांख्यदर्शनकाराः कथयन्ति यत् 'असंगोऽयं पुरुषः' इति सूत्रेण शरीरेन्द्रियप्रकृत्यादिपर उदासीनोऽसंगः पुरुष एवात्मास्ति। ननु शरीरे स्थितः पुरुषो कथमसंगो भवितुमर्हतीति न वाच्यम्, यतो हि संयोगमात्रेणैव न संगो भवति यथा कमलपत्रस्य जलेन संयोगेऽप्यसंग एव एवमेव प्रकृत्यादिना संयोगेऽपि पुरुषोऽसंग एव। उक्तमेतदेव "प्रकृतिः कर्त्री पुरुषस्तु पुष्करपलाश-वन्निर्लेपः किन्तु चेतनः" निःसङ्गस्यापि पुरुषस्यावि-वेकेनैव विषयेषु प्रीतिर्भवति। यथा चोक्तं "निःसंगे-ऽप्युपरागोऽविवेकात्" संगरहितपुरुषे वस्तुत उपरागा-

भावेऽप्यौपाधिकप्रतिबिम्ब एव विषयप्रीतिशाली। एतदेव "जपास्फटिकयोरिव नोपरागः किन्त्वभिमानः" अनेन सूत्रेणाधिकं सुस्पष्टं भवति। यथा स्फटिके जपाकुसुमयोगेन रक्तता प्रतीयते, एवमेव पुरुषे वस्तुतो विषयप्रीत्यभावेऽपि प्रतिबिम्बवशाद् भ्रान्त्याभिमानमात्रमेव भवति। भ्रान्त्यैव च कर्तृत्वादिभावः। इदं विषयाभिमानमेव पुरुषबन्धहेतुः। एतच्च सर्वमविवेकमूलम्। विवेकेनाविवेकस्य नाशे चासंगः पुरुष एव प्रतीयते। अयमभिमानविशिष्टपुरुष एव सांख्यमते जीवात्मा। अर्थाज्जीवोऽयं साक्षादसंगः पुरुष एव केवलमविद्यावशादौपाधिको भेदः प्रतीयते।

अथेदानीं वेदान्तिनां मतमारभ्यते—तेषां कथनमिदं यदवस्थात्रयस्य द्रष्टा पञ्चकोशातिरिक्त आत्मास्ति। स च नित्यज्ञानस्वरूपं प्रकाशात्मकः परमप्रेमास्पदश्चास्ति। यथा हि—स्वप्नावस्थायां स्थूलदेहस्य भानं नास्ति, आत्मा चास्ति, अतोऽन्नमयकोशः कदाप्यात्मा नास्ति।

तथैव सुषुप्त्यवस्थायां लिङ्गशरीरस्य भानं न भवति, आत्मा चास्ति, यतो सुषुप्त्यनन्तरं प्रबोधे सति "सुखमहमस्वाप्सम्" इत्याकारको बोधो भवति, अतो विज्ञायते सुषुप्त्यवस्थायामपि सुखस्वरूपमात्मास्ति।

निदिध्यासनस्य फलरूपनिर्विकल्पकसमाधौ चाज्ञानात्मकं कारणशरीरं न भासते—अज्ञानकृतावरणरहित आत्मा च भासते योगिभिः।

किञ्च स्थूलसूक्ष्मकारणेति शरीरत्रयमिदं प्रत्येकं व्यभिचारि, आत्मा च सर्वावस्थास्वनुगतो व्यापकश्चास्ति। यतो हि जाग्रदवस्थायां स्वप्नस्य सुखापस्य च स्मरणं भवति। स्मरणं चान्येनानुभूतस्यान्यस्मै न कथमपि भवितुमर्हति। अतः सिद्धमिदं यत् शरीरत्रयातिरिक्तोऽवस्थात्रयानुगतो निर्विकल्पकसमाधौ च योगिभिरनुभूयमान आत्मास्ति। अवस्थात्रयस्य निषेधेनैतदपि सिद्धं यत् स पञ्चकोशातिरिक्त एवात्मास्ति। यतो हि ते पञ्चापि कोशाः शरीरत्रयात्मका एव। यथा स्थूलशरीरं त्वन्नमयकोशोऽस्ति, कारणशरीरं चानन्दमयकोशोऽस्ति, सूक्ष्मशरीरं च प्राणमयमनोमयविज्ञानमयकोशाः सन्ति। एवं पञ्चकोशेष्वन्यतममात्मानं मन्वाना भ्रान्ता एव। एतदवश्यमस्ति यत् स आत्मा सर्वानुगतः सर्वव्यापकश्चास्ति, अतोऽवस्थात्रयेषु शरीरत्रयेषु पञ्चकोशेषु चानुगतत्वात्तत्संसर्गादज्ञानात्तद्रूपं प्रतीयते। विवेके तु स तेभ्योऽतिरिक्त एवासंगः प्रतीयते यथा चोक्तं श्रीमता रामेण—

> कोशेष्वयं तेषु तु तत्तदाकृति-
> र्विभाति सङ्गात् स्फटिकोपलो यथा।
> असंगरूपोऽयमजो यतोऽद्वयो
> विज्ञायतेऽस्मिन् परितो विचारिते॥

अयं च पञ्चकोशातिरिक्त आत्मा "जीवो ब्रह्मैव नापरः" इत्यादिवेदान्तवाक्येन साक्षाद् ब्रह्मस्वरूपमेव। तद् ब्रह्मैव "इन्द्रो मायाभिः पुरुरूप ईयते" "अजायमानो बहुधा विजायते" "नेह नानास्ति किञ्चन" इत्यादिश्रुतिभिर्जीवरूपो भवति।

तात्पर्यमिदमस्ति यत् सृष्टेः पूर्वम् अव्याकृतम् (नामरूपभेदरहितम्) एकं ब्रह्मैवासीत्। तस्मिन्नेव यदा "एकोऽहं बहु स्याम्" इत्याकारिकेच्छा समुद्भूता तदा तत एव सर्वस्यास्य जगत उत्पत्तिः। इदमप्यत्र न विज्ञेयं यत् पितुः पुत्र इव ब्रह्मणो जगत उत्पत्तिर्भेदरूपेणास्ति, किन्तु मृत्तिकया घट इव तद्रूपेणैवास्ति। अर्थाद् अव्याकृतं ब्रह्मैव नामरूपजगद्रूपेण विवर्त्ततामधिजगाम। सर्वमपीदम् "असद्वा इदमग्र आसीत् ततो वै सदजायत, तदात्मानं स्वयमकुरुत, तस्मात्तत् सुकृतमुच्यते" इत्यादिश्रुतिपर्यालोचनेन विज्ञायते। अत्र ब्रह्मणो जगद्रूपतायां विवर्त्तवाद

एव श्रेयान् ; यो हि "अतात्त्विकोऽन्यथाभावो विवर्त्त इति गीयते" इत्याकारकः।

ब्रह्मणो जीवभवने च वेदान्तशास्त्रे बहवो विधाः। अविच्छिन्नवादः,प्रतिबिम्बवादः,आभासः, आरोपवादः, अध्यासवाद इत्यादयः। तत्र यथावच्छिन्नवादः—यथाग्नेर्विस्फुलिङ्गाः सहस्रशः समुद्भवन्ति एवमेव ब्रह्मणः सहस्रशो जीवा उपाधयश्च। यथा चोक्तं मुण्डकोपनिषदि—"यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपा" इति। श्रीमद्भागवतेऽपि—

यथार्चिषोऽग्नेः सवितुर्गभस्तयो
निर्यान्ति संयान्त्यसकृत् स्वरोचिषः।
तथा यतोऽयं गुणसंप्रवाहो
बुद्धिर्मनः खानि शरीरसर्गाः॥

अत्र यथा व्याससूत्रम्—"अंशो नानाव्यपदेशाद् यथा चापि दाशकितवादित्वमधीयत एके" श्रीमद्भगवद्गीतायामप्यवच्छिन्नवादो यथा—"ममैवांशो जीवलोके जीवभूतः सनातनः" श्रीमद्भागवतेऽन्यत्रापि—

मनसैतानि भूतानि प्रणमेद् बहु मानयन्।
ईश्वरो जीवकलया प्रविष्टो भगवानिति॥

प्रतिबिम्बवादोऽपि-यथैक एव सूर्यो जलदर्पणादिनानोपाधिषु प्रतिबिम्बितो नानारूपेण प्रतीयते—एवं परमात्मापि सर्वेषु नानोपाधिषु प्रतिबिम्बितोऽस्ति, उपाधीनां कार्ययोगेन कार्यकर्त्तापि च प्रतीयते। एतन्मते बिम्ब ईश्वरः प्रतिबिम्बश्च जीवः। प्रतिबिम्बवादः श्रीरामगीतायां यथा—

अनाद्यविद्योद्भवबुद्धिबिम्बितो
जीवः प्रकाशोयमितीर्यते चितः।
आत्मा धियः साक्षितया पृथक् स्थितो
बुद्ध्या परिच्छिन्नपरः स एव हि।

पञ्चदश्यामन्तःकरणे ब्रह्मण आभास जीवः कथितः। आभासप्रतिबिम्बयोरियान् भेदो यदाभासपक्षे त्वाभासोऽसत्योऽस्ति, प्रतिबिम्बवादे च प्रतिबिम्बोऽसत्यो नास्ति।

आरोपवादश्च—यथा रज्जौ सर्पस्य प्रतीतिर्भ्रमेणैव एवं परमात्मन्यपि जगत्प्रतीतिर्भ्रमेणैव। भ्रमात् सत्यस्य बाधः क्वापि न भवति अतो जगद्भासनेन ब्रह्मणो बाधः कदापि नेत्यादयः।

एवमपि वेदान्तिनो वदन्ति यथथैक एवाकाशो घटपटादिषु नानोपाधिषु व्यापकत्वाद् विभिन्नरूप एवमेव सर्वत्र व्यापकः परमात्मोपाधिवशान्नानेव प्रतीयते।

सर्वेष्वप्येषु मतेषु नानारूपेण प्रतीयमानं जगद् ब्रह्मरूपमेव। यथा चोक्तम् 'आत्मैवेदं सर्वं यत् किञ्च जगत्यां जगत्' 'एकमेवाद्वितीयं ब्रह्म' 'सर्वाणि रूपाणि विचिन्त्य धीरो नामानि कृत्वाभिवदन् वदन्ते' 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी। त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतो मुखः, इत्यादि श्रुतिषु।

श्रीमच्छंकराचार्यचरणा अपि—

सदेवेदं सर्वं जगदवगतं वाङ्मनसयोः—
सतोऽन्यन्नास्त्येव प्रकृतिपरसीम्नि स्थितवतः।
पृथक्किं मृत्स्नायाः कलशघटकुम्भाद्यवगतं
वदत्येष भ्रान्तस्त्वमहमिति मायामदिरया॥

तरङ्गफेनभ्रमबुद्बुदादिवत्
सर्वं स्वरूपेण जलं यथा तथा।
चिदेव देहाद्यहमन्तमेतत्
सर्वं चिदेवैकरसं विशुद्धम्॥

आकाशवन्निर्मलनिर्विकल्प-
निःसीमनिष्पन्दननिर्विकारम्।
अन्तर्बहिःशून्यमनन्यमद्वयं
स्वयं परं ब्रह्म किमस्ति बोध्यम्॥

एवं सत्यपि यो जीवात्मनोर्भेदः प्रतीयते स माया-वशादेव। यथा चोक्तं गौडपादाचार्यैः—

मायया भिद्यते ह्येतन्नान्यथाजं कथंचन।
तत्त्वतो भिद्यमाने हि मर्त्यताममृतं व्रजेत्।

अद्वितीयं सद् ब्रह्मैव तिमिरदोषेण बहुचन्द्रवत् रज्जौ च सर्पवत् माययैव विभिन्नात्मकं प्रतीयते परमार्थतः कोऽपि भेदो नास्ति। यतो ह्यात्मा निरवयवः, सावयवः पदार्थ एवावयवभेदेन भेदवान् भवति, यथा घटादयः। तत्त्वतो भेदे तु अमृतेऽजेऽद्वयेऽपि च मर्त्यतादोषः समुद्भवेत्। भेदवतस्त्वेवमेव दृष्टत्वात्। तथा च 'न जायते म्रियते वा कदाचित्' इत्यादिवाक्यानामसंगता विरुद्धतादोषश्च समापतेत्। नियमश्चैष यत्

न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा।
प्रकृतेरन्यथाभावो न कथंचिद् भविष्यति।

अतो मायाकृत एव भेदः परमार्थतस्त्वैक्यमेव जीवेश्वरयोः। इदमेव 'तत्त्वमसि' इत्यादीनि महावाक्यानि बोधयन्ति। न च तत्पदेन जगदुत्पत्तिकारकः सर्वशक्तिमान् परमात्माभिधीयते, त्वंपदेन चाल्पशक्तिरल्पज्ञो जीवः। अतस्तयोरैक्यं कथं सम्भवति, यत् 'असि' पदेन वाच्यतया सुस्पष्टं प्रतीयते। जहद्रूपा अजहद्रूपा च लक्षणापि चात्र न सम्भवति। यतो हि तत्र जहल्लक्षणा, यत्र वक्तृतात्पर्यानुपपत्त्या वाच्यार्थं परित्यज्य वाच्यार्थसम्बन्ध्यन्योऽर्थः प्रतीयते। प्रकृते तु महावाक्येन ज्ञेयः साक्षी चित् ब्रह्म विवक्षित तौ च त्वंतत्पदयोर्वाच्य एव। अतो न जहल्लक्षणा। एवमजहल्लक्षणापि न भवितुमर्हति। यतो हि कुन्ताः प्रविशन्तीत्यादावजहल्लक्षणायां वाच्यार्थस्थितावेव तत्सम्बन्ध्यन्योऽर्थः प्रतीयते, एवं पूर्वोक्त दोषस्तदवस्थ एव, इति वाच्यम्-अभिधावृत्त्या जहदजहल्लक्षणाभ्यां च कार्यानिर्वाहेऽपि भागत्यागलक्षणया कार्यनिर्वाहात्। तद्यथा 'सोऽयं देवदत्तः' इत्यत्र भूतकालविशिष्टो मथुरायामवलोकितो देवदत्तस्तच्छब्दवाच्यः, वर्तमानकालिकश्चेदंशब्दवाच्यः, भूतवर्त्तमानयोश्च परस्परं विरोधोऽतोऽत्र विरोधधर्ममपहाय केवलं देवदत्तशब्दः पदद्वयेनोच्यते भागत्यागलक्षणया। तथैवात्रापि भागत्यागलक्षणया विरुद्धधर्मं विहाय केवलं चिदेव द्वाभ्यां पदाभ्यां प्रतीयते चित्त्वेन तु जीवेश्वरयोर्न विरोधः। एतदेवोक्तं भगवता रामेण—

एकात्मकत्वाजहती न सम्भवेत्—
तथा जहल्लक्षणता विरोधतः।
सोऽयं पदार्थाविव भागलक्षणा
युज्येत तत्त्वं पदयोरदोषतः।

एवमेव 'अयमात्मा ब्रह्म' 'प्रज्ञानमानन्दं ब्रह्म' 'सोऽहं ब्रह्म' एभिर्महावाक्यैरपि परमात्मजीवात्मनोरैक्यमेव प्रतिपाद्यते। अतः किमधिकं ब्रूमः यतो हि—

वक्तव्यं किमु विद्यतेऽत्र बहुधा ब्रह्मैव जीवःस्वयं
ब्रह्मै तज्जगदाततं तु सकलं ब्रह्माद्वितीयं श्रुतिः।

अतो विहाय सर्वतः संगं ध्यातव्यं परं ब्रह्म। यतो हि—

ब्रह्मैवाहमिति प्रबुद्धमतयः संत्यक्तबाह्याः स्फुटं
ब्रह्मीभूय वसन्ति संततचिदानन्दात्मनैतद् ध्रुवम्॥

अयं च परमतत्त्वमात्मा संसाराब्धौ निमग्नानां पुरुषाणां यदा कदाचित् सत्कर्मपरिपाको भवति तदा सद्गुरोरुपलब्ध्या तत्सदुपदेशेनोपलभ्यते। परन्तु यदास्माकं सत्कर्मपरिपाको भविष्यति तदा सुतरां ज्ञानमुत्पत्स्यत इति विचार्य मनुष्येण नात्मकल्याणायोपेक्ष्यम्। यतो हि यदा मानवेभ्यो मनुष्यजन्मप्राप्तिस्तदैव तदवसरातुप्रत्तः परमेश्वरेण। अतो यावत् सर्वत्र परमेश्वरबुद्धिर्न भवेत्तावत् सावधानाः सन्तो वर्णाश्रमाचार-

धर्मान् भगवद्भक्तिं च विदधीरन्सर्वथा। एवं कर्मोपासनाभ्यां मलविक्षेपयोर्दूरीकरणेन वैराग्यादिसाधनचतुष्टयपरिपालनेन च सुतरामात्मज्ञानयोग्यता भविष्यति। परमेतत्तदैव सम्भवति यद्—अनाद्यविद्यया सुप्तो यदा जीवः प्रबुध्यते। अतो नोपेक्ष्यमात्मश्रेयसे।

विलोक्यते संसारे यत् सर्वेऽपि प्राणिनो निरतिशयं सुखमेव कामयन्तेऽनुदिनं यतन्ते च तदर्थमापदः सोढ्वापि। स्त्रीहीनः पुरुषः सभार्यं सुखिनं मन्यतेऽतः स्वयमपि तदाप्त्यै नानाविधाश्चिन्तयति, पुत्रहीनः पुत्रवति सुखमालोकयति, स्वयमपि तदर्थं भैरवं स्तौति, हनुमन्तं पूजयति, गौरीं चार्चयति, शिवमुपास्ते, यतींश्च वन्दते। दरिद्री धनमेव सुखसाधनं मत्वा तदभाव आत्मानं धिक्करोति, तिरस्करोति चात्मनः कुलशीलादि, निन्दति चात्मनः पूर्वकृत्यानि, तृणवन्मन्यते चात्मानम्। परो भूमिमेव सर्वसुखाश्रयं मत्वा हन्ति हिंस्र इव प्राणिनो निष्कासयति चात्मीयान् गेहात् कलहायतेऽरिभिः। एकं लब्ध्वापि कथंचित्तत्रातुष्यन्तः पुनरन्यार्थं प्रयतन्ते। एवं सुखमन्विष्यन्तः पतन्त्यधोऽधः। नैते विजानन्ति यद्येषु सुखभ्रान्तिरस्माकं तानि तु मरीचिकाजलम्, यच्च परमानन्दास्पदमात्मतत्त्वं तत्तु सर्वदास्माकं समीप एव। सर्वतोऽतिशायि परमानन्द आत्मन्येव,न स विहाय तं कोटिजन्मभिरपि कथंचिन् क्वापि लभ्यः। स्त्रीपुत्रादिष्वप्यानन्दलेशस्तदाभासेनैव। यश्च परमामोद आत्मनि स तु गिरा अवर्ण्यो मनसा चाचिन्त्यो बुद्ध्या चाग्राह्यः। यतो हि तत्रानुभविनामपि योगिनामियं गीः —

> बुद्धिर्विनष्टा गलिता प्रवृत्ति-
> र्ब्रह्मात्मनोरेकतयाधिगत्या।
> इदं न जानेऽप्यनिदं न जाने
> किं वा कियद्वा सुखमस्त्यपारम्॥
>
> वाचा वक्तुमशक्यमेव मनसा गन्तुं न वा शक्यते
> स्वानन्दामृतपूरपूरितपरब्रह्माम्बुधेर्वैभवम्॥
> अम्भोराशिविशीर्णवार्षिकशिलाभावं भजन्मे मनो
> यस्यांशांशलवे विलीनमधुनानन्दात्मना निर्वृतम्॥
>
> क्व गतं केन वा नीतं कुत्र लीनमिदं जगत्।
> अधुनैव मया दृष्टं नास्ति किं महदद्भुतम्
> किं हेयं किमुपादेयं किमन्यत् किं विलक्षणम्।
> अखण्डानन्दपीयूषपूर्णब्रह्ममहार्णवे।
> न किञ्चिदत्र पश्यामि न शृणोमि न वेद्म्यहम्।
> स्वात्मनैव सदानन्दरूपेणास्मि विलक्षणः।

कुतः पुनः स मादृशेन मूढमतिना वर्ण्येतेति विरमामि विस्तरात्।

---

## अधीतिभिरवधेयम्

> † उपेक्षका देशिकदिष्टवस्तुनो
> विलासशीला विषयाभिलाषिणः।
> शयालवो भूरि रताश्च विग्रहे
> व्रजन्ति विद्यार्थिगणा अधोगतिम्।
>
> खलेन सङ्गं कलहं महात्मना
> भृशं निरासं निजधर्मकर्मणोः।
> मृषाभिभाषं पठनाद् विरागं
> समाश्रयन्तो बत यान्ति दुर्गतिम्।

† स्वर्गीयपण्डितश्रीघूरभामहोदयस्य 'छात्रकल्पवल्लीतः' संगृहीतानि पद्यपुष्पाणि। —संपादकः

# दर्शनेषु सनातनधर्म्मः



[नि०—श्रीदीनानाथशर्मा शास्त्री सारस्वतः, विद्याभूषणम्, विद्यावागीशः, विद्यानिधिः, स० ध० कालेजोपाध्यायः, मुलतान सिटी]

'प्र,णो देवी सरस्वती वाजेभिर्वाजिनीवती ।
धीनामवित्र्यवतु' ऋ० ६।६१।४

रत्नाकरसम्पादकैः तद्विशिष्टाङ्कस्य दर्शनाङ्कस्य ईदृग्विषयसूची समुपनिबद्धा येन दार्शनिकोऽन्तरङ्ग-विषयः समेषामधिगत एव स्यात्। ततस्तदनुसारं विविधैर्दार्शनिकैः स स विषय उपनेतव्य एव पाठकानां समक्षम्। परमस्माभिस्तद्विशिष्टाङ्कस्य कात्स्न्यीय तदीयान्तरङ्गभूतोपि सन् बहिरङ्गपदव्यपदेश्यो विषयः समुपन्यस्यते 'दर्शनेषु सनातनधर्मः' इति शीर्षकेण। सनातनधर्म्मः सोऽस्ति धर्म्मो यो वेदेषु, वेदाङ्गेषु, उपवेदेषु, दर्शनेषु, पुराणेतिहासेषु, आयुर्व्वेदाद्यन्यसाहित्ये चास्ति व्याप्तः; न चादसीया इयत्ता निर्द्धारयितुं शक्या। परमस्माभिरत्र दर्शनानां प्रकृतत्वात् ततः सनातनधर्म्मस्य प्रसिद्धाः सिद्धान्ताः प्रदर्श्यन्ते।

तत्र अद्यत्वे सनातनधर्म्मस्य प्रसिद्धसिद्धान्ता अमी सन्ति—१ मङ्गलाचरणस्य प्रामाणिकता, २ वेदस्य प्रामाण्यम्। ३ मन्त्रब्राह्मणयोर्वेदत्वम्, शाखानां च वेदस्य मन्त्रभागेऽन्तर्भावः। ४ वेदादीनां यज्ञादयः प्रधानविषयाः। ५ वेदे वैदिकयज्ञे च द्विजमात्रस्याधिकारः। ६ वर्णव्यवस्था जन्मना, न किल गुणकर्म्मणा। ७ मृतकश्राद्धम्। ८ स्वर्गनरकादिपरलोकविशेषाः। ९ यज्ञानां स्वर्गप्राप्त्युद्देश्यकता। १० स्वर्गे गन्धर्वाप्सरसः। ११ मूर्तिपूजा। १२ देवपूजनम्। १३ द्वैताद्वैतवादसामञ्जस्यम्। १४ स्त्रीणामावरणप्रथा। १५ स्त्रीणां वेदोपनयनाद्यनधिकारः। १६ विधवाविवाहनिषेधः। १७ योगसिद्धयः। १८ मुक्तौ अपुनरावृत्तिः। १९ तर्कप्रमाणयोस्तर्कस्याऽप्रतिष्ठानता। २० शास्त्रीयविरोधपरिहारविचारः। इत्यादयोऽन्येपि च बहवो विषया जाग्रति *।

एतदादयः सनातनधर्म्मसिद्धान्ता वादिप्रतिवादिसम्प्रतिपन्नेषु दर्शनेष्वपि समाविष्टाः। परं सर्व्वेषां दर्शनतो दर्शने, तत्र विशिष्टालोचनायां च कृतायां सम्भाव्यते यद्-'रत्नाकर'स्य दर्शनाङ्कः केवलमास्माकीननिबन्धेनैव समाप्तः स्यात्। परं सम्पादकानां 'नातिदीर्घ'शब्देन स्वनिबन्धं सङ्कोचयितुं विवशीभूताः स्मः। न चाद्यतनकार्गजाद्यकालकाले तादृशी सुविधा, न च तावान् + अवधिरेव दत्तः सम्पादकैरिति प्रोक्तविषयेषु काँश्चिदवलम्ब्य दर्शनतस्तेषां दिग्दर्शनं कार्य्यते। आशास्महे—पाठकमहाभागाः सन्तुष्येयुरेतेन। अवशिष्टेषु विषयेषु यथावसरं रत्नाकरस्यान्य साधारणाङ्केषु किंचिद् विनिवेदयिष्यामः।

## अथ प्रस्तावना—

'दर्शन'शब्दो 'दृश्यते साक्षात्क्रियते आत्माऽनेन' इति दृशेः करणल्युटा व्याक्रियते। ततोऽदसीयश्चरम उद्देश आत्मसाक्षात्कार एव फलति। तदीयान्येव साध-

*जाग्रति। अभ्यस्ताच्चेत्यदाऽत्। +अवधिः पुंसि।

नानि तैस्तैर्ऋषिमुनिभिः स्वस्वज्ञानानुसारं निरूपितानि। कैश्चित्(साङ्ख्ये संख्यावद्भिः)प्रकृतिपुरुषविवेकज्ञानम्, कैश्चन (नैयायिकवैशेषिकैः)षोडशपदार्थानामभावसप्तमषट्पदार्थानां वा उद्देशलक्षणपरीक्षाभिस्तत्त्वज्ञानम्, कैश्चन (मीमांसामांसलैः) कर्म्मज्ञानम्, अन्यैः (वेदान्तिभिः) रात्मपरमात्मनोरभेदज्ञानम्, अपरैः (योगिभिः) योगज्ञानं च तत्र साधनमाकलितम्।

दर्शनसंख्याविषयेपि तैर्थिकानां विविधानि मतान्युपलभ्यन्ते। केचित् पूर्वोत्तरमीमांसाद्वयम्, सेश्वरनिरीश्वरसाङ्ख्यद्वयम्, सप्तपदार्थषोडशपदार्थाभिधायिन्यायद्वयमिति षड्दर्शनीमभिदधति। तत्र पूर्वा मीमांसा जैमिनीयं मीमांसादर्शनम्, उत्तरा मीमांसा वैयासिकं वेदान्तदर्शनम्, सेश्वरसाङ्ख्यं पातञ्जलं योगदर्शनम्, निरीश्वरसाङ्ख्यं कापिलं साङ्ख्यदर्शनम्, अभावसप्तषट्पदार्थाभिधायी न्यायः काणादं वैशेषिकदर्शनम्, षोडशपदार्थाभिधायी न्यायो गौतमीयं न्यायदर्शनञ्च विश्रुतमवतरे।

केचित् दर्शनानामास्तिकनास्तिकेति द्वैविध्यमुपकल्प्य प्रागुक्तषड्दर्शनीमास्तिकदर्शनान्यभिधाय सौत्रान्तिक-वैभाषिक-योगाचार-माध्यमिकेति भेदभिन्नबौद्धदर्शनचतुष्टयेन जैनलौकायतिकदर्शनद्वयेन च सह संहृत्य द्वादशदर्शनीमाचक्षते।—सर्व्ववेदभाष्यकर्त्रा श्रीमत्सायणमाधवेन तु स्वकीये 'सर्व्वदर्शनसंग्रहे' १—चार्वाकदर्शनम्, २—बौद्धदर्शनम्, ३—आर्हतदर्शनम्, ४—रामानुजदर्शनम्, ५—पूर्णप्रज्ञ(माध्व)दर्शनम्, ६—नकुलीयपाशुपतदर्शनम्, ७—शैवदर्शनम्, ८—प्रत्यभिज्ञादर्शनम्, ९—रसेश्वरदर्शनम्, १०—औलूक्य (वैशेषिक) दर्शनम् ११—अक्षपाद (न्याय) दर्शनम्, १२—जैमिनि (मीमांसा) दर्शनम्, १३—पाणिनिदर्शनम्, १४—साङ्ख्यदर्शनम्, १५—पातञ्जल (योग) दर्शनम्, १६—शाङ्करदर्शनम्—इति षोडश दर्शनानि विवृतानि। एतदादिभेदकारणं यत्र आस्तिक (परलोकाद्यस्तित्वग्राहक) नास्तिक (परलोकादिनास्तित्वग्राहक) ता; तत्र भेदाभेद (द्वैताद्वैत) वादोऽपि।

प्रस्थानभेदकृन्मधुसूदनस्तु 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥१।३ इति याज्ञवल्क्यदिशा चतुरो वेदान् षट् तदीयाङ्गानि, पुराण-न्याय-मीमांसा-धर्मशास्त्राणि इति चत्वारि च वेदस्योपाङ्गानि दर्शयित्वा, उपपुराणानि [ब्राह्मादि] पुराणेऽन्तर्भाव्य *वैशेषिकं न्यायेऽन्तःपात्य* वेदान्त-शास्त्रं मीमांसायां गणयित्वा, रामायणमहाभारते साङ्ख्यपातञ्जलपाशुपतवैष्णवदर्शनानि च धर्म्मशास्त्रे सङ्ख्याय चतुर्दश, आयुर्वेद-धनुर्वेद-गन्धर्ववेदार्थ-शास्त्राणि—इति चतुर उपवेदांश्च तत्र संयोज्य अष्टादश आस्तिकशास्त्रप्रस्थानानि दर्शयति। नास्तिकानां च प्रस्थानान्तराणि वेदबाह्यत्वात् तेषां म्लेच्छादि-प्रस्थानवत् पुरुषार्थानुपयोगीन्याकलय्य उपेक्षणीयानि मन्यते।

परमद्यत्वे प्रागुक्तानि न्यायवैशेषिकसाङ्ख्ययोगपूर्वोत्तरमीमांसेति षड्दर्शनान्येव दर्शनशब्देनाभिधीयन्ते। अस्मिन् निबन्धेऽस्माभिरतानि षड्दर्शनानि, सायणानुसारं पाणिनीयदर्शनमपि प्रमाणत्वेन उद्ध्रियेरन्। एषां दर्शनानां महत्त्वमास्तं च वर्तमानाऽविश्वस्तजननेत्रा अभिनवमस्करिणा स्वा० दयानन्देनापि तानि स्वीकृत्य पिशुनितम्। तत्र वैशेषिके प्रशस्तपादभाष्यम्, न्याये वात्स्यायनभाष्यम्,

* अन्तर्भाव्य। अत्र 'अन्तरपरिग्रहे' इति गतित्वम्, ततो गतिसमासत्वाल्ल्यप्। एवमेव अन्तःपात्येति।

साङ्ख्ये विज्ञानभिक्षुभाष्यम्, योगे व्यासभाष्यम्, मीमांसायां शाबरभाष्यम्, वेदान्ते शाङ्करभाष्यम्, पाणिनीये पातञ्जलमहाभाष्यं चास्माभिरुदाह्रियेत प्रमाणत्वेन, क्वचिद् याज्ञवल्क्यदिशा वेदपुराणादिरपि। अथात उपक्रम्यते।

## १—वेदे वैदिकयज्ञे च द्विजमात्रस्याधिकारः

वेदस्य यज्ञः प्रधानविषय इति प्रागुक्तमेव। तदधिकारिनिर्वाचने मीमांसादर्शनस्य 'चातुर्वर्ण्यमविशेषात्' ६।१।२५ इति पूर्वपक्षस्य उत्तरपक्षे 'निर्देशाद् वा त्रयाणां स्याद् अग्न्याधेये ह्यसम्बन्धः क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः' ६।१।२६ इति यागे शूद्रस्यानधिकाराधिकरणे (७) सूत्रमुक्तम्। अत्र शाबरभाष्यम्—"वा शब्दः पक्षं व्यावर्त्तयति। त्रयाणामधिकारः स्यात्। कुतः? अग्न्याधेये निर्देशात्। अग्न्याधेये त्रयाणां निर्देशो भवति "वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्यः, शरदि वैश्य इति। शूद्रस्याधाने श्रुतिर्नास्ति—इत्यनग्निः—शूद्रोऽसमर्थोऽग्निहोत्रादि निर्वर्तयितुम्।'''आहवनीयादयो न शूद्रस्य, अविधानात्। तस्मादनधिकृतोऽग्निहोत्रादिषु शूद्र इत्यात्रेयो मन्यते स्म।"

ततः "निमित्तार्थेन बादरिस्तस्मात् सर्वाधिकारं स्यात्' ६।१।२७ इति पूर्वपक्षस्य 'अपि वाऽन्यार्थदर्शनाद् यथाश्रुति प्रतीयेत' ६।१।२८ इत्युत्तरपक्षो निर्दिष्टः। अत्र शाबरभाष्यम्—'अपि वा—इति पक्षो व्यावर्त्यते, ब्राह्मणादयो हि आधाने श्रूयन्ते, तेन ब्राह्मणादिकर्तृकमाधानम्।....तथा च इदं शूद्रवर्जितानामेव अनुक्रमणं भवति।....तस्मान्न शूद्रो जुहुयाद् यजेद् वा'। ततः २९-३०-३१-३२ सूत्रैः कृते पूर्वपक्षे उत्तरपक्षोऽयम्—'अपि वा वेदनिर्देशाद् अपशूद्राणां प्रतीयेत' ६।१।३३ अत्र शाबरभाष्यम्—'अपि वा-इति पक्षव्यावर्तनम्।....वेदे हि त्रयाणां निर्देशो भवति—'वसन्ते ब्राह्मणमुपनयीत' इत्यादि। वेदाऽभावादसमर्थः शूद्रो यष्टुम्। तस्मान्नाधिक्रियेत'।

ततश्च 'गुणार्थित्वान्नेति चेत्' ६।१।३४ इति पूर्वपक्षसूत्रम्। तत्र शाबरभाष्यम्—'शूद्रोऽनुपनीतः स्वयमुपेत्याध्येष्यते?'। तत उत्तरपक्षः—'संस्कारस्य तदर्थत्वाद् विद्यायां पुरुषश्रुतिः' ६।१।३५ अत्र शाबरभाष्यम्—'उच्यते—विद्यायामेवैषा पुरुषश्रुतिः। उपनयनस्य संस्कारस्य तदर्थत्वात्।....आचार्यकरणमेतदभिधीयते? कुतः? आत्मनेपददर्शनात्। नयतिराचार्यकरणे वर्त्तते। तदर्थसम्बन्धादुपनयनमाचार्यकरणप्रयुक्तम्। वेदाध्यापनेन चाचार्यो भवति। तस्माद् वेदाध्ययने ब्राह्मणादयः श्रुताः। शूद्रस्य न श्रुतं वेदाध्ययनम्। अतोऽवेदत्वाद् असमर्थः शूद्रो नाधिक्रियते।'

ततः पुनः पूर्वपक्षः—'विद्यानिर्देशान्नेति चेत्' ६।१।३६ अत्र भाष्यम्—'इति चेत् पश्यसि—अवेदत्वाद् असामर्थ्यादनधिकृतः शूद्र इति। नैष दोषः—विद्यां निर्देक्ष्यति, अनुक्तामप्यध्येष्यते....'। एतदाशङ्कानिरासाय इदं सूत्रम्—'अवैद्यत्वादभावः कर्मणि स्यात्' ६।१।३७ अत्र शाबरभाष्यम्—'न चैतदस्ति—शूद्रोऽध्येष्यते इति। प्रतिषिद्धमस्याऽध्ययनम्—शूद्रेण नाध्येतव्यमिति। अधीयानस्यापि अध्ययनं सफलं न भवति, दोषश्च जायते। अतोऽवैद्यः शूद्रः।....अतः शूद्रस्यानधिकारः'। तत्र युक्तिमाह सूत्रकारो जैमिनिः—'तथा चाऽन्यार्थदर्शनम्' ६।१।३८ अत्र भाष्यम्—'अन्यार्थदर्शनं च भवति' यथा—शूद्रस्य नाध्ययनमिति। किं लिङ्गं भवति? यद्यु (यदि उ इति छेदः) वा एतत् श्मशानं यत् शूद्रः, तस्मात् शूद्रसमीपे नाध्येयम्' इत्यनध्ययनं शूद्रस्य दर्शयति। तस्मादपशूद्राणामधिकारः।...तस्मादसम्भवः शूद्रस्याग्निहोत्रादिषु" इत्येवं मीमांसादर्शने

यागे शूद्रस्यानधिकाराधिकरणदर्शनेन नयं यज्ञविषयके वेदेऽनधिकारः स्वतः सिद्धः अत एव तु वेदेऽपि 'अयं स होता यो द्विजन्मा' ऋ० ( शा० सं० ) १।१४९।५ इति यज्ञे तन्मूलकवेदे च द्विजन्मन एवाधिकार आम्नातः। तेन एकजस्य शूद्रस्य तत्रानधिकार एव।

एवं वेदान्तदर्शने प्रथमाध्याये तृतीयपादेऽपशूद्राधिकरणे ( ८ ) 'शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि' इति ३४ सूत्रस्य शाङ्करभाष्ये प्रोक्तम्-तस्मात् [ अनग्नित्वात ] शूद्रो यज्ञेऽनवक्लृप्तः' तै०सं० ७।१।१।६....'न शूद्रस्याधिकारः' वेदाध्ययनाभावात् अधीतवेदो हि विदितवेदार्थो वेदार्थेष्वधिक्रियते। न च शूद्रस्य वेदाध्ययनमस्ति, उपनयनपूर्वकत्वाद् वेदाध्ययनस्य। उपनयनस्य वर्णत्रयविषयत्वात्। यत्त्वर्थित्वम्, न तदसति सामर्थ्येऽधिकारकारणं भवति। सामर्थ्यमपि न लौकिकं केवलमधिकारकारणं भवति। शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्यापेक्षितत्वात्। शास्त्रीयस्य च सामर्थ्यस्य अध्ययननिराकरणेन निराकृतत्वात्।' १।३।३४ 'जानश्रुतेः क्षत्रियत्वावगतिः। अतो न शूद्रस्याधिकारः १।३।३५

संस्कारपरामर्शात् तदभावाभिलापाच्च' वेदान्त० १।३।३६ अत्र शाङ्करभाष्यम्-''इतश्च न शूद्रस्याधिकारः ..शूद्रस्य संस्काराऽभावोऽभिलप्यते-'शूद्रश्चतुर्थो वर्ण एकजातिः (अनुपनीतः)' मनु० १०।४ इत्येकजातित्वस्मरणात्। 'न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति' मनु० १०।१२६ 'मन्त्रवर्ज्यं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च' ''मनु० १०।१२७ इत्यादिभिश्च''। 'श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च' ब्रह्मसूत्रे १।३।३८ अत्र भाष्यम्-'इतश्च न शूद्रस्याधिकारः' यदस्य स्मृतेः श्रवणाध्ययनार्थप्रतिषेधो भवति। वेदश्रवणप्रतिषेधो वेदाध्ययनप्रतिषेधस्तदर्थज्ञानानुष्ठानयोश्च प्रतिषेधः शूद्रस्य स्मर्यते। श्रवणप्रतिषेधस्तावत्-'अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां *श्रोत्रप्रतिपूरणम्' गो० ध० सू० 'पद्यु ( पादयुक्तं ) ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यमिति च'। अत एवाध्ययनप्रतिषेधः। यस्य हि समीपेऽपि नाध्येतव्यं भवति स कथमश्रुतमधीयीत। भवति च वेदोच्चारणे *जिह्वाच्छेदो धारणे शरीरभेद इति। अत एव चाऽर्थादर्थज्ञानानुष्ठानयोः प्रतिषेधो भवति 'न शूद्राय मतिं दद्यात्' इति। द्विजातीनामध्ययनमिज्या दानमिति च। ....'श्रावयेच्चतुरो वर्णान्' इति चेतिहासपुराणाधिगमे चातुर्वर्ण्यस्याधिकारस्मरणात्। वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणामिति स्थितम्''।

तदेवं यज्ञविषयके वेदे द्विजमात्रस्याधिकारः सिद्धः। परम् आर्त्विज्ये तु ब्राह्मणस्यैवाधिकारः। अत एव मीमांसादर्शनस्य द्वादशे चतुर्थपादेऽन्तिमं द्वादशमधिकरणमेव 'आर्त्विज्ये ब्राह्मणमात्राधिकरणम्' इत्यस्ति। तत्र 'प्रभुत्वाद् आर्त्विज्यं सर्ववर्णानां स्यात्' १२।४।३७ इति पूर्वपक्षसूत्रमस्ति। तत्र उत्तरपक्षसूत्रम्-'स्मृतेर्वा स्याद् ब्राह्मणानाम्' १२।४।३८ अत्र शाबरभाष्यम्-'ब्राह्मणानामेव आर्त्विज्यं स्याद्' नेतरयोर्वर्णयोः। कुतः? स्मृतेः। एवं शिष्टाः स्मरन्ति-'याजनाध्यापनप्रतिग्रहा ब्राह्मणस्यैव वृत्त्युपाया इति। स्मृतिश्च प्रमाणमित्युक्तम्। तस्माद् ब्राह्मणा एव याजयेयुः। ततोऽग्रे हेतुसूत्रम्-'फलचमसविधानाच्चेतरेषाम्' १२।४।३९ अन्तिमं मीमांसादर्शनसूत्रमिदं तत्र-'अन्वाहार्ये च दर्शनात्' १२।४।४२ अत्र शाबरभाष्यम्-''दार्शपूर्णमासिक्यां च अन्वाहार्यदक्षिणायां ब्राह्मणा एव

* अयमर्थवादः। तेनास्य शूद्रस्य वेदश्रवणादिकं सर्वथा निषिद्धमिति तात्पर्ये एव पर्यवसानम्।

दृश्यन्ते—'त एते वै देवा अहुतादो यद् ब्राह्मणाः यद् अन्वाहार्यमाहरति, तानेव तेन प्रीणातीति' । दक्षिणा च ऋत्विग्भ्यो दीयते। तस्माद् ब्राह्मणानामार्त्विज्यम्' । एवं 'ब्राह्मणानां वा इतरयोरार्त्विज्याऽभावात्' ६।६।१८ इति मीमांसादर्शनसूत्रेपि स्पष्टम्। अत एव 'आर्त्विजीन'-शब्दस्य सिद्धिप्रसङ्गे ५।१।७१ सूत्रे महाभाष्ये 'यज्ञर्त्विग्भ्यां तत्कर्म अर्हति-इत्युपसङ्ख्यानम्' इति वार्तिकप्रदर्शितेऽर्थे ऋत्विक्कर्म अर्हति—इति विग्रहे 'आर्त्विजीनं ब्राह्मणकुलम्' इत्युक्त्वा ब्राह्मणस्यैव ऋत्विक्कर्मण्यधिकारः पिशुनितः ।

## २—यज्ञानां स्वर्गप्राप्त्युद्देश्यकता ।

केचिद् वादिनो यज्ञानां वायुशुद्धिं साक्षाद् उद्देश्यं मन्वते । परं तदसत्। अवान्तरमुद्देश्यं वायुशुद्धिरपि भवेद्; नात्र वयं नकारं कुर्म्महे; तथापि साक्षादुद्देश्यं तु स्वर्ग एव। यथा च दार्शनिका अभिदधति : न्यायदर्शने ४।१।४४ पूर्वपक्षिसूत्रस्य भाष्ये "अस्ति चेयं क्रिया" 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति; एतस्याः फले संशयः ?' इति प्रश्नस्य उत्तरसूत्रभाष्ये प्रोक्तम्—'न सद्यः' कालान्तरोपभोग्यत्वात्' । न्याय० ४।१।४५ सूत्रस्य भाष्ये च 'स्वर्गः फलं श्रूयते,तच्च भिन्नेऽस्मिन् देहभेदाद् उत्पद्यते इति, न सद्यः।' एतेन यत्र यज्ञेन स्वर्गप्राप्तिरुक्ता; तत्र देहपातेनैव स्वर्गप्राप्तिः सूचिता। तेन इमं लोकम् एतल्लोकस्थसुखं च स्वर्गं मन्वाना निरस्ताः।

'होमाच्च स्वर्गो भवति' मीमांसादर्शने ३।१।१२। पाणिनीयसूत्रस्य ६।१।८४ सूत्रमहाभाष्ये प्रोक्तम्-'इज्यायाः ( यज्ञस्य ) किञ्चित् प्रयोजनमुक्तम् । किम् ? स्वर्गे लोके अप्सरसं एनं जाया भूत्वा उपशेरते' अत्र सनातनधर्म्मस्य पक्षः स्पष्ट एव। 'इष्ट ( यज्ञ ) कारिण एव चन्द्रमसमारोहन्ति, नेतरे [illegible] इतरे तु स्वर्गं यमालयमवगाह्य स्वदुष्कृतानुरूपा यातनीयन्ता अनुभूय पुनरेव इमं मानुषं लोकं प्रत्यवरोहन्ति' वेदान्तदर्शने शाङ्करभाष्ये ३।१।१३ अस्मिन् विषयेऽन्यान्यपि दार्शनिकप्रमाणानि जाग्रति; परं [illegible] विस्तरभिया विरम्यते ।

## ३—स्वर्गे गन्धर्वाप्सरसः

योगदर्शने ४।२६ सूत्रस्य व्यासभाष्ये प्रोक्तम्—'माहेन्द्रनिवासिनः षड् देवनिकायाः, सर्वे सङ्कल्पसिद्धा अणिमाद्यैश्वर्योपपन्नाः कल्पायुषो वृन्दारकाः, कामभोगिनः औपपादिकदेहाः, उत्तमानुकूलाभिरप्सरोभिः कृतपरिवाराः, योग० विभूतिपादे २६ सूत्रभाष्ये। अत्र सनातनधर्म्मपक्षस्य कियती स्पष्टता। अग्रे दृश्यताम्—'मधुमतीं भूमिं साक्षात्कुर्वतो ब्राह्मणस्य स्थानिनो देवा उपनिमन्त्रयन्ते, भोरिह आस्यताम्, इह रम्यताम्, कमनीयोऽयं भोगः, कमनीयेयं कन्या, रसायनमिदं जरामृत्युं बाधते, वैहायसमिदं यानम्, अमी कल्पद्रुमाः, पुण्या मन्दाकिनी, सिद्धा महर्षयः, उत्तमा अनुकूला अप्सरसः, दिव्ये श्रोत्रचक्षुषी, प्रतिपद्यताम् इदम् अक्षयमजरम् अमरस्थानं देवानां प्रियम्' योग० ३।५१ अत्रापि स्पष्टतैव ।

## ४—मूर्तिपूजा

"सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थं स्थानविशेषो न विरुध्यते शालग्राम इव विष्णोः" वेदान्तदर्शने शाङ्करभाष्ये १।२।१४ अत्र शालग्राममूर्तिपूजा दर्शिता। अदसीया स्पष्टताऽन्यत्राप्युक्ता—"अणीयस्त्वादिगुणगणोपेत ईश्वरस्तत्र हृदयपुण्डरीके निचाय्यो द्रष्टव्य उपदिश्यते, यथा—शालग्रामे हरिः। तत्रास्य बुद्धिविज्ञानं ग्राहकम्। सर्वगतोपीश्वरस्तत्र उपास्यमानः

प्रसीदति" वेदान्त० शाङ्करभाष्ये १।२।७ कियन्तः स्पष्टशब्दा मूर्तिपूजासिद्धौ । एवमन्यत्रापि—"यत्तूक्तं ब्रह्मोपासनमेवात्र आदरणीयं फलत्वायेति, तद् अयुक्तम् । उक्तेन न्यायेन आदित्यादीनामेव उपास्यत्वावगमात् । फलं तु आतिथ्याद्युपासने इव आदित्याद्युपासनेपि ब्रह्मैव दास्यति सर्वाध्यक्षत्वात् । वर्णितञ्चैतत् "फलमत उपपत्तेः" ब्र० सू० ३।३।३८ इत्यत्र । ईदृशं चात्र ब्रह्मण उपास्यत्वं यत् प्रतीकेषु तद्दृष्टयध्यारोपणं प्रतिमादिष्विव विष्णवादीनाम्" वेदान्त० शाङ्कर० ४।१।५ एतेन मूर्तिपूजनं समूलं सिद्धम् ।

पाणिनिदर्शनस्य "जीविकार्थे चापण्ये" ५।३।९९ इति सूत्रस्य महाभाष्येपि प्रोक्तम्—'यास्त्वेताः सम्प्रति पूजार्थाः ( प्रतिमाः ), तासु कनो लुप् भविष्यति" इति मूर्तिपूजा प्राचीना मता । अत्रैव सूत्रे तत्त्वबोधिन्यामुक्तम्—"यास्त्वायतने प्रतिष्ठाप्यन्ते, तासु उत्तरसूत्रेण लुप् । तदुक्तम्—"अर्चासु पूजनार्हासु चित्रकर्मध्वजेषु च । इवे प्रतिकृतौ लोपः कनो देवपथादिषु" अर्चासु-प्रतिमासु । कीदृशीषु ? पूजनार्हासु गेहेषु आयतनेषु वा याः पूज्यन्ते तासु । अर्चासु-शिवः विष्णुः ।" इत्यादि ।

## ५—द्वैताद्वैतवादसामञ्जस्यम्

द्वयोर्भावो द्विता । अत्र तल् प्रत्ययः "तलन्तः" लिङ्गानु० १७ इति स्त्रियाम् । द्विता एव द्वैतम्, स्वार्थिकोऽण् । "स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते" इति स्त्रीलिङ्गतो नपुंसकलिङ्गता । न द्वैतम् इत्यद्वैतम् । तत्सम्बन्धिवादोऽद्वैतवादः ।

अस्मिन् विषये दार्शनिकानां मतभेदोऽस्ति । तत्र श्रीमद्रामानुजाचार्य-माध्वाचार्य-श्रीकण्ठाचार्य-भास्कराचार्य-निम्बार्काचार्य-वल्लभाचार्य-चैतन्यदेव-श्रीकराचार्य-बलदेवविद्याभूषण-विज्ञानभिक्षुप्रभृतयो विशिष्टाद्वैतवाद-द्वैतवाद-शैवविशिष्टाद्वैतवाद-भेदाभेदवाद-द्वैताद्वैतवाद-शुद्धाद्वैतवादाऽचिन्त्यभेदाभेदवाद-शक्तिविशिष्टाद्वैतवादाऽचिन्त्यभेदवाद-साङ्ख्यद्वैतवादप्रभृतिसम्प्रदायान् प्रचारयामासुः । श्रीमता शङ्कराचार्यस्वामिना तच्छिष्यपरम्परायां च श्रीपद्मपादाचार्य-सुरेश्वराचार्य-सर्वज्ञात्ममुनि-प्रकाशात्माचार्याद्वैतानन्द-चित्सुखाचार्य-भारतीतीर्थ-विद्यारण्यानन्दज्ञान-मधुसूदन-ब्रह्मानन्दप्रभृतिभिस्ततः श्रीहर्षप्रभृतिभिश्च अद्वैतवाद एव स्वीकृतः ।

तत्र स्थूलो वादो द्वैतवादोऽद्वैतवादश्च । तत्र अद्वैतवादः पारमार्थिकः, द्वैतवादस्तु व्यावहारिक इत्येवं मते उभयोर्वादयोः सामञ्जस्यं भवति । यावन्तोपि पदार्था भवन्ति; तेषु स्थूलतया द्वे सत्ते भवतः; एका पारमार्थिकी अपरा च व्यावहारिकी । द्वैतवादो व्यावहारिकी सत्ता, अद्वैतवादश्च पारमार्थिकी सत्ता । तेन यत्र शास्त्रे द्वैतवादो दृश्येत; तत्रेदं ज्ञेयं यद् अत्र व्यावहारिकतामवलम्ब्य तथोक्तम् । यतो हि सर्वे व्यवहारा भेदवादमेव अवलम्ब्य प्रचलन्ति । यदवधि व्यवहारोस्ति तदवधि भेदवादोऽर्थाद् द्वैतवादः । वस्त्रं सूत्रं च व्यवहारे पृथक् पृथक् स्तः । वस्त्रोपादानेन सूत्रं नाश्रीयते, सूत्रोपादाने वा वस्त्रं नोपादीयते । अयं व्यवहारवादः । यत्र च शास्त्रे अद्वैतवादो निरूपितो दृश्येत; तत्र ज्ञेयं यत् पारमार्थिकतामभिलक्ष्य तथोक्तम् । अत एव ज्ञानचक्षुषा दर्शने सूत्राद् भिन्नं वस्त्रं न किमपि, किन्तु तद् वस्तुतः सूत्रमेव ।

मृत्तिकातो घटो निर्म्मीयते, घटोपि मृत्तिकास्ति पारमार्थिकत्वे; यतो हि घटनिर्म्माणात् प्रागपि मृत्तिकाऽऽसीत्; घटप्रध्वंसे जातेपि मृत्तिका भविता । तत्र मध्ये घट इति नाम रूपं च व्यावहारिकमेव ।

"आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा" गौडपादकारिका ३१। घट आदावन्ते च घटो न भवति, किन्तु मृत्तिकैव। अतो मध्येऽपि असौ वस्तुतो मृत्तिकैव। परं व्यावहारिकताकारणात् स तदा मृत्तिकाशब्देन न प्रोच्यते, किन्तु 'घट'शब्देनैव कुठारो लोहादुत्पन्नः; अन्तेऽपि लोह एव ‡भविता। अतो मध्येऽपि लोह एवासौ। व्यवहारमात्रे एवाऽसौ कुठारः कथ्यते। हिममादौ जलेन निर्मितम्, अन्तेऽपि जलमेव भविता; अतो मध्येऽपि जलमेव। परं व्यवहारे तद् 'हिम' नाम्नोच्यते। इयमस्ति पदार्थानां पारमार्थिकसत्ता व्यावहारिकसत्ता च।

पारमार्थिकसत्तायां घटो मृत्तिका, कुठारो लोहः, हिमं च जलम्। व्यावहारिकसत्तायां घटो मृत्तिकातो भिन्नः कथ्यते; कुठारो लोहाद्, हिमञ्च जलाद् भिन्नं कथ्यते; यतश्शीतलजलपायनस्य $यो व्यवहारो घटे दृश्यते, स मृत्तिकायां न। काष्ठच्छेदनाऽत्यन्तशीतलतयोर्यादृशो व्यवहारः कुठारहिमयोर्विद्यते; तादृशो लोहपानीययोर्नास्ति। यद्यपीयं व्यावहारिकसत्ता घटकुठारहिमानि मृत्तिकालोहपानीयेभ्यो भेदयति; तथापि सा पारमार्थिकसत्तां भेत्तुं नेष्टे। व्यावहारिकसत्तायामपि पारमार्थिकसत्ता भवत्येव। व्यावहारिकसत्ता सांसारिकव्यवहारं प्रवर्त्तयितुं साधनम्; पारमार्थिकसत्ता च पदार्थस्य वास्तविकता-ज्ञानाय साधनम्। इदमेव दृश्यतां यथा-बालोपदेशे यान्यक्षराणि; तान्येव वेदे। परमार्थतस्तु तत्र अभेदः। परं व्यवहारपक्षमादाय तत्र भेदो भवति यद् अयं बालोपदेशः, अयं तु वेदः।

यथा व्यावहारिकसत्तायां घटादयो मृत्तिकादिभ्यो भिन्नाः कथ्यन्ते; तथैव व्यावहारिकसत्तायां जीवः प्रकृतिश्च ब्रह्मतो भिन्नौ कथ्येते × अनादी × अपि च गीता० १३।१९ अनादिस्तु संसारोऽपि कथ्यते; परमिदमनादित्वं व्यवहारमात्रेण दुर्विज्ञेयत्वेन वा। अनादिस्तु कर्म्मप्रवाहोऽपि कथ्यते; एषं सोऽपि मुक्तिसमये 'क्षीयन्ते चास्य कर्माणि' मुण्डको० २।२।८ इति क्षीयते एव। पारमार्थिकसत्तायां यथा घट-कुठार-हिमानि मृत्तिका-लोह-जलानि; तथैव पारमार्थिकतायां जीवः प्रकृतिश्चापि ब्रह्मैव। घटस्य मृत्तिकातः कथं भेदोऽजनि नामरूपे? तत्र कारणमग्निपक्वतादिकम्; तथा जीवब्रह्मणोः कथं भेदोऽभवत्? तत्र कारणं जीवात्मनि देहेन्द्रियमनोबुद्धिविषयवेदनादियोगाद् मलावरणविक्षेपादिदोषयुक्तताः ब्रह्मणश्च तद्राहित्यम्।

यथाऽग्निकणेऽल्पाशक्तिः, अग्नौ च महती; तथैव जीवात्मन्यपि न्यूना शक्तिर्दृश्यते, ब्रह्मणि च बृहती। अत्र स्वा० शङ्कराचार्येण ३।२।५ ब्रह्मसूत्रभाष्ये प्रोक्तम्—"कस्मात् पुनर्जीवः परमात्मांश एव सन्निरस्कृतज्ञानैश्वर्यो भवति? युक्तं तु ज्ञानैश्वर्ययोरतिरस्कृतत्वं विस्फुलिङ्गस्येव दहनप्रकाशनयोरिति; उच्यते—सत्यमेवैतत्, सोऽपि तु जीवस्य ज्ञानैश्वर्यतिरोभावो देहयोगाद् देहेन्द्रियमनोबुद्धिविषयवेदनादियोगाद् भवति। अस्ति चाऽत्रोपमा, यथाऽग्नेर्दहनप्रकाशनसम्पन्नस्यापि अरणिगतस्य दहनप्रकाशने तिरोहिते भवतः; यथा वा भस्माच्छन्नस्य; एवमविद्याप्रत्युपस्थापितनामरूपकृतदेहाद्युपाधियोगात् तदविवेकभ्रमकृतो जीवस्य ज्ञानैश्वर्यतिरोभावः"।

जीवस्य अविद्यादूरीभावे जीव ईश्वराद् अभिन्न एव भवति। गङ्गाजले प्रणालिकाजले च दृश्यते; यदा प्रणालिकाजलस्य मलादिकं पृथक् कृत्वा बाह्यदृष्ट्या भेदो सूर्य्यस्तज्जलमाकाशे स्थापयति;

‡ भविता। त्रुटि। $ पायनस्य। णबन्तत्वाद् युक्। ततो ल्युट्। ×अत्रोभयत्र प्रगृह्यत्वाद् असन्धिः।

तथैव गङ्गाजलमपि; तदा उभयोर्जलयोरभेद एव भवति।

एवं दर्शनेषु यद् द्वैताद्वैतविषयकवैषम्यं दृश्यते तत्रेदमेव कारणं यत्-कैश्चित् तत्र जनसाधारणोपकारार्थं व्यावहारिकसत्ता मताः कैश्चिद् विशिष्टजनोपकारार्थं पारमार्थिकता मता तत्र द्वैतवादमन्तॄणां माध्वाचार्यादीनामिदमभिमतं यद्-व्यावहारिकसत्तायामेव कर्म्मकाण्डानुष्ठानमीश्वरभक्तिश्च सम्भवति। तदवलम्बनेनैव जीवस्य कल्याणं जायते। यदि व्यावहारिकसत्ता सर्व्वथा न मन्येत; तर्हि जीवब्रह्मणोरभेदे जाते ज्येष्ठकनिष्ठत्वस्य उपास्योपासकत्वस्य वा भावोऽसम्भवी भवेत्। तदा तु संसारी जीव आत्मानं ब्रह्म मन्वानो न चित्तशुद्धिसाधकवैदिककर्म्मकाण्डमनुष्ठातुं शक्तो न चेश्वरोपासनाम्। एतदुपायावलम्बनं च विना जीवात् संसारबन्धनस्य मलविक्षेपावरणादिदोषाणाञ्च अपसरणं न भवति। सांसारिकबन्धननिरासार्थमस्माभिर्व्यावहारिकसत्तापि ग्राह्या भवति। अतश्च द्वैतवादः प्रथमं सोपानम्; अद्वैतवादश्च अन्तिमं सोपानम्। अद्वैतवाद्यपि स्वा० श्रीशङ्कराचार्यो व्यावहारिकसत्तामप्यवलम्ब्य गणेशदुर्गाविष्णुशङ्करायवताराणामुपासनासम्बन्धीनि स्तोत्राणि निर्म्ममे।

यथा सांसारिकेषु पदार्थेषु आचार्येषु च एतद्विषये व्यावहारिकपारमार्थिके¶ उभे सत्ते मते; तथा वेदादिशास्त्रेष्वुभे सत्ते मते। तत्र यदि 'द्वा सुपर्णा सयुजा सखाया' ऋ० १।१६४।२० 'प्रकृतिं पुरुषं चैव विद्ध्यानादी उभावपि' भगवद्गीता ३।२६ एतदादिकप्रमाणानि व्यावहारिकसत्तामवलम्ब्य द्वैतवादं मन्वते; तर्हि तत्र पुरुष एवेदꣳ सर्वं यद् भूतं यच्च भाव्यम्' यजुः ३१।२ 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा। मत्तः परतरं किञ्चिन्नान्यदस्ति धनञ्जय' गी० ७।७ एतदादीनि प्रमाणानि पारमार्थिकसत्तयाऽद्वैतवादमपि पुष्णन्ति। 'पुरुष एव' अत्र केचिद् 'पुरुषे एव इदं सर्वम्' इति छेदं कृत्वा द्वैतवादं साधयन्ति; परं तदेतत् पदपाठविरुद्धम्। पदपाठे 'पुरुषः। एव' इत्येव छेदः कृतः। पदपाठानुसारमेव वेदे संहिता मन्यते, न स्वाभिप्रायेण। एतेन सिद्धमिदं यद्-इदं जगत् पुरुष एव ब्रह्मैव। व्यावहारिकतयैव तदिदं सत्तात्मकम्; परमार्थसत्ता तु तस्य नास्त्येव।

यथा द्वैताद्वैतवादे जनानां मतभेदः; तथैव परमात्मनः कारणत्वेपि विवादो वर्तते जनानाम्। एके तं संसारस्य निमित्तकारणं मन्यन्ते, केचिच्च अभिन्ननिमित्तोपादानकारणम्। संसारे यावन्तः पदार्था निर्म्मीयन्ते। तत्र स्थूलतया कारणद्वयं भवति। एकं निमित्तकारणम्, अपरं च उपादानकारणम्। यदा किल सांसारिकेषु सर्वेषु पदार्थेषु इमे कारणे भवतः तदा स्वयं संसाररूपकार्य्येपि आभ्यां कारणाभ्यामवश्यं भाव्यम्। एवञ्चानुसन्धाने सति प्रतीयते यत्—संसारस्य उपादानकारणमपि ईश्वरो निमित्तकारणमपि च ईश्वरः। उभयकारणत्वेऽभिन्ननिमित्तोपादानकारणमिति कथ्यते।

यथा घटो मृत्तिकातः कुठारो लोहाद् भवति; तस्यैव चांशः; तथा समस्तसंसारोपि ब्रह्मतः प्रादुर्भूतः; अतो ब्रह्मैव तस्योपादानकारणम्। तदेव च तस्य निमित्तकारणम्, यतो हि ब्रह्म आत्मानमेव स्वयम्भूर्भूत्वा निर्म्मिमीते; स्वयं च निर्म्मिमीते। सूर्य्यचन्द्रपृथिव्यादयस्तेन निर्म्मिताः। निर्म्मिता अपि तेनैवेमे निर्मितोपि च स स्वयमेव सूर्य्यादिरूपे। तदेव सनातनधर्म्मेपि सूर्य्यपृथिव्यादिपूजा परमात्मपूजैव मन्यते।

¶ अत्र प्रगृह्यत्वाद् असन्धिः।

अत एव ब्रह्म अभिन्ननिमित्तोपादानकारणम्। तैत्तिरीयारण्यके प्रोक्तम्—"यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्ति अभिसंविशन्ति" तद् विजिज्ञासस्व, तद् ब्रह्म' ३।१।१ अर्थाद्—'यस्माज्जगद् उत्पद्यते, यत्कारणाच्च जीवति; अन्ते च तद् यस्मिंल्लीयते; तद् ब्रह्मैव। एतेन ब्रह्मैव जगतो निमित्तकारणम्, तदेव च तस्य उपादानकारणमस्ति' इति स्पष्टं सिध्यति। एतत्सिद्धान्ताऽमनने अस्याः श्रुतेः स्वारसिकः समन्वयो न सम्भवः।

ईश्वरस्य केवलनिमित्तकारणत्वमनने तु तदीया सर्वव्यापकतापि न कदाचित् सेद्धुमर्हति। घटस्य निमित्तकारणं वर्तते कुलालः, उपादानकारणं च मृत्तिका। यदा च गवेष्येत यद्—घटस्य प्रत्येकावयवे कोऽस्ति पदार्थ ओतप्रोतः; अन्ते च घटः क्व विलेष्यते इति? तदा स्वयमेव प्रत्येष्यते यद्—मृत्तिकैव तत्र सर्वत्र व्याप्तः; यतो हि घटो मृत्तिकया निर्म्मितः। मृत्तिका वर्तते तस्योपादानकारणम्। उपादानकारणमेव भवति तत् कारणं यत् स्वकार्य्यस्य प्रत्येकांशे ओतप्रोततया व्यापकं भवति। तत्कारणादेव तज्जीवति अर्थात् तत्सत्ता भवति, अन्ते च तत्रैव विलीयते। एवं मृत्तिकाव्याप्त्यैव घटस्य सत्तास्ति। अन्ते घटो मृत्तिकायामेव विलीयते, न कुम्भकारे, यतो हि कार्य्यं स्वोपादानकारणे एव विलीयते, न निमित्तकारणे।

केवलं घटस्यैव उदाहरणं किम्; एवं सर्व्वकार्य्याणि अन्वेष्टव्यानि अनुसन्धातव्यानि च। कुठारस्य प्रत्येकपरमाणौ लोह एव व्याप्तः, न कुठारनिर्म्माता। स कुठारश्चान्तेपि लोहे एव विलीयते, न कुठारकारे। कटककुण्डलस्य प्रत्येकदेशे तदुपादानकारणं सुवर्णमेव व्याप्तम्, न सुवर्णकारः। तत् कटककुण्डलम् अन्तेपि सुवर्णे विलीयते, न सुवर्णकारे। हिमस्य प्रत्येकपरमाणौ तदीयोपादानकारणं जलमेवास्ति व्याप्तम्, न खलु हिमनिर्म्माणयन्त्रम्। तच्चान्ते स्वोपादानकारणे जले एव विलीयते, न निमित्तकारणे यन्त्रे। वस्त्रस्य प्रत्येकावयवेषु तदुपादानकारणं सूत्रमेव व्यापकम्, न तन्तुवायः। तत् वस्त्रं स्वोपादानकारणसूत्रसत्तयैव तिष्ठति, न तन्तुवायसत्तया। अन्ते चापि तत् स्वोपादानकारणे सूत्रे एव विलीयते; न निमित्तकारणे तन्तुवाये। एवं सांसारिककार्य्यमात्रस्य अवयवान् तदीयमुपादानकारणमेव व्याप्य तिष्ठति, न निमित्तकारणम्। उपादानकारणसत्तयैव तत्सत्ता भवति, न तु निमित्तकारणसत्तया तत्सत्ता। न हि कुम्भकारतन्तुवायादिमरणेन घटवस्त्रादीनां विलयो भवति। एवं तदेव कार्य्यमन्तेपि स्वोपादानकारणे एव विश्राम्यति विलीयते वा, न निमित्तकारणे।

एवं यदि ईश्वरोपि निमित्तकारणं मन्येत संसारस्य केवलम्; नोपादानकारणमपि; तदा सोपि निमित्तकारणान्तरवत् संसारात् पृथग्देशस्थ एव मन्येत घटात् कुम्भकार इव; न स संसारस्य प्रत्येकपरमाणौ भवेद् ओतप्रोतः। परं यदा खलु स वेदादिशास्त्रैः 'स ओतः प्रोतश्च विभूः प्रजासु' यजुः ३२।८ इति मन्यते; तर्हि स्पष्टं यत्—स निमित्तकारणमपि वर्तते संसारस्य उपादानकारणमपि च वर्तते। उपादानकारणत्वे मते तस्य उपादानकारणान्तरवत् स्वकार्य्ये ब्रह्माण्डे ओतप्रोतता सिध्यति। यथा च घटादिकाः प्रस्फुटय स्वनिमित्तकारणे कुम्भकारादौ लीना न भवन्ति, किन्तु मृत्तिकादिरूपस्वोपादानकारणे एव; तथा सर्व्वे प्राणिनः प्रलये सति उपादानकारणे ब्रह्मण्येव लीना भवन्ति; केवलनिमित्तकारणे ईश्वरे ते कथं लीनाः स्युः? एवं यदा ईश्वरः समग्रब्रह्माण्डस्य यावत्पदार्थजातस्य वा अभिन्ननिमित्तोपादानकारणमसिध्यत्; तदा तदतिरिक्तस्य

अन्यस्य कस्यापि वस्तुनः पारमार्थिकसत्ताऽभावाद् अद्वैतवादः स्वतः सिद्धोऽभूत् ।

यत् खलु आस्माकीनानि बहूनि पुस्तकानि ईश्वर-भक्त्या सम्भृतानि ; तत्र व्यावहारिकतामूलो द्वैतवाद एव, यतो हि एतेन कर्म्मकाण्डेन चित्तशुद्धौ सत्यां स्वयमेव अभेदप्रतिबन्धकदोषक्षयः सम्भाव्यते । एवं स्पष्टं यद्-द्वैतवादो व्यावहारिको वादः ; अद्वैतवादश्च पारमार्थिको वादः । एतद्रीत्या उभयोर्वादयोः सामञ्जस्ये जाते एकतरवादसाधनाय कलहः कोलाहलो वाऽयुक्त एव । एतद्विषये दर्शनादिप्रमाणैरेव विषयो विशदयितुं शक्यः ; परं स्थानं नास्ति, न चावकाशः ।

### ७—तर्कप्रमाणयोस्तर्कस्याप्रतिष्ठानता

केचित् साम्प्रदायिकास्तर्कमात्रं व्यवहरन्ति, परन्तु सनातनधर्मात्मके गौणं मनुतः प्रमाणं च प्रधानम् । विना प्रमाणं स तर्कं नोपस्थापयति । अत एव न्याय-दर्शने प्रोक्तम्—'तर्को न प्रमाणसंगृहीतो न प्रमाणा-न्तरम्, ( केवलः ) प्रमाणानामनुग्राहकस्तत्त्वज्ञानाय कल्पते' 'सोऽयमित्थम्भूतस्तर्कः प्रमाणसहितो वादे साधनाय, उपालम्भाय चार्थस्य भवति [ न तु निष्प्र-माणः ] ' १।१।१ ' ( प्र० ) कथं पुनरयं ( तर्कः ) तत्त्वज्ञानार्थो न तत्त्वज्ञानमेवेति ? ( उ० ) अनवधार-णात् । अनुजानाति अयमेकतरं धर्मं कारणोपपत्त्याः न त्ववधारयति—न व्यवस्यति—न निश्चिनोति एव-मेवेदमिति ।' 'सोऽयं तर्कः प्रमाणानि प्रतिसन्दधानः प्रमाणाभ्यनुज्ञानात् प्रमाणसहितो वादे अदिष्टः [ न तु केवलः ]' न्या० १।२।४० ।

प्रत्युत प्रमाणगम्येऽर्थे तर्कस्याप्रतिष्ठानता स्वीकृता । तथा च 'तर्काऽप्रतिष्ठानाद्' २।१।११ इति वैयासिकं ब्रह्म-सूत्रमाचक्षाणेन श्रीशङ्कराचार्येणोक्तम्—'इतश्च नाऽऽ-गमगम्येऽर्थे केवलेन तर्केण प्रत्यवस्थातव्यम् । यस्मा-न्निरागमाः पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्का अप्रतिष्ठिता भवन्ति, उत्प्रेक्षाया निरङ्कुशत्वात् । तथा हि कैश्चिदभि-युक्तैर्यत्नेनोत्प्रेक्षितास्तर्का अभियुक्ततरैरन्यैराभास्यमाना दृश्यन्ते ; तैरप्युत्प्रेक्षिताः सन्तस्ततोऽन्यैराभास्यन्ते इति न प्रतिष्ठितत्वं तर्काणां शक्यमाश्रयितुम्, पुरुष-मतिवैरूप्यात् ।' इत्यादि ।

तर्कोऽपि भविष्यादन्यत्राऽप्रतिष्ठितः स्याद् ; यथा धर्माऽधर्मयोः, वेदा० त० शाङ्कर० २।१।१३ इति धर्म्मा-धर्म्मविषये तर्कस्याऽप्रतिष्ठितता सिद्धा । एवं साङ्ख्य-दर्शने विज्ञानभिक्षुभाष्येऽपि प्रोक्तम्—'मूलशैथिल्य-दोषेण परानुमानानां दुर्बलत्वात् । अत एव 'तर्का-प्रतिष्ठानादिति' २।१।११ वेदान्तसूत्रेण अप्रतिष्ठादोषतः केवलतर्कोऽपास्तः । तथा मनुनापि 'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः' १२।१०६ इति वेदाऽविरुद्धतर्कस्यैव अर्थनिश्चायकत्वमुक्तम् ; तस्मात् 'श्रोतव्यः श्रुति-वाक्येभ्यो मन्तव्यश्चोपपत्तिभिः' इत्यादिवाक्येभ्यः श्रवण ( श्रुति ) समानार्थकमेव मननं [ तर्कः ] बल-वत् । अन्याकारं [ श्रुतिविरुद्धं ] मननं [ तर्कः ] तु परेषां दुर्बलम्' साङ्ख्य० १।६५ अत एव 'न कल्पनाविरोधः प्रमाणदृष्टस्य' ७।२५ 'श्रुत्या सिद्धस्य नापलापस्तत्प्र-त्यक्षबाधात्' १।१४७ इति साङ्ख्यसूत्रे अपि सङ्गच्छेते । शब्द-[ प्रमाण ]स्य बलवत्त्वादेव पाणि-नीयदर्शनस्य भाष्यकारः श्रीपतञ्जलिः पस्पशाह्निके उवाच—'शब्दप्रमाणका वयं यच्छब्द आह तदस्माकं प्रमाणम्' । एतदेव जैमिनीयदर्शनस्य १।२।३५ सूत्र-भाष्ये श्रीशबरस्वामिना प्रोक्तम् । एतेन सनातनधर्म्म-स्थितिर्व्याख्याता ।

## ८—दर्शनविरोधपरिहारप्रकारः।

केचिज्जना दर्शनेषु सृष्ट्यादिकारणेषु पदार्थसङ्ख्यानिर्देशे वा भेदमाकलय्य तत्र विरोधं मन्वते। परन्तु वस्तुतो नाऽत्र विरोधः; किन्तु इतरेतरशेषपूर्त्या सह दर्शनप्रणयनता। अत्र स्वर्गीयकविताार्किकश्रीनृसिंहदेवशास्त्रिप्रणीताः कतिचिच्छ्लोका उपन्यस्यन्ते—

'अस्ति कश्चिन्महावैद्यो वैद्यशास्त्रपरार्थवित्।
पीयूषपाणिर्निर्लोभः परकश्मलवारणे ॥ १ ॥
नानारोगातुरास्तस्य पार्श्वमायान्त्यहर्निशम्।
नैकरोगपरीतापवह्निज्वालाकुलाननाः ॥ २ ॥
प्रभो! मम महाँस्तापः प्रभो! मम शिरोरुजा।
कश्चिद् वदति मे शूलं हृदये जठरे महत् ॥ ३ ॥
परः प्लीहानमाचष्टे तदन्यो याकृतं ज्वरम्।
परो भगन्दरेणार्तिं कश्चिदर्शोरुजं पराम् ॥ ४ ॥
आर्तवज्वरसन्तापं तदन्यः सान्निपातिकम्।
ऋतेऽन्यो गुल्मगण्डादिमन्योन्यामातिमातुरः ॥५॥
श्वित्रिणो दद्रुणाः केचित्, केचिद् नेत्राऽऽमयार्दिताः।
अक्षसन्न्यासिनः केचित्, परे क्लैब्यरुजाहताः ॥ ६ ॥
दृश्यते तत्र रोगाणां रोगिणां चापि भिन्नता।
विरोधो रूपहेत्वादिपरीक्षाविषयेऽप्यसौ ॥ ७ ॥
औषधान्यपि कल्प्यन्ते तत्र नानाविधानि च।
दृश्यते तत्स्वरूपेषु विरोधः सुमहानपि।
रोगे योगे प्रकारे च प्रत्यक्षं दृश्यते ह्यसौ ॥ ८ ॥
एक एवास्ति वैद्यस्तु, शास्त्रं तस्य तथैव तत्।
नानाप्रकारसंवादमापातविमुखं बहु ॥ ९ ॥
स्वास्थ्यात्मके तदुद्देश्ये कस्यापि न विरोधिता।
न रोगिणां न शास्त्रस्य, न च वैद्यशिरोमणेः ॥१०॥
किन्त्वानुगुण्यमेवास्ति समानफलकाङ्क्षिणाम्।
धातुसात्म्यकराणां च योगानां योगिनामपि ॥११॥
एवं दर्शनशास्त्राणि वेदार्थस्योपबृंहणे।
सम्प्रवृत्तानि भिन्नानि दूरतो भान्त्यसद्दृशाम् ॥१२॥
विषयस्य भिदा याः स्युर्याश्च ना अधिकारिणाम्।
एकोद्देश्येन नैषां स्याद् विरोधः सम्भवी क्वचित् ॥१३॥
यश्च दुर्मधसां नूनं विरोधः सम्प्रतीयते
रागद्वेषान्धमनसां सम्प्रदायक्रमाऽविदाम् ॥ १४ ॥
नासौ प्रमाणपदवीं धत्ते वाक्यविचारणे।
इत्थमाभाति मद्बुद्धौ स्वयञ्चापि विचार्यताम्' ॥१५॥

एवं स्पष्टं यत्-सर्वेषां दर्शनानां विषयभेदेऽपि तात्पर्यैक्येन न विरोधः। वक्तव्यविषयस्य अभेदे तु नानात्वमेव वैयर्थ्यं वहेद् दर्शनानाम्। तेन वक्तव्यविषयभेदस्तु अनिवार्य्य एव। विषयभेदो न विरोधसम्पादको भवति अन्यथा इन्द्रियाणामपि परस्परं विरोधो मन्येत। रूपं हि चक्षुषो विषयो न रसादीनि,रसश्च रसनाया विषयो न रूपादि। शब्दश्च श्रोत्रेन्द्रियस्य विषयो न नासिकायाः। गन्धश्च नासिकाया विषयो न श्रोत्रादिकस्य-इत्यादिकं स्वयमुन्नेयम्। परं न मन्यते केनाप्येतेन इन्द्रियाणां विरोधः। एवं प्रकृतविषयेऽपि ज्ञेयम्।

अत्र स्वामिदयानन्देनापि कृपा कृता। सत्यार्थप्रकाशस्य १२७ पृष्ठे तेनोक्तम्—"छः शास्त्रों में अविरोध देखो इस प्रकार वा है—मीमांसा में 'ऐसा कोई भी कार्य जगत् में नहीं होता, जिसके बनाने में कर्मचेष्टा न की जाय'। वैशेषिक में-'समय न लगे बिना बने ही नहीं'। न्याय में "उपादान-कारण न होने से कुछ भी नहीं बन सकता।" योग में-"विद्या, ज्ञान, विचार न किया जाय, तो नहीं बन सकता"। सांख्य में-'तत्त्वों का मेल न होने से नहीं बन सकता' और वेदान्त में-'बनाने वाला न बनावे तो कोई भी पदार्थ उत्पन्न न होसके।' इसलिये सृष्टि छः कारणों से

चलती हैं। उन छः कारणों की व्याख्या एक एक की एक एक शास्त्र में है, इसलिए उन में विरोध कुछ भी नहीं। जैसे छः पुरुष मिलके एक छप्पर उठाकर भित्तियों पर धरे, वैसा ही सृष्टि रूप कार्य की व्याख्या छः शास्त्रों ने मिलकर पूरी की है" इति। परं पुराणविरोधपरिहाराय तस्य ईदृग् दिग् विस्मृता। अस्तु।

एवमन्येऽपि सनातनधर्मसिद्धान्ता दर्शनेषु सूक्ष्मेक्षिकया प्रवेशे कृते प्राप्तुं शक्यन्ते। परमत्रैव पर्याप्तो द्राघिमा जातः। मुख्यविषयाश्च प्रायशः प्रमाणिता एवास्माभिः। अतोऽत्राधिकविस्तरभियाः विरम्यते। स्वप्रणीते पञ्चसहस्रपृष्ठात्मके द्विशतविषयोपेते 'श्रीसनातनधर्मालोके' अस्माभिर्विस्तरेण एतदादिविषये विचारः कृतः। निबन्धेऽस्मिन्नास्माकीनाल्पज्ञतया काचित् त्रुटिरनुभूयेत, न तत्र चित्रम्। यदि तदीया सूचनाऽस्मभ्यं दीयेत, तदत्रास्मदुपकृतिः सम्भाव्यते। शम्।

---

# पञ्चत्वदर्शनमेव दर्शनम्

[ कविरत्नमायादत्तपाण्डेयः शास्त्री पर्वतीयः ]

अन्विच्छन्ति जना मार्गान् गन्तव्ये नास्ति निश्चयः
अतो गमन-मार्गास्ते व्यर्था एव न संशयः॥ १॥
स्वाभाविकी हि जीवानां प्रवृत्तिः पञ्चधा मता।
सैव लक्ष्यं ध्रुवं गम्यं सैव जीवात्मनोः स्थितिः॥२॥
चिरं जीवितुं१ ज्ञातुमेवं समस्तं२
सुखं३ सर्वदा शासनं४ स्वस्य तन्त्रम्५
स्वभावादिदं पञ्चकं वष्टि लोक-
स्तथाप्यात्मभावं न जानाति मूढः॥ ३॥
पञ्चस्वरूपलाभोऽयं गन्तव्यो ज्ञेय एव च।
इदं लक्ष्यं समालम्ब्य नरो नारायणो भवेत्॥ ४॥
नरो वष्टि, हरौ सन्ति अमी पञ्च गुणाः शुभाः।
तल्लाभायैव विद्वांसः श्रमं कुर्वन्ति सर्वदा॥ ५॥
सन्तं केचित् चितं केचित् आनन्दं च तथा परे।
परं सनातने धर्मे पञ्चभावमयः प्रभुः॥ ६॥
प्रणवं धनुराततं कुरु प्रिय! जीवं शरमत्र योजय।
तदनन्यधिया परं प्रियं निजलक्ष्यं विभुमत्र वेधय॥७॥
इदमभ्यसितुं महर्षिभिर्बहवोऽमी निगमागमाः स्मृताः।
तदिदं तपसा लभेत चेद्-भुवि पञ्चत्वमिदं प्रशस्यते॥८॥

---

१ सत्. २ चित् ३ आनन्द ४-सर्वशक्तिमान् ५ स्वतन्त्र।

---

## ❀ जयन्ति पुत्राः ❀

प्रीताः प्रणम्य चरणौ करणे शुभानां प्रीणीत चेत उचिताचरणेन पित्रोः।
गृह्णीत वाक्यमनयोरनयोपहृत्यै भूत्यैधिताः पितृमता हि जयन्ति पुत्राः॥
या गर्भभारमिह दुर्वहमाप्य खिन्ना किन्नाम दुःखमयते न सुतं सुवाना।
प्राणैः परैरपि सदावति तं मुदा या तां मातरं नमत मङ्गलकल्पवल्लीम्॥—स्व० श्रीकूटरमाशास्त्रिणः

# — शब्दतत्त्वम् —



[ लेखकः—व्याकरण-न्याय-वेदान्ताचार्यः पं० केदारनाथ ओझा, व्याकरणप्रधानाध्यापकः संस्कृतकॉलेज, जयपुरम् ]

द्रव्यगुणादिविकल्पाः कल्पायन्तेऽनल्पतया यत्र।
विविधविवर्तविभूतिं, सतीं श्रुतिं सर्वतिं श्रये॥

तत्र शब्दधर्मिका १—द्रव्यं न वा, २—गुणो न वा ३—सप्तपदार्थातिरिक्तो न वेति विप्रतिपत्तयः। सप्तपदार्थातिरिक्तत्वाप्रसिद्धतया अभावभिन्नः कालाकाशदिगात्मभिन्नश्च शब्दः समवेतो न वेत्यत्र तात्पर्यं निर्णेयम्; समवायासिद्ध्याप्रसिद्धिर्न संशयास्पदा, सर्वेषां मते तत्स्वीकारात् महाभाष्यादावपि बहुधोपलम्भादतिरिक्तपदार्थतायामेव विवादात्।

प्रथमे द्रव्यत्वकोटिके विकल्पे वैयाकरणमञ्जूषायां द्रव्यस्यापि सतो गगनगतत्वप्रतिपादनात्। ४—गगनाश्रयो न वा, बहुत्र पञ्चगुणा पृथ्वीति प्रतिपादितत्वात् ५ पञ्चभूताश्रयो न वा, विभुत्वाङ्गीकर्तृमते सम्भवात् ६ निराश्रयो न वा, अणवः सर्वशक्तित्वात् प्रभृतिवाक्यपदीयरीत्याहंनयेन वा, ७ सावयवो न वा, दूरदेशगमनावगमेन ८ क्रियावान्न वा, वायोरणूनामिति भर्तृहरिपद्धत्या ९ वायुरूपो न वा, विशिष्टाद्वैतिनां ज्ञानस्याऽपि द्रव्यत्वात् १० ज्ञानाभिन्नं न वा, विभुत्वाभ्युपगमे ११ दशमं द्रव्यं न वा, अभिघातवशाद् वेगालोचने १२ स्पर्शवान्न वा, तथैव १३ वेगाश्रयो न वा, १४—ध्वंसाप्रतियोगी न वा १५—तृतीयक्षणध्वंसप्रतियोगी न वा १६—महापरिमाणं १७—मध्यमपरिमाणम् १८—अणुपरिमाणम् वा धत्ते इति पञ्चदश विप्रतिपत्तयः। गुणत्वकोटिकेऽपि १९—आकाशस्य २०—वायोः २१—पञ्चभूतानाम् वा गुणा इति तिस्रः २२—पूर्वोक्तचतुर्दशपञ्चदशाभ्यां सङ्कलय्य पञ्च विकल्पाः। २३—सर्वस्मिन्नपि पदे श्रूयमाणशब्दानाम् २४—उत्पत्तिमत्त्वम् २५—अभिव्यङ्ग्यत्वम् २६—अर्थतादात्म्यं २७—बोधकत्वम् आन्तरस्फोटनयेन २८-अभिव्यञ्जकत्वं २९—ध्वनिरूपता न वेति सप्त। तद्विचाराविनाभूततयोपोद्घातसङ्गत्या ३०—श्रोत्रस्य स्वरूपम् ३१—प्राप्यकारित्वम् ३२—क्रियावत्त्वम् ३३—परिणामित्वमिति त्रयः पक्षाः। ३४—दूरश्रवणान्यत्वस्य कार्यञ्चेति चतुस्त्रिंशद् विवेचनीयाः समापतन्ति।

तत्र शब्दो द्रव्यं तारत्वादिगुणाश्रयत्वात्। न च तारत्वादयो वायुनिष्ठा ध्वनिनिष्ठा वा श्रावणत्वाच्च शब्दत्ववत्। अत्र मीमांसकाः प्रवदन्ति। वर्णानां विभूनां द्रव्यत्वं ध्वनीनान्तु वायुगुणत्वम्। वायुगुणस्यापि ध्वनेः संयुक्तसमवायाच्छ्रोत्रेण ग्रहः। इति। परन्तु वैयाकरणमञ्जूषायां तारत्वादिगुणाश्रयस्य द्रव्यत्वमुक्तम्। तत्र ममायं विवेकः-ध्वनयोऽपि साक्षाच्छ्रोत्रग्राह्यतया द्रव्याण्येव सन्तु वर्णा इव, श्रोत्रग्राह्यत्वस्य द्वयोः समानत्वात्। न चानित्यत्वेन कार्यत्वात्तेन चाश्रितत्वात् गुणत्वं युक्तम्।

१—द्रव्यत्वसाधनम्

**अणवः सर्वशक्तित्वात् भेदसंसर्गवृत्तयः।**
**छायातपतमःशब्दभावेन परिणामिनः॥१॥**

मायोग्यानां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।
कैश्चिद् दर्शनभेदोऽत्र प्रवादेष्वनवस्थितः ॥२॥

इति वाक्यपदीयरीत्या स्वतन्त्रपरमाणुसमाश्रितस्य ध्वनेः स्वतन्त्रद्रव्यत्वात् । एवं 'शब्दो द्रव्यं साक्षात्सम्बन्धेन गृह्यमाणत्वात् घटवत्' इत्यनुमानमपि द्रव्यत्वसाधकम् ।

अत्र कुसुमाञ्जलिकृतः साक्षात् सम्बन्धः संयोगः समवायो वा । स च द्रव्यगुणभावादिव्यवस्थामन्तरा न व्यवतिष्ठतेऽनः साधनाप्रसिद्धिरित्याहुः । तत्रेदं प्रतिभाति द्रव्यत्व-गुणत्वान्यतरसिद्धिमन्तरा संयोगत्वेन समवायत्वेन वा सम्बन्धो मा व्यवतिष्ठताम्, साक्षात्वेन सिद्धौ को बाध इति हेतुः प्रसिध्यत्येव । गुणत्वाङ्गीकारे तदाश्रयकल्पनागौरवभिया भट्टाभिमतसंयोगसम्बन्धाङ्गीकारेण साध्यपर्यवसानात् । किञ्च न केचन गुणाः साक्षात्सम्बन्धेन गृह्यन्ते किन्तु चक्षुरादिभिर्द्रव्याण्येव तदा बलवत्तरबाधकं विना साक्षात् सम्बन्धेन गृह्यमाणे शब्दे गुणत्वाङ्गीकारद्रव्यत्वप्रतीकारौ न शोभेते । यदपि तैरेव बाधकमुपन्यस्तं शब्दो न गुणो बहिरिन्द्रियव्यवस्थाहेतुत्वात् रूपादिवत् । अयम्भावः सर्वाणि बहिरिन्द्रियाणि कमपि विशेषगुणमादायैव विषयविशेषप्रत्यक्षव्यवस्थापकानि भवन्ति । अत एव चक्षुषा रूपिणामेव, त्वचा स्पर्शवतामेव प्रत्यक्षमेवं श्रोत्रेणापि विशेषगुणवता भाव्यम् ।

स च शब्दो विशेषगुणः । इति । तदपि न सर्वथाबाधकम्, यतो न हि समेषां समानव्यवस्था । भवन्मतेऽपि श्रोत्रेणैव साक्षात्सम्बन्धेन गुणस्य ग्रहणम् न चक्षुरादिना, अन्येषाम् संयोगः सन्निकर्षो न श्रोत्रस्य, किन्तु समवाय एव, अन्येषां सजातीयगुणग्रहणव्यवस्थायै सगुणस्येन्द्रियभावः स च गुणोनुद्भूतः । श्रोत्रस्य शब्दो गुण उद्भूतः । तत्प्रत्यक्षाय निरशब्दस्यैव श्रोत्रस्य करणतेति बहुविधवैषम्यसत्वात् । किञ्च यदि बहिरिन्द्रियव्यवस्थाहेतुत्वम् यदि तत्तदिन्द्रियमात्रजन्यप्रत्यक्षविषयत्वम् तदाऽगुणे चक्षुर्मात्रग्राह्ये प्रभादौ व्यभिचरितम् । यदाऽपि वर्धमानाचार्यविचारेण चक्षुर्ग्राह्यबहिरिन्द्रियग्राह्यजातिमत्त्वादित्यादिना व्याख्यायते तदा बाधकस्यास्य प्राण एवापसरति । यतो चक्षुर्ग्राह्यबहिरिन्द्रियग्राह्यजातिमान् प्रसिद्धस्य चक्षुषोऽपि बहिरिन्द्रियतां न व्यवस्थापयति तदा श्रोत्रस्य तत्त्वव्यवस्थापको भविष्यतीति कः श्रद्दधीत । साक्षात्सम्बन्धाग्राह्यत्वद्रव्यग्राहकेन्द्रियाग्राह्यत्वाद्युपाधिभारभुग्नश्च ।

एवम् स्थिते गगनेन श्रोत्रेण शब्दस्य ग्रहणव्यवस्थायै गगनाश्रयत्वप्रतिपादनं शब्दानां मञ्जूषाकृतां नावर्जनीयतामर्जयति ।

४—गगनाश्रयत्वखण्डनम्

यतो न स्ववृत्तेर्द्रव्यस्येन्द्रियेण ग्रहणम् सर्वथाऽसम्भवात् । नाऽपि सजातीयस्याऽपि चक्षुरादौ व्यभिचारात् । नापि सगुणस्य श्रोत्रभावः सगुणग्रहणानुपपत्तेः । तथा च यथा चक्षुरादीनि स्वसम्बद्धानि द्रव्याणि गृह्णन्ति न द्रव्याणां तद्वृत्तित्वमपेक्ष्यते तथैव श्रोत्रसम्बद्धान् शब्दान् गृह्णातीत्येतावतैव पर्यवसाने श्रोत्रवृत्तिता नावश्यकी । नापि स्ववृत्तिगुणसजातीयगुणवन्ति द्रव्याणि गृह्णन्तीति नियमेन श्रोत्रस्य गुणवत्ता अपेक्ष्यते यत्र सगुणस्येन्द्रियभावस्तत्र तथाऽभ्युपगमेऽपि श्रोत्रे तथात्वकल्पने प्रमाणाभावात् । नापि हृदवच्छिन्नाकाशे शब्दस्य वृत्तिता, तत्कार्यस्य नैयायिकप्रक्रियया हृदवच्छिन्नात्मनि साङ्ख्यादिरीत्याऽन्तःकरणे च शब्दसंस्कारस्य सत्वादेव निर्वाहात् । सम्बन्धस्तु, तस्य न निवार्यते ।

यदि च पञ्चीकरणप्रक्रिया प्रामाणिकी तया च शब्दगुणत्वमपि पृथिव्या इति पञ्चभूताश्रयत्वम्

५—पञ्चभूताश्रयत्व-खण्डनम्

आयाति परं न सा प्रक्रिया समेषां दार्शनिकानां मान्या तत्प्रतिपादक-श्रुतीनामपि बहुधा समन्वयात्। तदङ्गीकृतावपि द्रव्यगुणतादात्म्यवासनया तत्तद्द्रव्यसाङ्कर्येण, तत्तद्गुणसाङ्कर्यमङ्गीकृतम्, न तु तद्व्यवहारोपयोगि। अत एव तद्वैशेष्याद् व्यवहारोपयोगितामङ्गीचकार श्रीव्यासाचार्यः। एवञ्च श्रूयमाणशब्दानां विवेचनीयतया न ते पञ्च-भूताश्रयाः। भेरीशब्दो मया श्रुतो वीणाशब्दो वेति व्यवहारोऽपि न परीक्ष्यमाणस्तद्गुणतां ग्राहयति यतो हि यदि भेरीवीणादौ शब्दो रूपपरिमाणादिवत्, दण्डाभिघातमन्तराऽपि कथन्न श्रूयते। यदि दण्डाभि-घातादिस्तन्निमित्तं तदुत्पत्तेरभिव्यक्तेर्वा। प्रथमे तु तन्निमित्तादन्यत्रैव शब्दः सञ्जातः किं प्रमाणं भेर्या-दिवृत्तित्वे। अभिव्यक्तिस्तु कार्यतावच्छेदकगुरुत्वेन नाङ्गीकार्या। यदि लाघवाच्छब्दनित्यतामादायाभिव्य-क्तिरुपस्थाप्येत, तदा नित्यानां शब्दानां भेर्याद्यनित्य-गुणत्वासम्भवात्, निराश्रयत्वमन्याश्रयत्वं वा शब्दा-नां सिध्येत्। किञ्च कुतश्चिद् वाद्याज्जायमाने शब्दे दूर-श्रवणयन्त्रेण (रेडिओ) कियता समयेन दूरं नीयमाने शीघ्रमेव वाद्ये पाटिते निराश्रयस्य शब्दस्य प्रत्यक्ष-ताङ्गीकृता भवेत्, तत्तु न समीचीनमतो पञ्चभूताश्रयत्वं शब्दस्य न रोचते एव।

६—निराश्रयत्व-विवेकः

अतः स्वतन्त्रद्रव्यतया निराश्रयत्वं वर्णानाम्। ध्वनीनान्तु परिमाणु-पुञ्जैर्जायमानानां घटादीनामिव स्वावयवाश्रितत्वम्।

७—सावयवत्व-विचारः

सावयवत्वविषये ध्वनीनां वाक्य-पदीयरीत्या परिमाणुजन्यत्वमुक्त-मेव, वर्णानामपि तत्त्वाङ्गीकारेऽनित्यत्वापत्तिरिति नित्यानित्यविचारप्रकरणे एव विषयीकरिष्यते इति कृतं प्रबन्धवर्धनेन।

शब्दः पौद्गलिकः (परमाणुजन्यः) इन्द्रियार्थत्वात्, रूपादिवदित्यनैकान्तिककल्पितस्यानुमानस्य विमा-नित्वन्तु नायमल्पकायो निबन्धः पूरयितुं प्रभवति यतोऽतिविचित्रं तद्दर्शनम्। अपेक्षते चैकस्याऽपि पदा-र्थस्य व्यवस्था अन्यान् तद्दार्शनिकान् पदार्थान्। यथा तेषां मते जीवोऽपि कथञ्चित्सावयवः। पर्यायेऽघते ह्रासञ्चेति तदा किमाश्चर्यं शब्दविषये। किञ्च दृष्टान्ता-सिद्धिरेव। न केनापि रूपादयो गुणाः सावयवा अङ्गी-क्रियन्ते। साङ्ख्यमते कथञ्चिद् व्यवहारोऽपि गुणगुणि-नोरभेदमपेक्ष्य न तु गुणानां स्वातन्त्र्येण परमाणुपुञ्ज-त्वम्। केवलगुणानां परमाणुजन्यत्वं न केनाप्यङ्गीक्रि-यते न च सम्भवति। तथा हि वायोः परमाणौ स्पर्शश-ब्दादयो गुणाः वर्तन्ते चेत् तेषां परमाणवो वर्तन्ते इत्येवा-गतम्, तथा चाश्रयभूतस्य निरवयवत्वाभावात्, परमाणु-त्वमेव पलायेत। यदि तु गुणगुणिनोरभेदभावनया शब्द-स्य परमाणव एव तदाश्रयपरमाणव इति दर्शनन्तदा सावयववायुगुणत्वपरीक्षैव अदसीयपरीक्षा भविष्यति। गुणं मन्यमानाः नैयायिकास्तु न गुणानां परमाणून् स्वीकुर्वन्तीति निरवयवत्वम्।

नैयायिकमते गुणत्वादेव न सक्रियत्वम् नित्यत्व-नये च विभुत्वादेव क्रियाया असम्भवः, वायुगुणत्व-

८—सक्रियत्व-निरासः

पक्षेऽपि वायुक्रिययैव क्रियाकार्य-सिद्धौ न शब्दे क्रिया। वायुरूपता तु अनुपदमेव प्रक्षेपिष्यते। परन्तु नैयायिकमते क्रियया विना कथं निर्वाह इति चिन्त्यते। तथा हि प्राप्यप्रत्यक्षकारि स्वदेशस्थितं श्रोत्रं स्वसमवेतं शब्दं गृह्णाति। दूरे जायमानश्च शब्दः

स्वजन्य शब्दजशब्दपरम्परया श्रोत्रं पूरयन्तीति तेषां दर्शनम्। न च क्रियां विना शब्दपरम्परयाऽपि कथं शब्दप्राप्तिः। किं शब्दो यदवच्छेदेनात्मानमलभत तदवच्छेदेनैव शब्दान्तरं जनयति? भिन्नावच्छेदेन? निरवच्छिन्ने वाकाशे? प्रथमे वालाग्रमात्रेऽपि कण्ठादिभ्यो दूरे शब्दो न जायेत, किमु वक्तव्यमियति दूरे। द्वितीये सहस्रयोजनदूरेऽपि जायेत कार्यकारणयोः सामानाधिकरण्यञ्च विलुप्येत। तृतीये च सर्वत्रोपलब्धिप्रसङ्गः। क्रियाङ्गीकारे तु किमप्यग्रे एधमानः शब्दः शब्दान्तरं जनयतीति कथञ्चिद् दूरे श्रवणं सम्पद्येत।

अत्र केचन कण्ठताल्वादियन्त्राभिघाताद्वायौ कम्पनक्रियाविशेषो जायते स एव च शब्दस्य कारणम्। स च स्वकारणाभिघातादितारतम्याद दूरदूरतरपवनानुवर्ती भवति। स्वाश्रयक्रियावशाच्च यावति अनुवर्तते तावति दूरे शब्दपरम्परेति समादधति। वयन्तु सत्यं कम्पो जायतेऽनुवर्तते च तथैव तथापि न स एव शब्दं जनयत्यपितु तं सहायीकृत्य पूर्वतनः शब्द एव। कार्यतावच्छेदकः सम्बन्धश्च स्वजनककम्पजन्यकम्पावच्छेदकतासम्बन्धः। अर्थाद् यदवच्छेदेन वायुक्रियावशात् कम्पोनुवर्तते, तदवच्छेदेन शब्दजशब्दो जायते। तेन च शब्दजशब्देत्यादिपदसमन्वयोऽपि साधु संगच्छते।

रेडियोनामकेन यन्त्रेण यत्र दूरे शब्दः श्रूयते न तत्र पवनकम्पोनुवर्ततेऽन्यथा प्रसारकश्रावकयन्त्रयोर्मध्येऽपि तादृशकम्पस्य सत्वाच्छब्दश्रवणापत्तिरतो नूतन एव श्रावकयत्नेन पवनकम्पनक्रमः कण्ठाद्यभिघात इव समुत्पाद्यते। स च पवनकम्प एव शब्दं जनयेत् तदा प्रसारकयन्त्रसविधे कश्चिद् ब्रुवाणो नापेक्ष्येत। किन्तु कस्मिंश्चित् प्रब्रुवाणे एव श्रावणयन्त्राणि श्रावयन्तीति मर्यादा। अतो मदुक्तरीत्या पूर्वतनः शब्द एव तादृशकम्पसहकारी शब्दकार्यकारीति समीचीनम्।

परम् यन्त्रप्रभावपरीक्षका विशेषतो विज्ञाः प्रष्टव्याः। यद् यन्त्रयोरुभयोर्मध्ये वायौ कश्चिद्विकारः संस्कारो वा यन्त्राभ्यां क्रियते? किम्वा यन्त्रदेशीयवायौ? यदि पूर्वस्तदा पूर्वाऽपि व्यवस्था। यद्युत्तरं तदा मदुक्ता। किन्तु पूर्वोक्तकार्यतावच्छेदके सम्बन्धे स्वजनकसजातीयकम्पावच्छेदकतेति परिवर्तनीया। अन्यप्रक्रियया तु यन्त्रप्रभावः पश्चात्सति स्मरणे विवेचयिष्यते।

६—वायुरूपता-निरासः

वायुस्तु सावयवः परिच्छिन्नः वर्णास्तूपवर्षमुनिमतेन नित्या विभवश्च तदा वर्णानां पवनात्मत्वं शङ्कनीयतामेव नाश्रयते। नित्यत्वं विभुत्वञ्च वर्णानां स्थापयिष्यते। ध्वनयश्च केषाञ्चिन्मते वायवोऽश्रावणाः. शास्त्रदीपिकाकृतश्च श्रावणान् वायुगुणान्तानभिमन्यन्ते, न तु वायूनेव। अतो न प्रसिद्धिर्वायुरूपतायाः किन्तु वायुगुणताया एव। सा तु क्रमेण पर्यालोचिता भविष्यति। अर्हन्मतेऽपि स्पर्शाश्रये वस्तुन्याश्रितः शब्दोङ्गीक्रियते, न तु वायुद्रव्यरूप एव।

'वायुः खात्' 'शब्दस्तत्' इति प्रातिशाख्यसूत्रयोर्व्याख्यायां पवनात्मताऽपि शब्दानामाविर्भवति, परन्त्वासौ सूत्राक्षरेण सूच्यते। ममाभिप्रेतपोषकमपि व्याख्यानं तयोः स्फुरति। तत्तु विस्तारभिया न चिन्त्यते। यद्यपि योगभाष्यव्याख्यायां परमाणुपरिणाम इव वायोरपि परिणामः प्रतिपादितः। एवं 'लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना। स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते।' वाक्यपदीयेऽपि, तथाऽपि समुपबृंहणमस्य मतस्य नावलोक्यते, कल्प्यते चैमान्यक्षराणि वायुगुणतायामेव योजितान्यर्वाचीनैः, यतः खण्डनमण्डनभावेन गुणभावस्यैव बहुत्रोल्लेखः प्रतीयते।

नापि च प्रतिपादनामर्हति यतः शब्दो न वायुर्निस्पर्शत्वात् कालादिवत्। अन्यथा स्पर्शप्रत्यक्षापत्तिरनुकूलस्तर्कः। बधिरेण प्रत्यक्षीक्रियेत शब्दः। न च विलक्षणोऽयं वायुरस्पर्शोऽनुद्भूतस्पर्शो वा श्रवणमात्रग्राह्य इति वाच्यम्; प्रसिद्धवायुवैलक्षण्यमात्रस्य सिषाधयिषितत्वाद्। अन्यथा सर्वाणि द्रव्याणि वायुरेव तत्तत्कार्यभेदस्तु वैलक्षण्यमात्रनिर्वाहितः स्यादिति बहूपप्लवः। किञ्चेदं वायुरूपत्वं न स्वीयतया शाब्दिकैरादरणीयम्; अन्यथा 'मारुतो वर्णान् जनयते' इति शिक्षास्थाने 'मारुतो वर्णो भवतीति पाठः शोभास्पदं स्यात्।

'अथेदमान्तरं ज्ञानं सूक्ष्मवागात्मना स्थितम्।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन निवर्तते॥

इति हरिवचनस्य 'आख्यातोपयोगे' सूत्रभाष्यस्य "आत्मा बुद्ध्येत्यादि' शिक्षातश्च बहवो वैयाकरणा ज्ञानरूपतां शब्दस्य सिद्धान्तं वर्णयन्ति।

**१०—ज्ञानाभेदभेदनम्**

मञ्जूषायां नागोजीभट्टैः प्रायः शैवागमे प्रसिद्धाः कियतोंऽशस्य परिवर्तनेन व्याकरणनये पदार्था अवतार्य सपरिकरसृष्टिप्रक्रियया अर्थशब्दज्ञानांशमिश्रितेन स्वतन्त्रेण पराख्यतत्त्वेन तत्तत्सहकारिविशेषवशाद् वैखरीपर्यन्तानामुत्पादः प्रतिपादितः। तच्चानुकूलयन्ति परं सूक्ष्मतयाऽवलोकने प्रमाणेभ्य एभ्यो ज्ञानरूपता शब्दस्य नायाति। किन्तु शब्दं प्रति कारणता ज्ञानस्य। हरिग्रन्थे बहूनि मतानीवेदं वर्तते न तु वैयाकरणस्वमिव किमपि प्रतिपादितम्। कतिपयपद्यान्येतद्विरुद्धान्यप्यवाप्यन्ते। तथापि शब्दत्वेन निवर्तते इति दर्शनेनाभासते तन्मतमिति खण्ड्यते। ज्ञानस्य विवर्तः शब्दः परिणामो वा? आद्ये वेदान्तिनये सर्वे पदार्थास्तादृशा इति न विविच्यते। द्वितीयन्तु न प्रसिद्धं केनापि वस्तुतो ज्ञानस्य परिणामाङ्गीकारो न कृतः सावयववस्तुन एव परिणामस्वीकारात्। तथाप्यहङ्कारिकस्य पाञ्चभौतिकस्य वा सावयवस्यान्तरिन्द्रियस्याज्ञानस्यापि ज्ञानपर्यायबुद्धिव्यपदेश्यस्य परिणामने का क्षतिरिति वाच्यम्, अन्तःकरणवृत्तित्वे बहिरिन्द्रियग्राह्यत्वाभावप्रसङ्गात्। शब्दो नान्तर्वृत्तिर्बहिरिन्द्रियग्राह्यत्वात् घटादिवत्। ज्ञानस्य शब्दात्मकत्वे न किमपि प्रमाणम्, प्रत्युत विभिन्नेन्द्रियग्राह्यतया विरुद्धमेव। किञ्च ज्ञानस्य शब्दात्मकत्वे प्रमाणं शब्दतया परिणाम एवेति चेदन्योन्याश्रयः। तादृशे परिणामे सिद्धे ज्ञानस्य शब्दात्मकत्वं तत्त्वे च तादृशः परिणामः।

एवम् शब्दोपादाने ज्ञानत्वं चेच्छब्देऽप्यनुवर्तेत। तदा शब्दो ज्ञानं निर्विषयकं शब्दस्वरूपविषयकं तदर्थविषयकम्वा? निर्विषयस्य ज्ञानत्वे मानाभावात् न प्रथमः। द्वितीये श्रोत्रस्य वैयर्थ्यम्, तृतीये शक्तिग्रहादिवैयर्थ्यम्।

आकाशस्थाने नित्यो विभुश्च शब्दो द्रव्यत्वेन स्थापनीयः। स च व्यवस्थितवर्णादिरूपेण तावान्।

**११—अतिरिक्तद्रव्यस्थापनम्**

ते ते वर्णा नानेके, नैयायिकनये नित्य आत्मनि ज्ञानादेराकाशे चानित्यस्य शब्दस्येव विभुषु नित्येषु वर्णेषु तारत्वादयोऽनित्यगुणाः। यद्वा मञ्जूषादर्शितदिशा वर्णोच्चारणस्थलेऽवश्यं ध्वनयो जायन्ते, तदा ता एव तारत्वादयो गुणाः। यदि च विभवो वर्णा दिशो वा नावकाशदानसमर्थास्तदर्थञ्च द्रव्यान्तरस्यावश्यकता, तदा गगनमपि द्रव्यान्तरमास्ताम्। एवञ्च शब्दो दशमं द्रव्यमेकादशञ्च ध्वनिरिति मदीयं दर्शनम्। विशेषगुणक्रिययोरभावान्न भूतमूर्ते, बहिरिन्द्रियग्राह्यत्वादेव न दिक्कालात्मानः।

१२-१३—स्पर्शवेगयोर्वारणम्

स्पर्शवेगयोः खण्डनन्तु विवेचनेन क्रियाखण्डनपथेनैव समेष्यतीति न पृथग्वितन्यते।

१४—नित्यानित्यत्वविषये

नित्यतावादिनो मीमांसकाः वेदान्तिनः केचन वैयाकरणाश्च वर्णानां प्रायो नित्यतां मन्यन्ते अर्थादक्षपादविपक्षतया स्थिरतापक्षपातिनोऽपि ब्रह्म विना सर्वेषां विनाशित्वात्सर्गोदये प्रादुर्भूय प्रलयं यावत्तिष्ठन्ति वर्णाः। तत्खण्डनन्तु 'ब्रह्मातिरिक्तं न किञ्चिन्नित्यमिति' सिद्धान्तखण्डनाधीनम् विशालतां दधन्नात्रावसरं लप्स्यते। अतोऽत्र क्षणिकत्वस्थिरत्व एव विवेचनीये। स्थिरत्वे च साधिते 'तावत्कालं स्थितं चैनं कः पश्चान्नाशयिष्यति' इति न्यायेनैव नित्यता पर्यवस्यति।

१५—क्षणिकत्वमतम्

अनित्यः शब्द उत्पत्तिधर्मकत्वात् पटादिवदित्यनुमानेनानित्यत्वसाधने हेतुप्रसिध्यै व्यङ्ग्यत्वखण्डनाय न्यायभाष्यकृतां युक्तयः।

१—अभिव्यञ्जकाः प्रदीपादयः सन्त एव समानदेशं वस्तु प्रकाशयन्ति। नैवं संयोगविभागौ, भेर्यादिसंयोगविभागाद् दूरे शब्दोऽभिव्यज्यते। किमुत दूर एव किन्तु संयोगविभागयोर्विनाशेऽपि शब्दसन्तानेन शब्दश्रवणं जायते। तस्मान्नाभिव्यञ्जकौ संयोगविभागावपि तूत्पादकावेव। २—तीव्रो भेरीशब्दो वीणाशब्दमभिभवति न मन्द इत्यनुभवः। स चानित्यत्वे निर्वहति यतो हि नित्ये शब्दे मन्दतीव्रौ संयोगौ न किञ्चिद्विधातुं प्रभवतः। शब्दाभेदे च स एव भेरीशब्दोऽभिभवति कदाचिन्नेति नोपपद्यते। ३—विश्वाभिव्यञ्जकापसारणीयं किमप्यावरणमेवं स्थलेऽनुभूयते न चात्र किमपि तादृक्। अत्र च वर्धमानोपाध्यायाः 'सम्बन्धविच्छेद आवरणम्' स च विभूनां शब्दानां सर्वदा श्रोत्रसम्बन्धान्न सम्भवति इत्युपपादयन्ति।

अन्यत्र च यदि "ध्वनिभिरपनेयाः कौष्ठ्या वायव आवरणमङ्गीक्रियेरन् तदैकेन ध्वनिना श्रोत्रे संस्कृते विभुत्वात्सम्बद्धाः सर्वे शब्दा युगपच्छ्रूयेरन्। यदि च संस्कारका ध्वनयो यदि नित्यान् शब्दान् संस्कुर्वीरन् तदावयवशः संस्कारासम्भवात् ते शब्दा अन्यत्रापि श्रूयेरन्। यदि च श्रोत्रन्तदान्ये शब्दा अपि श्रोत्रेण गृह्येरन्।" इत्याशङ्कितमस्ति।

स्थिरत्वस्थापनम्

अत्र च नित्यतायां १—न संयोगविभागावभिव्यञ्जकावपि तदुत्पन्ना ध्वनयः सन्तानेन सर्वगामिपरमाणुपरिणामेन वा श्रोत्रपर्यन्तं समायाता विद्यमाना एवाभिव्यञ्जयन्ति। २—अभिभावकोऽपि ध्वनिरेव न वर्णाः, स चानित्यो भिन्न एव। ३—यथा दीपश्चक्षुषः सहकारी सन्नभिव्यञ्जकस्तथा श्रवणस्य सहकारित्वेनैवाभिव्यञ्जकत्वं ध्वनीनाम्। न हि दीपेन तत्र किमपि क्रियते, तेजोऽत्यन्ताभावस्य तमसो नित्यत्वान्निष्क्रियत्वाच्च। पूर्वमीमांसानुसारेण च 'शब्दस्य श्रोत्रस्य वा संस्कारका ध्वनयः। वाक्यपदीयेप्युक्तम् 'इन्द्रियस्यैव संस्कारः शब्दस्योभयोरपि' इत्यादिना दृष्टान्तपुरस्सरम्। शब्दसंस्कारश्च यदवच्छेदेन तदवच्छेदेनैवाभिव्यक्तिरित्यवच्छेदकतासम्बन्धेन कार्यकारणभावाङ्गीकारान्नान्यत्र शब्दाभिव्यक्तिः। श्रोत्रसंस्कारका अपि ध्वनयः स्वसामग्रीसमायातशक्तितया तत्तद्वर्णाभिव्यञ्जकत्वेन व्यवस्थिता न सर्वे ध्वनयः सर्वान् शब्दान् प्रकाशयितुं प्रभवन्तीति नान्यशब्दानामभिव्यक्तेरापत्तिः। एवञ्च शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत्। असमवेतद्रव्यत्वादात्मवदित्याद्यनुमानमपि निष्प्रत्यूहम्। अनाश्रितत्वद्रव्यत्वयोः पूर्वं साधितत्वात्। तथा च श्लोकवार्तिकम्—

तस्मादकृत्रिमशब्दो न कदाचिद् विनश्यति।
नित्येन नित्यसम्बन्धादाकाशपरमाणुवत्।
बहुभिः श्रवणैरेष प्राणिन्वादीनि वर्जयन्।
निकृष्टगोत्ववाचित्वं चिरेण प्रतिपद्यते॥
तावत्कालं स्थिरश्चैनं कः पश्चान्नाशयिष्यति।

उत्तरकारिकाया अयम्भावः—गोशब्दश्रवणानन्तरं शब्दस्वरूपमवधार्य व्यक्तौ, द्रव्यत्वे, प्राणित्वे, पशुत्वे गोत्वे वा शक्तिरिति विविच्य पश्चात् गोत्वे शक्तिर्निर्णीयते। तावत्कालञ्च स्थितिरस्य निश्चिता। इति।

वर्णाः परममहान्तो नित्यत्वे सति सर्वत्रोपलभ्यमानत्वादात्मवत्। इत्यनेन परममहत्त्वं तेन च विभुत्वं सिद्धम्। अन्यसावयवद्रव्यवत् ध्वनयस्तु महान्त एव। अत एव नाणुत्वम्।

१६-१७-१८ परममहत्त्वम्

वर्णा न गुणाः साक्षादिन्द्रियग्राह्यत्वात् घटवत् अनाश्रितत्वादात्मवत्। इत्यादिना गुणत्वनिषेधः। शब्दो गुणश्चक्षुरग्राह्यबहिरिन्द्रियग्राह्यजातिमत्वात् स्पर्शवदिति मुक्तावलीप्रयोगे तु आश्रितत्वसाक्षात्सम्बन्धाग्राह्यत्वादय उपाधय ऊह्याः।

गुणत्वखण्डनम्

गुणत्वाभावे चाकाशगुणत्वं पञ्चभूतगुणत्वम्वाऽसिद्धमेव। किञ्च शब्दो नेन्द्रियगुणः इन्द्रियग्राह्यत्वात् रूपवत्, इत्यनेनेन्द्रियवृत्तिगुणाः नेन्द्रियेण गृह्यन्त इति मूलकेन श्रोत्राकाशगुणत्वनिषेधे सामान्याकाशगुणत्वनिषेधः समेष्यत्येव।

१९—आकाशगुणत्वनिषेधः

शब्दो न वायोर्विशेषगुणोऽयावद्द्रव्यभावित्वात् ज्ञानवत्। वायोः स्पर्शादयो विशेषगुणा आश्रयनाशजन्यनाशप्रतियोगिनो वायौ नष्टेऽस्य विनश्यन्ति, नैव शब्दः अन्यथा वायौ तिमिते मन्दं श्रूयेत, उच्चैरिति च तीव्रम्। एवं महागतिशीले वायौ पृथगपकृष्टन्यस्मिश्चागन्तरि शब्दानामपि परिवर्तनं स्यान्न चैवमनुभूयते। तस्मान्न वायुगुणः शब्दः। शब्दो न वायुविशेषगुणस्त्वगिन्द्रियावेद्यत्वाद् रूपादिवत्। इत्याद्यप्येवमेवोह्यम्।

२०—वायुगुणत्वखण्डनम्

पञ्चभूताश्रयत्वनिषेधेनैव तद्गुणत्वनिषेधोऽपि समायात एव। पृथिव्यादीनां गुणानां श्रोत्रप्राप्यता न स्यादिति शास्त्रदीपिकाकृतः। यत्तु रामरुद्रभट्टाः आत्मस्वरूपं श्रोत्रमङ्गीकृत्य दूषणमिदं निराचक्रुस्तत्तु मत्यवसरे श्रोत्रविचारे चिन्तयिष्यामि।

२१—पञ्चभूतगुणत्वनिषेधः

सप्तपदार्थान्तर्भावः-असमवेतद्रव्यत्वसाधनेन सप्तपदार्थान्तरभावः सिद्धः। अत्र पक्षे क्षणिकत्वखण्डनन्तु पूर्वरीत्यैवावसेयम्। क्षणिकत्वखण्डनेनैवोत्पत्तिमत्वस्य खण्डनं जातं तत्रापि।

२२-२३ विषयः

२४—उत्पत्तेः खण्डनम्— यदि शब्दः समुत्पद्येत तर्हि विनाशकारणाभावात्,सततं श्रूयेतेत्यापत्तिः। यदपि पूर्वशब्दस्योत्तरः सर्वान्त्यस्य च, तत्पूर्व एव नाशक इति समाधानन्तदपि कथमपि स्वीकृतायामुत्पत्तौ सन्ततौ चागत्या कल्पनीयमिव न त्वनुगतत्वेनानुभवपथारोहणीयम्। एवं नापि शब्दविनाशः प्रत्यक्ष आकाशस्यातीन्द्रियत्वात्। यद्यपि कुसुमाञ्जलौ महता समारोहेण तत्प्रत्यक्षं साधितन्तथाऽपि न कश्चिद् दृष्टान्तोऽयोग्याधारेऽभावप्रत्यक्षस्य।

अभिव्यक्तिवादे तु यावदभिव्यञ्जकमभिव्यक्तिरिति प्रसिद्धमर्यादया न शङ्काया अवसरः।

२५—अभिव्यक्त्यवस्थापनम्

२६—अर्थतादात्म्य-खण्डनम्

नाप्यर्थतादात्म्यमर्थशब्दयोर्भिन्नेन्द्रियग्राह्यत्वात्, अग्निशब्दादावुच्चारिते मुखदाहाद्यापत्तेः। आध्यासिकतादात्म्यमपि यत्र शरीरेन्द्रियादिभिरात्मनो व्यतिरेको न स्फुटमवभासते तत्रैवानाद्यविद्यामूलकम्। अत्र तु बधिरेण शब्दो न श्रूयते तदर्थश्च प्रत्यक्षीक्रियते इति स्फुटो व्यतिरेकः। घट एव शब्दो घट एवार्थो घट एवानीयते इत्यादिव्यवहारस्य निदानन्तु यत्किमपि ज्ञानम् परस्मै बोधनीयं चेदनुकूलचेष्टादेरभावे शब्दमन्तरा न किमपि द्वारमिति सर्वत्रैव ज्ञापने शब्दस्य नान्तरीयकतया प्रवेशो, नार्थतादात्म्येन, नापि विषयत्वेन, किन्तु ज्ञापकत्वेनेति प्रत्यक्षलक्षणे न्यायभाष्ये विवेचितम्।

२७—बोधकत्वम्

श्रूयमाणशब्दानाम् बोधकत्वे केचनैव वैयाकरणा आन्तरस्फोटवादिनो विप्रतिपद्यन्ते। किन्तु नित्यानां वर्णानां साधनेऽभिव्यञ्जकध्वनिक्रमेण च क्रमोपपादने ज्ञानघटितानुपूर्व्याः प्रतिपादने, अखण्डस्फोटेऽपि ध्वनिक्रमेणैव क्रमाद्यवभासं समीक्ष्य का विप्रतिपत्तिः।

२८—नाभिव्यञ्जकत्वम्

एवञ्चास्थिरत्व एव वैखरीशब्दानां स्फोटाभिव्यञ्जकत्वम् नित्यत्वे तु बोधकत्वमेव।

२९—ध्वनिभेदः

वर्णाः न ध्वनयो वर्णग्रहणेऽपि ध्वनेर्ग्रहणात्। यथा दूरात्कश्चिदुच्चैर्वक्ति न जाने किमुच्चारयति, असाव्यक्तं ब्रूते न च शृणोमि किमिति, इत्यादिव्यवहारा भेदेनैवोपपाद्याः। सर्वत्रगामिनो ध्वनिपरमाणवोऽभिघातविभागाभ्यां वायुना संहन्यन्ते, संघाताभिघाताच्च संघातान्तरम् यावद् दूरमनुवर्तते, तावच्छब्दोपलब्धिः। वायुताङ्गीकारे तु तारत्वादीनां श्रावणं न स्यादित्यादि पूर्वखण्डनमनुसन्धेयम्।

३०—श्रोत्रस्य स्वरूपम्

श्रोत्रविषये तु मतानीमानि यत्रकुत्रचिन्मयोपव्धानि। १ कर्णशष्कुलीमात्रं तदेव रोगादिना विकार्यते भैषज्येन च संस्कार्यते। २केनचिद्धर्मेण विशिष्टा सा कर्णशष्कुली तत्, रोगभैषज्याभ्यां धर्मस्यैव विनाशप्रादुर्भावौ। ३अहङ्कारपरिणामस्तत्। तच्च लघुनैव दूरतरं सम्बध्नाति। ४कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम्। ५तादृशी च दिक् ६ तदवच्छिन्नमीश्वरतत्त्वम्। ७तादृशमेव जीवतत्त्वम् ८ परमाणुपरिणामः ९ एवम् मतप्रवाहे कर्णशष्कुल्यवच्छिन्ना वर्णाः श्रोत्रमिति ममापि दर्शनीयं दर्शनम्। परेमेषां विवेचने लेखशरीरसमेधनमवश्यम्भावीति लेखान्तरमेव तदुपयोगि मन्तव्यं मनीषिभिः।

३१—प्राप्यकारित्वम्

अप्राप्यकारित्वन्तु केवलं बोधेनैवाधिगतन्तच्च सन्निकृष्टविप्रकृष्टयोश्चां युगपद्ग्रहणापत्तेर्न युक्तम्। अन्यैस्तु सर्वैः प्राप्यकारित्वमेव वर्ण्यते।

३२-३३ श्रोत्रस्य क्रियापरिणेयत्वे

एषां मध्येऽहङ्कारिकस्य शब्ददेशे गमनं सम्भवति। परमाणुपरिमाणपक्षेऽपि मञ्जूषाप्रदर्शितदिशा सर्वगामिभिर्विचित्रशक्तिभिः परमाणुभिः कर्णच्छिद्रादारभ्य शब्दपर्यन्तं श्रोत्रसन्तानसम्पादनेन विषयदेशव्यापिता जायते। अन्येषां मते शब्दानामेव श्रोत्रदेशागमनेन प्राप्यता। गगनदिगीश्वरादीनां श्रोत्रत्वपक्षे यदा शष्कुल्या न विशेषणत्वम् किन्तूपाधित्वम्, तदा न कस्यापि कुत्रचिद् गमनं सर्वदैव सर्वेषां प्राप्यता। दूरान्तिकग्रहणाग्रहणव्यवस्था तु कयाऽपि रीत्या सर्वेषामावश्यकेन, व्यवधानादिप्रतिबाधकाङ्गीकारेण सम्पादनीया। एवमेव ममाप्यन्तिमे दर्शने। एवं यथा वायुतेजसोः प्रत्यक्षाय वायवीयतैजसत्वक्चक्षुषोः सजातीययोः कल्पना तथा शब्दप्रत्यक्षे

शब्देन्द्रियस्य कल्पनेति साजात्यानुभवोऽपि संगच्छते। शुद्धस्य ग्राह्यताऽवच्छिन्नस्य च ग्राहकतेति न विरोधः। दिक् तु न ग्राह्या नापि ग्राह्यसजातीयगुणवती. एवमीश्वरोऽपि, तथेश्वरानङ्गीकर्तृमतेऽनिर्वाह्यम् श्रोत्रम्। रामरुद्राचार्योद्भावितं तत्तदात्मनामेव श्रोत्रत्वपक्षे चक्षुरादिभिर्विनिगमनाविरहः कर्तृत्वकरणत्वयोर्विरोधः, तथानङ्गीकारे मनस एवात्मत्वापत्तिः। कालेन विनिगमकाभावश्चेत्यादिदूषणानि बोध्यानि।

यथाकथञ्चिदपि प्राप्यत्वे न दोषः। यद्यपि श्रोत्रस्य गमने भेरीशब्दो मया श्रुत इत्यादिप्रतीतिं बहवः प्रमाणयन्ति तथापि भेर्यादीनां श्रोत्राग्राह्यतया न सा प्रामाण्यमश्नुते। शब्दविशेषणतया दिशोऽपि श्रोत्रग्राह्यतया यतो दिशो ध्वनय आगच्छन्ति, तत्तद्देशानामनुमानाद्बोध इति शब्ददीपिकाकृत इति कृतं सूचनादधिकेन।

तत्र कार्यविषये प्रामाण्यमश्नुवतां दार्शनिकप्रक्रियया व्यवस्थापयितुमशक्यां पद्धतिं प्रतिपादयितां प्रायः इदं तत्त्वमीदृगेव न तत्त्वान्तरमिति व्यवस्थामुपेक्ष्यादृष्ट्या विलोक्य ईदृक् कार्यमनेन कर्तुं प्रभूयत इत्याविष्कारपरायणानामाधुनिकवैज्ञानिकानां शब्दविषयेऽधस्तनं मतम्—मैटरशब्दोदितानां पृथिव्यप्तेजोवायूनां शक्ति( ताकत )राकाशस्य च गुणः। यत्र संक्षोभः क्रिया वा तत्र शब्द उत्पद्य भ्रमतां भ्रमराणामपि पक्षेभ्यः शब्दो जायते। एवं यत्र वायुः सर्वथैव नास्ति तत्राऽपि शब्दो न जायते प्रमाणितञ्चेदं यन्त्रेण। शब्दग्राहकप्रसारकयन्त्रेण श्रावकयन्त्रं यावद्वायौ कश्चिद् विकारः, संस्कारो वाऽविधीयत इति यन्त्रयोर्मध्ये यन्त्रान्तरेण प्रत्यक्षीकृतम्। वायोरपेक्षया शीघ्रगतिश्च।

१४—दूरश्रवणयन्त्रस्य कस्मिन् मते समुपयोगः।

तत्रेदं चिन्तनीयम्। केषाञ्चिच्छक्तिरन्यस्य गुण इति व्यवस्थायाः किं प्रयोजनम्। गुण एव वस्य कस्यापि कथन्न भवेत्। किञ्च यत्र संक्षोभो वायुश्च वर्तते तत्रैव शब्दस्तदा वायोर्गुण एवान्येषामभिघाताज्जायमानः कथन्नाङ्गीक्रियेत। शक्तिमन्तं विहाय शक्तेरन्यत्र गमनासम्भवात् तदनुपपत्तिरपि। एवम् यावद् वायुविकारोऽनुवर्तते तावदेव रेडियोयन्त्रेण शब्दोऽपि श्रूयते, तथाऽपि वायोरपेक्षया शब्दस्याधिकगतेरङ्गीकारो न शोभते। यतो हि शब्दश्रवणस्थले न ग्राहकं यन्त्रं न वायुं विना तदाश्रितो विकार आगच्छति किन्तु वायुरेव. तदा तावद्गतिरेव शब्दः।

द्वित्रेभ्यो वत्सरेभ्यः पूर्वन्तेषां वायुगुणतया सिद्धान्तः परिणत आसीत्परं तदनन्तरम् वायुमपेक्ष्य वेगवत्तरत्वेन न तथेति प्रवादेऽपि ममैवं प्रतिभाति यद्, यदि प्रसारकश्रावकयन्त्रयोर्मध्ये शतं क्रोशानां दूरमपि वायुं यन्त्रं संस्करोतीति सत्यं तदा पूर्वं या वायोर्गतिर्निश्चितासीत्, ततोधिका गतिः प्रमाणमित्येव तत आगतम्। भ्रान्तैः शब्दगतितया गृहीतम्। अन्यथा वायुक्रियां विना यन्त्रमेतावद् दूरं मध्ये कथं संस्कुर्वीत। यदि च वायोरपेक्षया शब्दस्याधिका गतिस्तदा तावद्दूरं यन्त्रेण वायुसंस्कारपक्षो दूरं प्रक्षिप्यताम्। वायुसहायमन्तरा च तावद्दूरागमने गतिमत्त्वाद्वेगवत्त्वाच्च शब्दः स्वतन्त्रो द्रव्यम् न शक्तिर्न वा गुणः। वेगार्थमभिघातापेक्षणे सावयवत्वञ्च तस्येति स्वीकर्तव्यं स्यात्। तच्च पूर्वोक्तखण्डनेन नोपपद्यते। तस्माद्यन्त्रप्रभावाद्वायोर्गतेश्चापि क्षिप्रं दूरे श्रवणाय स्वतन्त्राः सर्वव्यापिनो वर्णा अङ्गीकर्तव्याः। ग्राहकयन्त्रेण शब्दसंस्कारः, श्रावकयन्त्रेण च श्रोत्रसंस्कार इति व्यवस्था च। परस्परसम्मेलनवशाद्विलक्षणशक्तिमत्पदार्थाविष्कारपरायणानां भूतानां संयोगेन जायमानस्य प्रसारकयन्त्रस्यै-

तावान महिमा येन तत् अन्यैरभिव्यक्तं शब्दं गृह्णाति। श्रावकयन्त्रस्य च स्वसम्बन्धिभिरन्यैरुद्योतितस्यैवाविष्कारे प्रभाव इति कार्यवशात्कल्प्यते। परं श्रोतुरिच्छावशात्तस्मिन्नेव काले, कयाचित् कुञ्चिकया मोहमयीनगरेण सह सम्बन्धविच्छेदं कृत्वा इन्द्रप्रस्थेन सह सम्पाद्यते। स च मध्य एतावत्दूरे कस्यचिदनुवर्तनमन्तरा तत्तद्दिग्भिः सह श्रोतृकामनाप्रयोज्यः सम्बन्धो न भवितुमर्हतीति विद्वद्भिर्विवेचनीयम्।

तस्मात्प्रसारकयन्त्रेन तत्तच्छब्दाभिव्यञ्जकध्वन्यनुकूलः कश्चित् पवनप्रकम्पः समुत्पाद्यते। स च क्रमशो नानादिक्षु परिवर्तमानो दूरेऽसंस्कृतवायुना विच्छेदमाप्तः। श्रावकयन्त्रेण प्रकम्पननियमनद्वारा कम्पोऽपि नियम्य ध्वनिरुत्पाद्यते तेन च वर्णा अभिव्यज्यन्ते। शब्दस्य च नाधिका गतिरित्यङ्गीकर्तव्यम्।

यदि च शब्दस्याधिका गतिः प्रमाणितैव तदा ध्वनिशब्दपरमाणव इतस्ततः सर्वत्र प्रसरणशीलाः प्रसारकश्रावकयन्त्राभ्यां स्तिमितगतयः क्रियन्ते तेन च स्थूलध्वन्युत्पादने वर्णा आद्योत्यन्त इति स्थापनीयम्।

( फोनूग्राफ ) वातवाद्यविषये—वैज्ञानिकाः कथयन्ति यद् विद्युन्निर्मितं किमपि सूक्ष्मं मृदुतरञ्च वस्त्रं कर्गदमिव वा वस्तु वर्तते, तत्सन्निधाने मुखं कृत्वोच्चारणे तत्राघातेन मृदनि पिपीलिकासञ्चार इव उच्चैर्नीचैश्च चिह्नं जायते। तेन च गीतं गृह्यते। तदुपरि सूचिका सञ्चार्यते। तत्र पत्र ( तावा ) निर्माणसमये चैवमपि भवति यद्यन्त्रस्य सविध उच्चारणेनाघाताद्यन्त्रक्रिया तया च सूचिकासञ्चारस्तेन च विध्यते इति वदन्ति। तत्राप्युच्चारणेन वायुकम्प एव भवति तत एव च विलक्षण आघात इत्युपसंहरणीयम्। कृतमधिकेन॥ इति।

नित्यं सर्वोत्तरूपं श्रवणकरणकं द्रव्यभावं भजन्तम्
भेरीकण्ठाभिघाताद्बहुविभवितैर्नादपुञ्जैर्लसन्तम्॥
यन्तं पुष्पप्रभावं तव गुणगणनासन्नमस्याविधौतं
शब्दं ते विश्वबन्धो गिरिधरभगवन् पाणिपद्मेऽर्पयामि॥

---

# महाकविश्रीकालिदासस्य ईश्वरविज्ञानम्



पं० दीनानाथशर्मा त्रिवेदी "मधुपः" काव्यतीर्थम्, साहित्याचार्यः, जयपुरम्।

अखिलभुवनहेतुं सच्चिदानन्दमूर्तिं
निगमदुरवबोधं विष्णुधात्रीशरूपम्।
विभुमजितमजं तं स्वानुभूत्येकगम्यं
कविकुलपरिगीतं नौमि देवं पुराणम्॥

मान्याः!

विशालेऽप्यस्मिँल्लोके सर्वोऽपि जीववर्गः सुखमेव सदा कामयते, न तु कदाचिद् दुःखलेशमपि। कोऽत्र विशेषो हेतुरिति विचारणायां क्रियमाणायामिदमेव कारणं प्राथम्यमवलम्बते यत् 'ममैवांशो जीवलोके जीवभूतः सनातनः।' इति भगवद्भाषिताज्जीवोऽपि नूनमीश्वरांश एव। एवञ्चांशस्यांशिनं प्रति प्रवृत्तिर्भवतीत्यपि सुनिश्चितमेव। यथा ह्यंशीभूतं मृत्पिण्डं काप्युच्चैरुत्क्षिप्यतां परमन्ते तत् पृथिव्यामेव पतिष्यति। तथैवांशिन ईश्वरस्यानन्दरूपतया जीवस्यांशस्य प्रवृत्ति-

रपि तदुन्मुखी समीचीनैव, 'रसो वै सः' रसं ह्येवायं लब्ध्वानन्दी भवति।' इति श्रुतेः।

अत एव 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः।' इत्युक्तेः किन्तावदीश्वरस्वरूपमिति विषयेऽस्मिन दर्शनशास्त्रेषु यद्यपि साधु निरूपित मेवास्ति प्रेक्षावतां पुरस्तात् ; तथापीश्वरविषये कवयः किमामनन्तीति विषयमिममवलम्ब्य विचारतत्परोऽपि लेखविस्तरभिया स्थालीपुलाकन्यायेन प्रथमं कविकुलगुरोः कालिदासस्यैवेश्वरविज्ञानकुसुमं तद्वचोजलजावलिसुरभितं तत्रभवतां भवतां करकमलयोः समुपहरामि। तथा हि—

मान्यः स मे स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः।
रघु० स० २ श्लो० ४५

अत्र हि कविवरेण 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति।' इत्यादिश्रुतिवचोऽनुसारमेव जगतां विधाता पाता संहर्त्ता चैक एवेश्वरः सर्वशक्तिसंपन्नः साधितः। एवञ्च ब्रह्मविष्णुरुद्रेष्वभेदः सिध्यति। अर्थात्स जगतामेक एव कारणम्। सृष्टिकाले स एव ब्रह्मा, पालनकाले च विष्णुः, संहारावसरे च रुद्रः। तथा च श्रुतयः 'एको देवो बहुधा निविष्टः।' 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः।'

नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने॥
रघु० स० १० श्लो० १६

अत्राप्यैक्यं प्रतिपादितं कविवरेण।

रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः॥

मधुरैकरसं वार्षिकं जलं यथोषरादिषु देशान्तरेषु लवणादिरूपतां याति। तथैव निर्विकारोऽप्ययमीश्वरो जगत्कर्तृत्वादिरूपा नानावस्थाः प्राप्नोति वस्तुतः स एकोऽप्यन्तःकरणाद्युपाधिभेदाज्जीवादिरूपः। एतावताऽद्वैतवादसंमतं निर्विकारं स्वप्रकाशमेकमेवानन्यमेव वस्तु कल्पितोपाधिभेदकल्पनया नाना भासत इति सूच्यते। तथा 'चात्मैवेदं सर्वम्। नेह नानास्ति किञ्चन।' इत्यादिश्रुतेरभिप्रायः सम्यक् समन्वेति।

नन्वविक्रियस्य कथं कारणत्वम्?। तथा हि—नैयायिकनयानुसारमीश्वरो जगतां निमित्तकारणमिति स्वीक्रियेत चेत्तदेश्वरस्य निरीहतया तस्मिन् चेष्टाप्रयोजने न संघटेते। यथा हि घटस्य निमित्तकारणं कुम्भकारोऽस्ति तत्र चेष्टायाः प्रयोजनस्य च सत्त्वात्। एवञ्चेश्वरे चेष्टाप्रयोजनयोरभावेन जगतां निमित्तकारणता न भवितुमर्हति?

ईश्वरस्य समवायिकारणतास्त्वित्यपि न विचारसहम्। यतो हि तन्तुभिः पटः संपद्यते, ततश्च पटरूपात्कार्यात्समवायिकारणस्य तन्तूनां पृथक् सत्ता नावशिष्यते। तथैवेश्वरस्यापि जगत्कार्ये संपन्ने तदनु न स्थितिरास्यते भवेत्। यथा यदा दुग्धस्य दधिरूपेण विपरिणामे जाते दुग्धस्य दुग्धरूपेण स्थितिर्नास्ति। तथैवेश्वरस्य समवायिकारणत्वमपि न समीचीनम्।?

अपि च 'तत्सृष्ट्वा तदेवानुप्राविशत्।' इति श्रुतिरपि न समन्वेति। यतो हि यदा बहिःस्थानादन्तर्गच्छति तदानुप्रविशतीति प्रयुज्यते। एतदपि नेश्वरविषये सम्यक्। कस्मिंश्चिदावरणे सत्येव तत्रानुप्रवेशस्यौचित्यात्। यथाकाशस्य सर्वत्र परिव्याप्तत्वेन यद्यपि नास्त्यावरणलेशोऽपि। परं घटसत्तायां यो घटस्थ आकाशस्तदर्थमेतदुक्तं शक्यते यद् घटे घटाकाशोऽस्तीति। परञ्च यथा घटे ध्वस्ते नाकाशस्य किञ्चिदा-

# आत्मवाद में विश्वास का कारण



[ लेखक—नाट्याचार्य—पं० प्रभुनारायणशर्मा 'सहृदय' साहित्यरत्न, हिन्दी-प्रोफेसर, महाराज-संस्कृत-कालेज, जयपुर ]

आत्मा अमर है, भावना अमर है। दोनों की सांकेतिक अभिव्यञ्जना क्रमशः दर्शन और काव्य (साहित्य) के क्षेत्र में होती है। दार्शनिक और कवि दोनों मनुष्य होने के नाते स्थूलदृष्टि से प्रकृति की उपज हैं। जड़त्व, पशुत्व और मनुष्यत्व तीनों में मनुष्यत्व ऊँची श्रेणी का माना जाता है। परन्तु, अनुभव यही किया जाता है कि मनुष्य में शेष दो [ जड़ और पशु ] की अपेक्षा विकास रहते हुए भी प्रकृति की आदिम उपज जड़त्व और पशुत्व के अंश अभीतक भी उसमें अवशिष्ट बने हुए हैं। हो सकता है कि किसी प्रकार उनका मनुष्य में रहना मनुष्य को अपने स्वरूप की रक्षा के लिये किसी हद तक आवश्यक हो। किन्तु, यह बराबर अध्ययन किया जारहा है, ऐतिहासिक प्रयोगों द्वारा विश्वास दिलाया जारहा है कि जड़ प्रकृति की उपज जड़ मनुष्य, धीरे-धीरे जड़त्व की कमी करता हुआ, चैतन्यता का उपासक होता आया है। और इस प्रकार परिवर्तित स्वरूप का नाम ही—युगविशेष की विशेष मनोवृत्ति में—मनुष्य माना जाता रहा है।

आज भी मनुष्याकार पशुओं का निदर्शन मिलता है प्रकृति में। पर उनमें जड़त्व और पशुत्व का प्राधान्य होने से उन्हे कोई भी मनुष्य नहीं कहता। इससे यह तो निर्विवाद माना जा सका है कि जड़ और पशु सृष्टि में, मनुष्य की अपेक्षा कोई कमी अवश्य है। अब प्रश्न यह हो सकता है कि आखिर यह कमी है किस बात की? वह बात, जिसे जानने का प्रयत्न मनुष्य को, मनुष्य सिद्ध करता है, उसका अपनेपन का ज्ञान और उस में अटूट विश्वास रखना ही है कि जिसी के आधार पर उसे हम जड़ और पशु सृष्टि से भिन्न करते हैं।

इस सीमापर पहुँचकर जीवन और जीवननिर्माण-पद्धति नाम से दो भिन्न २ क्षेत्र बन जाते हैं। जीवन की आनन्दमयी व्याख्या साहित्य के हाथ और जीवन के तत्त्वों की विश्लेषणात्मक व्याख्या दर्शन के हाथ स्वतः ही चली जाती है।

संसार का द्वैधभाव, इसी रेखापर पहुँचते न पहुँचते पहेली बनकर दार्शनिक के सामने दो पक्ष उपस्थित कर देता है।

द्वैध-भावना में सृष्टि का बीज निहित है। इसीलिये इसे अनादि और अनन्त कहते हैं। पाप-पुण्य, राग-द्वेष, सत्य-झूठ; भला-बुरा, प्रकाश-अन्धकार की कल्पना आज यहाँ तक बढ़ गई है कि इन युग्मों के संकेत धीरे धीरे मनुष्य के मस्तिष्क में साकार बन बैठे हैं। ठीक इसी प्रकार जहाँ दार्शनिक अपनेपन के अनुभव के बल पर 'आत्मवाद' की ओर प्रवृत्त होता है, वहीं 'अनात्मवाद' की भावना चुपके से छाया की भाँति उसके सामने नाचने लगती है, और यहीं से दार्शनिकों के दो दल हो जाते हैं। एक तरफ आत्मवादी-दौड़ होती है तो दूसरी ओर अनात्मवादी की।

भारत संसार की पीठ पर, पहिला देश है जिसका दर्शन सम्पूर्णता के अधिक निकट कहा जासकता है। आत्मवाद या आत्मदर्शन की विवेचना 'पूर्व' की अपनी एक निजी वस्तु है। और पूर्व में भी मुख्यतः भारत की। यही कारण है कि अनात्मवाद ने भी भारत में ही जन्म लेकर अपने-आपको पूर्ण वैभव तक पहुँचाया। परिणामतः भारत में दार्शनिकों के दो दल हो गये और दोनों ने अपने अपने भरसक प्रयत्नों के बल पर अपने अपने सिद्धान्तों का सम्यक् समर्थन किया। चार्वाक, नागार्जुन और धम्मकित्ति—जो आज नहीं हैं—पर जिनके विचारों के अभिभावक परम प्रगतिवादी बुद्धिविशारद राहुलसांकृत्यायनादि अनात्मवाद की विच्छिन्न शृंखला के रूप में आज भी चल रहे हैं—अनात्मवाद के अखाड़े के ख्यातनामा मल्ल माने जाते थे। उधर आत्मवाद के समर्थकों का तो भारत भर में अखाड़ा था। श्रीशङ्कराचार्य से लेकर विभिन्न सम्प्रदायाचार्यों ने किया ही क्या है सिवाय आत्मवाद के समर्थन के।

यहाँ से एक क्षण के लिये हम अपने पाठकों को एकबार थोड़ा-सा पुनः पीछे लेजाना उचित समझते हैं और प्रार्थना करते हैं कि जरा यह और सोचलें एकबार कि वह मोटी अर्गला थी क्या? जिसने दार्शनिकों को एक मार्ग से हटा कर दो भिन्न भिन्न दिशाओं में विभक्त कर दिया! इस शङ्का पर विचार करते ही उत्तर सामने आने में देर नहीं लगती।

आत्मवादी का आधार 'जीवन' रहा है, जब कि अनात्मवादी बुद्धि के बल पर तर्क की तीव्र प्रकाशधारा की चकाचौंध में, आगे क्या है, मार्ग साफ है कि उसमें कहीं कोई खन्दक, यह तक नहीं देख सकता। जीवन स्वयम् एक रहस्य है, जीवन के रहस्य का जानकार बुद्धिबल पर एक शान्त और धीमी मुस्कुराहट करके चुप रह जाता है। क्योंकि उसके यहां तो बुद्धि को इतना ही अधिकार है कि वह जीवन के आगे २ अपना मीठा सा प्रकाश फैलाती चले। परन्तु, उधर जीवन से विद्रोह करने वाली धूम्रकेतु की भांति तीव्र प्रकाश-मालिका को फैलाकर आंखें चौंधिया देने वाली बुद्धि के बलपर नास्तिक विचारकों ने जीवन से रंचक मात्र भी सहानुभूति न रखकर अनात्मवाद की निम्न कोटि में ही अपना बौद्ध-आडम्बर फैलाने का बीड़ा उठा रखा है।

मेरे अपने निकट साहित्यकार और दार्शनिक का एकसा ही काम है। इसीलिये मैंने लेख के आरंभ में दोनों ही के विचारणीय तत्त्वों को एक साथ, एक ही रूप में लिखा है। साहित्यकार का कार्य है जीवन के उत्कर्ष का प्रचार और दार्शनिक का लक्ष्य होता है जीवन तत्त्व अर्थात् आत्मतत्त्व का दर्शन कराना। बात करीब करीब एक-सी ही है। यही कारण है, भारतीय साहित्यकार और दार्शनिक ने जीवन और प्रकृति की सूक्ष्मातिसूक्ष्म अनुभूति करके समझ लिया था कि व्यक्ति और वस्तु-रूप में जो प्रकृति-वैभिन्य दीखता है, वह वास्तव में दृष्टि दोष है, नहीं तो असल में एक व्यापक सम्बन्ध ही इन सब में व्याप्त है और वह सम्बन्ध या सत्ता ही भारतीय दर्शन की कसौटी पर स्पष्ट रूप से आत्मवाद की अमिट एवं देदीप्यमान लकीर है, जिसपर बुद्धिवादी प्रगतिशील सांकृत्यायनी दली बन्धु लीपापोती करने का प्रबल मिशन लिये फिरते हैं। पर उन्हें सोचे रहना चाहिये कि उनके पूर्वजों का वही 'अनात्मवाद' सहसा घास से पैदा हुई अग्नि ज्वाला की भाँति प्रज्वलित होकर दूसरे ही क्षण भस्मीभूत हो

गया है और बौद्ध चैत्य और विहारों के रूप में आज केवल उनके स्मारक मात्र अवशिष्ट रह गये हैं। आखिर ऐसा क्यों हुआ ? विचारने पर ज्ञान होता है कि विकासवाद रूढ़ी पर जीवन के सिद्धान्त को आश्रय देकर चलने के कारण ही उन्हें यह दिन देखना पड़ा। क्योंकि वास्तव में तो जीवन एक वैज्ञानिक रहस्य है। सर्वदा सत्य रहनेवाली अमर अनुभूति है, इसी के साथ मनुष्य की और उसके अपने भौतिकवातावरण की सत्ता है और इसी सत्ता की लालसा से चाहे आत्मवादी हो चाहे अनात्मवादी,जीना सभी चाहते हैं। जीने की अदम्य भावना ही स्वयम् जीवन के महान् तत्त्व ( आत्मतत्त्व ) की पुकार-पुकार कर अस्तित्वसिद्धि कर रही है। जन्म और मृत्यु जो हमारे जीवन के दो किनारे हैं, किस रहस्य मय तत्त्व पर अवलम्बित हैं ? किस रहस्य को अपने में लपेटे रहने से जीवन जीवन है, और गतिशील है, संसार की गतिशीलता का अमर रहस्य क्या है ? हमारी भौतिक स्थिति में भी, जो निरी प्रकृति की ही देन है, हमें एक ऐसे अज्ञात किन्तु, अनुभूत तत्त्व का साक्षात् सम्पर्क सा क्यों भासित होता है ? इत्यादि प्रश्नों के उत्तर जितने भी मिल सकते हैं वे सब के सब हमें आत्मा में विश्वास और रुचि पैदा कराने के साथ उसके और भौतिक तत्त्वों के बीच एक स्पष्ट व्यवधान होने की भी सूचना देते हैं।

ऊपर हमने प्रकृति की उपज में विकासवाद की सी झलक स्वीकार की है; उसका इतना ही तात्पर्य है कि भौतिकतत्त्वों के साथ आत्मतत्त्व का संमिश्रण वहां विकास नाम से माना जाता है। आत्मतत्त्व की सत्ता भारतीय-दर्शन स्थावर जंगमादि सभी सृष्ट पदार्थों में मानता है, पर कहीं उसका तिरोधान है तो कहीं पूर्ण विकास और इसी तिरोधान और विकास के बलपर उपर्युक्त पङ्क्तियों में विकास-सिद्धान्त का तथा-कथित स्वरूप माना है। अस्तु, कहने का लक्ष्य यही है कि जिस जीवन की शाश्वतता की विज्ञान खोज करके उसका स्वरूप निर्णय करता है, धर्म उसी में श्रद्धा उत्पन्न कराता है और दर्शन उसकी पद्धति निर्माण करता है। जिस आत्मवाद की सत्ता शास्त्रों द्वारा सिद्ध की गई हो, जिस आत्मवाद की गवाही संसार का जड़चेतन्यात्मक प्रत्येक पदार्थ दे रहा हो, उसे निरे बुद्धिवाद के बल पर तर्क की कसौटी पर छूँछा कहदेना साहस का मखौल करना नहीं तो क्या है ?

जहाँ बुद्धिवाद भी जीवित रहने का अथक प्रयत्न करता हो, वहाँ जीवन की सत्ता स्वतः प्रतिष्ठित होजाती है। जिसे संसार मृत्यु कहता है उसीको भारतीय आस्तिक लोग अथवा आत्मवादी लोग रूपान्तर में जीवन कहते हैं; और मृत्यु के पश्चात् जन्म तथा जन्म के पश्चात् मृत्यु के सिद्धान्त के बल पर ही—"जीवित हूँ, जीवित रहूँगा" वाला सिद्धान्त जो भारतीय चेतनवाद की अमरता है, आज तक सर्वमान्य है।

अतः बलपूर्वक कहा जासकता है कि बुद्धिपरक असंस्कृत विकारों की निराधार देन का नाम "अनात्मवाद" है जब कि अनुभवसिद्ध चेतनवाद की साक्षी समस्त संसार का जर्रा जर्रा दे रहा है और इस प्रकार जीवन की मौन स्वीकृति दे देना ही बुद्धि की भयङ्कर हार है कि जो दूसरे शब्दों में अनात्मवाद की ही हार है।

# संस्कृतभाषोन्नतिप्रतिबन्धकं कारणद्वयं तत्परिहारोपायश्च*

* भारतीयदर्शनानां द्वारं किल देवभारती । सैव संप्रति क्रमिति विरला भवतीति निदानतो विवेक्तुमारब्धोऽयं निबन्धः प्रसक्तानुप्रसक्तयात्र प्रकाशनमर्हतीति ।—सम्पादकः ।



( ले०—पं० चन्द्रभानुशास्त्री, मूलचन्द-खैरातीराम-सनातनधर्म-संस्कृतविद्यापाठाध्यापकः लाहौर )

मान्याः संस्कृतज्ञा विद्वांसः !

सम्प्रति नित्याध्ययनमर्थान्निष्कारणमध्ययनम्—"वेदस्याध्ययनं नित्यमनध्ययने पातात्" इत्यादिभिर्मीमांसाशास्त्रोदितैर्वाक्यैरनुशिष्टमपि अध्येतॄणामर्थार्जनाभिनिविष्टबुद्धित्वाद्विनष्टमेवेति पश्यामः । बाह्येषु किमुद्दिष्टमध्ययनं प्रचलतीति न सम्यग् विद्मः । अद्यतनं भारतीयमध्ययनन्तु नितरां तण्डुलप्रस्थमूलमेव वरीवर्ति इति तु न तिरोहितम् । येषां हि विषयाणामध्ययनेन स्थाली पचति, नेपथ्यं वा परिमार्ष्टि, त एव विषयाः साम्प्रतिकाध्ययने तुन्दिलाः सन्ति । येषां च विषयाणामध्ययनेन नाधिश्रयितुं शक्यते स्थाली, नो वा परिमार्ष्टुं पार्यते नेपथ्यं तेषु बहवो युगान्तरजागर्तये प्रसुप्ताः, केचित्तु प्रत्यहं क्षीणं क्षीणमपि आत्मानं कृच्छ्रेण धारयन्तः पार्श्वस्थस्य मृत्योर्मुखमवलोकयन्ति । संस्कृतभाषाऽध्येतॄणामपीयमेव दुरवस्था दृश्यते । यैस्तु आयुर्वेदाद्यर्थकरी विद्याऽधिगता स्ते सुखेन लौकिकं जीवनं यापयन्ति, यैश्च न्यायव्याकरणादिशास्त्राण्यधीतानि ते यावज्जन्म कृच्छ्रापतिताः श्वसन्तति जीवन्त एव आङ्ग्लभाषाद्यध्ययनेन कृतार्थां सम्पाद्य लोकादरमात्रयन्ति । अकालप्रयियासवश्च संस्कृतं नाध्येतव्यमिति शिक्षयित्वा शपथं ग्राहयित्वा स्वपुत्रादीन् अपुनर्दर्शनाय परित्यजन्ति । उभयत्र बहवः संस्कृतविद्वांसः सन्ति जीवन्ति निदर्शनानि ।

किञ्च—इंगलिशभाषाध्ययनमद्य राजशक्तिपरिबृंहितमिति तद्दूरमास्ताम् । यदिदमतिदुर्दशाग्रस्तमपि चटशालासु प्रचाल्यमानं मुण्डीभाषाध्ययनं गणिताध्ययनञ्चास्ति समस्तभारतव्यापि तत्र मनाग्दीयतां दृष्टिः । तद्धि यस्येदानीं कश्चिदपीक्षिता नास्ति, राजाश्रयो नास्ति, अन्यतोऽपि च संस्कृतभाषाध्ययनवद्धनिकैर्दीयमानं करावलम्बनमपि नास्ति; तस्य तु केवलमर्थप्राप्तिरेवोद्देश्यमित्येतस्मादेव कारणात्तज्जीवतीति नः सर्वेषामध्यक्षम् । स्वल्पेनैव कालेनाल्पेनैव च परिश्रमेण तत्राधीतिनो धनार्जने शक्ता भवन्तीति कृत्वैवाकिञ्चिदपि सत्तत्प्रचलतीत्येकतः; परतस्तु—"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ।" "तदत्यन्तविमोक्षोऽपवर्गः ।" "अथातो ब्रह्मजिज्ञासा ।" "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।" इत्यादिभिर्महोद्देश्यैः पुरस्कृतमपि धर्मादिविषयाणामध्ययनं शरशय्यापतितम् । एतत्पश्यन्तोऽपि यावद्वयं संस्कृतभाषयापेक्षितविषयाणामध्ययनं नोपक्रमामहे, अनपेक्षितानेव च विषयान् परम्पराप्राप्तान् रटयित्वोभयलोकविभ्रष्टांश्छात्रानजीवमहं विवेशान् प्रकल्प्य लोकस्योपहासाय धनदानाञ्चोपतापाय सज्जयामहे तावत्संस्कृतभाषाऽमरभाषापि सती प्रत्यहं मृत्युद्वारमुपसर्पस्यतीति ध्रुवं सत्यम् ।

तस्माद्यदि वयं संस्कृतभाषां सञ्जिजीवयिषामस्तर्हि यावच्छक्यमविलम्बितमेवापेक्षितविषयाणामध्ययनं संस्कृतभाषया यथा प्रचलितं भवेत्तथास्माभिः प्रयतितव्यम्। तदर्थञ्च यथा पूर्वप्रचारकैर्महाभागैः साम्प्रतिकैरपि चारम्भिकाणि बालोपयोगीनि पुस्तकानि तत्तद्विषयेषु विरच्य प्रकाशितानि तथैवास्माभिरपि येषां संस्कृतभाषैव जीवनालम्बनं तैस्तथाविधान्येव विषयप्रवेशाय लघुलघूनि पुस्तकानि विरच्य प्रकाशयितव्यानि। एतस्मिन् कर्तव्ये नासन् प्रत्ना आचार्या वयमिव प्रसुप्ताः। परमपूज्यपादेन भगवता श्रीमदाद्यशङ्कराचार्येण परिपक्वबुद्धीननुग्रहीतुं यथैव वेदान्तसूत्रेषूपनिषत्सु च भाष्यमक्रियत तथैव सुकुमाराणां दुर्गमवेदान्तभवनप्रवेशाय दुरधिरोहोऽपि मार्गः कृपया तथा सुगमो व्यधीयतात्मबोधतत्त्वबोधप्रभृतिप्रारम्भिकग्रन्थसोपानपरम्परानिर्माणेन यथाऽल्पाल्पबलानामपि तदधिरोहणे प्रयासो न स्यात्। एतस्य हि फलमेतद् यद्वेदान्तदर्शनं दर्शनान्तरवदर्थार्जनायानुपायभूतमपि सदद्यापि देशे देशे गृहे गृहे च स्त्रीभिरपि सारिकाभिरिव रामनामवदालोड्यते। यदि हि भगवान् शङ्कराचार्यस्तथा नाध्यवसातुमवतरेन्नूनं वेदान्तहर्म्यं प्रबलैरप्यशक्यप्रवेशं सन्निरर्थकमेव भवेत्। सन्ति हि तद्विपरीतान्यपि निदर्शनानि येष्वारम्भिकग्रन्थाभावादेव तानि संस्कृतसाहित्यक्षेत्रादस्तमितानि। यथा गणितादीनि परमावश्यकान्यपि शास्त्राणि। गणितभूगोलादीनामर्थकराणामपि शास्त्राणां संस्कृतसाहित्यादारम्भिकग्रन्थाभावादस्तङ्गतौ कारणान्तरं न पश्यामः। गानशास्त्रं श्रोतृभ्योऽमृतं प्रयच्छदपि, सत्स्वपि सङ्गीतरत्नाकरादिदुरूहग्रन्थेषु प्रारम्भिकग्रन्थाभावादेव नामशेषतामुपयातम्। किमधिकं चतुःषष्टिकलानां सर्वासामेव संस्कृतसाहित्यक्षेत्राद् विनाशस्येदमेवैकं कारणं यदारम्भिकग्रन्थाभाव इति।

मान्याः सहृदयाः पाठकमहाभागाः! एकतोऽर्थकराणां विषयाणामध्यापनेऽभावः परतश्चापेक्षितविषयाध्ययनायारम्भिकग्रन्थानामभावश्चेत्येतदभावद्वयमेव संस्कृतभाषोन्नतेर्बाधकम्। इदं द्वयमपि अर्थहेतुकविषयाध्यापनेनारम्भिकापेक्षितग्रन्थनिर्माणेन च शक्यसमुच्छेदम्। तद्यदि किञ्चिदप्यस्ति संस्कृतभाषोज्जीवनाय हृदि दयाङ्कुरस्तर्हि यावदिदमभावद्वयं पुरःस्फुरति तावदनधिशय्य स्वास्तीर्णामपि शय्याम्, परित्यज्य परिविष्टमपि भोजनम्, अपनीय स्नानीयमपि पानीयम्, एतदभावद्वयापनयने प्रयत्यताम्। कारणान्तरं वा विमृश्यताम्, येन संस्कृभाषोन्नतिर्निरर्गला स्यात्।

## ❋शंकरोपदेशः❋



कोन्धः कुकर्मनिरतः को बधिरो यः शृणोति नान्योक्तिम्।
को मूको यः काले प्रियाणि वक्तुं न जानाति॥
कुत्र विधेयो वासः सज्जनसविधे सदा सौम्ये।
कः परिहार्यो देशः पिशुनजनैः सङ्कुलीभूतः॥ श्रीशङ्कराचार्यः

# ऋग्वेद और मोहञ्जोदड़ो

ले०—श्रीयुक्त लक्ष्मणस्वरूपजी एम० ए०, डी० फिल० (आक्सफोर्ड) ऑफिसर द' आकादेमी (फ्रांस),
प्रिन्सिपल ओरियण्टल कालिज, लाहौर

बहुत समय नहीं हुआ कि योरूप के इतिहास लेखक भारत का इतिहास अलेक्जेण्डर के भारत पर आक्रमण से अथवा महात्मा बुद्ध के समय से आरम्भ करते थे। उनकी दृष्टि में इस से पहले के समय का भारत का इतिहास ही न था।

मोहञ्जोदड़ो तथा हरप्पा के भारतीय पुरातत्त्व विभाग द्वारा खोदे जाने पर योरूप के इतिहास लेखकों के विचारों में एक क्रान्ति उत्पन्न हो गई है। वे अब भारत के इतिहास का आरम्भ ईसा से ४००० वर्ष पूर्व का मानने लग गये हैं। क्यों कि मोहञ्जोदड़ो तथा हरप्पा की सभ्यता ईसा से कम से कम ४००० वर्ष पूर्व की है। इस प्रकार भारतीय सभ्यता का आरम्भ संसार की दूसरी प्राचीन सभ्यताओं मिश्री, (Egyptian), एस्सीरियन (Assyrian) आदि २ सभ्यताओं के समकालीन पहुँच जाता है। पर योरुप के विद्वानों का मत है कि मोहञ्जोदड़ो तथा हरप्पा की सभ्यता आर्य सभ्यता नहीं थी किन्तु अनार्य (द्राविड़) सभ्यता थी। आर्य जाति के लोग पीछे से भारत में आये और आर्य जाति का प्राचीनतम ग्रन्थ ऋग्वेद मोहञ्जोदड़ो तथा हरप्पा सभ्यता के समय से बहुत पीछे का है यानी ईसा से लगभग १००० वर्ष से अधिक पुराना नहीं है। इस मत के आधार पर दो प्रश्न उठते हैं। प्रथम—ऋग्वेद तथा मोहञ्जोदड़ो तथा हरप्पा का परस्पर पूर्वापर संबन्ध। दूसरा—क्या मोहञ्जोदड़ो तथा हरप्पा की सभ्यता वास्तव में आर्य नहीं है और अनार्य है? इस लेख में हम पहले प्रश्न पर ही विचार करेंगे। लेख के लम्बा हो जाने के भय से दूसरे प्रश्न पर फिर कभी विचार किया जायगा।

आरम्भ में ही एक साधारण बात कह देना उचित होगा। किसी भी समय की सभ्यता तथा संस्कृति की झलक उस समय के साहित्य में दृष्टिगोचर होती है। कालिदास के नाटकों तथा महाकाव्यों के विवेचनात्मक अध्ययन से हम कालिदास के समय की सभ्यता तथा संस्कृति का ज्ञान प्राप्त कर सकते हैं। भवभूति के नाटकों में भवभूति के समय की सभ्यता का चित्र सुरक्षित है। शेक्सपीयर के नाटकों में से हमें शेक्सपीयर के समय की अङ्गरेजी सभ्यता का हाल मालूम होता है इस लिये कहा जा सकता है कि अमुक समय का साहित्य एक दर्पण है जिस में अमुक समय की सभ्यता तथा संस्कृति का प्रतिबिम्ब स्पष्ट दिखाई देता है।

ऋग्वेद भी आर्य्य जाति के आदि काल का महाकाव्य है। यह सर्वश्रेष्ठ साहित्य है। ऋग्वेद के विवेचनात्मक अध्ययन से हम ऋग्वेद के समय की सभ्यता तथा संस्कृति का पूरा पूरा ज्ञान प्राप्त कर

सकते हैं। इस लिये सब से पहले हम ऋग्वेद के विवेचनात्मक अध्ययन से ऋग्वेद के समय की सभ्यता का पाठकों को दिग्दर्शन करायेंगे फिर ऋग्वेद-कालीन सभ्यता की मोहञ्जोदड़ो की सभ्यता से तुलना करेंगे। ऐसा करने से विज्ञ पाठक स्वयं ही परिणाम निकाल लेंगे कि ऋग्वेद तथा मोहञ्जोदड़ो का पूर्वापर संबन्ध क्या है।

ऋग्वेद के अध्ययन से पता चलता है कि उस समय की सभ्यता Pastoral थी। इस सभ्यता की विशेषता यह होती है कि बहु जन-संख्या की आजीविका का आधार पशु-पालन होता है। गायों घोड़ों भेड़ बकरियों के रेवड़ों का पालन पोषण, उन का क्रय-विक्रय, गोरस दूध-दही आदि का बेचना। जैसे बाबा नन्द यशोदा तथा गोप-ग्वालों की वृत्ति। इन्हीं लोगों के बीच में श्रीकृष्ण का बाल्यकाल व्यतीत हुआ था। पशु ही इन लोगों का *धन होता है। जैसे वर्तमान समय में हम धनाढ्य ऐसे व्यक्ति को कहते हैं, जिस के पास लाखों रुपये नक़द हों अथवा लाखों रुपयों की जायदाद हो अर्थात् धनाढ्यता में गणना रुपयों से ही होती है। उस समय धनाढ्य उस व्यक्ति को कहा जाता था जिस के पास लाखों गायें तथा दूसरे पशु हों। धन की गणना रुपयों में न होकर पशुओं में होती थी। इसी लिये शिव तथा रुद्र को पशुपति कहा गया है।

देवताओं का धन भी पशु ही थे। यह बात ऋग्वेद के सरमा-पणि सम्वाद-सूक्त से स्पष्ट है। अनार्य दस्यु लोग, जिन का नाम पणि था देवताओं की गायों को चुराकर लेगये। देवताओं को दुःख हुआ। उन को मालूम न हो सका कि कौन उन को गायों को चुरा कर ले गया है। तब इन्द्र ने देव-शुनी सरमा को गायों की खोज में भेजा। वह देव-शुनी सरमा रसा नाम की बहुत बड़ी महाकूला जल-दुर्गा नदी को पार करके पणियों के देश में पहुँची और देवताओं की गायों का पता निकाला।

इस सभ्यता के काल में विशाल चरागाहें होती थीं। पशुओं के खाने के लिये घास तथा पीने के जल से परिपूर्ण प्रदेश होते थे। पशुओं के बहुत बड़े-बड़े रेवड़ रखे जाते थे। ऋग्वेद में चरागाह के लिये गव्यूति शब्द का प्रयोग किया गया है। प्रार्थना की गई है कि हमारा कोई पशु नष्ट न हो, कोई गढ़े में गिर कर मर न जाय। बाहिर से घास चर कर सारे के सारे पशु स्वस्थ अवस्था में घर लौट आवें। वृक व्याघ्र आदि हिंस्र जन्तु उन को न खा जावें। यह बात नीचे लिखे मन्त्रों से स्पष्ट हो जाती है—

पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः।
पूषा वाजं सनोतु नः। ऋग्वेद ६.५४.५
पूषन्ननु प्र गा इहि यजमानस्य सुन्वतः।
अस्माकं स्तुवतामुत॥ ६.५४.६.
माकिर्नेशन्माकीं रिषन् माकीं सं शारि केवटे।
अथारिष्टाभिरा गहि॥ ६.५४.७.

सैकड़ों मन्त्र उद्धृत किये जा सकते हैं किन्तु विस्तार भय से यहां केवल तीन ही मन्त्र दिये गये हैं। इस से उस समय की सभ्यता का Pastoral होना सिद्ध है।

ऋग्वेद के समय में आर्य्य जाति की सभ्यता को agricultural civilization भी कहा जा सकता

* देखिये रघुवंश—गुरोरपीदं धनमाहिताग्नेर्नश्यत् पुरस्तादनुपेक्षणीयम्।

है। इस सभ्यता की विशेषता यह होती है कि बहु-संख्यक जनता की आजीविका का आधार कृषि होता है। हल चलाना, बीज बोना, पके हुए धान्य को काटना—यही मुख्य वृत्ति होती है। इस कथन की पुष्टि में ऋग्वेद से चार मन्त्र उद्धृत किये जाते हैं। यह न समझना चाहिये कि कृषि-वृत्ति की पुष्टि में ये केवल चार ही मन्त्र हैं। मन्त्र तो सैकड़ों हैं किन्तु एक छोटे से लेख में सारे मन्त्र उद्धृत नहीं किये जा सकते। केवल दिग्दर्शक ही कराया जा सकता है।

**अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः। तत्र गावः कितव तत्र जाया तन्मे विचष्टे सवितायमर्यः॥** १०-३४-१३

**सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक्। धीरा देवेषु सुम्नया॥** १०, १०१, ४

**तवेदिन्द्राहमाशसा हस्ते दात्रं चना ददे। दिनस्य वा मघवन्त्सम्भृतस्य वा पूर्धि यवस्य काशिना।** ८, ७८, १०

**युनक्त सीरा वियुगा तनुध्वं कृते योनौ वपतेह बीजम्। गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात्** १०, १०१, ३.

अन्तिम मन्त्र का हिन्दी में अर्थ कर देना यहां उचित होगा "हलों को जोतो, बैलों के कन्धों पर जुओं को फैलाओ, जब भूमि तैय्यार हो जाय तो वहां बीज बोओ। (फसल काटने वाली) दांतियें हमारे (पास) समीप हों, पका हुआ धान्य हमें प्राप्त हो"। इस से सभ्यता का agricultural (कृषि-अवस्था) होना सिद्ध है।

ऊपर लिखी दोनों सभ्यताओं (Pastoral and agricultural) के लिये वृष्टि अत्यन्त आवश्यक है। गव्यूति का होना, घास की प्रचुरता, पीने के जल का सुलभ होना, खेती की सफलता वृष्टि पर निर्भर है। ऋग्वेद में वृष्टि की बड़ी महत्ता है। वृष्टि के जल को घृत की धारा कहा गया है। वृष्टि के लिये बड़े बड़े यज्ञ किये जाते थे। वृष्टि को लाने वाले सूक्त रचे जाते थे। देवापि का वर्षा-काम-सूक्त इसी प्रकार का है। सातवें मण्डल में मण्डूक-सूक्त (७-१०३) का भी इसी प्रकार का आशय बतलाया गया है। सैकड़ों ऐसे मन्त्र हैं- जिन में वर्षा के लिये प्रार्थना की गई है। हम यहां पर ३ मन्त्रों को उद्धृत करते हैं। इन मन्त्रों से हमारे कथन की पुष्टि होती है

**दिवो नो वृष्टिं मरुतो ररीध्वं प्र पिन्वत वृष्णो अश्वस्य धाराः। अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः॥** ५. ८३. ६.

इस मन्त्र का हिन्दी में अर्थ इस प्रकार है—

"हे मरुत देवताओ! आकश से वृष्टि हमारे लिये बरसाओ। वीर्ययुक्त अश्व के समान मेघकी धाराओं को नीचे गिराओ। जलों को नीचे छिड़कते हुए और गरजते हुए इस तरफ आओ। हे हमारे असुर (दिव्य) पिता!

**अभि क्रन्द स्तनय गर्भमा धा उदन्वता परिदीया रथेन। दृतिं सु कर्ष विषितं न्यञ्चं समा भवन्तूद्वतो निपादाः॥**

"चिंघाड़ो, गरजो, गर्भ को धारण कराओ। अपने जलमय रथ के साथ चारों तरफ उड़ो। पानी की खाल (मशक) को खोल कर नीचे की तरफ अच्छी तरह उंडेलो। (इतना जल बरसे कि) नीचे और ऊंचे प्रदेश सम हो जांय"।

महान्तं कोशमुदचा निषिञ्च स्यन्दन्तां कुल्या विषिताः पुरस्तात्।
घृतेन द्यावापृथिवी व्युन्धि सुप्रपाणं भवन्त्वघ्न्याभ्यः।

"बड़े कोश ( डोल या कूप से जल ऊपर खींचने वाला चरस ) को सूर्य-रश्मि द्वारा ऊपर खींचकर नीचे सींचो। प्रतिबन्ध-रहित नदियें आगे बहें। आकाश और पृथ्वी को घृत से ( वृष्टि जल से ) भिगो दो। गायों के जल पीने के लिये शुभ प्रदेश हों।" ५-८३-८

इन मन्त्रों के साक्ष्य से ऋग्वेद-कालीन सभ्यता का Pastoral और agricaltural होना सिद्ध है।

ऋग्वेद में ग्राम ग्रामपति ग्रामणी आदि का बहुत वर्णन मिलता है पर विशाल नगरों का उल्लेख नहीं मिलता। इस से यह परिणाम निकलता है कि ऋग्वेद के समय में विशाल नगरों का अस्तित्व विद्यमान न था। हम यह जानते हैं कि बड़े-बड़े विशाल नगर, जैसे कलकत्ता, बम्बई, मद्रास, कोलम्बो, रङ्गून, पैरिस, लन्दन, न्यूयार्क, बर्लिन, पैट्रोग्रेड आदि का प्रादुर्भाव गत ३०० वर्षों में ही हुआ है। इन बड़े बड़े विशाल नगरों का अस्तित्व, जहां लाखों की जनसंख्या है, वर्तमान समय की विशेष वृद्धि है। इस से पूर्व जनता की बहु संख्या, विशेष कर भारत में, ग्रामों में ही रहती थी।

सभ्यता के विकास के इतिहास को देखने से पता चलता है कि सभ्यता की पशु-पालन, कृषि, ग्रामीण अवस्थायें पूर्ववर्ती होती हैं। इस के विपरीत व्यापार ( trade commerce ) यन्त्रों द्वारा माल बनाना ( industrial ) तथा विशाल नगरों के प्रादुर्भाव की अवस्थायें अपरवर्ती होती हैं। इस कसौटी पर परखने से कहा जा सकता है कि मोहञ्जोदड़ो तथा हरप्पा की सभ्यता ऋग्वेद से अपरवर्ती थी क्योंकि ये नगर बड़े विशाल थे। इन नगरों के खण्डहर अब भी मीलों में पड़े हैं इन नगरों में बड़े-बड़े तालाब, बड़ी बड़ी शालायें, जिन में सुन्दर स्तम्भ हैं, चौड़ी सड़कें, विशाल भवन, नगर के प्राकार की दीवार जो कहीं कहीं २० फुट चौड़ी है, अद्भुत घाट, छुपे हुए तथा ढके हुए परनाले और नालियां—इस प्रकार नगर निवासी दुर्गन्ध तथा नालियों में बहती हुई गन्दगी के क्षुब्ध करने वाले दृश्य से सुरक्षित थे—दो मंजले तिमंजले मकान, पाए जाते हैं। यह निस्संदेह नागरिक सभ्यता थी। बड़े २ सार्थ ( काफिले ) सुदूर प्रदेशों से व्यापार करते थे। यहां पशु-पालन तथा कृषि पर आजीविका का आधार न था। मोहञ्जोदड़ो की सभ्यता व्यापारिक सभ्यता थी। ऋग्वेद के समय से यह सभ्यता बहुत पीछे की है।

## देवता धर्म और दर्शन

जिस प्रकार वर्तमान समय में आर्य जाति के स्त्री पुरुष भिन्न भिन्न धार्मिक सम्प्रदायों में विभक्त हैं—कोई सनातन धर्मी है, कोई आर्य्यसमाजी, कोई ब्रह्मसमाजी, कोई देवसमाजी, कोई शैव, कोई वैष्णव, कोई बौद्ध, कोई जैन, कोई वेदान्ती, कोई मीमांसक, कोई सांख्य का अनुयायी, कोई नैयायिक। इसी प्रकार ऋग्वेद के समय में भी आर्य्य जाति के लोग भिन्न भिन्न देवी देवताओं को मानते थे, उन के बहुत से सम्प्रदाय थे, उन की धार्मिक क्रियायें भी भिन्न भिन्न प्रकार की थीं, उन की पूजा का विधान भी भिन्न था, उन के धार्मिक विचारों में बल्कि ईश्वर की सत्ता के विषय में भी भेद था। इस भेद की पुष्टि में हम ऋग्वेद से नीचे लिखे मन्त्र उद्धृत करते हैं :—

अग्नि इन्द्र वरुण मित्र अर्यमा सविता विष्णु रुद्र ब्रह्मणस्पति सोम आदि अनेकों देवताओं की पूजा होती थी। उन के नाम से यज्ञों में बलि तथा हवि दी जाती थी। उन से स्तोता वा यजमान आर्थपत्य की इच्छा करता था और इसी अभिप्राय से देवताओं की स्तुति की जाती थी। नाना देवता-वाद निस्संदेह प्रचलित था पर साथ ही साथ एक दल ऐसा भी था जो नाना देवता-वाद को नहीं मानता था और नाना देवताओं को एक ही ईश्वर के भिन्न भिन्न नाम बताता था:—

इन्द्रं मित्रं वरुणमग्निमाहुरथो
दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं
यमं मातरिश्वानमाहुः ॥ १०-१६४-४६

किं मा निन्दन्ति शत्रवोऽनिन्द्राः ।१०-४८-७

कुछ लोग नास्तिक भी थे। वे पूछते थे कि ईश्वर कहां है? अर्थात् कहीं भी नहीं।

यं स्मा पृच्छन्ति कुह सेति
घोरमुतेमाहुर्नैषो अस्तीत्येनम्। २-१२-५

नैषोऽस्ति इन शब्दों की तरफ मैं पाठकों का ध्यान आकर्षित करता हूँ। इसी प्रकार—

नेन्द्रं देवममंसत ( १०-८६-१ ) से प्रतीत होता है कि कुछ लोग इन्द्र को नहीं मानते थे।

इसी प्रकार क़ानून में भी भेद था। कुछ औरस पुत्र को ही दायाद मानते थे और कुछ दूसरे बालक को गोद ले लेने के भी पक्ष में थे। देखिये!—

परिषद्यं ह्यरणस्य रेक्णो नित्यस्य
रायः पतयः स्याम ।
न शेषो अग्ने अन्यजातम-
स्त्यचेतानस्य मा पथो वि दुक्षः॥ ७-४-७

"दूसरे व्यक्ति का धन ( रेक्णः ) निषिद्ध है (नहीं लिया जाना चाहिये)। हम नित्य सम्पत्ति या धन ( रायः ) के स्वामी हों। हे अग्निदेवता! दूसरे से पैदा किया हुआ बालक अपत्य या सन्तान नहीं है। वह तो केवल चेतना-रहित मूर्ख के लिये ही सन्तान हो सकता है (अचेतानस्य अस्ति)। हमारे (रीति रिवाज) चलन ( पथः ) को दूषित मत करो"

एक दूसरा मन्त्र भी देखिये:—

न हि ग्रभायारणः सुशेवोऽन्यो-
दर्यो मनसा मन्तवा उ। ७-४-८

अति सुन्दर भी अन्य के द्वारा जन्म दिये गये को ग्रहण नहीं करना चाहिये। दूसरे के गर्भ से जन्मे हुए को मन से भी अपना नहीं मानना चाहिये।"

इस प्रकार देवता-वाद, धार्मिक क्रियाओं, (क़ानून) व्यवहार विषयों में भी ऋग्वेद-कालीन आर्य्य जाति का मत-भेद सिद्ध है।

इसी प्रकार ऋग्वेद के समय में कुछ लोग शिश्न की पूजा करने लग गये थे। समस्त ऋग्वेद में शिश्नदेव की पूजा के विषय में केवल दो ही संकेत हैं। ये दोनों संदर्भ यहां उद्धृत किये जाते हैं—

स शर्धदर्यो विषुणस्य जन्तो-
र्मा शिश्नदेवा अपि गुर्ऋतं नः। ७-२१-५
अनर्वा यच्छतदुरस्य वेदो
घ्नञ्छिश्नदेवाँ अभिवर्पसा भूत्। १०-९९-३

शिश्नदेवाः अथवा शिश्नदेवान् का अर्थ यास्क तथा सायणाचार्य ने 'अब्रह्मचर्याः' अथवा चर्यान् किया है। मेरे मत में यह अर्थ ठीक नहीं है। इन दोनों स्थलों में उदात्त-स्वर समास के पूर्व-पद पर है। जिस समास में उदात्त-स्वर पूर्व-पद पर हो वह बहुव्रीहि समास होता है। उदात्त स्वर को देखने से स्पष्ट है कि **शिश्नदेवाः या देवान्** बहुव्रीहि-समास ही हो सकता है। इस समस्त पद का अर्थ है:—

शिश्नो देवो यस्य स शिश्नदेवः। बहुवचने देवाः। अर्थात् वे पुरुष जो शिश्न को देवता मान कर उस की पूजा करते हैं।

कुछ विद्वानों का मत है कि यह संकेत अनार्य जाति दस्यु पणि आदि के लिये है। क्यों कि कहा गया है कि ये लोग 'हमारे यज्ञमण्डप में न आवें' ( ऋतं नो मा गुः )। मेरा इस मत से भेद है। मेरे विचार में यह संकेत अनार्यों के लिये नहीं बल्कि आर्यों के लिये है। अनार्यों को तो यज्ञमण्डप में आने का अधिकार ही नहीं था। अनार्य तो वहां आ ही न सकते थे। उन के विषय में यह निषेध निरर्थक था। यह निषेध तो केवल आर्यों के विषय में ही सार्थक हो सकता है। सब आर्यों को यज्ञ मण्डप में आने का अधिकार था; किन्तु जो आर्य शिश्न के उपासक बन गये थे उन को यज्ञ में आने का निषेध कर दिया गया है। वर्तमान समय के इतिहास से एक उदाहरण देकर इस बात को स्पष्ट करता हूं। जब स्वामी दयानन्द ने आर्य्य-समाज की स्थापना की तो कुछ व्यक्ति आर्य्य-समाजी बन गये। वे अनेकों देवताओं, श्राद्ध, पुराणों आदि का खण्डन करते थे। उस समय आर्य-समाज के सभासदों की संख्या थोड़ी थी। उन का प्रभाव भी जनता पर बहुत न था। उनकी शक्ति भी अल्प थी। कितने ही सनातन धर्म के मन्दिरों के बाहिर मोटे अक्षरों में लिख कर यह सूचना टाँग दी गई थी कि आर्य्य-समाजी इस मन्दिर में नहीं आ सकते। यदि इस सूचना को पढ़ कर कोई विद्वान् यह परिणाम निकाले कि आर्य-समाजी म्लेच्छ या यवन जाति के लोग थे। उन का मन्दिर-प्रवेश इस सूचना द्वारा निषिद्ध किया गया है तो मेरा कहना है कि म्लेच्छ अथवा यवन लोगों के लिये निषेध की आवश्यकता ही न थी; क्योंकि वे हिन्दू धर्म के बाहिर होने से मन्दिर में प्रवेश पाने के अधिकारी ही नहीं थे। जिन को प्रवेश का अधिकार हो और उन को विशेष कारणों द्वारा निषिद्ध करना हो तो उन ही के लिये ऐसी सूचना हो सकती है। इस लिये ऊपर की सूचना को देखकर मैं तो यही परिणाम निकाल सकता हूं कि आर्य्य-समाजी म्लेच्छ या यवन न थे वरन् आर्य थे जो भिन्न मत के अनुयायी होने से मन्दिर में आने से रोक दिये गये। इसी प्रकार शिश्नदेवाः ! अनार्य न थे बल्कि आर्य्य थे, जिन का शिश्न के उपासक होने के कारण यज्ञ-मण्डप में आना बन्द कर दिया गया।

इसी से दूसरा परिणाम यह निकलता है कि ऋग्वेद के समय में शिश्नदेवों की संख्या, प्रभाव तथा शक्ति अल्प थी, इसी लिये उन को निषेध करना सम्भव था। यदि कालान्तर में शिश्नदेवों की संख्या, प्रभाव और शक्ति बढ़ जाय तो निषेध निरर्थक हो जायगा। जैसे इस समय कोई सनातन-धर्म-मन्दिर आर्य्य-समाजियों को प्रवेश से निषिद्ध नहीं कर सकता। इस से स्पष्ट है कि ऋग्वेद के समय में शिश्नदेवों की संख्या थोड़ी थी। उन का प्रभाव और उन की शक्ति अल्प थी। शिश्नदेव-सम्प्रदाय एक छोटा सा सम्प्रदाय था।

संस्कृत साहित्य के नीचे लिखे क्रम में किसी को आपत्ति नहीं हो सकती।

ऋग्वेद
|
अन्य संहितायें
|
ब्राह्मण ग्रन्थ
|
आरण्यक
|
उपनिषद्
|
रामायण महाभारत

इस क्रम के अनुसार हम देखते हैं कि शिश्नदेवों की ऋग्वेदमें निन्दा की गई है; परन्तु क्रमशः उन की संख्या, शक्ति और प्रभाव बढ़ते गये। रामायण महाभारत के समय में शिश्नदेवों की शक्ति तथा प्रभाव अपनी उच्च कोटी पर पहुँच गये।

शिश्नदेव कौन लोग हैं? ये शैव हैं। ऋग्वेद में शिव के प्रति एक भी सूक्त या मन्त्र स्तुति रूप में नहीं पाया जाता। पर क्रमशः शिव की महत्ता (Status) में विकास होता गया और रामायण महाभारत काल में शिव, विष्णु ब्रह्मा के साथ त्रिमूर्ति का एक उच्चतम आराध्य देवता बन गया।

इस लम्बे कथन का संबन्ध मोहञ्जोदड़ो तथा हरप्पा से इस प्रकार है। इन दोनों नगरों में जो खुदाई हुई है उस से सिद्ध है कि इन दोनों नगरों में शिव की पूजा विस्तार रूप से होती थी। सैकडों की संख्या में शिवलिङ्ग पाये गये हैं। इस बात को अधिक लम्बा न करते हुए हम इसी परिणाम पर पहुँचते हैं कि मोहञ्जोदड़ो तथा हरप्पा का समय ऋग्वेद के समय से बहुत पीछे है।

लेख अधिक लम्बा हो गया है इस लिये इसको यहीं समाप्त किया जाता है। मोहञ्जोदड़ो तथा ऋग्वेद के पूर्वापर-संबन्ध में जो दूसरी युक्तियाँ हैं उन को फिर कभी पाठकों के सम्मुख उपस्थित कर दिया जायगा।

दूसरा प्रश्न कि मोहञ्जोदड़ो तथा हरप्पा की सभ्यता आर्य है अथवा अनार्य——इस प्रश्न पर एक स्वतन्त्र लेख में ही विचार किया जा सकता है। मेरा कहने का अभिप्राय यह है कि हमें स्वतन्त्र रूप से इन विषयों पर विचार करना चाहिये। चूंकि पाश्चात्य विद्वानों ने कह दिया है कि ऋग्वेद मोहञ्जोदड़ो से पीछे का है और मोहञ्जोदड़ो की सभ्यता आर्य्य नहीं अनार्य्य है इसलिये हमें आंख मूंद कर, बिना सोचे समझे, उन की बात मान लेनी चाहिये—ऐसा न होना चाहिये।

पाश्चात्य विद्वानों ने जो कार्य्य किया है वह एक महान् कार्य है। हम उनकी मुक्त-कण्ठ से प्रशंसा करते हैं। पर इस का यह मतलब नहीं कि हम अपने दिमाग की कुंजी उन के हाथ में सौंप दें और स्वतन्त्र रूप से कुछ भी विचार न करें। मुझे प्रसन्नता होगी यदि भारत के उत्कृष्ट विद्वान् इन विषयों पर अनुसन्धान करेंगे और नवयुवकों के विचारों को यथार्थ मार्ग पर चलाने के लिये पथप्रदर्शक बनेंगे।



# इष्टि-पशु-सोमानां स्वरूपम्,

## तेषां पारस्परिकसम्बन्धश्च



( ले०—मीमांसान्यायकेसरी पं० पट्टाभिरामशास्त्री, प्रिन्सिपल-संस्कृतमहाविद्यालयः, जयपुर )

पवित्रतमोऽयमस्माकं भारतदेशः! आ च भगवतः परमेष्ठिनः प्रथमायास्सृष्टेः आ चैतन्निमेषात् सर्वेणापि जनुष्मता नितरां श्लाघ्यत इत्यत्र निदानमिदमेव—यद्भारतवर्षीयाः प्राञ्चस्सुमतयस्सुविमृश्य भारतस्य समुन्नतिराध्यात्मिकशक्त्यधीनैवेति निश्चिन्वानास्तदर्थं विविधाननवद्यान् मार्गान् प्रवर्तयाम्बभूवुरिति। आपाततः इदमाधुनिकानामद्यत्वे प्रतिभायात्—यत् साम्प्रतं देशान्तरस्थास्स्वस्वदेशस्य समुन्नतये वैज्ञानिकदृष्ट्या आविष्कृतान् नैकविधान् पदार्थानेव योग्यान्मन्यन्ते। अतोऽस्माकमपि देशस्य समुन्नतिस्तदधीनैव भवितुमर्हतीति। परन्तु परमार्थतो विमृश्यमाने प्राचीनानामेव पक्षो गरीयान् साधीयांश्चेति स्वीकर्तव्यं भवति। यतो हि 'फलानुमेयाः प्रारम्भाः' इति रीतिमनुसृत्य यदि वैज्ञानिकाः पदार्था आधुनिकास्समालोच्यन्ते, तर्हि देशस्य समुन्नतये विपरीतफलाधायका एव ते साम्प्रतं विलोक्यन्ते। य एव देशः अनवरतं वैज्ञानिकतत्त्वपरिशीलनपरिपक्वमतिवैभवैर्विद्वद्भिः उच्चावचमाविष्कृतैरसंख्याकैः पदार्थैस्समुपबृंहितः पूर्वमुन्नतं पदमारूढस्सभ्यतायाश्च परां कोटिमटीकिष्टेति निश्चितः, स एवेदानीं शक्त्या विहीन इव शोचनीयां दशामापन्न इति करबदरसमानं समेषामपि। अमी हि वैज्ञानिकाः पदार्था नूनं सुखप्रदा इव भान्ति। नानाप्रकारेषु वायुयानेषु, जलस्योपर्यन्तश्चातिजवेन गन्तुं समर्थेष्वनल्पेषु जलयानेषु, निम्नोन्नतेषु प्रदेशेषु विद्यमानान् प्रासादान् सानूनि च समीकृत्य सवेगं गमनयोग्येषु भूयस्सु भूयानेषु, नैकविधेषु विद्युद्यानेषु, क्षणेनैव नगरं पत्तनं वा विध्वंसयितुं प्रभविष्णुषु विस्फोटकद्रव्येषु, एतन्निर्माणाय संख्यातीतेषु यन्त्रालयेषु च विद्यमानेषु कथं हि नाम देशस्य समुन्नतिर्न भवेत्? परमिमानि साधनानि रजस्तमोगुणभूयिष्ठानि सन्ति, देशस्य समाजस्य वा तथा समुन्नत्याधायकानि न भवन्ति, केवलमाधिभौतिकीमेव शक्तिमुपष्टम्भयन्तीति मन्वाना महर्षयः प्राञ्चः, परित्यज्येमानि प्रकारान्तरेणैव प्रदर्शयाञ्चक्रुर्मार्गान्, ये च नितान्तं सत्त्वगुणभूयिष्ठा आध्यात्मिकीं शक्तिं विवर्धयन्तो लोकानां कल्याणाय कल्पन्ते। आध्यात्मिकशक्तेस्समक्षमन्या काचन भौतिकी शक्तिः प्रबला भवेदिति विप्रतिपन्नमेवेदं वचः। विंशतितमेऽस्मिन् शतके वसिष्ठस्य भरद्वाजस्य वा ब्रह्मर्षेर्गाधिसुतस्य जनकस्य वा राजर्षेर्गाथाः—

> एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे।
> धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम्॥

इत्यादयो न कस्यापि कर्णविवरमनुप्रविशेयुः, परं चिरन्तन्यस्ता गाथा निर्मूला निर्युक्तिका निस्तत्त्वाश्चेत्यपि साधयितुं न शक्यते। तस्या एव मातुरुत्सङ्गमधिशयाना आस्महे, यस्याश्च भारतमातुरनितरसाधारण-

मुत्कर्षं गौरवञ्चास्मत्पूर्वजा अतिवेलं पुपुषुः। तान्येव चास्थीन्यस्मद्गात्राण्यनुप्रविष्टानि, ता एव च रुधिर-धारा अस्मच्छरीरेषु प्रवहन्ति, यानि च याश्चात्रिभृगु-कुत्सवसिष्ठगौतमादीनां शरीरेष्वासन्। सत्यप्येवं केनापि कालहतकेन पारतन्त्र्यनिगडनिबद्धा वयं देशान्तरीयशिक्षया च ग्रस्ताः प्राचीनेष्वितिहासेषु भृशमश्रद्दधानाः, पुरातनीञ्च सभ्यतां सर्वात्मना विस्मरन्तः, लोकप्रतारणैकधिषणया प्रवर्तितमितिहासं नवीनाञ्च सभ्यतां यदि विश्वस्याम, तर्हि नूनं वयं कृतघ्ना एव भवेम। 'बुभुक्षयातिमात्रं पीडितोऽपि केसरी किं तृणविशेषान् जिजक्षिषेत्' इति न्यायमनुसरन्तो वयं सर्वेऽपि भारतीयाः पारतन्त्र्यपिशाचेन ग्रस्ता अपि अशनवसनसामग्रीविहीना अपि देशान्तरीयसभ्यतां यदि दूरतः परिहरेम, तर्ह्यवश्यं पुरेव भारतवर्षस्योत्कर्षं पुष्येम। साम्प्रतिकीं भारतवर्षस्य स्थितिं पुरातनञ्चास्माकं पूर्वजानामितिहासं पर्यालोचयतो मे हृदयं सत्यं विदीर्यते। अधुना हि भारतीयः बलेन शक्त्या शिक्षया आयुषा ज्ञानेन सभ्यतया आचारेण च विहीन एव विलोक्यते। न तादृशं बलं कस्यापि, येन प्राप्तेऽवसरे स्वात्मानं रक्षितुं प्रभवेत्। आत्मानमपि रक्षितुमक्षमः कथमिव कुटुम्बं ग्रामं नगरं पत्तनं देशं वा परिरक्षेत्? नास्ति तादृशी शिक्षा, या च समाजं देशं वोन्नतं पदं प्रापयेत्। न चापि तादृश आचारः यश्च पुरातनीं सभ्यतां परिपालयेत्। पिता-पुत्रयोः, गुरु-शिष्ययोः, पति-पत्न्योः, स्वामि-भृत्ययोः परस्परं न सौजन्यमैकमत्यं वानुभूयते। पुत्रः पितरं द्वेष्टि, पिता च पुत्रम्; शिष्यो गुरवेऽभ्यसूयति, गुरुश्च शिष्याय; जाया पतिं नाभिनन्दति, पतिश्च जायाम्। सर्वस्या अप्यस्या अनर्थपरम्परायाः किं मूलम्? मम तु प्रतिभाति- प्राचीनाया अस्माकं सभ्यतायाः शिक्षायाश्चाभाव एवेति।

चिरन्तना अस्माकं महर्षयः किमिदं जगत्तत्त्वम्? कस्मादिदं प्रावर्तिष्ट? किञ्चात्र पारमार्थिकम्? इति जिज्ञासमानाः तत्त्वमिदं यथावदवबोद्धुं वेदाम्नायाद्यपरपर्यायां भगवतीं मातरं श्रुतिमेव शरणमशिश्रियन्। इयं किल भगवती श्रुतिः लेशतोऽपि पुरुषदोषासंस्पृष्टा सर्वज्ञकल्पा, विविधविधिकलापविलसिता, अर्थवादाद्युपबृंहिता चानितरसाधारणं भारतवर्षस्य गौरवं समेधयन्ती प्रमाणान्वेषणप्रवृत्तानां कनिष्ठिकामूलपातमनुभवतीति निर्विचिकित्समभ्युपगन्तव्यमस्माभिः। भारतीयस्य सकलकलाकलापस्यापि भगवतीमिमामेव मूलं मन्यन्ते विमर्शकाः प्राञ्चः भारतीयाः पाश्चात्त्याश्च। अत एवाज्ञातेदम्प्रथमताकात्कस्माच्चिदपि कालादारभ्याद्यावधि गुरुमुखादेव वेदाध्ययनसम्प्रदायोऽविच्छिन्नस्सम्प्रवर्तत इति डिण्डिमवादो मीमांसकानां सङ्गच्छते। अद्यत्वेऽपि वयमवलोकयामः— यद् गुरुमुखादेवाधीत्य वेदमधिगच्छन्तीति। इमामेव सरणिमस्मत्प्राचीना अप्यन्वसार्षुरिति नैव दुश्शकमनुमातुम्। वेदमनुसृज्य प्रवृत्ते पुराणप्रभृतिकेऽनल्पे प्रबन्धजाते न कुत्रापि पश्यामः— अमुं वेदममुकः पुरुषश्चकारेति वचनम्। पौरुषेयत्वमस्य प्रसाधयितुं प्रवृत्ता अपि कतिचन तीर्थकाराः अन्तत ईश्वरकर्तृकत्वमेव प्रतिपद्यन्ते। अयमेव ह्यंशः प्रमाणीभवति— सुबहोः कालात्पूर्वमपि न कश्चित्कर्तृत्वेन मनसापि स्मृत इत्यस्मिन् विषये। विमृश्य विलोड्यान्ततो निर्णीय वेदे सञ्जातसमधिकगौरवाः लोकानुग्रहैकधिषणाः अस्मत्प्राञ्चस्सुमतयः, मा भूद्यथाश्रुतग्राहिणां कुपथे प्रवृत्तिरिति मन्यमानाः—

"सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते।
वेदशास्त्रात्परं नास्ति न दैवं शङ्करात्परम्॥"

इति मुजमुद्धृत्य वेदप्रामाण्ये प्रतिज्ञामपि कुर्वते।

इत्थमस्य वेदस्यापौरुषेयत्वेऽपवादानर्हे च प्रामाण्ये स्वीकृते स यस्मिन्विषये यमेव मार्गमादिशति स एवार्याणां नियमेनानुसर्तव्य आसीत्। इहामुष्मिन् वा लोके यद्यथा कर्तव्यमिति वेदो ब्रवीति, तत्तथा ते सुसाधं दुस्साधं वा सर्वमन्वतिष्ठन्। मातापितृसहस्रेभ्योऽपि गरीयस्यामस्यां श्रुतौ नियतकर्तव्यतया विहितेषु कर्मसु सर्वादिभूतमिदम्—यत्स्वाध्यायाध्ययनं नाम। तेनैकैकेन द्विजन्मना वैदिकं पन्थानमातस्थुषा आध्यात्मिकीञ्च शक्तिं सञ्जिघृक्षता यथाविधि नियमेन वेदोऽध्येतव्य आसीत्। यो नाम नाध्यैष्ट, स "अनधीयाना व्रात्या भवन्ती"ति व्रात्योऽमन्यत। अत एव सर्वज्ञकल्पो मनुरपि ब्रवीति—

"योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥" इति

यो नाम नाधीते वेदम्, तस्य वाचोऽपि दुर्जाततामवबोधयितुं काचिदृगेव प्रवृत्ता—

यस्तित्याज सखिविदं सखयं
न तस्य वाच्यपि भागो अस्ति।
यदीं शृणोत्यलकं शृणोति
न हि प्रवेद सुकृतस्य पन्थाम्॥" इति

न केवलमक्षरग्रहणरूपमध्ययनं फलाय कल्पते, अपि त्वर्थोऽपि तस्य सम्यग् ज्ञातव्य इति मन्त्रान्तरमाह—

स्थाणुरयं भारहारः किलाभू—
दधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते
स नाकमेति ज्ञानविधूतपाप्मा॥ इति

यद्यपि स्वाध्यायाध्ययनविधावर्थज्ञानं फलमिति न श्रूयते, तथाप्यश्रुतफलकेषु कर्मसु विश्वजिन्न्यायेन स्वर्गं फले कल्पयितव्येऽर्थज्ञानस्य दृष्टरूपत्वादावश्यकत्वाच्च तदुद्देशेनैव स्वाध्यायाध्ययनं विधीयत इति शास्त्रकाराणां मर्यादा। अत एव भट्टपादाः—'तेन किमित्यपेक्षिते यच्छक्यत इत्युपबन्धात् अक्षरग्रहणमित्यापतति। तस्याप्यपुरुषार्थत्वात्तेन किमिति पदावधारणमित्युपतिष्ठते। तेनापि पदार्थज्ञानम्, तेन वाक्यार्थज्ञानम्, तेन चानुष्ठानम्, अनुष्ठानेन स्वर्गादिफलप्राप्तिरित्येतावति प्राप्ते निराकाङ्क्षीभवति। एवं सर्वविधीनां प्राक्पुरुषार्थलाभादपर्यवसानम्। न च सहसैव विधिदर्शनात्स्वर्गाद्येव फलं कल्प्यते। योग्यतया हि यस्य यत्रानन्तरभाविनि व्यापारो लक्ष्यते तदेव तस्य कार्यमित्यवधार्यते। तत्र यदि तावत्तदनुसारेणैव कियत्यप्यध्वनि फलमासाद्यते ततो नान्तरा कल्पनमर्हति' इत्याहुरर्थवादाधिकरणे। अत एव वेदतदर्थज्ञाने प्रवृत्तिरुदेति स्म सर्वेषामपि द्विजन्मनाम्। न केवलं विधिरस्मान् प्रवर्तयतीति, किन्तु कामप्यनवद्यां विद्यां विना निखिलमेव जगच्छून्यं भवेदिति मन्वानाः प्राचीना आर्याः भृशं श्रद्दधानाः किञ्चिदप्यन्यथाभावो मा प्रसाङ्क्षीदिति जागरूका यथावद्वेदमधीत्य तदर्थञ्च सम्यक्परिज्ञाय तदुक्तानि च कर्माणि यथाविध्यनुष्ठाय स्वस्वाभिलषितमैहिकमामुष्मिकं वा फलमनुभवन्त आध्यात्मिकीञ्च शक्तिं विवर्धयन्तस्सात्त्विकेन भावेन ससुखं कालमनैषुः।

## त्रय्या मुख्यमुद्देश्यम्

तत्र ऋग्यजुस्सामपदेन व्यवह्रियमाणायास्त्रय्याः पूर्वं काण्डमुत्तरञ्च काण्डमिति द्वेधा विभागस्सामान्यतो भवति। पूर्वस्य काण्डस्याशेषस्य कर्मस्वरूपबोधनाय प्रवृत्तिः, उत्तरस्य च काण्डस्योपासनास्वरूप-

बोधनाय ज्ञानस्वरूपबोधनाय वेति विवेकः। अत एव कर्मकाण्डं ज्ञानकाण्डमुपासनाकाण्ड-मिति च व्यवहर्तारो भवन्ति। उभयोरपि काण्डयोः परममुद्देश्यमेकमेव-यत्तुरीयपुरुषार्थप्राप्तिः। तत्र पूर्वकाण्डस्योत्तरकाण्डप्रतिपाद्यमोक्षसाधनज्ञानोपसर्जनीभूतचित्तशुद्ध्यौपयिककर्मप्रतिपादनेन पुरुषार्थानुबन्धित्वम्, उत्तरस्य च काण्डस्य साक्षात्तुरीयपुरुषार्थसाधनज्ञानप्रतिपादनेन तत्त्वमिति केचन ब्रुवते। अपरे च नानयोः प्रधानोपसर्जनभावः किन्तूभयोरपि साक्षादेव तत्फलप्रापकत्वमित्याशेरते। भवतु यथा तथा वा! अहन्तु वच्मि—तुरीयपुरुषार्थौपयिकं ज्ञानं सम्पादयितुं विविधा उपासनाः प्रतिपादयदुत्तरं काण्डमग्निहोत्र—दर्शपूर्णमास—चातुर्मास्यादि—श्रौतकर्मणामप्युपासनां बोधयदात्मनः पूर्वकाण्डोपजीवित्वमवगमयति। तथा हि—"तस्यैवं विदुषो यज्ञस्यात्मा यजमानः, श्रद्धा पत्नी, शरीरमिध्मम्, उरो वेदिः, लोमानि बर्हिः, वेदः शिखा, हृदयं यूपः, काम आज्यम्, मन्युः पशुः, तपोऽग्निः, दमश्शमयिता दक्षिणा, वाग्घोता, प्राण उद्गाता, चक्षुरध्वर्युः, मनो ब्रह्मा, श्रोत्रमग्नीत्, यावद्ध्रियते सा दीक्षा, यदश्नाति तद्धविः, यत्पिबति तदस्य सोमपानम्, यद्रमते तदुपसदः, यत्सञ्चरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यः, यन्मुखं तदाहवनीयः, या व्याहृतिराहुतिः, यदस्य विज्ञानं तज्जुहोति, यत्सायं प्रातरत्ति तत्समिधम्, यत्प्रातर्मध्यन्दिनं सायञ्च तानि सवनानि, ये अहोरात्रे ते दर्शपूर्णमासौ, येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि, य ऋतवस्ते पशुबन्धाः, ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणाः, सर्ववेदसं वा एतत्सत्रं, यन्मरणं तदवभृथः, एतद्वै जरामर्यमग्निहोत्रथ्ं सत्रम्, य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वादित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छति, एतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद् ब्रह्मणो महिमानमाप्नोति, तस्माद् ब्रह्मणो महिमानमित्युपनिषत्" इत्यादिर्वेदसन्दर्भः कर्मोपासनां प्रदर्शयन् कर्मकाण्डस्यापि ध्यानपूर्वकं तादृशफलप्रतिपादकत्वमवगमयतीव। अतो यदि प्रधानोपसर्जनभाव आवश्यकस्तर्हि उभयोरपि परस्परं तथाभावस्वीकारो न्याय्य इति। निरुक्तेन वेदसन्दर्भेणेदमभ्यूहितुं शक्यते—यन्नीरूपाण्यपि कर्माणि भारतसन्तानभूतानां द्विजन्मनां शरीरं रूपयन्ति। अथवा भारतीयानामस्माकं श्रौतान्येव कर्माणि रूपमिति। सर्वथा वेदत्रय्या नैकविधानां कर्मणां विधानमेव परममुद्देश्यम्। अत एव चास्याः प्रामाण्यं प्रामाणिका व्यवहरन्ति। यदेव हि प्रमाणान्तरानवगतमबाधितञ्चार्थमवबोधयति, तदेव प्रमाणमिति तीर्थकाराणां सिद्धान्तः। यदि ह्यस्याः लौकिकप्रमाणसिद्धवस्तूपपादकत्वम्, आख्यायिकामात्रपर्यवसायित्वं वा, वैज्ञानिकपदार्थप्रतिपादनपरत्वं वा स्वीक्रियेत,तर्ह्यानर्थक्यमप्रामाण्यञ्चापद्येत। भवत्वस्या अप्रामाण्यमानर्थक्यं वेति वदन् पुरुष आत्मनः पितरं मातरं च न विश्वस्यात्। मातापितृसहस्रेभ्योऽपि गरीयसी भगवती श्रुतिरिति पूर्वमवोचाम। सति चैवमाधुनिकाः केचन तत्तादृशेऽतिकर्कशे पथि विविधविद्यामर्मसर्वस्वसमभिलाषिणि पदनिक्षेपणेनात्मानं क्लेशयितुमनिच्छन्तोऽपारयन्तो वा पल्लवग्राहिपाण्डित्यानां केषाञ्चन लौकिकानां मनस्सन्तोषणमेव स्वीयविद्यापरिपोषणं मन्वानाः तदुचितं पन्थानमन्विष्यन्तो वेदेषु नैकविधान् वैज्ञानिकपदार्थवादानाविर्भावयन्तस्तेनैवात्मानं धन्यं मन्यन्ते, आत्मविद्याञ्च कृतार्थयन्ति, विचिन्तयन्ति च प्राचीनार्यमहर्षिमार्ग-

गामिनश्च विचारचातुरीविहीनान् विगतधिषणान् वेति नैतच्चित्रमिदमप्रतिहतप्रवृत्तिमतिकलिहतक-कलुषितेऽस्मिन् काले। एतावता नायमाशयो मम, यद्वेदेभ्यो वैज्ञानिकपदार्थाविष्करणं दुश्शकमेवेति! कामं तादृशाः पदार्था आविष्क्रियन्ताम्, कामञ्च तैर्भौतिकं सुखमनुभूयताम्; किन्तु तत्रैव तात्पर्यं वेदानामिति कथनं न प्रामाणिकेभ्यो रोचते। अलौकिकार्थप्रतिपादकत्वमङ्गीकृत्य यदि वैज्ञानिकपदार्थप्रतिपादकत्वं व्यवस्थाप्यते तर्हि न कापि विप्रतिपत्तिरिति मदीय आशयः। अस्तु प्रकृतमनुसरामः।

## वेदोदितकर्मणां चातुर्विध्यम्

एवं तावद्वेदस्यालौकिकार्थप्रतिपादकत्वं सिद्धम्। अनेन च वेदेन चतुर्विधानि कर्माणि विधीयन्ते—दर्विहोमाः, इष्टयः, पशुयागाः, सोमयागाश्चेति। चतुःप्रकाराण्यपीमानि कर्माणि आधानसिद्धाहवनीयाद्यग्निषु सपत्नीकेन द्विजन्मना कर्तव्यत्वेन विहितानि। तत्र प्रत्यहं सायंप्रातःकालयोः स्वाहाकारान्तमन्त्रकरणकं तण्डुलदधिपयोयवाग्वादिष्वन्यतमेन विहितेन द्रव्येण क्रियमाणमग्निहोत्रम्, अन्ये चैतत्सदृशा होमा दर्विहोमपदेन व्यपदिश्यन्ते। अमीषाञ्च कर्मणां होमपदेनैव व्यपदेशः, नेष्टियागशब्दाभ्याम्।

एवं प्रतिपूर्णमासं प्रतिदर्शञ्चौषधप्रभवैर्द्रव्यैः यवव्रीहिनीवारादिभिर्निर्मितैः चरुपुरोडाशप्रभृतिभिः, आज्यपयोदधिप्रभृतिभिर्वा क्रियमाणा यागविशेषा इष्टय इत्यभिधीयन्ते। इमा हि यागपदेनापि व्यवह्रियन्ते।

एवं तेषु तेषु विहितेषु कालेषु स्वस्वाभिलषितफलाभिसन्धानपूर्वकं पशोर्हृदयादिभिरङ्गैरनुष्ठीयमाना यागाः पशुयागपदेनोच्यन्ते। इमानि च कर्माणि यागपदेनाभिधीयन्ते।

एवं प्रतिवसन्तमन्येषु वा कालेषु सोमाख्यया क्षीरिण्या लतया क्रयाभिषवादिसंस्कारसंस्कृतया क्रियमाणं नित्यं काम्यञ्च कर्म सोमयागशब्देन व्यवह्रियते। चतुर्विधेष्वपि कर्मसु आधानसिद्धाग्निमतः, अध्ययनविधिसिद्धविद्यावतः सामर्थ्ययुक्तस्य च त्रैवर्णिकस्य सामान्यतोऽधिकारः। विधिविशेषात्तु त्रैवर्णिकातिरिक्तस्यापि क्वचिदधिकार इति मीमांसकसम्मतः पन्थाः।

## कर्मणां प्रकृतिविकृतिभावः

यथा हि सांख्यदर्शने—

'मूलप्रकृतिरविकृतिः, महदाद्याः प्रकृतिविकृतयस्सप्त।
षोडशकस्तु विकारो, न प्रकृतिर्न विकृतिः पुरुषः॥

इति चतस्रो विधाः पदार्थानाम्, तथैव कर्मणामपि पूर्वोक्तानां चतस्र एव विधाः—केचन यागाः प्रकृतय एव, केचन विकृतय एव, कश्चिच्चोभयरूपः, केचिच्चानुभयरूपा इति। यत्र च स्वापेक्षितानां निखिलानामप्यङ्गानामुपदेशः सा प्रकृतिः; यत्र हि वैशेषिकाणामेव कतिपयानामङ्गानामुपदेशः, अङ्गान्तराणि च प्रकृतेरतिदिश्यन्ते सा विकृतिरिति न्यायविदः प्रकृतिविकृतिस्वरूपं व्यवहरन्ति। तत्राग्निहोत्रं दर्शपूर्णमासौ अग्निष्टोमसंस्थाकज्योतिष्टोमश्च प्रकृतय एव। कुण्डपायिनामयनगतं मासाग्निहोत्रम्, वायव्यैन्द्राग्नादयः काम्येष्टयः, विश्वजिदाद्येकाहः—प्रभृतिसहस्रसंवत्सरपर्यन्तास्सोमयागाश्च विकृतय एव; अग्नीषोमीयः पशुः प्रकृतिविकृत्युभयरूपः; चातुर्मास्येषु वरुणप्रघासान्तर्गता गृहमेधीयेष्टिः, ज्योतिष्टोमाङ्गभूता उपसद्धोमाश्चानुभयरूपा इति विवेकः। यद्यप्यग्न्याधानाख्यं कर्मापि प्रथमकक्ष्यायां निवेशमर्हतीव प्रतिभाति। तत्र स्वापेक्षितानां समग्राणामप्यङ्गानां सत्त्वात्, तथापि

तस्याग्निसंस्कारमात्रजनकत्वेन होमरूपत्वं यागरूपत्वं वा नास्तीति न तत्प्रकृतिषु परिगण्यते। अनुभयरूपत्वं वा वक्तुं शक्यते।

## कर्मणामङ्गाङ्गिभावः

इष्टिशब्देन व्यवह्रियमाणानां कर्मणाम् पशुयागाङ्गत्वं सोमयागाङ्गत्वं अन्येष्ट्यङ्गत्वञ्च भवति। पशुयागानां सोमयागाङ्गत्वमेव नेष्टिपशुयागान्तराङ्गत्वम्। सोमयागा अपि सोमयागान्तराङ्गानि भवन्ति नेष्टिपश्वङ्गानि। अयञ्चात्र विशेषः— न कोऽपि सोमयागस्तादृशो विहितः, यस्मिंश्चाङ्गतया पशुयागानामिष्टीनाञ्चाभावस्स्यात्। न चापि तादृशः पशुयागो विहितः, यश्च सोमयागं परित्यज्य पशुयागान्तराङ्गत्वमिष्ट्यङ्गत्वं वा प्राप्नुयात्। प्रकृतिभूता यागाः स्वतन्त्राः फलसाधकाः, विकृतित्वेनाभिमतास्तु स्वतन्त्रा अपि भवन्ति, अङ्गभूता अपि। तत्र प्रकृतिभूतौ दर्शपूर्णमासौ, अग्निष्टोमसंस्थाकज्योतिष्टोमश्च न क्वाप्यङ्गभावं भजते। अग्नीषोमीयपशुयागस्तु पशुयागान्तरप्रकृतिभूतोऽपि सअङ्गभावमेव भजत इति। यत्र च कुण्डपायिनामयने संवत्सरसाध्ये सत्रे "मासमग्निहोत्रं जुहोति" "मासं दर्शपूर्णमासाभ्याम्" इति विहितानि कर्माणि, तत्र न तानि प्रकृतित्वेनाभिमतानि किन्तु नामातिदेशस्य तेषु अष्टमाध्याये व्यवस्थापितत्वात् तेषां विकृतित्वमेव। एवमिमानि कर्माणि प्रकृतिविकृतिभावाङ्गाङ्गिभावाख्यया शृङ्खलया परस्परं सम्बद्धानि भारतवासिनामाध्यात्मिकशक्त्यभ्युन्नतये वेदेषु विहितानि।

## कर्मणां तत्तद्वेदविहितत्वम्

तत्राग्निहोत्रं याजुर्वैदिकं यजुर्वेदविहिताङ्गकलापविशिष्टमेवानुष्ठीयते। न तत्र ऋग्वेदसामवेदयोरस्त्युपयोगः। दर्शपूर्णमासादीष्टयः पशुयागाश्च ऋग्यजुर्वेदाभ्याम्, तत्र-र्ग्वेदेन [1]याज्यापुरोनुवाक्यासामिधेनीप्रैषादयस्समर्प्यन्ते तदनुरोधेन ते क्रियन्ते। अन्यानि चाङ्गानि शाखाच्छेदनहविर्निर्वापावघातप्रोक्षणपेषणादीनि यजुर्वेदेन विधीयन्ते। एवं पशुयागेऽपि यूपच्छेदनादयः उपाकरणनियोजनादयश्च पदार्थाः यजुर्वेदेनैव विधीयन्ते, याज्यापुरोनुवाक्यादयश्च ऋग्वेदेन। सोमयागस्तु ऋक्सामयजुर्भिस्त्रिभिर्वेदैर्विधीयन्ते। तदिदमुक्तमापस्तम्बाचार्यैः परिभाषायाम्—"यज्ञं व्याख्यास्यामः, स त्रिभिर्वेदैर्विधीयते ऋग्वेदयजुर्वेदसामवेदैः। ऋग्यजुर्वेदाभ्यां दर्शपूर्णमासौ, यजुर्वेदेनाग्निहोत्रम्, सर्वैरग्निष्टोमः" इति।

एवं कर्मस्वरूपतदङ्गविधानप्रवृत्तेष्वपि वेदेषु ऋग्यजुर्वेदयोरग्निहोत्रमिष्टयः पशवश्च विविधा इति तिस्र एव विधा विशेषतो विहिताः। ज्योतिष्टोमश्चतुस्संस्थः, वाजपेयः, राजसूयः, अश्वमेधः, द्वादशाहः गवामयनञ्चेत्येतावन्त एव सोमयागा विहिताः। तथा हि सत्स्वप्यास्माकीनपूर्वपुरुषादृतेषु बहुषु प्रमाणेषु तत्तद्वेदानामनेकशाखोपबृंहितत्वबोधकेषु इदानीमुपलभ्यमाना द्वित्रा एव शाखाग्रन्था एकैकस्मिन् वेदे दृश्यन्ते। ऋग्वेदे—ऐतरेयब्राह्मणम्, शाङ्खायनब्राह्मणं (कौषीतकिब्राह्मणं) चेति द्वे एव। संहिते द्वे शाकलीया शाङ्खायनीया चेति। यजुर्वेदे—तैत्तिरीयशाखा, कठशाखा, मैत्रायणीयशाखा, कपिष्ठलशाखा चेति चतस्रश्शाखाः

---

१—'अनुब्रूहि' इत्यध्वर्युकर्तृकप्रैषसमनन्तरं होत्रा पठ्यमानो मन्त्रः पुरोनुवाक्या। 'यज' इत्यध्वर्युकर्तृकप्रैषसमनन्तरं तेनैव पठ्यमानो मन्त्रो याज्या।

कृष्णयजुर्वेदे। शुक्लयजुर्वेदे तु द्वे काण्वशाखा माध्यन्दिनशाखा चेति । तत्र कृष्णयजुर्वेदीयासु शाखासु चतसृष्वपि मन्त्रभागो ब्राह्मणभागश्च परस्परं संश्लिष्टावेव। अत एवास्य 'कृष्णयजुर्वेद' इति संज्ञेति केचनाशेरते। शुक्लयजुर्वेदे तु तौ भागौ पृथग्भूतौ—माध्यन्दिनसंहिता, माध्यन्दिनीयं शतपथब्राह्मणम्, काण्वसंहिता, काण्वशतपथब्राह्मणमिति व्यपदिश्यन्ते भागाः।

एवं नैकप्रकारेण विभक्तासु सर्वास्वपि याजुर्वैदिकशाखासु दर्शपूर्णमासादीष्टयः, अन्याधानम्, अग्निहोत्रम्, पुनराधानम्, आग्रयणम्, चातुर्मास्यानि, काम्या इष्टयः, काम्याः पशवः, सौत्रामणी, अग्निचयनम्, तद्भेदाः, सप्त सोमसंस्थाः, राजसूयः, अन्त्येष्टिः, पुरुषमेधः, अश्वमेधः, गवामयनञ्चेत्येतावन्त्येव कर्माणि, तदङ्गभूतान् याज्यापुरोनुवाक्यादींश्च पदार्थान् विदधत्यामनन्ति च ब्राह्मणभागाः। तत्र त्वयं विशेषः—तैत्तिरीयशाखामेकां विहायान्या याजुष्यश्शाखाः पूर्वोक्तेष्वेव कर्मसु पर्यवसन्नाः। तैत्तिरीयशाखा तु इतोऽप्यधिकमग्रे किञ्चिद्विचारमानं व्यापारयति। तत्र हि—सावित्रनाचिकेतवैश्वसृजारुणकेतुकप्रभृतयः क्षुद्रचयनविशेषाः सत्राः, नक्षत्रेष्टयः, एकाहाः, केचनाहीनाः, सत्राणि द्वादशाहप्रभृत्येकोनपञ्चाशद्रात्रपर्यन्तानि, सहस्रसंवत्सरसत्रं च विधीयन्ते। समासेन कथने यजुर्वेदस्सप्त हविर्यज्ञाः, सप्त सोमसंस्थाः, केचन सोमयागविशेषाश्चेत्यत्रैव पर्यवस्यति, नोपरितनीषूत्तरततिषु प्रवर्तते। प्रायेणामुमेवानुधावतः पन्थानमुभे अपि बह्वृचब्राह्मणे इदानीमुपलभ्यमाने। यद्यप्यनुपलभ्यमानासु प्रतिपाद्यविषयविषये नेदन्ता निर्णेतुं शक्यते, तथापि सामान्यतो दृष्टेनानुमानेनेदमभ्यूहितुं शक्यते कुशलैरनुमातृपुरुषधौरेयैः—यदेषैव रीतिरनुसृता भवेत्ताभिरपि तत्तद्वेदीयाभिरिति। न चायमस्ति मनसस्समाधेरवकाशः—यद् द्वादशाहात्ययस्य सत्रस्याहीनस्य वा विधानात् तस्यैव चोत्तरक्रतुततेः प्रकृतित्वात् तद्गतानां पदार्थानामानुलोम्येन प्रातिलोम्येन वा कयाचिद्विधयानुष्ठानात् तद्व्यतिरिक्तस्यानधिगतस्य नवीनतयाधिगन्तव्यस्य कस्यचिदभावात् तेनैव गतार्थाऽधिगतार्था चोत्तरक्रतुततिरिति। यतो हि प्रमाणान्तराविषयेषु पुरुषबुद्ध्यगोचरेषु वेदैकसमधिगम्येष्वपूर्वेषु कर्मस्वरूपेषु अपुरुषतन्त्रं विधिं विना तत्तत्स्वरूपावगतिः, तदनुष्ठाने निश्शङ्कप्रवृत्तिर्वा न कदापि केषाञ्चिदपि भवेत्। अन्यथा तत्तत्प्रकृतिभूतान् एकामिष्टिम्, एकं पशुयागम्, एकञ्च सामयागं विधाय तावतैव विरमन्त्यामपि भगवत्यां श्रुतौ तत्तद्विकृतिभूतान् विविधानपि क्रतुगणान् स्वमनीषाबलेनैव प्रकल्प्यानुष्ठातुं प्रभवन्त्येव मनीषिण इति किमर्थं तद्विधानायैतान् प्रयास आश्रितस्तयेति पर्यनुयोगस्य किमन्यदुत्तरं भवेत्? अत उत्तरेषामपि क्रतूनां यदि ज्ञापनमभिलषितं, तर्हि विधानमावश्यकमेवेत्यभ्युपगन्तव्यम्। अतश्च सत्यामपि विधेरावश्यकतायां यदा तत्र तूष्णींभावः, तदा नूनमवगम्यते उभयीषाममूषां शाखानामत्रैव विरमणमभिप्रेतमिति।

सामवेदे तु—इष्टिपशुचातुर्मास्यादीनि सर्वथोपेक्ष्य कर्माणि सोमयागानां प्रवर्ग्यस्य च विधानमुपलभ्यते। तत्र शाखासहस्रसम्मिततया प्रथमाने सामवेदे इदानीमुपलभ्यमानास्तिस्र एव शाखाः-कौथुमी, राणायनी, जैमिनीया चेति। तत्रापि कौथुमशाखैव विशेषतो जगति वितता विलोक्यते। इतरे तूभे अत्यल्पेषु पुरुषेषु परं विश्रान्ते। सामवेदे च सन्त्यष्टौ ब्राह्मणानि—ताण्ड्यमहाब्राह्मणम्, षड्विंशब्राह्मणम्, सामविधानब्राह्मणम्, आर्षेयब्राह्मणम्, दैवतब्राह्मणम्, छान्दोग्यम्, संहितोपनिषत्, वंशब्राह्मणञ्चेति। तत्र कौथुमशाखाया ब्राह्मणं ताण्ड्यम्। अस्मिंश्च ब्राह्मणे ७८।६११ एतावत्संख्याकास्सुत्याः (सोमयागाः) विहिताः।

एवंरूपेणानन्तानां कर्मणामिष्टिपशुसोमादिभेदेन भिन्नानां विधाने वेदानां नान्यत्तात्पर्यं प्रतिभाति — अपि तु भारतवर्षीयाणामार्याणां त्रैवर्णिकानामाध्यात्मिकशक्ति-समुन्नतेः। एतादृशधार्मिकश्रौतस्मार्तकर्मसमाचरणेनैव भारतस्य भारतत्वं प्रसिध्येदिति नात्युक्तिरियम्। अधुना हि वैदेशिकसभ्यतयातिकरालया समाक्रान्तोऽयमस्माकं पूज्यतमो भारतदेशो नूनमात्मीयं पवित्रतमं रूपं विहाय नितान्तं विकृतः परिदृश्यत इति नाम्नाभिवक्तव्यम्। अतस्मद्दृष्ट्या वैदिकधुरन्धरा आर्यास्सम्प्रार्थ्यन्ते—यथा ह्यस्माकं देशः वेदाद्विमुक्तः पुरेव शोभेत तथा सर्वैरप्यार्यमिश्रैर्भारतीयैर्यत्नो विधेय इति शम्॥

# जैनेतरदर्शनेषु स्याद्वादः

(लेखकः—न्यायतीर्थ—श्रीयुतपं० चैनसुखदासजैनमहोदयः जयपुरम्)

लोकेऽस्मिन्ननेके वादाः सन्ति। तेषु स्याद्वादोऽप्येकोऽस्ति। स्याद्वादेतरेषु सर्वेष्वपि वादेषु यत्र तत्र साग्रहत्वं विलोक्यते। परं स्याद्वादस्तु निराग्रहवादः। वादो विवादं जनयति किन्तु स्याद्वादोऽस्यापवादोऽस्ति। स किल विवादनिरासं करोति। अत एव स निराग्रहवादः, समन्वयवादः, अनेकान्तवादः, अपेक्षावादः, कथंचिद्वादः इत्यादिभिः शब्दैर्व्यवह्रियते। स्याद्वादे स्यादिति शब्दो अनेकान्तद्योती। यः नित्यानित्य-भेदाभेद-सदसदेकानेकेत्यादिसर्वप्रवादानां समन्वयं करोति, स एव स्याद्वादः। यद्यपि स्याद्वादिनाम्ना जैना एव प्रोच्यन्ते तथापि लोके नास्ति कोऽपि एतादृशो वादः, यः स्याद्वादस्योपयोगं न करोति। यद्यपि सर्वेऽपि जैनेतरप्रवादाः स्याद्वादं निराकुर्वन्ति परं तैरपि आवश्यकतानुसारं यत्र तत्र स्वकीयसिद्धान्तेषु स्याद्वादस्य उपयोगः कृत एव।

**वस्तुनो नित्यानित्यात्मकत्वम्**— जैनदर्शनानुसारं प्रत्येकं वस्तु द्रव्यापेक्षया नित्यं पर्यायापेक्षया चानित्यम्। वस्तुनि विनाशोत्पादौ प्रतीतिसिद्धौ तथैव तस्य ध्रुवतापि स्वानुभवसिद्धा। घटो हि पुद्गलद्रव्यापेक्षया नित्यः तस्य कदाचिदप्यविनाशात्। पृथुबुध्नोदराकारापेक्षया त्वनित्यः, तदाकारस्य विनाशशालित्वात्। न चास्मिन् जगति किमपि वस्तु विद्यते यत् सर्वथा नित्यमनित्यं वा।

इदमेव पदार्थानां नित्यानित्यात्मकत्वं जैनदर्शनवन् महर्षि-पतञ्जलिनाऽपि स्वकीय-महाभाष्यस्य पस्पशाह्निके स्वीकृतम्। तथा हि 'द्रव्यं नित्यमाकृतिरनित्या, सुवर्णं कयाचिदाकृत्या युक्तं पिण्डो भवति, पिण्डाकृतिमुपमृद्य रुचकाः क्रियन्ते, रुचकाकृतिमुपमृद्य कटकाः क्रियन्ते, कटकाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते, पुनरावृत्तः स्वर्णपिण्डः पुनरपरयाऽऽकृत्या युक्तः खदिराङ्गारसदृशे कुण्डले भवतः। आकृतिरन्या चान्या च भवति, द्रव्यं पुनस्तदेव, आकृत्युपमर्देन द्रव्यमेवावशिष्यते।"

तथैव महाविदुषा कुमारिलभट्टेनापि पदार्थानामुत्पादव्ययध्रौव्यात्मकत्वमुररीकृतम्। तथा हि-स स्वकीयमीमांसाश्लोकवार्तिके प्रथयति।

> वर्द्धमानकभङ्गे च रुचकः क्रियते यदा।
> तदा पूर्वार्थिनः शोकः प्रीतिश्चाप्युत्तरार्थिनः॥१॥
> हेमार्थिनस्तु माध्यस्थ्यं तस्माद्वस्तु त्रयात्मकम्।
> नोत्पादस्थितिभङ्गानामभावे स्यान्मतित्रयम्॥२॥
> न नाशेन विना शोको नोत्पादेन विना सुखम्।
> स्थित्या विना न माध्यस्थ्यं तेन सामान्यनित्यता॥३

मीमांसाश्लोकवार्तिके श्लोकसंख्या २१-२२-२३

कुमारिलभट्टस्य सिद्धान्तोऽयं जैनदर्शनानुकूल एव। तार्किकचूडामणिः स्वामी समन्तभद्राचार्योऽपि कुमारिलभट्टात्पञ्चशताब्दीपूर्वमिमां भारतवसुन्धरामलञ्चकार, स इत्थं पदार्थानामुत्पादव्ययध्रौव्यात्मकत्वं समर्थयति—

> घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वयम्।
> शोकप्रमोदमाध्यस्थ्यं जनो याति सहेतुकम्॥
> पयोव्रतो न दध्यत्ति न पयोत्ति दधिव्रतः।
> अगोरसव्रतो नोभे तस्मात्तत्त्वं त्रयात्मकम्॥

## सदसदात्मकत्वम्—

निखिलमपि वस्तु स्वचतुष्टयापेक्षं सदात्मकं परचतुष्टयापेक्षया चासदात्मकम्। अत एव आचार्यसमन्तभद्रः समादिशति—

**सदेव सर्वं को नेच्छेत्, स्वरूपादिचतुष्टयात्।**
**असदेव विपर्यासान्न, चेन्न व्यवतिष्ठते ॥**

वैशेषिकदर्शनेऽपि महर्षिणा कणादेन अन्योऽन्याभावनिरूपणावसरे उभयात्मकं वस्त्वङ्गीकृतं 'सच्चासत्, यच्चान्यदसदतस्तदसत्। वै० द० अ० ९ पा० १।

उपस्कारः—'यत्र सदेव घटादि असदिति व्यवह्रियते, तत्र तादात्म्याभावः प्रतीयते। भवति हि असन्नश्वो गवात्मना। असन् गौरश्वात्मना, असन् पटो घटात्मना" इत्यादि भाष्यम्—तदेवं रूपान्तरेण सदप्यन्येन रूपेणासद् भवतीत्युक्तम्।

तथैव न्यायदर्शनस्य वैदिकवृत्तौ पदार्थानां सदसदात्मकत्वं प्रतिपादितम्, तथा च तद्वृत्तिः—उत्पादव्ययदर्शनात्, न्याय-४-१-४९। व्याख्या—प्राङ् निष्पत्तेः सदसदिति चानुवर्तते फलसम्बन्धात् पूर्ववत् निष्पत्तेः प्राक् फलं कार्यं सदसदिति वेदितव्यम्। कुतः उत्पादव्ययदर्शनात्। तदुत्पत्तिविनाशयोरुपलभ्यमानत्वात्। चेदुत्पत्तेः प्राक् कार्यमसद् भवेत् न जातूत्पद्येत। असतः शशशृङ्गादेरुत्पत्त्यदर्शनात्। सच्चेद् न कदाचिद्विनश्येत्। पुरस्तात् सतः पश्चादपि सत्वनियमेन विनाशासंभवात्। उत्पद्यते विनश्यति च कार्यम्, तस्माद् भवति प्रतिपत्तिः नूनमेतदुत्पत्तेः प्राक् नासदस्ति नापि सत, किन्तु सदसदिति। ( वैदिकी वृत्तिः )

## भेदाभेदात्मकत्वम्—

द्रव्यात्पर्यायः गुणाद् गुणो, धर्माच्च धर्मी संज्ञासंख्यालक्षणादिभेदाद् भिन्नः अविष्वग्भावत्वाच्चाभिन्नः। तथा चाप्तमीमांसायाम्—स्वामिसमन्तभद्रेण—

**प्रमाणगोचरौ सन्तौ भेदाभेदौ न संवृती।**
**तावेकत्राविरुद्धौ ते गुणमुख्यविवक्षया।**

व्यासप्रणीतब्रह्मसूत्राणां भास्कराचार्यरचितभाष्ये भेदाभेदविषये "युक्तेः शब्दान्तराच्च" इति सूत्रस्य टीकायामित्थं विशदीकृतम् "अवस्था तद्वतोश्च नात्यन्तभेदो न हि शुक्लपटयोर्धर्मधर्मिणोरत्यन्तभेदः किन्तु एकमेव वस्तु, न हि निर्गुणं नाम द्रव्यमस्ति, न हि निर्द्रव्यो गुणोऽस्ति, तथोपलब्धेः, उपलब्धिश्च भेदाभेदव्यवस्थायां प्रमाणं प्रमाणव्यवहारिणाम्। तथा कार्यकारणयोर्भेदाभेदावनुभूयेते, अभेदधर्मश्च भेदो यथा महोदधेरभेदः स एव तरङ्गाद्यात्मना वर्तमानो भेद इत्युच्यते। न हि तरङ्गादयः पाषाणादिषु दृश्यन्ते। तस्यैव ताः शक्तयः. शक्तिशक्तिमतोश्चानन्यत्वमन्यत्वं चोपलभ्यते।"

## सामान्यविशेषात्मकत्वम्—

यद्यपि सांख्यादयः केचित् सामान्यरूपमेव पदार्थं स्वीकुर्वन्ति, बौद्धादयश्चापरे विशेषरूपमेव। परं तर्कानुभवसिद्ध मिदमस्ति यत् सामान्यविशेषोभयात्मकं वस्तु। तथा च तैः ( जैनैः ) सूत्रितम्-'सामान्यविशेषात्मा तदर्थो विषयः। श्रीव्यासेनाऽपि-'सामान्यविशेषात्मनोऽर्थस्य, योग० समाधिपा० १ सू० ७

'सामान्यविशेषसमुदायो द्रव्यम्' विभू० सू० ४४ कुमारिलभट्टेनाऽपि सामान्यविशेषात्मकं वस्तु स्वीकृतं यथा—

**सर्ववस्तुषु बुद्धिश्च व्यावृत्त्यनुगमात्मिका।**
**जायते द्व्यात्मकत्वं न, विना सा च न सिद्ध्यति ॥**
**अन्योन्यापेक्षिता नित्यं स्यात्सामान्यविशेषयोः।**
**विशेषाणाञ्च सामान्यं ते च तस्य भवन्ति हि ॥**

निर्विशेषं हि सामान्यं भवेच्छशविषाणवत् ।
सामान्यरहितत्वाच्च विशेषास्तद्वदेव हि ॥
तदनात्मकरूपेण हेतू वाच्याविमौ पुनः ।
तेन नात्यन्तभेदोऽपि, स्यात्सामान्यविशेषयोः ॥

इमानि निदर्शनानि दर्शयन्ति यज्जैनेतरदर्शनेष्वपि पदार्थानां नित्यानित्यात्मकत्वं, भेदाभेदात्मकत्वं, सामान्यविशेषात्मकत्वं, सदसदात्मकत्वं चाङ्गीकृतम् । स्याद्वादो हि महामहिमशाली । तस्य सर्वस्मिन्नपि वाङ्मये साम्राज्यं व्यापकत्वं च निर्बाधं विद्यत इति शम् ।

---

# जैनसिद्धान्ते त्यागादर्शता ।

लेखकः—श्रीयुत इन्द्रलालः शास्त्री जैनो जयपुरस्थः ।

भारते त्यागस्य महती प्रतिष्ठा । ये चाप्यस्मिन् काले सन्ति विशिष्टप्रतिष्ठाभाजनानि तत्रापि त्याग एव हेतुः, परन्तु यादृशस्त्यागो जैनसिद्धान्तेऽस्ति, न दृश्यते तादृशोऽन्यत्र कुत्राऽपि । जैनसिद्धान्तेऽपि कालदोषात्संप्रदायद्वयी विद्यते, दिगम्बर-श्वेताम्बरसम्प्रदायभेदात् । दिगम्बरसम्प्रदाये साधूनां दिगेवाम्बरम् । ते स्वतनावप्येवं निःस्पृहा यत्स्वशरीरमपि घोरशीतादिकालेऽपि तृणेन वस्त्रेण भस्मादिना वा केनापि नाच्छादयन्ति । नाग्न्येन सहजनिर्विकारत्वमपि सूच्यते तेषु । निर्विकारत्वमेव त्यागस्य चरमश्रेणिः । तथा हि—"नग्नत्वं सहजं लोके विकारो वस्त्रवेष्टनम्" । बहवो जना नाग्न्यमापत्तिकारकं वदन्ति, परं न शोभनमेतत् । यदि नाग्न्यमापत्तिकरमपूज्यं वा स्यात्तर्हि कथं श्रीशङ्करसौरभेय्यादयो नाग्न्येऽपि वन्दनीयाः । नाग्न्ये त्वापत्तिकरी विकारिता केवलम् । येषां मनसि वर्त्तते विकारत्वं ते तु साच्छादना अपि दूषिता एव ।

दिगम्बरजैनसाधवः सदैवैकवारं षट्चत्वारिंशदन्तरायान् वर्जयित्वा स्थित्वैव, नोपविश्य भोजनं कुर्वन्ति । असुरक्षिणीं महाकोमलां मयूरपिच्छिकां शौचपात्रं काष्ठकमण्डलुञ्च विहाय न कमपि परिग्रहं धरन्ति । सदैव ज्ञानाध्ययनध्यानतपोलीना निरस्तविषयाशाः परिग्रहारम्भविरहिताः स्वात्मैकतानलिष्ठाः शुद्धविशिष्टाद्वैतभावनातत्परा अष्टाविंशतिमूलगुणपरिपालनैकदक्षा आत्मन्यात्मानमात्मना ध्यायन्ति । गृहिभिरपि तल्लक्ष्यभूतैरेवैकदेशत्वेन भाव्यम् ।

गृहस्थैर्याऽऽवश्यकतानामपारा वृद्धिरिष्यते, परं न लभ्यते साऽत एव नितरां चेखिद्यते चेतः । यथावश्यकताप्रसारमल्पीकृत्य यः कोऽपि गृही धर्मार्थकामान्परस्पराविरोधित्वेन सेवेत तर्हि भवेत्सुखी । भोगोऽपि त्यागापेक्ष एव । वस्तुतस्तु त्याग एव सौख्यं न भोगेषु । यदि भारतीयमूलसभ्यतासंस्कृतिं परस्परापेक्षभोगत्यागसरणिमपेक्ष्य यः कोऽपि यतेत प्रवर्त्तयितुमुपदिशेच्च तदैव संपत्स्यते सौख्यपरम्परेति निश्चेतव्यम् ।




अनन्तश्रीसमलङ्कृतवैदिकमार्गप्रवर्तकश्रीजगद्गुरुशङ्कराचार्याणाम्
श्रीबदरिकाश्रमस्थश्रीमज्ज्योतिष्पीठाधीश्वराणाम्
श्रीब्रह्मानन्दसरस्वतीस्वामिवर्य्याणाम्–

## आशीर्वादः



पण्डितगिरिधरशर्म्मा, शास्त्रगिरिं सन्ततं धृत्वा ।
आबाल्यामिष्टधर्मा, न्यधारयद्धर्मविपुलासारम् ॥

सद्विप्रगुणैरमलैः, शोभितमूर्तिर्गिरां पूर्तिः ।
भारतगगनवितानं, परिस्फुरद्रत्नवद्भाति ॥

तुष्टा अमुष्य कृतिभिः कृतिभिर्वन्द्यस्य राजमान्यस्य ।
आशास्महे गुरूणां सन्तु शुभा आशिषः सत्याः ॥

जित्वा विवादिवर्गं सेवितवान् यत्सनातनं धर्मम् ।
तेनानिशं प्रसीदेद्विश्वात्मा धर्मगोप्ताऽस्य ॥

अनन्तश्रीसमलङ्कृतवैदिकमार्गप्रवर्तकजगद्गुरुश्रीशङ्कराचार्याणाम्
श्रीगोवर्धनपीठाधीश्वरश्रीभारतीकृष्णतीर्थस्वामिचरणानाम्

# शुभाशीरभिनन्दनम्

ओंकाराम्बुज भीमोंकारप्रियवर्यमीन्द्रसुलभपदाम् ।
ओंकारपदप्राप्त्या ओंकारार्थं भजामि जगदम्बाम् ॥ १ ॥

॥ अथाभिनन्दनप्रकरणम् ॥

धिग्बलं क्षत्रियबलं यदुपरि ब्राह्मं बलं वै बलम्
तत्प्राप्त्यर्थमुपेयुषोऽजनवनं हित्वा समस्तं सुखम् ।
यस्यात्युग्रतपःप्रभावगरिमप्राप्तावनीशर्षिता-
ब्रह्मर्षित्वमहामहिम्न उदितं माहात्म्यमत्यद्भुतम् ॥
अपारसंसारनिजाख्यघोर-सिन्धुं तरीतुं भवबन्धमुक्तिम् ।
लब्धुश्च येनर्षिवरेण घोरा महात्मनाकारि महातपस्या ॥
तत्तादृशर्षिप्रवराग्रयगाधिभूसुदेवरातौदलसंज्ञमौनपैः ।
प्रसादिते सौश्रवसाख्यगोत्रगे वंशोत्तमे त्रिप्रवरे प्रतिष्ठिते ॥
जन्माप्त्वा जयपत्तने जयपुरक्षोणीशविद्वत्सदः
कव्युत्तंसपरम्परायुजि चतुर्वेदान्ववाये ततः ।
लब्ध्वा जीवनलालनामलसितात्पोष्टुः स्वकीयात्पितु-
र्विद्या गोकुलचन्द्रनाममहितः पारम्परीणां लसन् ॥
श्रीमन्माधवसिंह-स्वीयाख्यस्य क्षमेशरत्नस्य ।
धर्मप्राणस्य क्षिति-पानामादर्शभूतचरितस्य ॥
संस्थानविद्वन्मणिरास योऽतुलस्तस्य स्ववंशस्थपरम्पराजुषः ।
श्रीकौशिकादेरनुरूपलक्षणः प्रचण्डविद्वानजनिष्ट वर्ष्मजः ॥
विख्यातविद्वच्छरदिन्दुकिशोरकस्तदङ्घ्रिपाण्डित्यधरं धरिष्यति ।
धर्मप्रचारस्य धुरञ्च वक्ष्यतीत्यनूदितार्थं गिरिधारिसंज्ञकः ॥
विद्वन्मण्डलमण्डनप्रवरसूवाराणसीपत्तने
न्यायाध्यापकविद्वदन्वयमणिश्रीबालशास्त्र्यास्यतः ।
श्रीगङ्गाधरशास्त्रिभिः शिवकुमाराद्यैः सतीर्थत्वतो
न्यायव्याकरणाद्यधीत्य सकलं विद्वन्मणे राजतः ॥
श्रीलक्ष्मीनाथसंज्ञाद् द्रविडकुलजनेर्व्याकृतिं योऽध्यगीष्ट
साहित्यन्यायशास्त्रप्रमुखमधिजगे मैथिलाज्जीवनाथात् ।
विद्यावाचस्पतेः श्रीमधुमथनकृतो नामधात्सुप्रसिद्धा-
न्मीमांसे धर्मशास्त्राद्यथ खलु निखिलं गूढमध्यैष्ट तत्त्वम् ॥
इत्थं जयपुरसंस्कृतविद्यालयतो नयालिपारीणः ।
वैयाकरणाचार्यो व्याकृतिशास्त्रीत्युपाधियुग्मेन ॥
हाटकपदक-(medal) समेत भूषित आसीत्पुनः परीक्षातः ।
पञ्जाम्बुदेशविद्या-विश्वस्थानादलब्ध शास्त्रिपदम् ॥
अधिगतविद्यः स्वां यो विद्यां चरितार्थतां नेतुम् ।
जयपुरलवपुरमायापुर्यादिगपाठशालासु ॥
आध्यक्ष्येण स्थित्वा विद्याधर्मप्रचारपद्धत्याः ।
सारल्यसारसीभ्यां विद्यप्सूनां व्रजानुपाकुरुत ॥
इत्थं विद्याधर्मप्रचारनिरतं निरीक्ष्यामुम् ।
अस्मत्पूर्वाचार्यैः श्रीगोवर्धनमठाधीशैः ॥
विद्यावयस्तपस्या-प्रमुखज्येष्ठैर्जगद्गुरुभिः ।
श्रीमधुसूदनतीर्थै-विद्याशेवधिपदं व्यतार्यस्मै ॥
अस्माभिश्चास्य दृष्ट्वा विविधनवततिज्ञानसंबोधनादि-
प्रावीण्यं धर्मसेवानिरतधिषणतावाग्मितामुख्यवित्तम् ॥
अत्यन्तप्रीतचित्तैर्निरतिशयमुदा घोषयद्भिः स्वकीय-
स्वान्तस्वान्तस्थभावं विशदपदपदे मङ्क्षु मायापुरस्थैः ॥
विद्यावाचस्पतिता-व्याख्यावाचस्पतित्व-निजरूपे ।
स्पृष्ट्वानायि निजात्मा प्रसन्नतायाः परां काष्ठाम् ॥
ततः प्रागेवाङ्ग्लक्षितिपतिसकाशादपि महा-
महोपाध्यायत्वं प्रकटितमभूदस्य विदुषः ।
तथैवान्याः संस्था विविधपदवीः पस्पृशुरहो
रुचिरा रोचिष्णुं (स्वादिष्टं) कथमिव पदार्थं विजहतु ॥

## पद्यौदानाशीःप्रकरणम्

शान्तिकृन्तनकृते च साम्प्रतं शास्त्रवर्त्मनिरतस्वचेतसा ।
उद्यमेन महता निरन्तरं येन यत्नविततिर्वितन्यते ॥

इत्थं जगन्नायकवेददेवता-धर्मोल्लसद्भारतदेशसेवया ।
योऽवाप्तकार्तार्थ्यतया विराजते क्षोणीधरोद्धारकशर्मसंज्ञकः ॥

अस्येश्वरामरधरामरदेशिकाङ्घ्रि-
श्रद्धाप्रमुख्यसुगुणव्रजसाहचर्यात् ।
रम्यामिमां नवमहार्णवमज्जनाख्यां
विद्यां विचिन्त्य विपरीतगुणैरलभ्याम् ॥

चक्रपदद्वयतोऽमुं तदहमानन्दतुन्दिलस्वान्ताः ।
श्रीमज्जगदधिनाथ-प्रसादरूपेण भूषयित्वाथ ॥

पुनरप्याचार्योचित-समस्तसल्लक्षणावलीभाजम् ।
आचार्यपदेनाद्यालंकुर्मोऽनिप्रमोदभरभरिताः ॥

आशास्महे यदद्या-रभ्यास्तिकजनसभासु सर्वासु ।
आचार्यश्रीगिरिधर-शर्मेत्याख्या जगत्प्रसिद्धा स्तात् ॥

तत्तादृशस्य विदुषः परमस्य विद्या-
धर्मप्रियत्वमुखभूरिसुलक्षणानि ।
यो नाभिनन्दतितरामभिनन्दनार्थं
लब्धावकाश इममद्य वयं न विद्मः ॥

विद्याधर्मप्रेमिभिरखिलैरनिशं यदीयविद्यायाः ।
यत्सौजन्यात्स्वेच्छानुरोधमप्राहि पुरुलाभः ॥

संस्कृतरत्नाकरमुखसंस्थावातैरकारि सततमिदम् ।
अस्माभिश्च तथैव व्यधायि तदिदं विधित्स्यतेऽप्यनिशम् ॥

यावच्छक्यमगृह्णुताव्रतधराः सन्तोऽपि संन्यासिनो
धर्मार्थं गुणगृह्नवश्च भगवत्सेवालिकृद्गृह्नवः ।
यस्मात्समस्तत एतदीयसविधाद्धर्मेण यावावधि
सेवालम्भि तया प्रमोदभरतास्तृप्तिं त्विमो नो ततः ॥

आशिषः प्रयुञ्ज्महेऽभ्यर्थयाम ईश्वरी-
रीश्वरांश्च सर्वदा मुक्तिशक्तिसाधनम् ।
दीर्घमायुरामयैर्हीनमेव सन्ततं
दातुमिष्टनिर्मलानन्दपूरपूरितम् ॥

सद्विप्रान्वयतं भवत्स्वतनुतां शास्त्रत्र जायोतितः
सार्थीकृत्य च साम्प्रतं बहुविधग्रन्थालिनिर्माणतः ।
शश्वन्मङ्गलकाङ्क्षिशिष्टजननाभीष्टोपकारावलीं
स्वाधीनाखिलशास्त्रवस्तुनिकरैः सम्पादयन्तं मुदा ॥

उपक्रमपराक्रमप्रभृतिदिव्यसद्ग्रन्थवा-
निधिप्रदसुधीप्रदप्रवणरम्यशैल्यञ्चितम् ।
उमाधवरमाधवप्रणयलब्धविद्योल्लस-
द्विलक्षणसुलक्षणप्रचयभूमभूषाधरम् ॥

क्षिरिवरमुखरूपप्राणकान्तासपत्नी-
करिवरवदनाम्बावाक्सवित्रीमुखाढ्यान् ।
हरिहरविधिमुख्यान्भूरिभक्त्यर्चयन्तं
गिरिधरनिजसंज्ञं वित्प्रकाण्डप्रकाण्डम् ॥

अप्यसुदारिरयाप-स्सुतरां सुतरा यदीयद्वयेषा ।
मृत्युविदारिकुठार-स्वाख्या ललिता सदाव्रताल्ललिता ॥

दीर्घायू, रोगहीनां, दृढतनु, धिषणा, गीर्भरी, स्वापतेया-
द्याकारां श्रावयित्वा जगदुपकृतिकृत्कृत्यकृत्यैः समस्ताम् ॥

सामग्रामद्विजाताजलनिधितनुजावाच आत्मासुकान्तै-
र्युक्ता देव्योऽवतैनं सततमभिरतं धर्मसेवाकदम्बे ॥

कर्मप्रज्ञाभक्तिमार्गालिमिष्टं शश्वच्छुद्धं द्रेकसाम्राज्यपुष्टम् ।
स्वीयध्यानध्वंसिताशेषकष्टं त्रैलोक्यस्थाशिष्टशिष्टालिजुष्टम् ॥

करालकलिकल्मषाकलितकष्टकल्यन्तकं
दुरन्तदुरितद्रुमौघदहनदक्षवीचालवम् ॥
शरीरमतिदाढ्यमत्सुतधनादिसर्वेष्टदं-
भयानकभवार्णवोद्भवभयावलीभञ्जनम् ॥

सनातनमुखोद्गतश्रुतिमुखोद्गतस्वात्मकं-
सनातनपदापकं सकलधर्मचूडामणिम् ॥
सनातनसमाह्वयं दृढसनातनश्रद्धया-
सनातनमुपाश्रयन्भवतु भाजनं श्रेयसाम् ॥

नितान्तप्रेष्ठश्रीगिरिधरनिजाख्यस्य मुखभू-
शिरोरत्नत्वस्पृक्प्रचुरतरविद्याव्रजनिधेः ॥
चतुर्वेदज्ञालीकुलभवशिरोभूषणमणे-
र्जगन्नाथो देयान्निरतिशयभव्यालिमनिशम् ॥

श्रीमद्गोस्वामि [illegible] श्रीमद्धर्मधुरन्धराणां

शुद्धाद्वैतसम्प्रदायाचार्याणां श्रीगोकुलनाथमहाराजानां

तच्चिरंजीविनां श्रीकृष्णजीवनमहोदयानां च

# शुभाशंसनम्

महामहोपाध्यायाः पं० श्रीगिरिधरशर्म-चतुर्वेदिनोऽस्यां भारतवसुन्धरायां महार्हरत्नम्। अस्ति खल्वेतेषां वक्तृत्वे हृदयस्पृङ् माधुर्यमार्जवं प्रसादश्च।

जन्मत एवैते वैदिकसनातनधर्मसेविनः साहित्यनिपुणा रसिकाश्च। एतैर्जीवने सनातन-धर्मसेवैव कर्त्तव्यत्वेन प्रधानीकृतेति कः खलु न मन्येत।

भारते सनातनधर्मसाहित्यक्षेत्रे पण्डितप्र-काण्डेषु चतुर्वेदिमहोदयानां प्रथमं स्थानमिति निर्विवादं स्वीक्रियन्ते निर्मत्सराः।

एतैराजीवनं भगवत्याः सुरभारतीदेव्या-श्चरणसरोरुहेषु समर्पितानि विकसितानि निज-सेवासौरभकाव्यकुसुमानि।

लाहौरसंस्कृतमहाविद्यालयेऽपि प्रधानपद-मलङ्कृत्य लब्धयशस्काः प्राभूवन्।

निजजन्मभूमौ जयपुरे तु महाराजसंस्कृत-कालेजे सुप्रतिष्ठितैरेभिर्योऽभ्युदयोऽकारि संस्कृत-साहित्यस्य सनातनधर्मस्य चैतदर्थं तु चिरं कृतज्ञाः साहित्यरसिका धर्मधुरीणाः सहृदयाश्च।

एतैरनेकेऽनेकवारं परास्ता जडवादिनो विधर्मिणश्चानेकासु महतीसभास्थलीष्वित्यप्य-नावृतम्।

विलक्षणा वक्तृत्वशक्तिरेतेषां यद्-विदग्धा अपि मुग्धा इव शृण्वन्त्यभिनन्दन्ति स्पृहयन्ति च श्रोतारः।

एतादृशविभूतिमद्भ्यो विद्वद्भ्योऽभिनन्दन-सम्मानं न केवलं समुचितमेवापि त्वस्ति निज-विज्ञतायाः परिचयः कर्तव्यपालनं च।

जगन्नियन्ता भगवान् श्रीकृष्णो महा-महोपाध्यायपं० गिरिधरशर्मचतुर्वेदिमहोदयेभ्य आ-रोग्येण सह दीर्घायुः प्रयच्छतु, येनाधिकाधिकं धर्मप्रचारः साहित्याभ्युदयश्च स्याद्भारत इति भूयो भूयोऽभ्यर्थयामहे।




श्रीमत्परमहंसपरिव्राजकाचार्यवेदमार्गप्रतिष्ठापकजगद्गुरु-
श्रीरामानुजाचार्यसंरक्षितविशिष्टाद्वैतसिद्धान्त-
संरक्षकानामुत्तराद्रिश्रीवैष्णवमठाधीश-
श्रीमाधवाचार्यमहाराजानाम्
तिरुपतिबालाजीबड़गादी-
बम्बई-स्थानाम्—

# शुभाशीराशंसनम्

बाधोधिनामरूपं षण्णां वर्गे विरोधिता स्वार्थे।
सत्प्रतिपक्षोऽसिद्धिर्नमनेऽनैकान्तिको विषये ॥ १ ॥
अनवस्था वैदुष्ये चक्रकमाभाति पौरुषेष्वर्थेषु।
परवादेऽसम्बन्धः प्रज्ञाऽऽचारेषु साङ्कर्यम् ॥ २ ॥
वेदविवेकेऽद्वैतं वादिषु यस्याऽभिचारिता जयति।
स श्रीगिरिधरशर्मा धर्मोन्नत्यै चिरञ्जीव्यात् ॥ ३ ॥

श्रीवेदमार्गप्रतिष्ठापकश्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीमज्जगद्गुरुवैष्णवाचार्य्यमहन्त-
स्वामिश्रीगोकुलदासमहाराजयाज्ञिकानाम्
( बड़ाआमलामन्दिर, शिकारपुर, सिन्ध )

# शब्दकुसुमाञ्जलिः

कर्मवीरविद्वच्चक्रचूडामणिम०म०पं० श्रीगिरिधरशर्मचतुर्वेदानां करकमलेषु सादरं समर्प्यते



आर्य ! सहृदयहृदयविहृद्वर ! यद्यपि भवतामार्यसंस्कृतिसुरतरोरनन्यशुश्रूषामरभारत्याश्चैकान्तोपासना स्पृहणीयान् भवद्गुणान् स्तोतुं मुखरीकरोति। तथापि काभिः वियत्पदावलीभिश्च भवतां नीराजनाविधि सम्पादयामः। कैश्च शब्दगुणैरुपनिबद्धां स्तोत्रमालां समुपहराम, इति नाध्यवसीयते।

कः खलु दिगन्तवासितगुणसौरभेण भवतामपरिचितः ? कः खलु सुरभारतीसहकाररसिकपिकवलकण्ठध्वनिं न स्मरति ? न खलु भवान् जयपुरपुराङ्गनागणितललिततिलक एव, अपि तु निखिलभारततले आर्यसंस्कृतिजुषां हृदयगगनकौस्तुभमणिविभावसुरिव विभासते।

इदानीं समस्तं संस्कृतसाहित्यजगन्मण्डलं भवतोपकृतमात्मानं परिशीलति। समस्ताश्च सनातनधर्मावलम्बिनो बान्धवाश्चिरमाभारं भवतां मन्यते।

भगवन् ! किमतोऽधिकम्—उपहृतशब्दकुसुमाञ्जलिमिमं मुररीकृत्य वयमपि समनुग्राह्या इति।

# प्रसूनाञ्जलिः

राजगुरु-पं० श्रीगोपीनाथशास्त्रिद्राविड़महोदयाः साहित्याचार्याः M. A. L.L. B. जयपुरम्

शास्त्राम्भोनिधिमज्जनैकरसिका अन्तर्मुखा एव ते
वक्तारस्तु बहिर्मुखा न गहना शास्त्रेषु तेषां गतिः।
विद्वन्, वक्तृधुरन्धरस्य भवतो मुख्यस्य संख्यावता-
मग्रे ते द्विविधा अपि श्रुतदृशो गच्छन्ति विच्छायताम्॥

वृत्तं पातयितुं श्रुतिस्मृतिमतं धर्मं करीषंकषा
वात्यः वात्यधिकं द्विजातिभयकृत् काँसि सनाम्नी चिरात्।
तत्रारोहति दावपावकतुलां पाश्चात्यशिक्षाविधिः
गुप्त्यै तस्य भवन्तमेव जनता सोत्कण्ठमुद्वीक्षते॥

प्राज्ञाः केचन कीलयन्ति सततं वाचं परेषां यतः
वाकीला इति विश्रुता भुवि ततो ये वावदूकाः परम्।
वाचोयुक्तिभिरात्मनो न कतिधाऽनल्पां तदीयां वचः-
कण्डूं वाग्मिवराऽपनीय भवता ते मूकतां लम्भिताः॥

यत्रागते न सभा न ताः सुमनसां ते वा न विद्यालयाः
वृद्ध्यै ये निजगौरवस्य न समीहन्ते भवत्सन्निधिम्।
प्रत्यक्संस्कृतिदासवाग्विषमृतां संजीवयत्यञ्जसा
गैर्वाणीं निजवाक्सुधाजलनिधावाप्लाव्य वाणीं भवान्॥

माहात्म्येन पदस्य गौरवमधिष्ठाताऽपि तस्याश्नुते
प्रायः शास्त्रविदुत्तमैष नियमः सार्वत्रिको दृश्यते।
एकः किन्तु जनस्य दृष्टिविषयस्तस्यापवादो भवान्
योऽनल्पां स्वयमादधाति गुरुतां स्थाने निजाधिष्ठिते॥

वेधा वक्त्रचतुष्टयेन विदधन् वेदेष्वनल्पं श्रमं
नैकस्मिन्नपि तेषु विन्दति जडः ख्यानि जरार्तोऽप्यमून्।
एकेनैव मुखेन किन्त्वधिगताऽऽविर्भूतमात्रेण भा
निःशेषश्रुतिपारगेण भवता विद्वँश्चतुर्वेदिता॥

वृद्धैः कोटिमुपेयुषा गुणघना मित्रोदये नन्दनाऽ-
सामान्यप्रतिभाजुषा गिरिधर! त्वय्येवेन्दुनाऽलङ्कृता।
चन्द्रोऽयं कथमेतु नाम तुलनां मित्रोदये सर्वदा
म्लायज्जाड्यनिधिः कलङ्कमलिनो दोषाकरः सक्षयः॥

एकत्र प्रतिषिद्धय वृद्धिगुणयोः सत्तां चिराद् व्याकृतेः
कर्त्रा पाणिनिना प्रतारितमतिः संख्यानभिज्ञान् गुणान्
भ्रान्तो वीक्ष्य भवत्यहो बहुमुखीं वृद्धिं च पश्यन् विपद्
हा! वैयाकरणः खसूचिपदमारूढो वराकोऽधुना॥

भ्रूभङ्गोऽप्यधिकारिणां न गणितो धृष्टा न पद्भ्यां पुन-
स्तेषामालयदेहली तदनुकम्पायै न लालायितम्।
मिथ्या चाटुगतैरनायि लघुतामात्मा न तेषां पुरः
निर्व्यूढं भवता सुधीन्द्र! विदुषां मानव्रतं दुश्चरम्॥

कर्तव्यैकपरायणेन भवता सोढाऽप्यनल्पाऽऽर्थिकी
हानिः काममुपेक्षिता परकराधीना पदस्योन्नतिः।
किं च स्वस्तुतिनिन्दयोः समधिकोदासीनता दर्शिता
छात्राणां हितजागरूकमनसा सौख्याय दत्तोऽञ्जलिः॥

गिरिरुपलसमूहः पामरे तद्धरत्वं विदुषि भवति किं तत् सम्भवत्येकदापि।
इतरजनदुरापां वाग्मिवर्यो भवान् यद्, धरति गिरमुदारां गीर्धरस्तन्मतो मे॥

विद्याविलासवसतौ सततोल्लसदिन्दिरे। चतुर्वेदिकुलाम्भोधिचन्द्रे गुणमन्दिरे।
निगमागमतत्त्वज्ञे बुधे गिरिधराऽभिधे। तद्गुणाकृष्टमनसा गिरां गुम्फोऽयमर्पितः॥

# शुभाशंसनम्



( म० म० पं०श्रीगोपीनाथकविराजमहोदयानाम् )

अद्यत्वे संस्कृतभाषां परिशीलयत्सु साहित्यरसिकेषु सनातनहिन्दूधर्मोद्धरणे विहितोद्यमेषु सज्जनेषु च के नाम विद्वत्कुलवरेण्यानां सुगृहीतनामधेयानां महामहोपाध्यायपदवीमलङ्कुर्वतां श्रीमतां गिरिधरशर्मचतुर्वेदमहोदयानां पुण्यचरित्रेण परिचिता न स्युः। एते महानुभावाः आबाल्यादेव सुरभारतीं मातृभाषाञ्च सेवमाना स्वाभिप्रायप्रकाशनाय निबन्धादिषु त एव तुल्यरूपेणावलम्बमानाः पण्डितकुलेषु प्राकृतजनेषु च विपुलां कीर्तिमर्जितवन्तः। जयपुरनगरात् प्रकाश्यमानस्य संस्कृतरत्नाकराख्यदेवभाषामयपत्रस्य सम्पादनाद्यखिलकार्यभारो यौवनारम्भत एतेषामेवोपरि न्यस्त आसीत्। न केवलं तत्र प्रकाशनार्थमागतानां लेखानां सम्पादनकर्मणा, अपि तु विचित्रविषयेषु स्वनिबद्धगद्यपद्यमयहृदयग्राहिलेखप्रकाशनेन चैतेषां सर्वतोमुखी धीशक्तिस्तदानीमेव प्रसृतिमलभत। तस्मिन् पत्रे पुराणेतिहासचातुर्वर्ण्यविधवाधर्ममीमांसाप्रमेयपारिजातपितृविवेकादिविषयका लेखा एतैर्निबद्धा नितरां महत्त्वापादकाः सन्ति।

संस्कृतसाहित्यसम्मेलनस्य स्थापनगौरवं प्राधान्येन श्रीमतां चतुर्वेदिमहोदयानामेव। एत एव चिरमस्य मन्त्रिण आसन्। अस्य निबन्धावलिषु दर्शनानामाविर्भावकालं तेषामेकवाक्यताप्रकारं सपरिणामधर्मभेदस्वरूपं चाधिकृत्य एतेषां केचन सुलिखिता निबन्धाः प्रकाशिताः सन्ति। अमृतसरस्थसम्मेलने सभापतिपदाधिरूढानामेतेषां भाषणमपि गाम्भीर्येण विषयगौरवेण प्रतिपादनमहिम्ना च जिज्ञासुजनानां बुधानां च चेतश्चमत्कुरुते।

सुरभारतीशिक्षणपद्धतिं पुरस्कृत्य समीचीनं विचारं प्रकटयद्भिरेभिराधुनिकशिक्षाभ्यासप्रणालीं सदोषां निर्णीय तद्दोषप्रशमनोपायनिर्देशाय "संस्कृतशिक्षाभ्यास"संज्ञकः कश्चित् पाठ्यक्रमः कालप्राप्तो निर्मितः।

एतैर्निबन्धरचनापथप्रदर्शनात्मक "प्रबन्धपारिजाताख्यो" ग्रन्थो निर्मितः, सिद्धान्तकौमुदीटीका-बालमनोरमायाः संपादनं कृतम्, श्रीमद्भगवद्गीतोपरि तिलकानुसारिणी काचिट्टीका विरचिता, "मङ्गलकाव्यसंग्रहाख्यः" कश्चित् संग्रहग्रन्थोऽपि प्रकाशितः, तथा सनातनधर्मसिद्धान्तप्रतिपादनाय हिन्दीभाषामाश्रित्य "धर्मपारिजात"नाम्ना लोकहितकरो विपुलः कश्चिद् ग्रन्थो निर्मीयमाण आस्ते, स च नाद्यापि प्राकाश्यं नीतः।

तत्र तत्र प्रकाशितेषु एतन्निबन्धेषु "वेदेषु विज्ञानं" "शिक्षायां दोषास्तदपनयोपायाश्च" श्रीस्वामिनां वैदुष्यमभिनन्दनं" चेति लेखत्रयं [संस्कृतरत्नाकरस्य वेदशिक्षायुर्वेदाङ्केषु]यथाक्रमं प्रकाशितं 'शास्त्रीयः प्रश्नः' इति शीर्षकः कश्चिल्लेखः (नवप्रचलिते तस्मिन्नेव पत्रे प्रकाशितः) 'ऋतं च सत्यं च' इति संज्ञको निबन्धः काशीस्थसंस्कृतमहाविद्यालयीय 'सारस्वतीसुषमा'ख्यपत्रे प्रकाशितः। काशीहिन्दूविश्वविद्यालयस्य प्राच्यपरिषत् पण्डितसभायाः प्रधानरूपैरेतैः प्रदत्तं दीक्षान्त-

भाषणं तथाऽन्यैर्येनादृता बहवं मेधाः सायान्य-भाजः सन्ति ।

हिन्दीभाषायामेतैः पण्डितप्रकाण्डैः कश्चित् कश्चित् प्रकाशितैर्बहुभिर्लेखैर्ग्रन्थैश्च भूषिता । तत्र स्मृतिविरोध-परिहारः, ब्रह्मचर्यं, विधवाधर्मः, गोभक्तिः, हिन्दीरामायणकृतां गोस्वामिनां दार्शनिकविचारा इत्येवं प्रकारा बहवो लेखा विदुषां मण्डलेषु प्रसिद्धिमापुः ।

तथा संस्कृतहिन्दीभाषयोः नवीनग्रन्थनिर्माणेन प्राचीनग्रन्थेषु अभिनवटीकाटिप्पणीयोजनेन लेख-पाटवेन भाषणव्याख्यानादिसौष्ठवेन च सुमहत् कार्यं सम्पादितमेतैः । हरिद्वारे ऋषिकुलब्रह्मचर्याश्रम-स्याध्यक्षपदं नववर्षपर्यन्तं, लवपुरे सनातनधर्मविद्यालये तत्पदं सार्द्धत्रिवर्षपर्यन्तं, तदनन्तरं जयपुरे राजकीय-संस्कृतमहाविद्यालये तदेव पदं एकोनविंशतिवर्षपर्यन्त-मलङ्कुर्वद्भिरेभिः संस्कृताध्यापनपद्धत्यालोचने विपुलं ज्ञानमर्जितम् । तत्र तत्र चैतेषां बहवोऽन्तेवासिनः कृत-विद्याः स्वस्वपरीक्षामुत्तीर्य विभिन्नविद्यालयेषु सम्मान-पूर्णं स्थानमापुः गुरोर्महिमानञ्च वर्धयामासुः । वस्तुतः सर्वत्रैवैतेषां प्रभावविस्तृतिः संस्कृतवाङ्मयसमृद्धये तत्साहित्यसाहित्यिकश्रीवृद्धये सनातनधर्मपुष्ट्यर्थं च समजायतेति भारतस्य प्राचीनगौरवख्यापने महनीय-कीर्तीनामेतेषामुज्ज्वला स्मृतिर्विद्वद्गोष्ठीषु निरन्तरमुद्-घोष्यते । तदानीमृषिकुले लवपुरे जयपुरे च ये छात्रा विद्यामभ्यस्यन्त आसन् तेषु बहव एवाद्य भारतस्य रत्नभूताः स्थाने स्थाने जयपुरमहाराजविद्यालयेन दीर्घसम्बन्धवशात् तत्रैवैतेषां कार्यगौरवस्याधिक्यं दृश्यत इति नूचितमेव । छात्रसङ्ख्यावृद्धिः नववेदा-ध्यापनप्रबन्धः, हिन्दीभाषाया आङ्ग्लभाषायाश्च शिक्षणे सौकर्यसम्पादनम्, आयुर्वेदे प्रायोगिकरसशाला व्यव-स्थापनं तदर्थमध्यापकनियोगश्चेत्थं प्रकारा एतैः कृता बहवः संस्कारा जयपुरवासिभिः सगौरवं स्मर्यन्ते ।

हिन्दीभाषायां देवभाषायां च एतेषां व्याख्यान-पाटवेन प्रतिपाद्यविषयविश्लेषणप्रणालिकया च सम-मेवावर्जितं विदुषामविदुषां च चेत इत्येतेषामादर्शभूतं वाग्मित्वं सर्वत्र गीयते ।

स्वदेशे विदेशे च योग्यतानुसारिणीं महतीं ख्याति-मारूढा लोकललामभूताः पण्डितधौरेया धर्मसमाज-साहित्यानां संस्कृत्युद्धरणादिकठोरकर्मणि दृढव्रता निश्चलस्तम्भभूता अद्येते अस्पृष्टाहङ्काराः सौशील्य-विनयसौजन्यादिविविधगुणरत्नानामाकरभूता मातृभूमौ आदर्शभूता विराजन्त इति नितरां मोदते नश्चित्तम् ।

सुचिरं परिचिता परमश्रद्धाभाजो मित्रवराः श्रीमन्तो चतुर्वेदिमहोदयाः दीर्घमायुर्नीरोगं वपुस्तथा लौकिकीमलौकिकीं च श्रीसम्पत्तिमविगत्य श्रीभगव-च्चरणेषु विमलां भक्तिं स्वात्मनः प्रकाशयन्तस्तदा-शीर्वादेनैव धर्मसमाजयोरनिमपनीयाविच्छिन्नां कल्याणपरम्परां साधयन्त्विति भूयो भूयः श्रीभगवच्चर-णेषु प्रार्थयामहे ।



वाराणसेय-हिन्दूविश्वविद्यालये वेदविज्ञान-
विभागाध्यक्षाणाम्
म०म०पं०श्र०चिन्नस्वामिशास्त्रिमहोदयानाम्—

# शुभाशंसनम्

श्रीमन्तो विद्वत्कुलललामभूता विविधविद्याविलास-नीलाम्बर(?)क्रान्तरङ्गाः भारतभूव्यापिकीर्तिमण्डलमण्डिता महामहोपाध्यायादिविविधविरुदावलीविराजमानाः पं० श्रीगिरिधरशर्मचतुर्वेदमहोदयाः कस्य वा साक्षरस्य विशेषतो विबुधवाणीं परिचिन्वतो विद्वद्वरस्य विशाले हृदये सुखं स्वासनं नालङ्कुर्वन्ति ? श्रीमन्तश्चतुर्वेदिमहोदयाः न केवलं गीर्वाणगीष्पतीनां प्रथमगणनामनुभवन्ति साम्प्रतम्, नैकविधं क्लेशजातमनुभवन्त्यास्तपस्विन्या निलिम्पवाचो निरुपमा जीवातव इति नेयमतिशयोक्तिः। इमे नातिप्रवृद्ध एव वयसि बहुषु विद्यास्थानेषु अप्रतिहतमतिप्रसराः तान्यात्मसात्कृत्य तत्रत्यानि रहस्यानि सनातनधर्मपरिपोषकाणि भारतीयप्राचीनादर्शनिदर्शनानि, सुरभारतीगौरवसमुज्जृम्भकाणि च तानि तानि स्वीयया, अधरितसुधास्वादया, मधुरमधुरया, अतिगम्भीरया च वाग्धारया श्रोतृगणमनांसि स्वायत्तीकृत्य, अन्यथा सन्तमपि तममरभारतीप्रवणमनस्कतां, सनातनधर्मैकतानस्वान्ततां, भारतीयसंस्कृतिभास्वरताञ्चापादयन्तीति विश्वविदितं खलु महत्त्वमिदम्। इमे च पण्डितप्रकाण्डाः प्रायेण सर्वास्वपि संस्कृतपरीक्षासमितिषु, विद्वत्सभासु, व्याख्यानगोष्ठीषु, धार्मिकसदस्सु, व्यवहारसंसदि च सदस्यतां विभूषयन्त आत्मीयया विचारसरण्या, उपपादनभङ्ग्या, विवेचनचातुर्या च सर्वानेव सममोहयन्सभासद इति विदितचरमेव। एतेषां विपश्चिदपश्चिमानां अच्छाच्छाऽविच्छिन्ना कीर्तिधुनीवाऽन्तेवसन्तोऽप्यपरिमेयास्तासु तासु दिक्षु विदिक्षु च विसृमरा अध्यापनधार्मिकतत्त्वोपदेशादिना जनानामनितरसाधारणमुपकारमादधति। एतेषां जीवनं प्रायः पवित्रतमायास्तपस्विन्यास्सुरभारत्यास्समुद्धरणे सनातनधर्मपरिपोषणपरिपालनादावेव व्ययितं व्ययीक्रियते च। एतादृशाः पुण्यश्लोकाः भारतभूभूषायमाणाः पण्डितप्रवरा निखिलगुणनिधयस्तपस्त्यागपरिपूतात्मानस्सन्तः कियन्तस्सन्ति ?

अतो निखिलजगज्जन्मस्थेमबद्धदीक्षं भगवन्तं विश्वनियन्तारं श्रीविश्वनाथमभ्यर्थये—इमे चतुर्वेदिमहोदयाः इतोऽपि बहूनि वर्षाणि भारतभुवमलङ्कुर्वन्तः, विद्यावतां मानमुन्नयन्तः सुरगिरस्सर्वप्रकारायै सेवायै यथावद्बद्धादराः धर्मोन्नत्यै विहितमतयोऽस्मानानन्दयन्तस्सुखं समेधन्तामिति—



काशीस्थहिन्दूविश्वविद्यालयीयप्राच्यविद्याधर्मविज्ञानाध्यक्षाणाम्
व्याकरणाचार्य—पण्डितश्रीकालीप्रसादशर्म—मिश्र महोदयानाम् —

# हार्दं विनिवेदनम्

स प्रमोदप्रचुरो वासरो न मनागपि विस्मरणमार्गा-मधिरोहति यत्र परोक्षमपि किन्तु प्रथमं परिचयं श्रीमतः पं० गिरिधरशर्मचतुर्वेदमहोदयस्याहमवाप्नवम् १९१३ खिष्टाब्दात् १९१८ खिष्टाब्दं यावदध्यापकतया प्रयागमधिवसन्नहं भृशमन्वभवं यत्तदानीमार्यसमाजैः परितो निर्दयमनुष्ठीयमानस्य सनातनधर्मप्रहारस्य प्रतिरोधे प्रवीणं कमपि धर्मशास्त्रकवचं कोविदवरं सनातन-धर्मावलम्बिनी जनता महौत्सुक्येन प्रतीक्षमाणासीत्। कथं कदा च परमेश्वरः प्रतीक्षामिमां धार्मिकजनतायाः पूरयिष्यतीत्यहमप्यनवरतं विचिन्तयन्नेवासमित्येकस्मि-न्नहन्येको महानार्यसामाजिक एव वासन्तिकं गुरुकुल-महोत्सवमालोक्य कांगडीतः प्रतिनिवृत्तः पुराणानां प्रामाण्यं व्यवस्थापयता श्रीचतुर्वेदेन समासादितमार्य-समाजकर्मकं विजयं मामश्रावयत्। प्रावर्णयत्पुनर्निखि-लआर्यसमाजजगति श्रीचतुर्वेदोपपादनसामर्थ्यशतांश-राहित्यम्, प्राकाशयच्च महाभयमेतस्मात् सनातनधर्मम-हारथिनस्तत्प्रतिकूलपक्षप्रचारस्य।

तत एवैतस्य सनातनधर्मरक्षणप्रवणस्य पण्डितस-म्राजो दिदृक्षा तदीयवचश्श्रुतिसन्निचिकृक्षा च समाश्रयतां मां दार्ढ्येन। अथ गतवत्येव कियति समये अधिप्र-याग त्रिवेणीपरिसरे सनातनधर्ममहासभाधिवेशने महामनोभिर्भारतभूषणैः काशीस्थहिन्दूविश्वविद्यालय-विश्वकर्मभिः पं० श्रीमदनमोहनमालवीयमहानुभावैर्म-हता समादरेण समागमितो महाभाग एषः समुपाश्रयत् ; भारतीयवेदज्ञुषो विशोधितजनचक्षुषो निजव-दुषो दर्शनदानेन सम्भाषणेन चानेकशास्त्रीयरहस्यम-येन स्वतन्त्रज्ञानरविकरेण : विस्पष्टमहमनुसन्दधे तात्कालिकं श्रीमालवीयमहोदयानां वचो यद् व्याख्यान-विशारदस्मत्यानां शलाकासु वर्तेषु प्रभवति भाषणप्रकारः पं० गिरिधरशर्मचतुर्वेदस्येति।

वस्तुतो नीरद इव धीरध्वनिरेष महाशयो धारासा-रमभिवर्षन्नुपदेशपयःप्रवाहं शास्त्रमहितलतिकामुल्लास-यति, पाखण्डिचङ्क्रमणजं श्रौतं रजः समुत्सारयति, पुराणानां परितापं निवारयति, गहनग्रन्थानां मर्मकलि-कां विकासयति, महीसुरगवीमुल्लासयति, प्रतिमानामा-क्षेपपङ्कं प्रक्षालयति, मन्दिराणां मालिन्यमपनयति, अवलानामायतिरक्षणक्षमं बलं वर्धयति, श्रद्धासामग्रीं समुपबृंहयति, युक्तिपद्धतिं धर्मस्तेनागम्यां विरचयति, विद्वद्राजहंसान् प्रोद्गमयति, धार्मिकजनताया मनस्स-रांसि पूरयति, वर्णाश्रमधर्ममहाद्रुमं फलयति, किं ब-हुना, बहुपरायामपि नास्तिकमनोभुवि धर्मभावनाया अङ्कुरं जनयति।

अद्यत्वे देशस्य प्रख्यातमहापुरुषाणां द्वयी श्रेणि-र्विद्यते। एका देशोन्नतिनीतिं पुरस्ताद्धर्मञ्च पश्चाच्चिच-कीर्षति। अपरा च धर्मं पुरस्तात्तां च परस्तात्। परमेष महामतिर्धर्मदेशोदययोरप्रत्यवस्थेयां मिथः सव्यपेक्षां समीक्ष्य द्वयोः सामञ्जस्यकरीयुक्तीरन्वेषयति, परमेत-त्सत्यं यद्धर्मपरिपन्थिनीं देशविकाशनीतिं विनिन्दन्

केवलमप्रान्तीतिकदेशप्रातिकूल्यां धर्मसंरक्षणनीति-मनुमोदयति । एतदीयां धर्मशास्त्रादिविद्वत्तां श्रीमालवीयमहोदयानां सनातनधर्मसभासु, दार्शनिकतां श्रीमालवीयमहोदयैरायोजिते निखिलभारतवर्षीय-पञ्चमहाभूतसम्मेलने, संस्कृतवक्तृतां साहित्य-व्याकरणादीनामुत्कृष्टपण्डिततां च संस्कृतसाहित्य-सम्मेलने, हिन्दीवक्तृतां चतुरस्रशिक्षां च महाद्वीपीय-(एशिया) शिक्षासम्मेलने, विद्वत्सभापत्यप्रवीणतां सर्वपल्लीश्रीराधाकृष्णमहानुभावैः श्रीकाशीविश्वविद्यालयेऽस्मिन्समायोजितेऽखिलभारतवर्षीयप्राच्यविद्याविद्वत्सम्मेलने, साम्प्रतिकसदोदक्षतां काशीहिन्दूविश्वविद्यालयस्य प्रधानतमायां परिषदि, (कोर्टमीटिङ्ग) शिक्षासंशोधनप्रियतां काशीविश्वविद्यालयस्य पाठ्यपुस्तकनिर्धारकसमितौ, (फैकल्टी) हिन्दी-संस्कृतलेखननिपुणतां काव्यप्रणयनपटुतां च "कल्याण" प्रभृतिहिन्दीपत्रिकासु "संस्कृतरत्नाकर" प्रभृतिसंस्कृतपत्रिकासु तत्प्रणीतकतिपयग्रन्थेषु च, जिज्ञासासूक्ष्मतां विविधशास्त्रीयप्रश्नपत्रेषु, सौजन्य-सारल्यादिगुणावलीं विद्वद्गोष्ठीषु, वर्णाश्रमविहित-कर्मानुष्ठानतत्परतामाह्निकचर्यासु चाहं बहुशो व्यलोकयम् ।

एतेन परुषधौरेयेण सहात्मनीनस्य दीर्घकाल-व्यापिनः परिचयस्यानुसारेणाहमसंशयं समुद्धोष-यितुम्प्रभवामि, यदिदानीमहमपरं नाभिजानामि य एष इव संस्कृतशास्त्राणां गभीरो विद्वान्, सुवक्ता, सुलेखकः, कर्मण्यः, प्राचीनार्वाचीनदृक्सम्पन्नः, विदुषां मानदश्चैर्मानितो महता कालेन कृतसनातनधर्मसेवश्च स्यादित्यतः सनातनवर्णाश्रमधर्मस्य संस्कृतसाहित्य-स्य च संरक्षणद्वारेण समग्रस्य जगतः कल्याण-करणे प्रभवतस्तत्रभवतः सुहृद्वरस्य महामहोपाध्याय-पं० गिरधरशर्मचतुर्वेदमहोदयस्य स्वास्थ्यसुखमयं शता-युष्ट्वं सर्वेश्वराच्छ्रीकाशीविश्वनाथात्प्रतिक्षणं प्रार्थये ।

# शुभेषणा

वाराणसीगवर्नमेण्ट-संस्कृतकालेजतः प्राप्तावसराणाम्
विद्वद्वरश्री**रामभवन**ोपाध्यायानाम्

महामहोपाधिजुषां बुधानां विद्यालयाध्यक्षमहोदयानाम् ।
आकर्ण्य विश्रान्तिमहोऽतिखिन्ना, जुगुप्सते कालगतिं विदाली ॥
संपाद्य योग्यान् बहुशिष्यसंघान् संचार्य लोकोत्तरकीर्तिराशिम् ।
विधातुमन्यत्किल कार्यमर्च्यं विश्रान्तिमार्याः किमु संभजन्ते ॥
पूर्णायुषः पूर्णमनोरथाश्च संस्थाप्य वंश्यान्हरिभक्तिनिष्ठान् ।
प्रसारयन्तो यशसां हि राशिं मान्याश्चिरं सन्तु मुदे बुधानाम् ॥

# महामहोपाध्याय पं० श्रीगिरिधरशर्मा चतुर्वेदी

[ ले०—श्रीयुत डॉक्टर श्रीलक्ष्मणस्वरूपजी एम. ए. डी. फिल्.
प्रिंसिपल, यूनिवर्सिटी-ओरियण्टल-कालेज, लाहौर।

वर्तमान संसार में पाश्चात्य-सभ्यता का प्रभुत्व है। यदि इस समय को गौर-जाति के आधिपत्य का युग कहा जाय तो कुछ भी अतिशयोक्ति न होगी। इसलिये पाश्चात्य-सभ्यता के उद्गमस्थानों का ज्ञान शिक्षाप्रद हो सकता है। इस के दो विशेष उद्गमस्थान हैं। १ ईसाई धर्म—इसका विचार-धारा पर अधिक प्रभाव पड़ा है पर कार्मिक ( अमली ) जीवन पर बहुत प्रभाव नहीं पड़ा। २. प्राचीन यूनानी सभ्यता—इस सभ्यता का योरुप देश की सभ्यता पर बहुत ही गहरा प्रभाव पड़ा है। योरुप की विचारधारा प्राचीन यूनानियों के विचारों से ओत-प्रोत है। और प्राचीन यूनानी आदर्शों का अनुकरण करना ही योरुप की आधुनिक सभ्यता का उद्देश्य है। इस कथन से प्राचीन यूनानी सभ्यता का महत्त्व स्वयं सिद्ध है। प्राचीन यूनानी सभ्यता का महान् आदर्श था—A Sound mind in sound body—इस का शाब्दिक अर्थ इस प्रकार किया जा सकता है-स्वस्थशरीरसंवादि स्वस्थं मनः। उसी वाक्य के भाव को संस्कृत के निम्नलिखित वाक्य से प्रकट किया जा सकता है—'यत्राकृतिस्तत्र गुणा वसन्ति' अथवा 'शरीरमाद्यं खलु धर्मसाधनम्' इत्यादि।

पहली बात जो मैं म० म० गिरिधर शर्म्मा जी के विषय में कहना चाहता हूं, यह है कि वह प्राचीन यूनानी सभ्यता के आदर्श के अनुसार पूरे उतरते हैं। शरीर जो आत्मा का निवास स्थान है, वह सत् चित् आनन्द ब्रह्म के रूपान्तर अथवा अध्यासित रूप आत्मा के अनुरूप होना चाहिये। महामहोपाध्याय जी दीर्घकाय, चौड़ी छाती वाले, सुदृढ कंधोंवाले, लम्बी भुजाओं वाले, गौर वर्ण की दर्शनीय आकृति वाले हैं। उनको देख कर निश्चय हो जाता है कि आप आर्य्यनसल के व्यक्ति हैं। आप के दर्शन से चित्त में प्रसन्नता और हृदय में श्रद्धा उत्पन्न होती है।

आप का संस्कृत और हिन्दी दोनों ही भाषाओं पर पूर्ण अधिकार है। आप की लिखने की शैली या रीति सराहनीय है। आप कवि भी हैं। आप अच्छे वक्ता हैं बल्कि यों कहना चाहिये कि आप वाग्मी हैं। आप के व्याख्यान प्रभावशाली होते हैं।

आप कितने ही विषयों में निष्णात हैं। संस्कृत महाकाव्य, नाटक, साहित्य, अलङ्कार, व्याकरण तथा दर्शन शास्त्रों में आप पारङ्गत हैं। आप का प्रकाण्ड पाण्डित्य उत्तरीय भारत में प्रसिद्ध है। अब आप को कुछ अवकाश मिला है। मुझे आशा है कि आप अपनी किसी मौलिक तथा स्वतन्त्र रचना द्वारा संस्कृत-साहित्य की वृद्धि करेंगे और अपने यशःकाय को भी अजर और अमर बना देंगे।

# शुभाकाङ्क्षा

श्रीयुतपण्डितश्रीजीवनदत्तब्रह्मचारिणां नरवर-( नरौरा ) निवासिनाम्—

श्रीमन्निखिलनिगमागमकाननकण्ठीरवाणां पदवाक्यप्रमाणपारावारपारावारीणानां महामहोपाध्यायपदवीप्रतिष्ठासम्प्रतिष्ठापकानां वादिमूर्काभावसम्पादनव्रतैकदीक्षितानां भारतीयविद्वद्वरकुलालङ्कारचूडामणीनां वैदिकविज्ञानवैभवाधरीकृताशेषपाश्चात्त्यविपश्चितां पाखण्डमतोच्छेदनहापिततदीयोद्दण्डलीलानां सकलशास्त्रनिगूढगूढतरार्थप्रतिपादनदक्षाणां समस्तान्तेऽवासिनकरहृत्कमलदिवाकराणां लोकोत्तराख्यानलीलासंप्लावितपाषाणपीयूषाणां स्वेष्टदेवसततसमाराधनसंस्मारितध्रुवप्रह्लादप्रमुखभक्तवरविचित्रचरित्राणामर्थतोऽपि व्याख्यानवाचस्पतीनां महामहोपदेशकमूर्धन्यानां जयपुरस्थराजकीयसंस्कृतमहाविद्यालयाध्यक्षाणां श्रीमतां तत्रभवतां लब्धमहामहोपाध्यायपदवीकानाम्-श्रीगिरिधरशर्म्मचतुर्वेदमहाभागानां परमपुरुषप्रवर्तितवर्णाश्रममर्यादासंरक्षणपुरःसरं महता समुत्साहेन सम्पादितां स्वधर्मसेवां स्वदेशसेवां च हृदयतोऽभिनन्दन्निखिलब्रह्माण्डनायकाद्विश्वेशितुर्भगवतो भवानीजानेराशुतोषादभ्यर्थितेन-एतदीयमार्कण्डेयचिरायुषा सहजस्नेहरसाभिरामां भूयो-भूयो भवित्रीं भूयसीं लोकोपकृतिं कामये ।

पक्षं यस्य च पक्षपातरहितं सद्युक्तिपूरैः परं
पूर्णं पूर्णविपश्चितोऽपि समितौ प्रेक्षावतां प्रेक्षकाः ।
संप्रेक्ष्याथ परस्परं सुमनसः प्रोत्सारयन्तो भृशं
मात्सर्यं परिमन्वते निजमनो मग्नं प्रमोदाम्बुधौ ॥ १ ॥

दिव्यां दिव्यसुवर्णमञ्जुलपदालङ्काररम्यध्वनिं
कुर्वाणां जनमोहिनीमनुभवन्देवीं गिरां कामपि ।
श्रीमानार्यमुनिर्बुधो गुरुकुले वादे प्रवृत्ते स्वयं
स्तौति स्मेत्यपरोऽयमेव भुवने वाचस्पतिर्मूर्तिमान् ॥ २ ॥

ब्राह्मं भारमनन्तपारमपरं धत्ते च सारस्वतं
वासं निर्मलमानसे सृजति योऽजस्रं बुधानां सताम् ।
हंसस्यात्र च तस्य सुन्दरतनोः पक्षद्वयं शोभनं
संश्लाघेत न को बुधोऽनवरतश्लाघ्यं नितान्तप्रियम् ॥ ३ ॥

षट्शास्त्रतत्त्ववेत्ता सोऽयं निवहन्प्रकाण्डपाण्डित्यम् ।
जीयादाचन्द्रार्कं गिरिधरशर्मा चतुर्वेदः ॥

# सुहृदवदाननिर्देशः

महामहोपदेशक-श्रीमदखिलानन्दशर्मकविरत्नानाम्, ( अनूपशहर )

१

यस्यावदातकीर्तेः
स्वनामधन्यस्य भव्यवृत्तस्य ।
अभिनन्दनोत्सवोयं
यथावदद्य प्रवर्तते लोके ॥

२

यस्यानवद्यमूर्तेः
स्वधर्मनिष्ठस्य धार्मिके संघे ।
धर्मप्रवर्तनार्थाः
प्रकर्षगर्भा भवन्ति संदेशाः ॥

३

वेदोदितं पुराणैः
समर्थितं यः सनातनं धर्मम् ।
विस्तारयांबभूव
स्वतर्कवादैरपास्तदुस्तर्कः ॥

४

दर्पादुपागतानां
मतानि वादे विजित्य येनात्र ।
व्यर्थीकृताः प्रकामं
समाजवादाः कुतर्कभूयिष्ठाः ॥

५

सद्यः प्रलोभनार्थां
गवेन्द्रवाचो निपीय येनालम् ।
धिक्कार एव नर्म्मं
यथावकाशं समर्पितः साक्षात् ॥

६

वाराणसेयविद्व—
त्समाजमध्ये विमर्दितं येन ।
नाद्यापि शर्म लेभे
गवेन्द्रचक्रं मदान्धपरतन्त्रम् ॥

७

वर्णाश्रमस्वराज्य—
प्रवृत्तसंघं महानुभावो यः ।
संस्थापयांबभूव
प्रधानभावेन भारते वर्षे ॥

८

साङ्केतिकैः स्वशब्दै—
र्वर्णि यस्यातिवर्णनं वृत्तम् ।
जयपुरनगरनिवासी
गिरिधरशर्मा स एष बहुमान्यः ॥

# अभिनन्दनम्



( समर्पकः—श्रीदीनानाथशर्मा शास्त्री सारस्वतः स०ध०कालेजोपाध्यायः, मुलतान सिटी )

स्त्रीयोनिभ्रंशनिमग्नतां कलयति ज्ञात्वा सरस्वत्यदः
प्रेप्सन्ती निजपूतपुंस्त्वमनिशं येते दृढं तद्विधौ।
स्वर्गेऽसम्भवितामवेत्य सुतरां स्त्रीत्वाकृतिव्यत्यये-
ऽस्मल्लोकं समुपेत्य धीयुतभवद्रूपेऽवतीर्णा मुदा॥

उर्वश्याद्यखिलाप्सरःप्रणयिनः शास्त्राद्युपेक्षापरान्
दृष्ट्वा श्रीधिषणो वरिष्ठधिषणो जिष्णुप्रधानामरान्।
फल्गुं स्वां त्रिदशालयस्य वसतिं धीरोऽवसायाऽसकौ
प्राप्त्यै स्वाधिजिगांसुशिष्यविनतेर्भावत्करूपं दधौ॥

व्यासो वेदपुराणकोविदवरो भूत्वा चिरञ्जीव्यपि
नो दृश्योऽस्मि नृचक्षुषोरिति भृशं खेदं समाशिश्रियत्।
स्वार्हन्तीपरिचायनाय नु भवद्रूपेऽवतीर्य ध्रुवं
वेदभ्रातृपुराणसङ्गतिपरोऽस्मिन् राजते विष्टपे॥

श्रीमान् जङ्गमसाहितीचय इह स्रस्तो दिवः सत्कवि-
रेवं विग्रहवान् श्रुतिस्मृतिपुरा-वृत्तार्थशास्त्रज्ञः।
आन्वीक्षिक्यथ काव्यसंहतिरथापि व्याकृतिः श्रामन-
श्चेतःश्रान्तिविनोदसद्म सुतरां ना संशयः कश्चन॥

शास्त्रार्थेऽनृनवादिवादिरमणीकल्पा गिरां संहति-
र्गर्भं स्रावयति स्वकं बत! भयाच्छ्रुत्वा भवत्स्फूर्जथुम्।
तस्यास्तत्र कुतर्कसूनुजननं त्वाकाराशुष्कायितं
स्वस्याः प्रत्युत जीवनेऽप्यतितरां शङ्कोद्भवत्यञ्जसा॥

बाणो दण्डि-मयूर-भारवि-जगन्नाथा मुरारिः कवि-
र्भासो माघ-सुबन्धु-हर्षकलिताः श्रीकालिदासादयः।
कालाद् भूयस ऐहलौकिकरदात् ते देवभूयं श्रिता-
र्निर्विण्णास्त्रिदिवादलप्सत भवन्मस्तिष्कमन्तर्हिताः॥

एकस्मिन् विभवो, वपुश्च, वचनं, वस्त्रञ्च, विद्या, नरे
दुष्प्रापं नु वकारपञ्चकमिदं नीत्यामदो विश्रुतम्।
किन्त्वेतत्तु वकारपञ्चकमपि श्रीमत्सु सन्दृश्यते
नाऽप्यालोकि विकारपञ्चकमतश्चित्रीयते नृव्रजः॥

'नैकत्र सर्वो गुणसन्निपातः' उक्त्या अमुष्या अपवादभूताः।
वक्तृत्वलेखस्वरमाधुरी-सद्रूप-क्षमा-सत्यधना भवन्तः॥

विद्या भूषणमस्ति कीर्त्यत इदं पुंसां कृते संसृतौ
किन्तु श्रीमति नैतदुक्तवचनं सार्थं वयं मन्महे।
विद्यैवाऽऽप्य चकास्ति भूषणनिभं श्रीमन्तमेतत् स्फुटं
किं भूयः कथनेन वर्णनभृताऽऽत्मैवास्ति नूनं भवान्॥

सम्राड् यदार्पिपदथापि महामहोपा-
ध्यायेत्युपाधिमवते भवते सुविद्याम्।
नैतेन वृद्धिमगमद् भवतो महत्त्व
तस्यैव किन्तु महिमा प्रथितोऽस्त्युपाधेः॥

सन्नाहस्य कृतेऽभवद् गिरिधरः कृष्णो ध्रुवं केवलं
पश्चाच्छ्रान्त इव स्वकीयमजहात् तन्नाम लज्जावशात्।
आबाल्यात् कलयन्निमां 'गिरिधरे'त्याख्यां भवान् योगिको
मश्राम्यन् सततं वहंश्च यशसा कृष्णं बताऽजिह्मिपत्॥

कथं व्योमन्! नीलं त्वमसि दृशि, नाकारमपि सद्
इति प्रश्ने मां तत् समुदतरदभ्रस्तनितवत्।
स्वशिष्याणां ध्वान्तं निजपटुगिरोद्धूय तरसा
ततः प्राहैषोन्मां प्रति बुधवरः श्रीगिरिधरः॥

मेघानप्राक्षमेवं रसितमिदमहो! शिक्षिताः केन यूय-
मूचुस्ते प्रच्छक! श्रीगिरिधरमुखतोऽशिक्षि तद्वक्तृतायाम्।
यर्हि व्याख्यानमञ्चे निवसतिमुररीकृत्य गम्भीरवाचा-
व्याचष्टे, द्यामुपेतां तदभिहित-गिरं धारयामा वयं ताम्॥

सङ्गम्यैव भवान् पुरा सुरगिरा माहात्म्यसम्मेलनं
नामाऽजीजनदात्मजं तदनु तत् सम्मार्हति प्रेषयन्
चित्रं क्लीबमपि प्रकृष्टरसवत् तत् तत्र रेमे चिरं
भूयिष्ठानुदपीपदद् बुधवरान् स्वस्य प्रियान् आत्मजान्॥

हरिद्वारेऽधार्षीद् ऋषिकुलमदभ्राभ्युदयवत्
प्रकृष्टान्नामश्चाऽकृत नगपुरे शास्त्रिनिचयम्
समभ्युत्थैश्चानीं जयनृपतिधानीं ननु भवान्
व्यधात् तत्र सद्विद्यालयमपि सविद्यार्थिमहिमम्॥

## ❀ प्रस्तावः ❀

तुच्छोपहारमिमं समर्प्य किञ्चिदन्यदपि निवेदयामि मान्याः! भवद्भिः स्वसमये सनातनधर्मस्य महिष्ठाऽकारः कृतः। क्वचिच्छास्त्रार्थान् विधाय, बहुत्र व्याख्यानानि विधाय च। परमिदमस्थायि कार्यं नाम। अतेन भवतामद्य विस्मृतिः सम्भाव्यते। सनातनधर्म्मो भवदीयं स्थायि कार्यं चिरात् प्रतीक्षते। तदनुगामिनोऽस्मदादिका अपि चिराद् भावत्कस्थायिकार्यं प्रतीक्षमाणाः सन्ति। विद्यालयकार्यतो विश्रान्तिलाभेन भवद्धितैषिणां हृदये कदाचित् खेदस्थितिरपि जाता भवेत्, परं मामकीने मनसि स्वतिशयितप्रसन्नताऽऽसन्नता जाता। यत्र श्रीमता यदीर्घसन्ध्यावन्दनादिभिर्महीयान् समयो गृह्यते, तत्र महाविद्यालयोऽपि भवदीयं पर्याप्तं समयं गृह्णाति स्म। परमिदानीं सोऽन्तरायोऽपि दूरीभूतः। इदानीं भवद्भिरयं सर्वः समयः सनातनधर्मस्य स्थायिप्रचाराय देयः, तत्प्रचार एव दीर्घसन्ध्योपासना ज्ञेया। तत्र लवपुरीयसनातनधर्मविद्यापीठादिसेवयापि स्थायिप्रचारो न भविष्यति। तदीयस्थायिप्रचारस्योपायोऽस्ति सनातनधर्मप्रतिपादकविशालग्रन्थनिर्माणं नाम, योऽसौ चिरन्तनग्रन्थो भवतां प्रतिनिधिः सन् सदा तिष्ठेत्। सनातनधर्मस्य च सदा प्रचारकस्तिष्ठेत्। सनातनधर्मो भवतां मस्तिष्के योऽस्ति व्याप्तः, इदानीं तदीयं वाहनं ग्रन्थरूपेऽपेक्ष्यते।

अहं श्रीमतस्तु तां शक्तिं जाने, अद्भुतयोग्यतां च जाने, याऽस्मादृशान् बलवदतिशय्य वर्तते। तदर्थमेव पौनःपुन्येन प्रेरयामि सनातनधर्म्मस्य सनातनधर्मिणां चोपकाराय। आशास्महेऽस्माकमयं प्रस्तावोऽवश्यं कार्यरूपे परिणतो भवेदिति।

## प्रशस्तिः

स्व०पण्डितश्रीगोपालदत्तशास्त्रिमहोदयविरचिता—

सच्छास्त्रो जयपत्तनस्य सुषमाहेतुः प्रियो धीमतां
साम्राज्याद् गुणमानलब्धमहिनोपाधिः प्रशस्तः श्रिया॥
सोऽयं सार्थकमुच्चकैरिह चतुर्वेदोपनाम स्वकं
बिभ्रच्छुद्धयशाः सुधीर्गिरिधरः शर्मा पुरे राजते॥१॥

विद्याः प्राप्य गुरोर्व्यधाद्विजयशो व्याख्यातधर्मः शुचिः
छात्राञ्छास्त्रगुणानथो बहुगुणानध्यापनेनाप्तधीः॥
स्वस्थाने जयपत्तनेऽद्य च महाविद्यालयेऽग्र्यो बुधस्तस्मादर्हति कं स्तवं गिरिधरः शर्मान विद्वत्कृतम्॥२॥

महामहोपाध्याय पण्डितवर श्रीगिरिधर शर्माजी चतुर्वेदी का—

# संक्षिप्त परिचय।

( लेखक-पुरोहित श्रीहरिनारायणजी बी. ए. विद्याभूषण )

अनेक उपमाधारी, अनेक शास्त्रविज्ञान-विशारद परममेधावी चतुर्वेदी-कुलभूषण श्रीमान गिरिधर शर्माजी महोदय का अति संक्षेप में परिचय दिया जाता है। गिरिधर शर्माजी का जन्म सवाई जयपुर नगर में वि० सं० १९३८ ई० में, मिती पौष शुक्ला १९ को, शुभ मुहूर्त में हुआ था। ये बाल्यावस्था ही से चमत्कारी, सूक्ष्मदर्शी, तीक्ष्ण बुद्धिवाले थे। विद्याध्ययन में रुचि, समझ की प्रबलता व स्मृति की तीव्रता के कारण, अक्षराभ्यास से लगाकर अद्यपर्यंत प्रतिभाशाली रहते आये हैं। इनके पूर्वज विद्वान् और कवि होते आये हैं, जैसा कि आगे थोड़ा सा लिखा जायगा। उनकी कुशाग्र बुद्धिमत्ता और प्राकृतिकपरम्परा से भी विलक्षण बुद्धि की नींव और आस्था--प्राप्ति में स्वाभाविकता आना भी निश्चित ही समझिये। इनका अध्ययन जयपुर संस्कृत कालेज ( वा पाठशाला ) में ही प्रारम्भ से व्याकरणाचार्य परीक्षा में उत्तीर्ण होने तक, रहा है। विशेषता यह रही है कि ये सब श्रेणियों में सदा ही सर्वप्रथम विद्यार्थी रहे हैं। व्याकरणाचार्य हो जाने के अनन्तर पञ्जाबविश्वविद्यालय की शास्त्री परीक्षा भी "इंग्लिश डिप्लोमा" के साथ दी थी, उसमें सम्पूर्ण यूनीवर्सिटी में सर्वप्रथम रहे थे। तब ही से विशेष कीर्ति होने लगी थी। उसके साथ साथ ही इनको एक परम मेधावी, सर्वशास्त्रपारंगत, विद्यावाचस्पति श्री मधुसूदनजी ओझा-कुलदीपक महापुरुष गुरु की प्राप्ति होकर वेदविज्ञान तथा दर्शनशास्त्रों का उनसे उत्तमता से जयपुर ही में अध्ययन किया। इनकी कुशाग्रबुद्धि और विद्वत्ता से उक्त ओझाजी सदा प्रसन्न रहे, और विद्यादान की सूक्ष्मातिसूक्ष्म गति इनको सिद्धिरूप में प्रदान की। ऐसे महान विद्वान् के अन्तेवासी [ शिष्य ] होने का, स्वयम् एक ओजस्वी विद्वान् होने पर भी, इनको अभिमान है।

छात्रावस्था ही से इनकी शक्ति इतनी जागृत थी कि छोटी सी उम्र ही में सुन्दर, प्रियवचनता और वाग्मिता के साथ, तत्परता से व्याख्यानादि देने लग गये थे। जयपुर में ( एक मन्दिर में जो चतुर्भुजजी के मन्दिर के पास है ) एक "रामसभा" हुआ करती थी। उसके सभापति मुंशी श्रीमथुराप्रसादजी वकील थे, जो पीछे सरदार अपील होगये थे। उसमें अनेक विद्वान् सम्मिलित होते थे। उन विद्वानों के सामने स्वतन्त्रता-पूर्वक बालक गिरिधरजी व्याख्यान देते, जिसे सुनकर विद्वानों का चित्त हिलोरें मारने लगता था। शास्त्री बालचन्द्रजी इनकी प्रशंसा में बहुत कुछ कहते थे, और उक्त मुंशी मथुराप्रसादजी ने तो यहाँ तक कहा था कि "यह छात्र उस श्रेणी का वक्ता बनेगा कि जिसका भाषण सुनकर प्रजा मुग्ध होजाया करेगी और उसे सुनने को सैंकड़ों कोसों से जनता आया करेगी"। इन पंक्तियों के लेखक को भी, उस समय उक्त भाषणों के सुनने का सौभाग्य प्राप्त था।

सन् १६०८ (वि० सं० १६६५) में इनकी सत्कीर्ति से आकर्षित होकर, "ऋषिकुल-ब्रह्मचर्याश्रम हरिद्वार" में आचार्य पद पर नियुक्ति के लिये वहाँ इन्हें बुलाकर प्रतिष्ठित किया गया। इनकी अध्यापन-शैली से सब विद्यार्थी व विद्वान् प्रभावित थे। उस संस्था के निर्वाचक प्रसिद्ध सूरिवर श्री पण्डित शिवकुमारजी मिश्र थे। वे भी इनकी विलक्षण प्रतिभा से बहुत प्रभावित और प्रसन्न थे। उस ब्रह्मचर्याश्रम में लगातार ६ वर्ष तक अध्यापनकार्य किया। परन्तु भारतवर्ष के प्रसिद्ध नगरों से इनको निमन्त्रण, इनकी विद्या बुद्धि और वाग्मिता के कारण आया करते। समय निकालकर वा रुखसत लेकर जाना पड़ता। वहाँ जो भाषण देते उनमें आधुनिक शिक्षा में दीक्षित अंग्रेजी के विद्वान् लोग भी मन्त्रमुग्ध रह जाते थे। और वहाँ से ऋषिकुल के लिये अनायास ही द्रव्यादि की भी प्राप्ति हो जाया करती थी।

इनकी सनातनधर्म के प्रवचनों में सदा विशेष रुचि रहा करती है। सनातनधर्म का समर्थन तो ये बड़ी ही योग्यता, विद्वत्ता और प्रखरता से किया करते हैं। इस सत्कीर्ति से आकर्षित होकर पंजाब के अधिकारियों ने इनको बुलाकर वहां "सनातनधर्म कालेज लाहौर" के प्रधानाध्यापक (प्रिंसिपल) नियुक्त कर दिया। इनकी विद्वत्ता की शक्ति से पंजाब में इनका बहुत प्रभाव बढ़ा। इनकी अध्यापन शैली से छात्रों में संस्कृत योग्यता बढ़ने लगी। छात्रों और अध्यापकों को भी उन्नति का गहरा ध्यान होने लग गया। हम जब श्री बदरीनारायणजी की यात्रा में स्व० सर पुरोहित गोपीनाथजी के साथ गये थे, तब उधर के छात्रादि हमारे साथ संस्कृत में वार्तालाप करते और कहते कि यह श्री गिरिधरजी की कृपा और अध्यापन का प्रसाद है कि हमें इस भूमि में भी इतनी योग्यता प्राप्त हो चली है। साढ़े पांच वर्ष तक उक्त कालेज में कार्य किया। और इस थोड़े ही समय में सैकड़ों स्नातक, उस सनातनधर्मकालेज से उत्तीर्ण होकर योग्यता के साथ सफल निकले, जो आज इस भारत देश के विभिन्न प्रान्तों में अनेक कार्यों पर नियुक्त हैं।

सन् १६२४ में उस समय के शिक्षाविभाग के डाइरेक्टर श्री पं० श्यामसुन्दरजी एम० ए० महोदय के प्रयत्न से श्री महामहोपाध्याय पंडितवर दुर्गाप्रसादजी के रिटायर होने के अवसर पर इनको जयपुर में बुलाकर संस्कृतकालेज में प्रिंसिपल पद पर नियुक्त किया गया। प्रिंसिपल के पद को बहुत योग्यता के साथ १६ वर्ष तक संपादन करके यश लाभ लिया। इस १६ वर्ष के काल में कालेज की अनेक दिशाओं में सवृद्धि हुई। उस समय के पूर्व कालेज में बीस एक अध्यापक थे। परन्तु क्रमशः योग्यता और आवश्यकता की दृष्टियों से ३५ अध्यापक हो गये। इनके आगमन के समय स्कूल और कालेज दोनों को मिलाकर २०० अनुमान छात्र थे परन्तु इनके समय में यह संख्या ५०० तक जा पहुँची थी। कालेज का स्थान भी संकुचित था सो उसे विस्तृत बना दिया गया। छात्रावास भी स्थापित हो गया। हिन्दी, अंग्रेजी, व्यायाम-शिक्षा, बालचर-संस्था, इतिहासशिक्षा, पाठपुजनशिक्षा, इत्यादि के लिये अध्यापक नियत कर दिये गये। आयुर्वेद का प्रामाणिक अध्ययन अध्यापन इतना उत्तम हुआ कि यहाँ के सफल आयुर्वेदाचार्य देशदेशान्तरों में अध्यापन के निमित्त जाने लगे। चारों वेदों का अध्यापन, प्रारम्भ होगया यहाँ की इस प्रकार की सर्वोत्तम शिक्षा की कीर्ति के श्रवण करके देशांतरों से छात्र अधिक संख्या में आने लगे। इसी प्रकार अन्य कार्य भी हुये।

श्रीपण्डितजी को अनेक उपाधियां प्राप्त हैं। गवर्नमेण्ट से महामहोपाध्याय की। भारतधर्म-महामण्डलसे महामहोपदेशक और व्याख्यानवाचस्पति की तथा श्रीपुरी शंकराचार्यजी की दी हुई विद्यावाचस्पति की तथा विद्यावारिधि इत्यादि की प्राप्त हैं। व्याकरणाचार्य और न्यायशास्त्री का कथन ऊपर हो ही गया है। श्रीपण्डितजी का अनेक राजाओं से भी घनिष्ट परिचय है, और वे इनका पूर्ण सत्कार करते हैं।

पण्डितजी प्रौढ़ लेखक हैं, इन्होंने कई महत्त्वशाली लेखादि अनेक मासिकपत्रादि में भेजे हैं जिनको बड़े चाव से प्रायः अग्रणी लेखों में प्रकाशित किया गया है। ये एक समय में कई काम करने की शक्ति रखते हैं। इनकी स्मरणशक्ति बहुत स्फीत और निर्मल है, और बुद्धि कुशाग्र और तीव्रतर है, मेधा परम विलक्षण है। ये सब काम असन्दिहान होकर करते हैं।

सनातनधर्म में इनकी प्रज्ञा स्वभावतः सन्निवेशित रहा करती है। सनातनधर्म का शास्त्रानुसार पूर्ण पक्ष लेते हैं। ये स्व० स्वामी दयानन्दजी सरस्वती के सत्यार्थप्रकाश, ऋग्वेदादिभाष्यभूमिका इत्यादि का मनन करने पर उनमें जो जो स्खलन वा त्रुटियाँ अवगत हुई वा होती हैं, उनका पूर्ण युक्तियों और प्रमाणों से निरसन कर देने की परम प्रवीणता रखते हैं। आर्यसमाज के विख्यात विद्वानों के साथ कई बार कई शास्त्रार्थ हुये हैं, जिनमें प्रायः सदा ही सनातनधर्म की विजय इन्हें मिली है। इन शास्त्रार्थों में गुरुकुल का शास्त्रार्थ उल्लेखनीय माना गया है। यह शास्त्रार्थ श्रीश्रद्धानन्दजी के सुपुत्र श्रीइन्द्रविद्यावाचस्पतिजी के साथ हुआ था। उसमें अनेक विद्वान् विद्यमान थे। उस समय श्रीमहात्मा गांधी महोदय भी, किसी कार्यवश वहां पधारे थे। उन्होंने भी इस शास्त्रार्थ को सुनकर अन्त में यही कहा कि "विजय सनातनधर्म की ही हुई है"।

इनके पूर्वज भी बड़े विद्वान् और कवि हुये हैं। श्रीआनन्दमणिजी के पौत्र रामलालजी और व्रजलालजी उदयपुर (मेवाड़) से श्रीमहाराज प्रथम माधवसिंहजी की श्रीमाताजी राणावतजी के साथ जयपुर आये थे। ये दोनों ही अच्छे कवि थे। रामलालजी का बनाया हुआ वाल्मीकि रामायण का छन्दोबद्ध भाषानुवाद और कुछ फुटकर कविताएँ उपलब्ध हैं। इनके पुत्र गोपालजी और पौत्र जीवनलालजी भी सुकवि थे। जीवनलालजी का बनाया हुआ श्री मथुरावर्णन और मथुरामाहात्म्य तथा फुटकर कविताएँ प्राप्त हैं। परन्तु जीवनलालजी के कोई सन्तान नहीं थी। अतः अपने भागिनेय पं०—गोकुलचन्द्रजी को दत्तक (गोद) लिया। यही गोकुलचन्द्रजी चरितनायक श्रीपं० गिरिधरजी के पिता थे।

महाराज श्रीप्रथम माधवसिंहजी नें कई जीविकाएँ श्रीरामलालजी को प्रदान की थीं। उनमें से एक यशोदानन्दनपुरा (उपनाम थूंणी) गांव है, तथा स्वतंत्र भूमि भी है जो आज भी इनके अधिकार में है।

आजकल श्रीपण्डितजी एक प्रशस्त पद पर हैं। अर्थात् ये सेठ मूलचन्द्र खैरातीराम "सनातनधर्म संस्कृत-विद्यापीठ" नामक "उपदेशक कालेज" लाहौर के प्रिंसिपल हैं।

मेरी हार्दिक कामना है कि श्रीयुत चतुर्वेदीजी इस प्रकार सनातनधर्म व संस्कृत-साहित्य की सेवा करते हुए चिरकाल तक भारतीय जनता को अपने अमृतोपम उपदेशों से लाभ पहुंचाते रहैं।

 

श्रीचतुर्वेदमहोदयानां महामहोपाध्यायशिष्याः

पं० श्रीपरमेश्वरानन्दशास्त्रिमहोदयाः

लवपुरम् ।

सर्वतन्त्रस्वतन्त्राणां गुरुकुलमहाविद्यालयाचार्यश्रीमद्गङ्गादत्तशर्मपादानाम्—
चरणारविन्दयोः श्रद्धापुरस्कृतं समर्प्यते--

# भक्तिपुष्पाञ्जलिः

( महामहोपाध्यायपण्डितश्रीपरमेश्वरानन्दशर्मशास्त्रिणा, लवपुरम् )

एकमात्रेण पुत्रेण पित्रोः स्वकं
येन नीतं वयः शैशवं सोन्मदम् ।
पाठशालां प्रविश्य स्वधीवैभवं
संप्रकाश्यामितं सद्यशः ख्यापितम् ॥१॥
प्राकरोद् यः परीक्षासु दिग्विश्रुतान्
पण्डितानुत्तमैः स्वोत्तरैर्विस्मितान् ।
यः सहाध्यायिषु स्वेषु कीर्त्यास्पदं
सर्वदा प्रापदग्र्यं पदं शर्मदम् ॥२॥
यस्य शास्त्रेष्वशेषेष्वहो वैदुषी
धर्मचर्याविधौ निस्तुषा† शेमुषी ॥
येन विद्योदधेर्वेदविद्भूपते-
र्वेदमर्माखिलं प्रापि वाचस्पतेः‡ ॥
§माधुरप्राकृते संस्कृते वा कृतं
यस्य काव्यं सुधास्वादु सद्भिर्नुतम् ॥
*पित्र्यपैतामहं रिक्थमासादितं
येन सामर्थ्यमेतत् कवित्वेऽद्भुतम् ॥
यः समज्यासु विद्यावतां भूरिशः
प्राज्यमाजीजनद् ‖वाग्मिताभिर्यशः ॥

पोच्छलद्वेदवादच्छला मानिनो
यस्य तर्कैर्हता नैकशो वादिनः ॥
※वर्णधर्मव्रजध्वंसने सत्वरं
तर्कवर्षोपलक्षेपविद्याचणम् ॥
इन्द्रमुत्प्रक्रमुत्सेकशून्यं व्यधाद्
वेदगोवर्धनोद्धारणाद् यः क्षणात् ॥
कर्णधारं यमासाद्य लब्धोदयं
देवभाषासुसाहित्यसम्मेलनम् ।
मासि मास्युच्छ्र✣यन् रस्यरत्नाकरं
योतिशेते विधिं चाररत्नाकरम् ॥
मुख्यमाचार्यकं प्राप्य संस्थासु यः
प्राचिनोत् प्राच्यविद्यानिधिं निर्भयः ।
यस्य गायन्ति शिष्याः प्रशिष्याश्च तान्
दिग्विदिग्वासिनः श्रद्धया सद्गुणान् ॥
वेदविन्सच्चतुर्वेदवंशोद्गते—
स्तस्य विद्याप्रदातुर्बुधोऽलङ्कृतेः ।
अङ्घ्रियुग्मे गुरोः शिष्यकल्पाङ्घ्रिपे
भक्तिपुष्पाञ्जलिः श्रद्धयैषोऽर्प्यते ॥

†शङ्कापङ्करहितेत्यर्थः । ‡स्वर्गीयविद्यावाचस्पतिश्रीमधुसूदनशर्मसकाशात् । §व्रजभाषायामित्यर्थः । *पितुरागतं पित्र्यम्, 'पितुर्यच्च' पितामहादागतं पैतामहम्, तयोः कर्मधारयः । ‖वाचो युक्तिभिः । ※पद्यमिदं काँगड़ीगुरुकुले महात्ममुन्शीरामसुतेन विद्यालङ्कारेण इन्द्रेण साकं गुरुचरणानां वर्णव्यवस्थाविषयकं वाक्संघर्षं स्मारयति । ✣--चौरादिकोयं श्रिञ्, णित्वाद् विकल्पेन णिचं लभते ।

# पद्यप्रसूनाञ्जलिः

साहित्यव्याकरणाचार्य-सततीर्थ-पण्डितश्रीसीतारामशास्त्रिणः, फतेहपुर।

किं न्यायाम्बुधिमन्दरोऽयमथवा वेदान्तचिन्तामणिः
किं वा काव्यकलाकलापकलनाकल्लोलिनीवल्लभः ॥
किं स्वित् सांख्यसरोजसुन्दरवनीव्याकोचकोकप्रियः
किं नूनं स्मृतिशास्त्रसारविदुरश्रेणीशिरोभूषणम् ॥ १ ॥

शेषाशेषविशेषशासनवनस्वच्छन्दसञ्चारणा—
पञ्चास्यः किमु पूर्वतन्त्रतरणीसञ्चालनानाविकः ॥
किं काणादपयोधिपानघटजः किं योगशास्त्रार्णवः
इत्थं यत्र विकल्प्य निश्चयमनुष्ठातुं बुधा नो क्षमाः ॥ २ ॥

सोऽयं सद्गुणशेवधिः सुविदितो व्याख्यानवाचस्पतिः
वादीन्द्रद्विपराजशासनमृगेशोगम्भीरतासद्गुरुः ।
धर्मध्वंसिधुरन्धरान्धतमसप्रोत्सारणाहस्करो
विश्वख्यातावदां वरो गिरिधरः शर्मा समुज्जृम्भते ॥ ३ ॥

यत्पाण्डित्ययशोहिमांशुरनिशं सम्पूर्णतामाश्रयन्
विद्वन्मानसकैरवालिकलिकामुत्कोचयन् सर्वदा ।
तन्वानो विविधां चमत्कृतिततिं नक्तन्दिवं दीप्यते
सोऽयं पण्डितभास्करो गिरिधरः शर्मा चिरं राजताम् ॥ ४ ॥

यो व्याख्यानपटुर्यमाहुरपरं मिश्रं नु वाचस्पतिं
येन प्रोज्ज्वलमस्ति भारतमिदं यस्मै जगत् श्लाघते ।
यस्मान्नास्ति परः परोपकृतिकृत् यस्यास्ति धर्मो धनं
यस्मिन् पण्डिततल्लजोऽपि बहुधा संशय्य सन्तिष्ठते ॥ ५ ॥

स श्रीमान्नवनीतिरीतिनिपुणः षड्दर्शनीवापिका-
हंसो भूसुरवंशभूषणमसावंशो नु वागात्मनः ।
भ्रंशो वादिजयश्रियोऽयमपरो ध्वंसस्तु पाखण्डिनां
कंसारिप्रणयी परो गिरिधरः शर्म्माभिनन्द्यो न कैः ॥ ६ ॥

यस्मिन् गर्जति सिंहवत् प्रतिसभं गम्भीरतारस्वरं
दायानन्दमतावलम्बिनिकरो जम्बूकवत् सायते ।
यश्चौद्दण्ड्यविखण्डनोऽखिलकलाक्रीडागृहं तर्कवित्
चूडारत्नमसौ गुरुर्गिरिधरः शर्म्माधिकं भ्राजताम् ॥ ७ ॥

# * श्रद्धाञ्जलिः *

पं॰ श्रीबालकृष्णभट्टशर्मसाहित्याचार्यकाव्यतीर्थमहोदयस्य — [illegible]



विद्यानवद्यचरितान् गुणकल्पवृक्षान्, विद्वद्गणान् गिरिधरान् जयपत्तनस्थान् ॥
वन्दामहे शमितसंसृतिघोरतापान्, ज्ञानोपदेशनिपुणान् बुधवृन्दवन्द्यान् ॥ १ ॥

यस्याद्य शारदसुधांशुजयप्रगल्भाः सत्कीर्तयो जगदिदं मुविलङ्घयन्ति ॥
विद्यानिधिं जगति कीर्तिनसन्ततं [illegible] सुचारुपदवीमभिनन्दयामः ॥ २ ॥

दोषेऽसम्मुखता गुणेऽभिमुखता पापे सदा भीतता
पानार्थेऽभयता बुधे विनयता विद्यासु तत्त्वज्ञता ।
धर्मे धार्मिकता कृतौ कुशलता व्याख्यानदानेऽपि सा
पूज्ये सर्वमिदं विभाति नितरां विद्यानिधौ गीर्धरे ॥ ३ ॥

सद्विद्यासदनोऽवदातचरितो ह्यज्ञाननिर्नाशकः
शिक्षारत्नगणार्चितो गुरुवरः सद्धर्मरत्नाकरः ॥
भूपालैः परिपूजितश्च परितः शिष्यैः शुभैः संवृतः
सोऽयं श्रीम॰म॰पण्डितो गिरिधरो धन्योऽस्ति भूमण्डले ॥ ४ ॥

श्रीमान् संस्कृतभारतीप्रियकरस्तत्पालनैकव्रत-
स्तत्प्रामाण्यमहाध्वरस्य विधिवत्सम्पादने सादरः ॥
लब्ध्वा राजति दुर्लभां च पदवीं यो भारताधीश्वराद्
वाग्मी सोऽद्य वचोभिरादरयुतैः सम्भूष्यते सादरम् ॥ ५ ॥

ऋषिकुले जयपत्तनकेऽपि वा लवपुरेऽपि च धर्मसभासु वा ।
अयि गुरो ! तव कार्यसुकर्तृता किमु न साऽत्र परोपकृतैर्युता ॥ ६ ॥

यस्याद्य दिक्षु शरदिन्दुमरीचिगौरास्तन्वन्ति शिष्यनिवहाः सुयशःपताकाः ।
पीत्वा तथा च वचनामृतसिन्धुभङ्गान् तृप्ता भवन्ति जनता विनताः सभासु ॥ ७ ॥

को भाग्यवान् स भविता ह्यधिनायकोऽस्याः के वाभिनन्दनकराः सविधे सदस्याः ।
ते भाग्यवन्त इति वा सफलायताक्षाः संरम्भमेव समितेरवलोक्य मन्ये ॥ ८ ॥

अद्य प्रपद्य वयसश्चरमे विभागे विन्यस्य भारमिह मानयुतं स्वकीयम् ।
धन्यो भवान् विजयते स्वशुभैश्चरित्रैः श्रुत्वेति पूज्यवर ! मोदमुपैति चेतः ॥ ९ ॥

गुरोः प्रसादाय कृतिः कृतेयं श्रद्धाभिधेयेन मयार्पितासौ ।
तस्यैव पूतस्य कुशाग्रबुद्धेर्भृङ्गायतामङ्घ्रिसरोजयुग्मे ॥ १० ॥

# श्रद्धापुष्पमाला

## वैद्यश्रीब्रह्मदत्तशर्मा शास्त्री आयुर्वेदाचार्यः, भुसावलस्थः

वेदवेदाङ्गषट्शास्त्रविन् कर्मठः, प्राच्यवेदोक्तधर्मोपदेष्टा सुधीः
जीवतुल्यो मतौ विष्णुकल्पः कृतौ नम्यते श्रीचतुर्वेदवर्यो गुरुः ॥ १ ॥
व्याख्याताऽयं स्निग्धगम्भीरशब्दः, टीकाकारोऽभ्यारको ग्रन्थकर्ता ।
निष्पक्षश्चादर्शसम्पादकः सोऽस्माभिर्वन्द्यः श्रीचतुर्वेदमूर्तिः ॥ २ ॥
काले काले शत्रुभिर्दूयमाने धर्मेऽनादौ पूज्यवर्णाश्रमाख्ये ।
प्रान्ते प्रान्ते योऽकरोत् सत्प्रचारं संस्तोतव्यां जागृतिं नम्यतेऽसौ ॥ ३ ॥
श्रुतिनिगदितधर्मस्य प्रचारः कथं स्यादनिशममरवाचो यस्य चिन्ताऽस्ति चित्ते ।
विमलविपुलबुद्धिः कोविदानां वरेण्यो जयति गिरिधरः शर्मा चतुर्वेद एषः ॥ ४ ॥

ब्राह्मं वर्णयता सभासु विमलं धर्मं च वर्णाश्रमं
शास्त्रार्थेषु पराजिताश्च विदुषा मीमांसका आर्हताः ।
तर्कैः साम्य-समाजवादपथिकास्तूष्णीकृता नास्तिका-
स्तं वन्दे बुधवृन्दवन्दितमहं भक्त्या चतुर्वेदिनम् ॥ ५ ॥
अथ सनातन-धर्म-सरोरुहं कलुषितं भुवने पिशुनद्विपैः ।
विकसितं कुरुते सकलप्रियो गिरिधर-द्विजराज-महोदयः ॥ ६ ॥
भवति नास्तिककौशिकदुष्कृतिः सुजनमानसपद्मविकस्वरम् ।
अपि च नश्यति तापतमो भृशं गिरिधरप्रतिभास्तपनोदये ॥ ७ ॥
धन्यो हि भारत ! कलौ प्रतिकूलकाले प्राच्यं त्वदीयविभवं निगमागमाद्यम् ।
लोकोत्तरं गिरिधरप्रमुखाः सुताःस्ते संरक्षयन्ति खलु तं परिवर्धयन्ति ॥ ८ ॥
अद्या निन्द्यप्रवीणा अयि ! विबुधगिरे ! त्वां मृतामालपन्तः
पश्यन्तून्मील्य चक्षुर्गिरिधरवदन-प्राङ्गणे हृद्यशब्दाम् ।
सालङ्कारामशेषां मधुरकलरवां वादयन्तीं सुवीणां
नृत्यन्तीं भावरम्यां निखिलजनमनोहारिणीं तारिणीं नः ॥ ९ ॥
समग्रशास्त्रेषु विलक्षणां तामकुण्ठितां च प्रतिभां दधानः ।
श्रीशङ्कराचार्य उदग्रकीर्तिर्धृतावतारो गुरुरेष वा स्यात् ॥ १० ॥
राज्येन दत्तः स महामहोपाध्यायेत्युपाधिर्भवते महीयान् ।
यातः प्रसिद्धिं गुरुतां भवत्तः, सच्छास्त्रवेत्ता न भवांस्तु तेन ॥ ११ ॥

विद्याज्ञानं प्राप्य यस्मादमोघं ह्याशीर्वादान् सम्प्रशर्मीश्च भूयः ।
भक्ताः शिष्याः ज्ञानकाश्च प्रतिष्ठ्या देशे देशे यद्यशः ख्यापयन्ति ॥ १२ ॥
सदाराजविद्यालयाकाशमेनन सद्वाध्यायकच्छात्रवृन्दोडुभिर्यद् ।
विहीनं चतुर्वेद-चन्द्रेण दीनं प्रभाकान्तिहीनं दरीदृश्यते हा ! ॥ १३ ॥
भगवन् ! गुरुदेव ! मादृशं चरणौ ज्ञाननिधी भजामि ते ।
वितराऽत्र जने शुभाशिषः करुणा-वरसन्तानायुताः सदा ॥ १४ ॥
शर्मणा ब्रह्मदत्तेन मच्छ्रद्धया, गुम्फिता मञ्जुला भावसूत्रा शुभा ।
पद्यपुष्पा चतुर्वेदवर्योरसि स्तोत्रमाला विचित्रोपहारीभवेत् ॥ १५ ॥

---

# उपहारः

समर्पकः-पण्डितरामचन्द्रशर्मासाहित्याचार्यः
महाराजसंस्कृतकालेजप्रोफेसरः
जयपुरम्

गुण-गण-परितुष्टैर्मानिनाः सार्वभौमैर्गिरिधर इति लोकैः कीर्तिता अप्यजस्रम् ।
मनुजहृदयजाड्याऽद्रीन् दलन्तः स्ववाक्यैर्द्विजकुलमणिभूताः पण्डितेन्द्रा जयन्ति ॥ १ ॥

देशो भारतवर्ष एष नितरां धर्मप्रधानश्चिरादद्यत्वऽपटुबुद्धिभिः कुतनयैः संमोहितोऽधर्मतः ।
सत्सूनुं जयपत्तने "गिरिधरं" श्रीमन्तमासाद्य वै, स्वात्मानन्द-सुनिर्वृतो वितनुते सद्धर्मकेतून् पुनः ॥ २ ॥

आम्नायाऽर्थमवेत्य निश्चितधिया कारुण्यपूर्णः सुधीर्लोकान् विभ्रमधारिणोऽनतिचिरान्मार्गं परं दर्शयन् ।
सूक्तैः नयहितैः स्वकीयवदनादुच्चारितैः सर्वतो ब्रह्माणं परितोषयन् विजयते सोऽयं द्विजेन्द्राग्रणीः ॥ ३ ॥

वेदाऽर्थप्रतिपन्थिनो बहुजनाः संगत्य मोहाऽऽवृता वादार्थं रविणेव वारिदगणाः प्राप्ताः ससाटोपतः ।
तान् सर्वान् बहुशः क्षणाद्विघटयन्नेको हि संह्लेपयन्नस्मत्पूज्यतमो बुधो विजयते वाग्देवताविभ्रमः ॥ ४ ॥

एतत्प्रभावमतुलं प्रविचिन्त्य धीरा
न्यायाऽधिकारपदमुच्चतमं दधानाः ।
व्याख्यानमस्य गुरुवाग्विभवस्य सम्यक्
श्रोतुं नियोगसमये न समागताः किम् ॥५॥

शब्देऽपरोऽत्रिनयनः शिव एव साक्षाद्
साहित्य-कैरव-विकासपरः सुधांशुः ।
षट्शास्त्रकाननविहाररतो मृगेन्द्रः
सोऽयं चिरं भवतु भारतभाग्यदीपः ॥६॥

बालत्व एव गुरवः प्रतिभाप्रभावाद्
यं मन्वते स्म धिषणं सुकुशाग्रबुद्धिम् ।
तं साम्प्रतं निखिल-भारतपूज्यपादं
वन्दे गुरुं प्रणतकामदुघं प्रसन्नम् ॥७॥

श्रीमत्सु चाऽद्य गुरुपादसरोरुहेषु
सद्भावपुष्परचितां स्रजमर्पयित्वा ।
"रामः" प्रणामविततिं प्रविधाय भूयो
मोदान्वितो विरमते तनुवाग्विलासः ॥८॥

# श्रद्धाञ्जलिः







श्रीमतां परमपूज्यपादानां श्रीगुरुवर्याणां श्रीमहामहोपाध्याय-श्रीगिरिधरशर्म्मणां विषये मदीयाऽकिञ्चित्कराऽप्रौढा लेखनी न किमप्यङ्कितुमलमस्तीति नूनं संकुच्यते चेतः। महीयांसो विद्वांस इमे इति वचनं जगद्विख्यातविद्याधनस्यापुष्कलमेव, 'आचार्य्यप्रवरा' इति कथनं विश्वसमादृताचार्य्यत्वस्य पुनरुक्तमेव, गीर्वाणवाणीमहानायका इति साधारणोपाधिप्रकटनं श्रीसनातनधर्ममहानेतुरपर्य्याप्तगौरवप्रकाशनमेव। किमहं वच्मि, स्तम्भितो वाचां प्रसारः। न मत्सविधे वर्तन्ते तादृशाः शब्दा यैरहं स्वकीयान् भावान् सम्यक्तया प्रकटयितुमपि प्रभवामि। केवलमेतावदेवोक्त्वा विरमामि-यदेतादृशा महापुरुषा धर्मरक्षार्थं संस्कृतिरक्षार्थं च संस्कृतेर्ह्रासो धर्म्मस्य च ग्लानिर्भवति यदा, तदा जगदीश्वरप्रेरणया संभवन्ति भगवत्प्रियायां भारतभुवि। एतादृशस्य महापुरुषस्य कृते सर्वैरस्माभिरेकस्वरेण प्रार्थनीयो जगदीश्वरः, यदसौ चिरञ्जीवन् भारतभुवो मस्तकमुन्नमयेदिति विनिवेदयन् श्रद्धाञ्जलिमिमं गुरुचरणकमलयोः समर्पयति—श्रीमतां चरणरेणुः—

भावत्कोऽन्यतमश्छात्रः

**वृन्दावनशास्त्री एम. ए.**

कविराजः, फिरोजपुरीयः





विद्वद्वरश्रीलक्ष्मीनाथशास्त्रिद्राविडमहोदयाः

श्रीचरितनायकस्य विद्यागुरवः

महामहोपाध्याय—

श्रीगिरिधरशर्मचतुर्वेदमहाभागानां

# जीवन-चरितम्

सरसोन्नतसञ्चाराः स्निग्धगम्भीरनिस्वनाः ।
वीक्ष्यन्ते विरला लोके जलदा इव सज्जनाः ॥

# पूर्वजपरिचयो बाल्यकालश्च



( ले०—पं० पुरुषोत्तमशर्मा चतुर्वेदः साहित्याचार्यः, मेयोकालेज, अजमेर )

अस्ति निखिलनिगमागमजेगीयमानविमलयशसोऽशेषकलिकलुषविध्वंसनसमर्थपुण्यपाथसोर्भगवत्योर्भागीरथीभानुतनययोः परिसरे प्रसृतः सकलभूमण्डलीयमनुजकुलचारित्र्यशिक्षाप्रथमदेशिकानां प्रसवभूमिरभूमिरघसंघस्य कुरु-मत्स्य-पाञ्चाल-शूरसेनेति-प्रान्तचतुष्टयप्रविभक्तः प्राक्तनपुण्यसञ्चयैकलभ्योऽतिभव्यो ब्रह्मर्षिदेशो नाम भारतवर्षैकदेशः। यमिममेव देशमनुसंधाय साभिमानमनुशास्ति स मनुरपि—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥ इति

अस्ति च तदन्तर्गतशूरसेनदेशपुराणराजधानी समस्तश्रुतिसीमन्तिनीसीमन्तसिन्दूरपूरचर्चितचरणारविन्दस्य सच्चिदानन्दरूपस्य भगवतः श्रीकृष्णस्य प्रादुर्भाववसुमती तदीयनित्यसंनिधानसमवाप्तानितरसाधारणसौभाग्या भाग्याधिकैरेव समधिगम्याऽतिरम्या गोलोकसमधुरा मनोनयनमधुरा मथुरा नाम नगरी। या खलु कलिन्दकन्याकूलमधिवसन्ती हसन्तीव पद्मालयानित्यनिवसतेरपि वैकुण्ठलोकस्य सौन्दर्यं जनि-निधन-निवासेष्वन्यतममपि समधिगच्छद्भ्योऽनिच्छद्भ्योऽपि यच्छन्ती मुक्तिवधूटीविलासवैभवमद्यापि सप्तपुरीवतंसायमाना विद्योतते।

नगर्यामस्यामनवद्यविद्याविद्योतितविविधविबुधपरिषदः संतताधीताध्यापितनिखिलनिगमागमनिष्णाततया सादरं समभ्यर्च्यमाणमसंख्यवितानसंतानेषु ब्राह्मणाः स्थानमभिभूषितवन्तश्चतुर्वेदीपारदृश्वतयानुगतार्थं चतुर्वेदीत्युपाभिधानमुपादधानाः प्रथन्त एव पृथिव्यामस्यामशेषचातुर्वर्ण्यसमर्चितचरणसरसीरुहा माथुरमहीसुराः।

विद्याव्रततपःशमदमादिसद्गुणगणसमर्जितनिर्जितशरद्राकाशशाङ्कयशसां येषामनुपमेयं महिमानमामनन्ति स्मृति-पुराण-मीमांसाभाष्य-महाभाष्यप्रभृतीनि समस्तशिष्टजनसमादृतानि तानि तानि शास्त्राणीति न वयमुपयोगि समाकलयामः स्वमुखेन तस्य समधिकशंसनम्।

न च तेषामुपरि निर्दिष्टैराध्यात्मिकसद्गुणैरेव समचीयत समज्ञा, किन्तु सादृश्यशून्येन स्वशरीरस्वास्थ्येनापि। न च तिरोहितमेतद् यन्मथुरावास्तव्यास्त एते भारतीया इतरजातीरतिशयानेनान्नपानादिषु वैशिष्ट्येन न च व्यायामपुष्टत्वपुष्ट्या चोपमानतामापद्यन्ते परेषामस्यां विक्रमस्य विंश्यां शताब्द्यामपीति।

त एते महात्मानो महाराजविक्रमस्य द्वादशीं त्रयोदशीं वा शताब्दीं यावदनुदिनयमुनास्नानभगवद्भजनायाचितोपनतवसुसमाहृतधर्माविरुद्धभोगसामग्रीसौख्यमनुभवन्तः पुरुषार्थचतुष्टये प्रथमचरमयोरेव परमतां मन्यमाना मथुरामेवाध्यवात्सुरखिलजगदीशितुरतिरिक्तं कमपि रक्षितारमनीक्षितवन्तः।

अथ समुपायातेषु तत्तदाक्रान्तृदानेषु विद्याविवेकविहीनतया श्वापदसमानेषु महोपद्रवप्रधानेषु मुसलमानेषु नैसर्गिकेण पौरुषेण पराभवमनाप्नुवन्तोऽपि

धर्माचरणेषु तन्निमित्तकमन्तरायमसहमानास्तदीय-शिबिरतामापद्यमानयोः सुरेन्द्रप्रस्थयोः ( आगरा-देहली) मध्यस्थां निजाभिजनभुवमनवरतोपद्रवसमाकुलतया समपहाय शरण्यमहाराणासमाहतास्तदानीन्तनधर्मवीरशरणभूतं चित्रकूटदुर्गं च ततः परस्तान्मेदपाट(मेवाड़)महाराजधानीमुदयपुरं च समुपाजग्मुर्विक्रमस्य त्रयोदशीं शताब्दीमारभ्य सप्तदशीं शताब्दीं यावत्, समभूच्च तस्मिन समये सेयं मेदपाटमहीमाथुरमहीसुराणामुपनिवेशभूमिरिव । तेष्वेव किल चरितलेखकस्य च चरितनायकस्य च पूर्वजा अप्यासन्निति विश्रूयते ।

तेष्वेतेष्वन्यतमः सौश्रवसगोत्रः सौश्रवस-दैवरातौद्दलेतित्रिप्रवरान्वितनन्दिग्रामोपनामा ऋग्वेदाश्वलायनशाखाध्यायी स्ववंशाम्बुधेरधिमुक्तामणिरिवानन्दमणिरानन्दयन्नमन्दमवनीपतिं तदानीन्तनमखिसहरौरात्मीयैर्गुणगणैरुपासेदिवानस्य विश्वासपात्रताम् ।

तत एव च महाराणामहाभागेन सुभूरिविमर्शानन्तरं जयपुरनरेन्द्रनामागमनानस्य निजदौहित्रस्य प्रथममाधवसिंहस्य सत्कृतास्त एव समुपयुक्ताः सह-यान इति विमृश्य तदीयरीत्या व्रजनागरामकाली माधवसिंहमात्रा स्वदुहित्रा सह प्राहीयेताम्, प्रदाय ससंमानमश्वरथादिकं निर्वाहसाधनानि । स एवायमानन्दमणिरस्मच्चरितनायकस्य परिज्ञातो मूलपुरुषः । आरभ्य चैनमेवमयमुपपद्यतेऽस्य वंशवृक्षः—



अस्य मूलपुरुषस्यानन्दरामस्य पौत्रः श्रीव्रजलालजी महानुभावो जयपुरनरनाथस्य 'व्रजनिधि' त्युपनाम्ना सुप्रसिद्धस्य व्रजभाषासुकवेः साहित्यरसिकस्य च श्रीप्रतापसिंहमहाराजस्य सुकविजनसभायाः सुसंमतः सदस्य आसीत्। अनेनैव च महात्मना तस्मान्नरपते रामलालव्रजलालहरलालमहाशयानां नाम्ना यशोदानन्दनपुरेत्यभिधानः 'धूली' त्यपराभिधानो ग्रामः स्वतन्त्रा च काचन भूमिः समासादितौ, याविमाविदानीमप्यस्मच्चरितनायकस्याधिकारे वर्त्तेते। रामलालशर्मनिर्मितस्य श्रीवाल्मीकीयरामायणभाषानुवादस्य च्छन्दोमयस्य कियाँश्चिद् भागः तत्कृतरामायणात्मिकाः स्फुटकविताश्च समुपलभ्यन्ते।

अस्य महाशयस्य पौत्रस्तद्दत्तकपुत्रस्य श्रीजगन्नाथस्य पुत्रः श्रीसुन्दरलालोऽपि सुकविरासीत्। तेन हि राजाज्ञया सत्यवर्णने 'सत्य-शतकं' नाम निर्ममे कमनीयं काव्यम्। येन सन्तुष्य तदानीन्तनो जयपुरनरेन्द्रोऽस्मै प्रत्यपादयत् पारितोषिकम्। सेयमस्य वंशवृक्षस्य द्वितीया शाखा महाशयमेनमुपागम्य विरमति।

अथ प्रथमशाखायां श्रीरामजीप्रपौत्रः श्रीगोपालजीमहाशयस्य नानगढदुर्गसमीपवर्तिविष्णुपुर (बिसनपुरा) ग्रामाभिजनरावलकुलजातश्रीधौकलरामपुत्र्यां श्रीजोधीदेवीत्याख्यायां धर्मपत्न्यां जातः। श्रीजीवनलालजीमहानुभावो माथुरेषु सुप्रतिष्ठितो धनिको महाव्ययशीलश्च विवाहादिमहोत्सवेष्वासीत्। नैतावदेव, अपि तु सुकविरप्ययमभूत्। एतत्प्रणीतकवितासु मधुरावर्णनम्, मथुरामाहात्म्यस्य खण्डितोऽनुवादः स्फुटकविताश्चोपलभ्यन्ते। वयःपरिणामेऽपि पुत्रमुखमदृष्टवता महानुभावेनानेन वंशयाऽस्य सद्य्येव विरामो मा भूदिति समालोच्य जयपुरराज्यान्तर्गत-हिण्डोननगरवास्तव्यस्य सामवेदराणायणीयशाखाध्यायिनो भारद्वाजगोत्रस्य स्वभगिनीपतेः पाण्डेय-रामबक्ससुतचन्द्रनारायणस्य पुत्रः सौशील्यसदाचारादिसद्गुणसंपन्नः श्रीगोकुलचन्द्रश्चन्द्र इव स्वकुलमुज्ज्वलयिष्यतीति दत्तकत्वेन प्रतिगृहीतः। सोऽयमेवास्मच्चरितनायकस्य पूज्यः पिता। अस्य कनिष्ठो भ्राता श्रीदुर्गाप्रसादश्च हिण्डोननगरे स्वपितुरुत्तराधिकारी जातः। सोऽपि तु जीवनकालस्याधिकं भागं ज्येष्ठभ्रातुः कार्येषु सहकारितायामेव व्यत्यगमयत्। आसीच्चास्मच्चरितनायके परमवात्सल्यभाक्। तस्य त्रिषु पुत्रेषु चरितनायकस्य भ्रातृस्नेहभाजनेषु वंशीधरमुरलीधराख्यौ द्राक्काल एव स्वः प्रयातौ कनिष्ठो गङ्गाप्रसादस्तु हिण्डौननगरमधिवसति।

अथैतदपीह नाप्रासतम्। यथाऽस्मच्चरितनायकस्य कुलं व्रजभाषासुकवित्वेन सुप्रसिद्धमासीत्, तथैवास्य पितामही च माता चेत्युभे अपि सुकविकुलप्रसूते आस्ताम्। तथा हि—जीवनलालजीमहाभागस्य धर्मपत्नी श्रीमङ्गली देवी जयपुरराज्यान्तर्गत-टोढा-रायसिंहग्राम-(अयमेव ग्रामोऽस्य लेखकस्यापि जन्मभूमिः) वास्तव्यस्य भारद्वाजगोत्रोत्पन्नस्य नसवारेत्युपनामकस्य जगनकवीतिनाम्ना सुप्रसिद्धस्य व्रजभाषाकवेः श्रीजगन्नाथजीमहानुभावस्य बभूव दुहिता। जगनकविरयं सरलसुन्दरैः पद्यैः पद्यप्रणयने परमप्रसिद्ध आसीत्। शैशवे स्वपितृव्यादिमुखेन तेषु कानिचिच्छ्रुतान्यपि पद्यानि न संगृहीतानीति भवति खेदः। साम्प्रतं तु तद्वंशस्योच्छिन्नप्रायत्वादाधुनिकानां च तादृशपद्यकण्ठस्थीकरणप्रयासशून्यत्वात्तत्संग्रहवार्त्तैव विलयमुपयातेत्यस्ति विशेषतः सः। अस्तु।

चरितनायकस्य माता च श्रीमती लवङ्गी (लौंगो) देवी अलवरराज्यान्तर्गतराजगढसमीपवर्तिगोबिन्दपुराग्रामे गृहीतजन्मा 'संग्रामसार'-'रसरहस्या'दिसुप्रसिद्धव्रजभाषाकाव्यानां प्रणेतुः श्रीकुलपतिमिश्रस्य

सं० र० दर्शनाङ्कः



चतुर्वेदमहाभागानां

पितृचरणाः

स्वर्गत

पं० श्रीगोकुलचन्द्र

चतुर्वेदाः ।









गुरुवर्य्यश्रीलक्ष्मीनाथशास्त्रिद्राविडानां

पृष्ठे पं० सूर्यनारायणाचार्यः

चतुर्वेदमहोदयश्च ।



वंशे प्रसूता । वंशेऽस्मिन्नस्मासु परमकृपावतः श्रीभगवतीप्रसादस्य सुपुत्रः श्रीहीरालालन्दनुनोऽम्बिकाप्रसादश्च रेलवेविभागे कार्यं कुर्वाणानामतः । यद्यपि सौश्रवसगोत्रीयमिश्रकुले स. नित्यानन्दरोराध्यक्षान्‌वित इतसम्बन्धो नोपपद्यते तथापि यद्याऽसौ चरितनायकस्य पिता हिण्डौननगरे पाण्डेयकुल एवार्मानन्द्व परिणयस्य संवृत्तत्वाच्छङ्कां यं नादधानि पदम् ।




नेदं परमधर्मिकानुमतं विधिविहितं विधिर्मयैन मानुष्यकं यं... पालयन्तं ...नामस्य ... कियान वा भवेदभ्यवसाय इति कथयामः कथमिवादीनि कविवरोऽपि कोऽपीति रसवर्णनलालाम्याम्तु सह... ।

अथ परमधार्मिकयोरपि चरितनायकस्य मातापित्रोर्यदा षट्-सप्तपुत्राः शैशव एवोपरताः तदा पितामहाश्च पितामहस्य च निर्देशमनुसृत्य दृढधर्मश्रद्धावस्य जननाजनकौ वर्षपर्यन्तं निराहारं रविवासरव्रतमन्वतिष्ठताम् । पितामहेन च ब्राह्मणद्वारा निरन्तरं सप्तशतीपाठानुष्ठानमारब्धम् । नैतावदेव किन्तु मेदपाटाभिजनत्ववासनावासितस्वान्ततया सर्वैरेभिर्महानुभावैरेकचित्तीभूय तद्राज्यान्तर्गतस्य तद्देशीयजनतायाः परमोपास्यस्य *गड्बोरग्रामे प्रतिष्ठितस्य गड्बोरनाथापरपर्यायस्य भगवतः श्रीचतुर्भुजनाथस्य मन्दिर एव मुण्डनविधिरुत्पत्स्यमानस्य बालकस्य विधास्यत इति प्रतिज्ञाऽपि सभक्तिभावं समकल्प्यत ।

तदेवं तपो-मन्त्रानुष्ठान-भगवद्भक्तीनां समुदितफलत्वेनैतत्त्रितयस्य मूर्त्तमत् स्वरूपमिव महाभागोऽयं विक्रमार्कराज्यसमयादष्टत्रिंशदुपरष्टैकोनविंशतिशतेषु (१९३८) वत्सराणां समतीतेषु शुक्लस्यसितपक्षे दशम्यां तिथौ निशामुखे पित्रोश्च पितामहयोश्च परमानन्दसन्दोहमुद्भावयन्नाविर्बभूवायं समाजादिभिरुपद्रुतमवितुमिव सनातनं धर्ममनुपमया मननपूलिकया वक्तृत्वशक्त्या च शास्त्रानुसारिणा सविधिप्रमनुष्ठानेन च ।

अथैवमतिशयेन मनसि लालयति बालभावे परमोत्सुकेन धर्मनिबद्धश्रद्धेन च पितामहेन 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीते'ति श्रुतिवचनमनुस्मरताऽष्टवर्ष एवायमुपानीयत परिणयोत्सवमप्यतिशयानेन महता समारम्भेण । प्रेमातिभरनिर्भरान्तःकरणतया च वियमानेऽपि पितरि पितामहेन पौत्रोऽध्ययनुपानीयत पात्रतां सावित्र्याः समुपदेशदानस्य सुबुद्धिमानयमग्रे विद्याव्रतस्नातकतामासाद्य दिग्दिगन्तराणि समुज्ज्वलयदात्मीयेन च तदीयेन च ब्रह्मवर्चसा वर्चस्वितामासादयेति ।

न केवलमुपनयनमेव, किन्त्वन्ये साधारणसंस्कारा अपि सोत्साहसमारम्भमन्वष्ठीयन्त पितामहेन पारम्परिकप्रतिष्ठापालनसावधानेनानुसन्दधानेन धनव्ययमनन्यसाधारणम् ।

अथानतिक्रान्त एव नवमे वर्षेऽनवमेन पितामह्या महौत्सुक्येन तत्सामयिकबालविवाहकुप्रथामनतिवर्त्तमानेन विद्याध्ययनेन्तरायसम्पातमप्यगणयता पितामहेनैव जयपुर नगर एव निवसतो भारद्वाजगोत्रस्य रावतोपनामकस्य पितामहीकुलं मातृकुलं

*ग्रामोऽयं संप्रत्युदयपुरान्मारवाडजङ्क्शनेति ख्यातं स्थानं गच्छतो मेवाडराज्यरेलमार्गस्य गड्बोरोडनामकबाष्पशकटीस्थानात्(स्टेशन)क्रोशचतुष्के वर्तते ।

चानुसरति सुकवित्वेन विश्रुते वंशेऽधिगतजन्मनः श्रीरघुनन्दनसुकवेः पुत्रस्य श्रीछबीलजीमहाशयस्य सुलक्षणया विद्यादेवीति संगृहीताभिधानया ज्येष्ठयाऽऽत्मजया सह सुमहतोत्साहेन समपाद्यत पाणिग्रहणमहोत्सवः।

तदेवमस्मच्चरितनायकस्य शैशवचरितोपसंहारः सुकविशिरोरत्नस्य भगवतो भवभूतेः पद्यमेव यथाप्रसङ्गं परिवर्त्य प्रकारेणानेन कर्तुं शक्यते :—

पितामहेषु जीवत्सु नवे दारपरिग्रहे ।
पितामह्या लालितस्य प्रयातं प्रथमं वयः ॥

---

# विद्याभ्यासो गुरवश्च

( ले०—पं० पुरुषोत्तमशर्मा चतुर्वेदः साहित्याचार्यः, मेयोकॉलेज, अजमेर )

तदेवमधस्तादुक्तविधया विविधसत्कर्मानुष्ठानसत्फलत्वेन गृहीतजन्मनोऽस्य जन्मत एव —

'भविष्यतां सुवृक्षाणां भवन्ति मसृणाश्छदाः'
( 'होनहार बिरवान के होत चीकने पात' )

इति न्यायमनुसृत्य प्राकृतिकीं प्रगल्भतां प्रेक्ष्य दिष्टविदादिष्टे सुमुहूर्त्ते पितृचरणैरेव विनायकादिपूजनपुरस्सरमक्षरारम्भः संपादितः। अथ कतिपयैरेवाब्दैभिः सरलपुस्तकपठन-नामलेखनादिना प्रत्यायितप्रतिभाप्रभावमेनं प्राचीनया परिपाट्या प्रथमममरकोषं घोषयामास पाण्डेय-रम्याबल्लभजीमहानुभावश्चतुर्वेदः। तदित्थं परिणयनपर्यन्तमस्य स्वकीये गृह एव आसमूच्छिन्नाध्ययनः।

अथ भगवदवतारभूतमहात्मस्यस्य कायमिव प्रतिपलमेधमानां मेधाविनोऽस्य जिज्ञासावृत्तिं निजगृहेऽनिवर्तमानामवलोक्य पितामहेनाऽनवमशुभोदये तस्मिन्नेव वर्षे निजनिवासनिकट एव विद्यमाने जयपुरमहाराज-संस्कृतविद्यालयेऽक्रियत सहसमधिकविद्याभ्यासाभिनिवेशः प्रथमश्रेण्यां संप्रवेशः। अभूतां च श्रीकन्हैयालालव्यासो भाषाशिक्षणे, श्रीरामचन्द्रगणकश्च गणितभणितौ प्रथमाध्यापकौ।

क्रमेण च समेधमाने पठनाभ्यासे श्रीमदनलालजीगौडमहोदयात्सुगृहीतलघुकौमुदीपूर्वार्धस्यास्य तदानीन्तनः प्रवेशिकाश्रेणीप्रधानाध्यापकः सदाचारादिसर्वविधसद्गुणगणश्चतुर्वेदीपारायणप्रवणहृदयतया चतुर्वेदीत्यनुगताभिधेयं स्वजातिनामधेयमुपादधानः श्रीजानकीलालबहोरामहानुभावो बभूव प्रमुखशिक्षकः प्रवेशिकाकक्षायाम्। महात्मनोऽस्य वरदेन पाठनप्रभावेणात्मनो नैसर्गिकैर्जिज्ञासादिभिर्गुणैश्चायमधिजगाम सर्वाधिकानङ्कानस्यां परीक्षायामलभत चेतः प्रभृत्येव परमां प्रसिद्धिं प्रथमसच्छात्रत्वेन संस्कृतविद्यालये। अध्यक्षमहोदयश्चास्य विद्यालयस्य श्रीलक्ष्मीनाथशास्त्रिमहानुभावोऽप्यस्मिन्ननुपमेयामनुरागपरम्परां बिभराम्बभूव तत एवारभ्य। काव्याध्यापने सुप्रसिद्धो नाँगल्या-इत्युपनामा श्रीगोपीनाथदाधीचः, साहित्यस्य प्रधानाध्यापकः श्रीकृष्णशास्त्री चास्यां कक्षायां काव्यमशिक्षयताम्। भारतसु-

प्रसिद्धो नैयायिकप्रवरः श्रीभद्दनाथठक्कुरमैथिलमहाशयश्च न्यायस्य प्रारम्भिकीं शिक्षामदात्। तदानीन्तनः शिक्षाविभागाध्यक्षः श्रीकमलापतिवन्द्योपाध्यायमहाशयश्च स्वयमस्मै कृपया भूगोलमपाठयत्। श्रीगोपीनाथदाधीचमहोदयात्तु अयमपि काव्यानि छन्दःशास्त्रं चास्मच्चरितनायकोऽध्यगात्।

यद्यपि तदानीन्तनकुप्रथामूलकेन बाल्यविवाहेनैव प्रतिबध्यमानमिवास्याध्ययनमासीत्, पितृप्रभृतयो गुरुजनाश्च, विशेषतो माता च पितामही च स्वास्थ्यमस्य मा भूत् प्रतिहतमिति न केवलमध्ययनेऽनाग्रहा ननु रोचयन्त एवासन् किन्तु समधिकपरिश्रमान्निवारयामासुरपि। पितामहोऽस्यासाद्विद्याप्रणयी, स च द्वादशवर्षवयस्क एव चरितनायके स्वर्गत इति तदनन्तरं विशेषाध्ययनस्य न कापि प्रेरणासीत्, तथापि प्राक्तनसंस्कारसंचितां परस्परविरुद्धयोरुभयोरपि १ विद्ययोः प्रणयपरम्परामयमप्रतिहतामेव पालयामास पद्मालयापतिरिव पक्षगराजपतगेश्वरयोः।

अथ विधमानमेधाविभवः सुधीरयं सुप्रसिद्धस्य विदुषो राजगुरोर्मैथिलपुङ्गवस्य श्रीनरहरेः सकाशात्समारभ्य, ज्येष्ठपुत्रे कार्यभारमासज्य विश्रान्तिभाजि तस्मिन् महानुभावे अध्यगीष्ट सिद्धान्तकौमुदीमुदीरितमात्रग्राहितया मोमुद्यमानमानसाद्राजगुरु-श्रीहरिदत्तकोविदवरात्, तट्टीकाग्रन्थाँश्च प्रागभिहितसुगृहीतनामधेयाद्यथोनिरूपितदिशा प्रवेशिकात एवास्य प्रतिभाप्रभासपर्यवेक्षणप्रचीयमानप्रणयपरवशतां प्रपद्यमानात्तत्तन्मार्मिकस्थलेषूहापोहेन प्रत्यक्षीक्रियमाणप्रेक्षाप्रकर्षेण च नितान्तसन्तुष्यदन्तरङ्गाद्विद्यालयाध्यक्षमहानुभावात् श्रीलक्ष्मीनाथशास्त्रिमहाभागात्।

[illegible] एवमुक्तम्—

"साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
तर्के वा मयि संविधातरि समं लीलायते भारती"

इत्यस्याः श्रीहर्षोक्तेः पुनरुक्ततां विदधानः कविवरभट्टश्रीमथुरानाथादीनां गुरुः गुरुरत्नाम्नैव सुप्रसिद्धः श्रीजीवनाथ ओझामहानुभावः। अयमेवाभवदस्य [illegible]गुरुरपि।

तदेवमेभ्यो विद्वद्वरेभ्योऽधिगतविद्यस्यास्य परीक्षाफलान्यप्यतितरां चमत्कुर्वन्ति केवलं विद्यालयीयविशिष्टपरीक्षास्वेव, किन्तु तत्तच्छास्त्रेषु त्रिविष्टपगुरुणोऽपरमति-प्रतिष्ठितं [illegible] परीक्षकमहोदयानामपि समं [illegible]। तथाहि—[illegible] वाराणसेय-[illegible] श्रीदामोदरशास्त्रिणा [illegible] स्वमभिप्रायम्—"गिरिधरशर्मचतुर्वेदिनः साहित्यशास्त्राभ्यासः प्रशंसनीया चास्योल्लेखपरिपाटी" ति। शास्त्रिपरीक्षायां च संस्कृतसुधीसंसारे सुप्रसिद्धतत्कालीनमहाविद्वन्मूर्धन्यः सर्वतन्त्रस्वतन्त्रः श्रीशिवकुमारशास्त्री "अयं सद्बुद्धिमान् शास्त्रे कृतश्रमश्चास्ते" ति समुल्लिख्य स्वप्रसादं प्रकटयामास। आचार्यपरीक्षायान्तु महानुभावेनानेनास्मच्चरितनायकाय प्रतिशतं शतमङ्कान् प्रदाय संतोषस्य स्वकीयस्य पराकाष्ठैव प्रदर्शिता।

इदमप्यत्र नाप्रासङ्गिकं स्यात् यच्चरितनायकस्यास्य व्याकरणगुरुः श्रीलक्ष्मीनाथशास्त्री व्याकरणपरिष्कारकाणां जगद्विदितयशसां श्रीबालशास्त्रिणां प्रधानः शिष्य आसीत्। तेन च परितुष्यता महानुभावेन स्वप-

१—पाठकमहानुभावैः प्रसङ्गेऽस्मिंश्चरितनायकस्य प्रथमपत्न्या विद्येति नामासीदिति न विस्मर्त्तव्यम्।

रिष्कारमेव व्याकरणमनेन अहमा अध्यापिता इति तादृशं व्युत्पत्तिप्रागल्भ्यमस्याजृम्भत, यद्वाराणसीतोऽन्यत्राधीतवतां दुर्लभमेव मन्यते लोके ।

शास्त्रिपरीक्षा चाचार्यपरीक्षा च क्रमेण द्व्यधिकैकोनविंशतिशततमे च चतुरधिकोनविंशतिशततमे च (१९०२ तथा १९०४) खीष्टवर्षे सुबुद्धिनाऽनेन समुत्तीर्णे इत्यपि नोल्लेखनानर्हं वत्सरगणनामेव विशिष्य विभावयतामाधुनिकैतिहासिकपुङ्गवानां कृते । तदेवं व्यतिकरशतमप्यवगणय्य महानुभावेनानेन स्वजन्मतश्चतुर्विंश एव वर्षे व्याकरणाचार्यता समधिगता ।

पञ्चाधिकैकोनविंशतितमे १९०५ खीष्टीयवत्सरे जयपुरराजकीयविद्यालयाल्लब्धविशिष्टोपाधिकोऽपि भारतसम्राड्विहितनियमेनाऽपि स लब्धवानिति संकल्प्यावमुत्तनार लवपुरीयविश्वविद्यालयप्रचालितामपि शास्त्रिपरीक्षां न्यायदर्शनं विकल्पेषु गृहीत्वा समयाप च समग्रविश्वविद्यालये सर्वमान्यं सर्वप्रथमस्थानम् । परीक्षाचणश्च महतातिरिक्तसमीक्षापरीक्षाऽपि (एडिशनल टेस्ट एग्जामिनेशन) पारितैवेति लेखनमपि नेह न प्रसङ्गप्राप्तम् । आङ्गलभाषाशिक्षा चानेन श्रीभैरवप्रसादमिश्रात् श्रीकालीचरणमहाशयाद्वङ्गदेशीयाच्चाधिगता ।

किम्बहुना यासु यासु परीक्षास्वयं प्रविष्टस्तासु सर्वास्वपि सर्वप्रथमतायामासीदस्याप्रतिद्वन्द्व्यधिकार (मोनोपोली) इति तु निश्चप्रचमेव । अस्या घटनाया महत्त्वं तदा विशेषतो विज्ञायेत यदास्य सहाध्यायिनां श्रीचन्द्रदत्तमैथिल-श्रीसूर्यनारायणाचार्यप्रभृतीनां नामसु दृष्टिपातः क्रियेत । ईदृशेषु सहाध्यायिषु प्राथम्यलाभः सत्यं गौरवास्पदम् । सेयं पाठशालीयगुरूणां पाठशालीयपरीक्षाणां तत्तद्विषयाणां च कथा । किन्तु यदीयं विद्यावैभवमवाप्यैव महाभागोऽयमयासीदत्यनितरसाधारणीं धर्मधुरन्धरतां, यश्चास्यासीद् वेद-पुराण-दर्शन-ज्यौतिष-धर्मशास्त्रादिनानाविषयाणां न केवलमध्यापक एव किन्तु स्वकीयेनाद्वितीयेनादृष्टपूर्वेण च प्रतिभाप्रभावेण सर्वविधसंशयानामपाकर्त्ता, यतश्चायं शास्त्रिपरीक्षोत्तरणात् प्रथमाब्दमारभ्या-कैलासवासप्रथमदिवसमध्यैष्टसप्तत्रिंशता वर्षैः तानिहानि वेद-विज्ञानरहस्यानि । तस्य चतुर्दशविद्यास्थानाधिदैवतस्य सर्वतन्त्रस्वतन्त्रस्य द्वादशदर्शनीपारदृश्वनः पण्डितसभा-प्रधानस्य वेदविज्ञाननिधानस्य विद्यावाचस्पतेः श्रीमधुसूदनओझामहानुभावस्य नामधेयं कथं नाम प्रथमतां परिजहातु गुरुगणस्य, परममपि स्मरणपथमुपयातम् । महानुभावस्यास्य यादृशमसदृशं प्रेम प्रत्यक्षीकृतमस्मच्चरितनायके जनेनानेन, न तादृशमितरेषु धनार्जनाय तदभिख्यां प्रख्यापयत्स्वपि परेषु दृष्टचरम् ।

तदेवमितिहासमिमं विद्याभ्यासस्य समासतो निरूप्य समापयन्ती लेखनीयमवसरेऽस्मिन्नेतदलेखनीयमनुभवति विशिष्टविद्यागुरुचतुष्टयीविषये—

यस्याः स्थूलशरीरकच्छुरितः श्रीजानकीलालविल्लक्ष्मीनाथबुधश्च सूक्ष्मवपुषः संपादकः सन्मतिः ।<br>
हेतुः कारणविग्रहस्य च सुधीः श्रीजीवनाथो गुरुर्जीवः श्रीमधुसूदनो विजयते मातेव विद्याऽस्य सा ॥

॥ इति शुभम् ॥

मं० र० दर्शनाङ्कः——•



पण्डितश्रीजीवनाथशर्ममैथिलमहाभागाः
चरितनायकस्य दीक्षागुरवः विद्यागुरवश्च ।

महामहोपाध्याय-श्रीगिरिधरशर्मणश्चतुर्वेदमहाशयस्य

# सौहार्द-संस्मरणानि



( ले०—पं० श्रीसूर्यनारायणशर्मा आचार्यः जयपुरम् )

श्रीगिरिधरशर्मभिः सहास्माकं परिचयश्छात्रावस्थाया एव जातः। यदा वयं संस्कृतपाठशालायामुपाध्यायश्रेण्यां पठन्त आस्म तदैतैर्भिस्त्रिभिरेव वर्षैरुपाध्यायपरीक्षां दातुमुत्साहिता वयं तथैवाकुर्म प्राप्नुवन्तश्च साफल्यम्। शास्त्रिवर्गात्समारभ्य त्वस्माकं सहाध्यायितैव जाता। तृतीयस्त्वस्माकमासीत् सहाध्यायी श्रीचन्द्रदत्तशर्ममैथिलमहाभागः। सहाध्ययनयोगेनास्माभिर्विदितं यदेतेषां बुद्धिः सूक्ष्मा, मेधा महती, मननशक्तिः शोभना, श्रुतधरत्वं चासीत्। यदा वयं श्रीगुरोः सेवायामुपस्थाय पाठमश्रौष्म तदा स्फुटच्छुरणमात्रेणैवैषां सर्वोऽपि विषयोऽवगतोऽभवत्। मध्याह्ने पुनर्मननकाले बहूनस्मन्मनोगतान् सन्देहानेते न्यवारयन्। प्रातःस्मरणीयाः श्रीगुरवो न केवलं शब्देन्दुशेखरस्य मूलमेवापाठयन् किन्तु तेषु तेषु स्थलेषु परिष्कारानप्युदपाटयन्। स च परिष्कारविषयः सर्वैरेवास्माभिः स्वस्वगृहमेत्य लिख्यते स्म प्रदर्श्यते स्म च गुरुवरेभ्यः। यद्यपि गुरुवराः सर्वेषामप्यस्माकं लेखशक्त्या नितान्तमतुष्यन् परं तथापि प्रौढ एतेषामेव लेखो विशेषेणामन्यत। एवं क्रमशोऽस्माभिस्त्रिभिरेवाचार्यपरीक्षा प्रथमश्रेण्यामुत्तीर्णा। अस्माकमुत्तमप्रकारेण साफल्यं ज्ञात्वा गुरुजनानामिवास्माकं कुटुम्बिजनानामपि चेतस्सु महान् संतोषः प्रमोदश्चाभवत्। आचार्यपरीक्षोत्तरणानन्तरमप्यस्माकं विद्यावृद्धिकामना न निवृत्ता। तथा च तदनन्तरमेवास्माभिः पञ्जाबविश्वविद्यालयस्य शास्त्रिपरीक्षा दत्ता तत्रापि च साफल्यमवाप्तम्। 'हिमं मा'नाम्नी काव्याङ्गलभाषापरीक्षाऽपि दत्ता, तत्रापि च सफलताऽवाप्ता।

एतस्मिश्छात्रकाले भूयसा सहवासेन सुदृढोऽस्माकं सौहार्दसम्बन्धो जातः। अस्माकं सहपाठस्त्वासीदेव परं समये समये वयं विविधान् विनोदानप्यकार्ष्म। गालवाश्रमे स्नानसुखाऽऽस्वादनाय त्वस्माकं प्रतिवर्षमतु बहुवारं गमनमभवत्। घाटोद्यानमपि बहुधाऽगच्छाम। बलदेवगढनाम्ना प्रसिद्धं महोच्चपर्वतशिखरस्थितं वर्षास्वद्वितीयशोभाविभूषितं सुन्दरसरोवरमण्डितं स्थानं त्वस्माकं बह्वेव चित्ताकर्षकमासीत्।

उत्तुङ्गशैलशिखरस्थितपादपैर्नीलै-
गुल्मैस्तृणैश्च कुसुमैश्च परिष्कृतं सद्।
धाराधरेषु विनदत्सु सुवारिधारा
मुञ्चत्सु विद्युदवलीरपि दर्शयत्सु॥
सौहार्दपूर्णहृदये सुविनोदवार्ताः
कुर्वत्यथो सखिगणे सविलासमेव।
तत् सुप्रसिद्धबलदेवगढं न कस्य
चित्तप्रसादमतुलं वितनोति लोके॥

एवमस्मिन् बलदेवदुर्गे बहुकालपर्यन्तं स्नानसौख्यमास्वाद्य, ततश्च दृश्यमानाः श्यामायमानाः सुदीर्घाः शैलकाननावलीरवलोक्य पर्वतीयेनैव पथा घाटोद्यान-

मवातराम । तत्रनितन्तेबांद्याने विविधव्यञ्जनवरित्रर्धित-रसाऽस्माकं भोजनव्यवस्थाऽभवत् । घाटनाम्ना प्रसिद्ध-मिदं स्थानमपि द्वयोरपि पार्श्वयोः समुन्नतपर्वतश्रेणि-सन्निवेशेन कामप्यपूर्वामेव सुषमां परिधत्ते ।

घाटोद्यानमिदं सुरम्यगिरिभिः संवेष्टितं सर्वतः
प्रावृट्कालमवाप्य नूतनतृणैः संछन्नमत्यद्भुताम् ।
लब्ध्वा कान्तिमसंख्यदर्शकजनान् संबोधयद् वै बलात्
स्वीयां प्राकृतदृश्यमूर्धमणितां प्रस्फोटयत्यग्रतः ॥

कदाचित्तत्रस्माकं सखिप्रबन्धो गालवाश्रमेऽक्रियत ।

धन्योऽत्यन्तसुरम्यपर्वतगतः सोऽयं मुनेराश्रमो
मध्ये पावनकुण्डमण्डलमहादेवालयैर्मण्डितः ।
वर्षास्वद्भुतसौष्ठवेन सुहृदां चेतश्चिरं तोषयन्
भूयोऽस्मत्सुहृदोऽपि चेतसि महानन्दप्रदोऽजायत ॥

कदाचिद्वास्मन्मित्रमण्डली प्रभातपुरीमहोदयस्य जलप्रपातस्थलमभ्यगच्छत् ।

शैलात्तुङ्गविशालशृङ्गान्निपतन् सोऽयं प्रपातोऽम्भसां
कुर्वन् भीषणशब्दमब्दपटलीगर्जत्क्षयादितः भवेत् ।
द्रष्टॄणां नयनोत्सवं गुरुतरं कुर्वन् कलाकौशलं
स्रष्टुः ख्यापयति प्रकाशयति च प्रौढं प्रबन्धं हरेः ॥

एवमेवाम्बापुर्यादिषु सुप्रसिद्धस्थानेषु मनोविनोदार्थमगच्छत् मदीयमण्डली ।

अम्बापुरी परमपावनशैलदेवी-
बिम्बोज्ज्वला विमलवारिसरोयुता च ।
प्राचीनदुर्गगुरुहर्म्यविभूषिता च
चेतो विनोदयति पावयति प्रकामम् ॥

एवं छात्रावस्थायां स्वाध्यायशीलोऽप्येष महापुरुषः केवलं पुस्तककृमिरेव नासीत् किन्तु युवावस्थोचित-मनोविनोदनोपायेष्वपि कुशल आसीत् ।

अध्येतव्यमवश्यमेव सुधिभिः किन्तु स्वशक्तिस्फुरत-श्चिन्ताभारनिवारणाय विविधाः सेव्या विनोदा अपि ।
सन्मार्गेण च सत्सुहृद्भिरखिलं लोकोपयुक्तं सुखं
सेवेतेति समस्तशास्त्रनिचयैः सिद्धान्तितो निर्णयः ॥

अनेन प्रकारेण विद्याध्ययनकाले लोकदृष्ट्या समाप्ते, सुसंस्कृतशेमुषीकोऽयं विद्वान् सर्वतः पूर्वं सहारनपुरस्थ-जैनविद्यालयेऽध्यापकतामलभत । यद्यपि तस्मिन् काले जैनदर्शनानां नासीत् पूर्णतयाऽभ्यासस्तथापि 'किमगम्यं बुद्धिमताम्' इत्यभियुक्तोक्तिं सत्यां प्रमाणयता-ऽनेन स्वल्पेनैव परिश्रमेण जैनग्रन्थानां सुगूढमप्या-शयमवगत्य तथा छात्राः पाठिता यथा तेऽस्याध्यापन-परिपाट्या परमपरितुष्टा अभवन् ।

शब्दशास्त्रमधिगत्य यैः कृतो
दर्शनस्य विषयेऽपि सुश्रमः ।
का त्रुटिस्तु खलु तादृशां विदां
जैनग्रन्थपरिपाठने भवेत् ॥

किं चायं बुद्धिमच्छिरोमणिर्न केवलं पाठनकार्य एव संलग्नोऽतिष्ठत् किन्तु समये समये धार्मिक-व्याख्यानैरपि लोकानां मनांस्याकृष्टान्यकरोत् । तेन शनैः शनैरस्य कीर्तिः प्रासरत् । तत्फलत्वेन चायं हरिद्वारस्थ ऋषिकुलब्रह्मचर्याश्रमे प्रधानाध्यापकत्वेन सबहुमानमामन्त्रितस्तत्र गत्वा वास्तविककार्यक्षेत्रेऽव-तीर्णोऽभवत् ।

बुद्धिमांश्च चतुरश्च पण्डितो
ज्ञानबुद्धिकृतिसौष्ठवाश्रयात् ।
मधविकासमिव पङ्कजं जनै-
र्मधुलिड्भिरिव सुखं निषेव्यते ॥

तत्राऽपि वैदुष्येण, प्रागल्भ्येन, नीतिपथेन च सर्वां व्यवस्थां कुर्वताऽनेन स ब्रह्मचर्याश्रमस्तथा प्रचा-

लिनो यथा धनस्य, धान्यस्य, आश्रमोचित[illegible]स्थान[illegible]स्य, धनिनां बुद्धिमतां विदुषां च सहयोगाय पुनितया अभि-रभवन्। धनसंपन्नानां भद्रमण्डलेन सह कालिकतादि-नगरं [illegible]ऽनेन स्वभावगम्भीरतया जनता तथा मनो-पिता यथा सर्वेऽपि जना एतस्मिन् महतीं श्रद्धामकुर्वन्।

अहमपि समये समये हरिद्वारमगच्छम्। तत्र च वार्षिकोत्सवादिषु व्याख्यानान्यप्यददाम। तैश्च संतो-षिता तत्रत्यप्रबन्धकारिणी मण्डली मामपि शिक्षासमितेः सदस्यत्वेनावृणोत्। तेन च प्रसङ्गेन चतुर्वेदमहोदयेन सह भूयोभूयः संसर्गस्यावसरलाभोऽभवत्। किंच संस्कृतसाहित्यसम्मेलनस्य भिन्नभिन्ननगरेषु जाय-मानेष्वधिवेशनेषु सहैवावामगच्छाव। अहो चिर-स्मरणीयमिदं संस्कृतसाहित्यसंमेलनम्।

यां भाषां निगदन्ति केचन जना व्याहारबाह्यां तथा
केचिद् भिक्षुजनैकपाठ्यविषयां केचिन्मृतां निष्फलाम्।
तस्याः सद्गुणसद्विचारसरणिं सम्यग्विचार्योद्भटं
यत्नं कर्तुमहो प्रकामनिरतं साहित्यसंमेलनम्॥

तदित्थं साहित्यसम्मेलनस्य धर्मसभानां च प्रसंगेन हरिद्वार-प्रयाग-कुरुक्षेत्र-मथुरा-नासिकादि-तीर्थस्थलेषु [illegible] सहयोगः। तदनन्तरं [illegible] [illegible]वर्ग-[illegible]विभागे [illegible] निपुण-तया [illegible] कार्यमकरोद्, यथा [illegible] पश्चादनु-[illegible] वर्णानुयायिनो जनता परं [illegible] स्म। तस्मिन्नपि समये यथावसरं सहाध्यासनप्रसंगः समायात एव। पश्चाच्चायं महाभागः संस्कृतपाठशालाध्यक्षत्वेन जयपुरेऽपि एकोनविंशतिवर्षपर्यन्तं कार्यमकरोत्। एतस्मिन् काले तु भूयानेव सहाध्यासनप्रसङ्गोऽभवत्। ततश्चाहमस्य श्रीगिरिधरशर्मणो जीवनस्य मुख्यभागे सहाध्यायी, सहविहारी, सहसंभाषी, स्वधर्मानुयायी चाभवम्। एतेनास्य स्वभावादिपरिचय एवंविधः प्राप्तः।

बाल्यादेव द्रढीयसी गुरुजनेष्वास्था च धर्मे रतिः
सत्यस्य व्रतपालने स्थिरमतिर्विद्यारुचिः श्रेयसी।
कीर्तिप्राप्तिविधौ च हार्दिककृतिर्द्रव्यार्जने सन्मतिः
श्रीदुर्गाचरणाब्जसेवनविधौ भक्तिः स्तुतौ चादरः॥

स्वभावः शान्तोऽपि प्रकटयति कोपं परिभवे
स्वधर्मेष्वाक्षेपः कथमपि न सह्योऽस्ति हृदये।
दया दीनेष्वास्ते सुहृदि च दृढं प्रेम, परितः
प्रचारे धर्मस्य प्रबलतमचेष्टा प्रतिदिनम्॥

---

## राजते बुधतल्लजः

( रचयिता—स्व० पण्डितश्रीगोपालदत्तशास्त्रि-महाभागः जयपुरम् )

*यः सर्वदाऽऽहितमना धर्मरक्षणकर्मसु।
सुधीर्गिरिधरः शर्मा चतुर्वेदो गुणप्रियः॥ १॥
यः पाठशालाध्यक्षः सन्नध्यापयति सन्नयः।
सः श्रुतिश्रुतसिन्धुः स राजते बुधतल्लजः॥ २॥

* सुचारुनिबद्धोऽयं खड्गबन्धः, सुधीभिरस्य विन्यासः परीक्षणीयः।

श्रीगिरिधरशर्मचतुर्वेदमहोदयस्य

# यशःप्रसारः सम्मानश्च

( लेखकः—रायबहादुर पं० ब्रजनाथशर्मा गोस्वामी, अध्यक्षः कॉरोनेशनप्रेस, शीतलागली—आगरा )

"शंसन्ति स्निग्धपत्राणि द्रुमाणामग्रिमोन्नतिम्" इति लोकोक्त्यनुसारमस्माकं चरितनायकस्य बाल्य एव वयसि, समारब्ध एवाध्ययनकाले 'कश्चिदयं विलक्षणः शिक्षणसरणाविति' गुरूणां कर्णाकर्णिकया श्रुत्वा वचनानि सहाध्यायिभिरुच्चावचश्रेणिगतैश्च छात्रैर्यशः प्रसारयितुं कृतः खलु पूर्णो यत्नः। जयपुरेऽस्मिन् नगरे सर्वत्र प्रसृतमभूद् यदयं कवीश्वर-कुमारकः प्रतिभायां मेधायाञ्चानन्यसाधारणीं शक्तिं धत्ते। असंदिग्धमयं कतिभिरेवाहोभिः प्रकाण्डपाण्डित्यमात्मसात् करिष्यतीति।

अक्षराभ्यासादनन्तरं व्याकरणाचार्यपरीक्षोत्तरणं यावदनेन महाशयेन 'जयपुरमहाराज-संस्कृतकॉलेज' एवाधीतम्। यस्यां यस्यां श्रेण्यामयं प्रविष्टः, यस्य यस्याध्यापकस्य सविधे च पुस्तकमुद्घाटितम्, तत्र सर्वत्रैव प्राथम्यमभजत। सर्वे च ते परमसन्तोषं प्रापिता उपाध्याया इति मन्ये नेयं साधारणी घटना। तात्कालिकः पाठशालाध्यक्षः श्रीलक्ष्मीनाथशास्त्रिमहोदयः, यो ह्युच्चश्रेणिषु चतुर्वेदमहोदयस्य तीर्थत्वमप्यभजत, सोऽयं महोदयस्यास्याध्ययनेन, सदाचारेण, लेखप्रौढ्या, भाषणेन च परमसन्तुष्टो नैकवारं मध्येसभमवोचत, "यदयं कविकुमारः संस्कृतपाठशालाया अस्याः, अस्माकञ्च मस्तकमुन्नेष्यतीति नांशतोऽपि संशयलेशोऽत्र विधातव्य" इति। अस्मादेव गुरुवचनादनुमातव्यं भवद्भिरस्य भविष्यत्कालिकं कार्यजातम्। आस्तां तावत्; अध्ययनकालमनुरुध्य यो हि लेखनीं सञ्चालयिष्यति मन्ये सोऽत्र विशेषेण दर्शयिष्यति तद्गतां विशेषतामिति नास्माभिरत्र प्रयत्यते।

अत्रेदमेवास्माभिर्वक्तव्यम्—यदध्ययनकालादेव बह्वीभिः संस्थाभिः सभाभिश्चास्माकं चरितनायकस्य ग्रन्थिबन्धनं संजातमासीत्। अल्पीयसि वयस्येव "संस्कृतोपयोगिन्याः सभायाः" सञ्चालनं कियता चातुर्येणानेन कृतमिति जयपत्तनस्थाः प्राक्तना जनाः सम्यक्तया जानन्ति। श्रूयते-अस्याः किल सभाया अधिवेशनं जयपुरजनतानन्दने श्रीरामनिवासोपवने समजायत। संस्कृतभाषण-सौष्ठवप्रसिद्धेरस्येदमेव प्रथमं स्थानम्। महाराज-संस्कृत-विद्यालयेऽपि प्रतिपदि अष्टम्याञ्चाचल्यत तेषु दिवसेष्वेका शास्त्रार्थसभा, यस्यां न केवलं छात्रा एव, अध्यापका महाध्यापकाश्चापि सममिलन्। तस्यामपि वादविवादकरणे प्रचुरं यशः प्रासरज्जयपुरजनतायां महाशयस्यास्य।

अध्ययनकाल एवास्यैकदा मोहमयीस्थ-श्रीवेङ्कटेश्वर-मुद्रणालयाध्यक्षः श्रेष्ठिक्षेमराजमहोदयो मोहमयीतो जयपुरमायातः। तेन हि त्रिपोलियाख्यविपण्यां प्रसिद्धे खलु सुन्दरे राणावतमन्दिरे विराडेका सभा संयोजिता। तस्यां सभायां व्याकरणविषयेऽस्य केनचित्साकं शास्त्रार्थः समभवत्। शास्त्रार्थसन्तुष्टेन श्रेष्ठिमहोदयेन न केवलं भूरि भूरि प्राशंसत्यैवायमपि तु विद्वत्सु सत्कृतः पूजितश्च।



श्रीचतुर्वेदमहोदयाः, राजगुरुपं०श्रीचन्द्रदत्तशर्ममैथिलमहाभागाश्च

[सं० १९५८ वि०]

अध्ययनदिवसेष्वेव—सनातनधर्मप्रचाराय जयपुरसमागतानां सुप्रसिद्धव्याख्यातॄणां स्वामिश्रीहंसस्वरूप—श्रीदुर्गादत्तपन्त-श्रीगणेशदत्तशास्त्रिप्रभृतीनां व्याख्यानमाला अनेन संलग्नतया श्रुता, तेनास्यापि रुचिरस्मिन् विषये प्रावर्तत। पुराणविद्यावाचस्पति-श्रीमधुसूदनझामहाभागैश्च धार्मिकविषयप्रबोधनेनायं प्रोत्साहितः।

तेष्वेव च दिनेषु जयनगरे सनातनधर्मसिद्धान्तप्रचारिणी काचित् 'रामसभा' ऽपि प्रचरति स्म। श्रीवालचन्द्र-शास्त्रिमहोदयः भक्तराजश्रीमुंशीमथुराप्रसादवकीलकमहोदयश्च तस्या नेतृत्वमभजताम्। तस्यां सभायां द्वात्रिंशतिवर्षवयस्केनास्माकं चरितनायकेन धार्मिकविषयानवलम्ब्य व्याख्यानमाला तत्रारब्धा, यथा प्रथमे एव 'ब्रह्मणो नामरूप' विषयके भाषणे मन्त्रमुग्धेव सञ्जाता जनता। सभापतिना श्रीमथुराप्रसादमहोदयेन च मध्येसभमिदमाभाणि "यच्छास्त्रीयं तथाविधः प्रवक्ता भविता, यस्य किल भाषणश्रवणाय समुत्कण्ठिताः पूरुषाः शतशः क्रोशेभ्यः समागच्छन्तीति मे दृढो विश्वासः।" मुंशीमहोदयस्येदं परिपक्वानुभवपूर्णं कथनमक्षरशः सत्यतामगमदिति को वा न जानाति साक्षरो भारतीयः। अहो! पुरुषपरिचयो भक्तराजमहोदयस्य।

अस्यामेव 'रामसभायां' व्याख्यानमालास्य चिरकालं प्रचलिता, यच्छ्रवणार्थं न केवलं साधारण्येव जनता, प्रौढशिक्षिता जना राजकर्मचारिणश्चापि समायान्ति स्म। श्राद्धादिप्रौढविषयानवलम्ब्य कीदृगस्य मार्मिकं भवति स्म भाषणमिति त एव श्रोतारः प्रष्टव्याः।

न केवलं व्याख्यानदाने एवापि तु अध्यापनेपि प्रौढिरर्जितानेनाध्ययनकालादेव। निम्नश्रेणिस्थान् बोध्यच्छात्रान् प्रौढप्रौढग्रन्थानयं निःशङ्कं तथा पाठयति स्म यथा ग्रन्थग्रन्थिविमोकस्तेषां सर्वथा सुकरः स्यात्। किमन्यत्, ये चास्य समवयस्काः, ये चाधुनास्य मित्रमण्डल्यां परिगण्यन्ते तेष्वपि अनेकैस्तदान्वे कतिचिद् ग्रन्था एतस्यैव मुखादधीताः। श्रीकारनाथपाण्डेयमहोदयोपि स्वच्छात्रदशायामेव तथा पाठितोऽनेन यथायमग्रे गत्वा बटोदराराज्यस्य राज-पण्डितत्वमाप्तवान्। अनेनैव विद्वद्भिरनुमेयमस्य पाठनप्रणालीसौष्ठवमपि।

असमाप्त एवाध्ययनकाले कतिभिश्चिन्मित्रैः सहायमुत्साहशीलैः श्रीमधुसूदनझामहाभागैः पुराणान्वेषणकार्यार्थं राजकीये पुस्तकालये नियुक्तः। तदात्व एव परस्परं खैरालापैरेव तथाविधः प्रावर्ततोत्साहो यत् "संस्कृत-रत्नाकर:" इति ख्यातं संस्कृतमासिकपत्त्रमेभिस्त्रिभिर्मित्रैः सम्भूय प्रकाशयितुमारब्धम्। कतिपयमासानन्तरमेव च प्रधानसम्पादकपदमस्यास्माकं चरितनायकस्यैव शिरस्यारोपितं सर्वैः। अनेन च सोत्साहं परिश्रम्य पत्त्रमिदं तूर्णमेव गौरवास्पदं पदं प्रापितम्। तेनास्य ख्यातिः समग्रे भारते वर्षेऽल्पीयस्येव वयसि सम्प्रवृत्ता।

१९०५ खिस्ताब्दस्यान्तिमेषु दिवसेषु वाराणस्यां गोखलेमहाभागस्य नेतृत्वे राष्ट्रीय-महासभायाः (कॉंग्रेस) ऐतिहासिकमधिवेशनमभूत्। तस्मिन्नेवाब्दे प्रारब्धमभूद् वङ्गभङ्गान्दोलनम्। स्वदेशीयवस्तुव्यवहारव्रतग्रहणं च देशभक्तानां तदुपक्रममेव। स्वदेशीयवस्तुप्रदर्शन्यपि काश्यां महता समारोहेण तस्मिन्नब्दे समपाद्यत। स्पष्टमिदं शक्यते वक्तुं यत्ततः प्रभृत्येव राष्ट्रीय-महासभायां जीवनसञ्चारः प्राधान्येन प्रवर्तितः। आस्ताम्, तस्मिन्नेवावसरे काश्यामेव श्रीभारतधर्ममहामण्डलस्यापि महता समारोहेण विराडधिवेशनमायोज्यते स्म। तदनु मासमात्रानन्तरमेव च श्रीप्रयागे कुम्भपर्वासीत्। तत्रापि श्रीमहामण्डलेन

दरभङ्गामहाराजश्रीरमेश्वरसिंहमहाभागानां नेतृत्वे परिशिष्टमधिवेशनमायोजितम्। ख्यातनामभिर्महामनःश्रीमालवीयमहाभागैरपि तस्मिन् कुम्भपर्व्वावसरे 'सनातनधर्म-महासभा' महता समारोहेणायोजिता, यत्र 'हिन्दू-विश्व-विद्यालय'प्रतिष्ठापनं सङ्कल्पितमभूत्। इदमेव संक्षेपेण वक्तव्यम्, यदयमवसरो भारतीयेतिहासे सुवर्णयुगारम्भः।

श्रीभारतधर्ममहामण्डलस्यानयोरधिवेशनयोः सर्वेभ्योऽपि प्रान्तेभ्यो राजपुत्रराज्येभ्यश्चापि निमन्त्रिता राजपण्डिता विद्वांसश्च समागताः समामिलन्। जयपुर-राज्यतोपि राजसभाप्रधानपण्डितः समीक्षाचक्रवर्ती विद्यावाचस्पतिः पण्डितश्रीमधुसूदनझामहाभागोधिवेशनयोरनयोः सम्मिलितोऽभूत्। तेन साकं पण्डितश्रीचन्द्रदत्तमैथिलमहोदयोऽस्माकं चरितनायकश्च जयपुर-राजाज्ञयाऽऽगच्छताम्। तत्र महामण्डलमञ्चेपि महाशयस्यास्य संजाता प्रभावशालिनी वक्तृता। स एवायं मालवीयमहोदयेन श्रीदरभङ्गामहाराजेन च साकं परिचयस्य प्रथमोवसरश्चरितनायकस्य। अग्रे गत्वा श्रीमालवीयमहोदयेन सार्द्धमनेन धार्मिकक्षेत्रे बहु प्रयतितमिति जानाति भारतीया तात्कालिकी जनता। यस्य खलु दिग्दर्शनमस्मिन्नेव प्रबन्धे यथावसरं भविष्यतीति नात्र वितन्यते। अन्यैश्च ख्यातनामभिर्विभिन्नप्रान्तीयैर्बहुभिर्विद्वद्भिः सौहार्दं तस्मिन्नेवावसरे चरितनायकस्य घटितम्। येषु विद्यावाचस्पतिः श्रीमदप्पाशास्त्री, श्रीरामावतारपाण्डेयमहोदयः श्रीविधुशेखरभट्टाचार्यश्चेत्याद्या विशेषेणोल्लेखनीयाः।

अथ जीविकोपार्जनाय निजगुरोः श्रीलक्ष्मीनाथशास्त्रिमहोदयस्यानुकम्पया सहारनपुरस्थे निखिलभारतवर्षीयजैनमहाविद्यालये प्रधानाध्यापकपदे विनियुज्यते स्म महाशयोयमीशवीये १९०६ तमे वत्सरे। इयमेवास्य प्राथमिकी नियुक्तिः। अप्रौढ एव वयसि समभ्यस्तानिव सर्वथानभ्यस्तान् कठिनतमजैनग्रन्थान् ग्रन्थिविमोकपुरःसरं प्रपाठ्य सुबहु यशः समुपार्जितं तत्रानेन। स्वीयस्वभावसारल्येन मार्मिकेण वैदुष्येण च तात्कालिकैः सहारनपुरस्थितैः कविकोविदैः सह जातमस्य परमं सौहार्दम्। तेषु वैद्यरत्न-हरिप्रसादशर्म-चिकित्सकचूडामणेरभिधानं विशेषतो लिखेलिमम्।

सहारनपुरे निवसन्नयं भाषणादि कार्यमनुरुध्य पावन्यां सुरनिम्नगायां स्नातुं च नैकवारं हरिद्वारमप्यव्राजीत्। तेन तत्रत्यैर्विबुधैः सार्द्धमपि पर्याप्तोऽभिवर्द्धितः परिचयोऽस्य महानुभावस्य। तेष्वेव दिवसेषु हरिद्वारे निखिलभारतीयसनातनधर्मावलम्बिनां समुद्योगेनार्षशिक्षणपद्धतिप्रचारार्थमृषिकुलब्रह्मचर्याश्रमस्य संजाता स्थापना। इतस्ततत्रत्याः प्रबन्धकमहोदयाः श्रीदुर्गादत्तपन्त-श्रीमदानन्दनारायणपण्डितप्रभृतयः संस्थामेतां सञ्चालयितुं सर्वगुणोपेतमुशन्ति स्म चतुर्वेदमहोदयम्। अन्यतश्च १९०८ तमे ख्रिस्ताब्दे जैनमहाविद्यालयोयं स्थानान्तरं नीतः। तदवसरे ऋषिकुलकार्यकर्तृणामनुरोधेनान्तरङ्गपरिभाषामनुस्मरता चाचार्यत्वमस्याङ्गीकृत्य शेषेणेव भुवः स्वशिरसि संस्थापितः सञ्चालनस्यास्य महान् भारः। १९०८ ख्रिस्ताब्दतः १९१७ तमाब्दपर्यन्तमस्यां संस्थायां कीदृशमयं कृतवान् कार्यमिति विस्तरेणान्यत्र वर्णनान्नात्र पिष्टपेषणे प्रयतामहे। केवलमेतावदेवास्माभिरत्र वक्तव्यं यदृषिकुलसंस्थाया अस्माकं चरितनायकस्य च सम्बन्धः 'रत्नं समागच्छतु काञ्चनेन' इत्याशंसायाः सफलीकरणायैव सम्पन्नः। ऋषिकुलकार्यकाल एवास्य चरितनायकस्य यशोविस्तृतेः प्रधानो हेतुः। तस्या अपि संस्थायाः स एव समुन्नतेर्मध्याह्नकालः। 'अन्योन्यपावनमभूदुभयं समेत्य'। तस्मिन्नेव काले ऋषिकुलमिदमुन्नतिशिखरमारूढमिति मन्ये।

नात्र लेशतोऽप्यत्युक्तिः । स एवासीत् समयो यस्मिन् श्री०म०प० परमेश्वरानन्द-लीलाधर-कृष्णानन्दपन्त-माधवरामशैवाल-चन्द्रभानुशास्त्रिसदृशाः स्नातका निरसरन् संस्थाया अस्याः, यैर्न केवलमस्याः संस्थाया एव मुखमुज्ज्वलितम्, भारतीयसंस्कृतेः सुरगिरश्चापि मस्तकमुन्नमितमिति विदुषामेव विपश्चितः ।

ऋषिकुलस्थापनकाले एव तत्र पाठ्यमानानां विषयाणां क्रमं विशोध्य तत्र विषये भारतीयविद्वत्समाजानां सम्मतिं चापि प्रगृह्य नवीनो युगः संस्कृताध्ययनपद्धतौ स्थापितः पण्डितानां पुरतोऽनेन । तदवसरे बहवः खलु विभिन्नप्रान्तीयाः पण्डिताः शिक्षासमितौ सदस्यरूपेण संघटिताः, ये च शिक्षासमितौ प्रवेष्टुमसमर्थास्तेऽपि पत्रादिद्वारा सम्मतिग्रहणेन परीक्षकत्वप्रदानेन च संगृहीताः सौहृदमापिताश्चेति प्रसिद्धेषु समुन्नतकोटिकेषु विद्वत्सु महोदयस्यास्य कार्यकौशलस्य पाण्डित्यस्य च समजायत डिण्डिमघोषः । संस्थाया अस्याः संचालनाय द्रव्यसंग्रहार्थं भिन्नभिन्नेषु प्रान्तेषु प्रसिद्धप्रसिद्धेषु नगरेषु च परिभ्रमणेन व्याख्यानदानेन च ख्यातिरस्य समस्तेऽपि भारते प्रसारमलभत ।

अस्य ऋषिकुलनिवासारम्भाद्वर्षद्वयाभ्यन्तर एव १९१० तमे खिस्ताब्दे संजाता कालिकतायात्रा, या हि ऋषिकुलस्य स्थैर्ये दृढतायाञ्च प्राधान्यं भजते स्म, सापि महोदयस्यास्य यशःप्रसारेऽन्यतमो हेतुः । तदवसरे यान्यस्य धार्म्मिकाणि, दार्शनिकानि युक्तियुक्तान्योजस्वीनि च भाषणानि कालिकात्तायां संजातानि, तान्याकर्णयितुं जनतायाः प्रवाहः प्रावृषि सरित्प्रवाहपूर इवावर्द्धत तादृशेऽर्थप्रधानेऽपि नगरे । एवमेव देहली-मेरठ-कानपुर-लाहौर-करांची-हैदराबाद-शिकारपुर-सक्खर-भागलपुर-मुंगेरादिस्थानेष्वपि व्याख्यानमालानामविरलः प्रवाहः प्रचलितः खलु, येन सुराढ्यं मानास्य चक्रनाख्यातिः किं बहुना धार्मिके क्षेत्रेऽद्वितीयोऽनुपमः खल्वयं यत्रैव नित्यं जनसम्मिश्रमुररीकृतं जनैरनवद्यमिति ।

इदमप्यत्र प्रसंगतो वक्तव्यम्, ऋषिकुले निवसन् एवास्य पारिवारिकं जीवनमपि दुःखमयमिवाभवत् । १९०९–१० खिस्ताब्दयोर्मध्य एवाभ्यन्तरे एवास्य वृद्धा पितामही, पुनश्च जननी माता, प्रियतमा धर्मपत्नी चेति तिस्रोऽपि जयपुरे अल्पीयस्येव काले दिवं याताः । तेन चरितनायकस्य हृदयमनेकधा भिन्नमिवाभवत् । वृद्धः पिता, कन्यकात्रितयं चेति परिवारेऽवशिष्टा व्यक्तयः । एका वृद्धा पितृष्वसा ( गोकुलेति नाम्ना ख्याता, यया चरितनायकोऽयं सुतवत्परिपालित आसीत् ) कन्यकानां पालनायातिष्ठत् । वृद्धः पिता पारम्परिकं राज्याश्रयं त्यक्तुमनिच्छन् जयपुर एव निवासमभ्यरोचयत् । पुत्राभावात् पित्रनुरोधाच्च द्वितीयः परिणयोऽपि कर्त्तुमापतितः । कन्यकात्रितयं विवाह्यमासीत् । ऋषिकुलान्निर्वाहमात्रकृतेऽल्पं मासिकं गृह्णाति स्म । वृद्धः पिता कथमेकाकी जयपुरे निवसत्विति तत्परिचर्यार्थं नवपरिणीतां पत्नीं जयपुर एव वासयित्वा एकाकिन एव स्वयंपाकपरस्य हरिद्वारेऽवस्थितिः । सर्वोऽयं व्यतिकरस्तथाविधो येन धैर्यशालिनामपि धैर्यं विच्यवेतैव । परं धर्मसेवायां सुदृढश्चतुर्वेदमहाशयः सर्वमिदं सोढ्वापि ऋषिकुलोन्नतये तथैव दत्तावधानः परिश्रमपरोऽतिष्ठत् । भूयो भूयो गृहागमनन्तु तस्मिन् व्यतिकरेऽनिवार्यमेवाभवत्, परं कार्ये नोदपद्यत क्वापि त्रुटिः । अनेन सहसापदामाक्रमणेन स्वास्थ्यमप्यस्य विच्युतम् । प्रबलमग्निमान्द्यमाक्रमतैनम् । परं भिषगाचार्यश्रीलक्ष्मीरामप्रसादेनाल्पेनैव कालेन रोगमपि विजित्य स्वकार्ये संलग्नोऽयमतिष्ठत् । गङ्गाद्वारसदृशं तीर्थं यत्र प्रत्यहं सहस्रशो जना भारतस्य विभिन्नप्-

प्रान्तेभ्यो यात्रार्थमागच्छन्ति, येषु महाराजाः, राजानः, सामन्ताः, श्रेष्ठिनः, संप्रदायाचार्याः, लोकमान्या विद्वांसश्चेति सर्वविधा एव महानुभावा भवन्ति, तत्रापि नूतनप्रतिष्ठापितो ब्रह्मचर्याश्रमः-ऋषिकुलं नाम, यद्दर्शनं विना यात्रापूर्तिरेव नामन्यत तदात्वे लोकैः। शिक्षासंस्थेति कृत्वा नवीनपरिपाटीपरिमुक्ता अपि यद्दर्शनार्थमायान्ति स्म। तत्र निवसतस्तादृशसंस्थापरिचालकस्यास्मच्चरितनायकस्य शीलसौजन्यसदाचारवैदुष्यचातुर्यकार्यपरायणत्वादिगुणगणगरिष्ठस्य सर्वविधैरेव महानुभावैः परिचयः समघटतेत्यत्र किमु वक्तव्यम्। बहुभिस्तु महानुभावैः सौहार्दमपि तत्रैव निरूढमूलमभवत्, यत् क्रमेणाजन्म दृढतां गतम्। आसां पङ्क्तीनां लेखकेनापि चरितनायकस्य तत्रैव प्राथमिकः परिचयः समजनि, यः सौहार्दरूपेण परिणतः क्रमेण दाढर्यमलभत। स्वर्गत-म० म० श्रीहरनारायणशास्त्रिप्रभृतिभिरपि तत्रैव निरूढं सौहार्दम्। अद्यत्वे 'काका केलकर' इति प्रसिद्धः श्रीदत्तात्रेयमहाभागोऽनेकान् मासानृषिकुले निवसन् दृढं सौहार्दमस्मिन्नवाप्त्।

तत्रैव समागतान् मेदपाटोदयपुराधिपति-दरभङ्गामहाराजे—बून्दीमहाराजप्रभृतीनयमभिनन्दनैर्गद्यपद्यमयैर्यथायथं संस्कृतमयैर्हिन्दीभाषामयैर्वा समतोषयत्, तैर्बहुधा संमानितः सत्कृतश्च। श्रीकाश्मीराधिपति-श्रीग्वालियराधिपति—सैलानाधिपतिप्रभृतिभिर्महाराजैरपि प्रगाढोऽभवत्परिचयस्तत्र। झालरापाटननरेशस्य ज्येष्ठपितृव्यः श्रीबलभद्रसिंहमहाभागस्तु बहून् धर्मप्रश्नान् समाधाप्य शिष्यतामिवास्य गतः। मरुदेशीया बहवः कोट्यधीशाः श्रेष्ठिनः कालिकात्तादिप्रवासिनोऽपि गुरुमिवैमं मन्यन्ते, तत्रैव लब्धपरिचयाः। श्रीशङ्कराचार्याः, श्रीनाथद्वाराधीश्वराः, श्रीदेवकीनन्दनाचार्याः, श्रीतोताद्रिमठाधीश्वराश्चेत्याद्याः संप्रदायाचार्या अपि पदवीप्रदानेन संभावनेन च समये समयेऽमुमन्वगृह्णन्। भूतपूर्वस्य जयपुराधीशस्य स्वर्गतश्रीमाधवसिंहमहाभागस्य सुप्रसिद्धा गङ्गाभक्तिः, सोऽधिकं समयं हरिद्वार एव यापयति स्म। स महाराजः स्वप्रजान्तर्गतः, स्वाश्रितः, स्वपरिचालिते विद्यालये लब्धविद्यश्चेत्यमुं चरितनायकमनेकवारं प्रेम्णा सभाजयति स्म, प्रोत्साहयति स्म च तत्रैव निवासाय, ऋषिकुलकार्यकरणाय च। तत्रैकवारं कुल्यापरिग्रहणाद् गङ्गाधारामविच्छिन्नां रक्षयितुं प्रवृत्तमासीन्महदान्दोलनम्, यत्र बहवो महाराजा गङ्गाभक्तिसमाकृष्टा युक्तप्रान्तप्रधानशासकम् ( गवर्नर )अनुरोद्धुं समागच्छन्। तस्यामपि परिषदि श्रीमालवीयमहाशयप्रेरणयास्मच्चरितनायकोऽविच्छिन्नधाराप्रमाणोपस्थापनाय समुपस्थितोऽभूत्। तत्र बहुभिर्महाराजैः सबहुमान आसीदस्य परिचयः। जयपुरमहाराजाश्चास्यार्थं सन्तुष्टाः प्रसन्नाश्चाभवन्।

अथर्षिकुलाद् 'ब्रह्मचारी' त्यभिधां दधत् हिन्दीभाषामयं मासिकपत्रं तन्मुखपत्ररूपेण प्रकाश्यते स्म, तस्यापि सम्पादनभार एतस्यैव शिरस्यारोपितोऽभूत्। नेदं विशिष्य वक्तव्यम्— यदल्पेनैव कालेनोन्नतिमासाद्य प्रतिष्ठितेषु पत्रेषु परिगणितं तत्पत्रं हिन्दीलेखकेषु सम्पादकेष्वपि च प्रावीण्यमस्याख्यापयत्। १९१५ मिते ख्रिस्ताब्दे हरिद्वारे कुम्भपर्वसमारोह आसीत्। तदात्वे व्याख्यानवाचस्पति-श्रीदीनदयालुशर्मणां प्रयत्नेन श्रीमालवीयमहाभागानां च सहयोगेन सनातनधर्ममहासम्मेलनं नामैकाभिनवा संस्था ऋषिकुल एव प्रतिष्ठापिता, यस्यामाचार्याः, महाराजाः, सर्वप्रान्तीया विद्वांसः, उपदेशकाश्च सममिलन्, जनता तु गणनातीतैवासीत्। तस्मिन्नपि संमेलनेऽस्य महान् सहयोग आसीत्।

मिथिलाप्रान्तस्य प्रसिद्धतमेन विद्वद्ग्रेसरेण श्रीधर्मदत्त ( बच्चा झा ) महानुभावेनाप्यस्मच्चरितनायकस्य तदात्व एवाभूत्परिचयः। सोऽपि परं संतुष्टेऽभ्यनन्ददेनम्। अस्यैवानुरोधाच्च संस्कृतसाहित्यसम्मेलने ऋषिकुले चागत्य प्रसादमध्यगच्छत्। अनन्तरं मथुराजयपुरादिष्वपि महासम्मेलनाधिवेशनेषु पूर्णः सहयोगोऽस्मच्चरितनायकस्याभूत्।

ऋषिकुले नित्रमत एवास्य हरिद्वारसमीप एव लुक्सरनामके ग्रामे ग्रामीणेषु स्वप्रचारमभिलषतामार्यसामाजिकानां सनातनधर्मानुयायिविद्वद्भिरासीच्छास्त्रार्थसमारम्भः। तत्रास्मच्चरितनायकोऽपि सम्मिलितोऽभूत्। अयमेवास्य प्रथम एवंविधशास्त्रार्थप्रवृत्त्यवसरः। अत्रार्यसमाजस्य प्रधाननेत्रा स्वामिदर्शनानन्दमहाभागेन स्वमुखादेव सत्यार्थप्रकाशादीनामशुद्धत्वमुररीकृतम्।

सन १९१६ मिते ख्रिस्ताब्दे आर्यसामाजिकानां काँगड़ी-हरिद्वारस्थगुरुकुले तत्रत्येन प्रधानस्नातकेन 'वेदालङ्कार'विरुदं गुरुकुलप्रत्तं वहता श्रीमदिन्द्रचन्द्रमहाशयेन समं जात ऐतिहासिको वर्णव्यवस्थाशास्त्रार्थोपि प्रसिद्धेर्महत्त्वस्यास्यान्यतमः प्रधानो हेतुः। अस्मिन् शास्त्रार्थे चरितनायकोऽस्माकं हरिद्वारस्थविद्वत्समितेः प्रधानः प्रतिनिधिरासीत्। श्रीशालग्रामशास्त्रि-श्रीविश्वनाथवेदपाठिप्रभृतयोस्य पार्श्वग्राहिण आसन्। अस्य हि शास्त्रार्थस्य सुविस्तृतं वर्णनमस्मिन्नेवाभिनन्दनग्रन्थेऽन्यत्र प्रकाश्यत इति नात्र लिलेखिषामः, केवलमेतावदेव विवक्षामो यदखिलभारतीयार्यसमाजसंस्थाभिस्तत्रत्याभिः सनातनधर्मसंस्थाभिश्च संबद्धानां यावन्मात्रव्यक्तीनां रसनासु घटनयानया नामधेयमस्यानरीनृत्यत। नासीत् कोपि सनातनधर्मावलम्बी ना, यो हि नामास्य सगर्वं नाग्रहीष्ट। सुप्रसिद्धेषु समाचारपत्रेषूभयपक्षीयेषु च (भारतमित्र-कलकत्तासमाचार-प्रभृतिषु) महदान्दोलनं समजनि शास्त्रार्थमिममवलम्ब्य। सनातनधर्मावलम्बिभिः सकलैः सम्यगवगतं यद् गुरुकुलं द्वारीकृत्य कृतादार्यसमाजस्य विकटाक्रमणात् सनातनधर्मस्य रक्षणमनेनैव सेनानायकेन कृतम्। देहरादूनप्रकाशित-"गढ़वाली-समाचार" प्रभृतिभिरनेकैः समाचारपत्रैस्तु रूपकमिदं व्यलेखि-"यथेन्द्रस्य सुरपतेः समाक्रमणात् पूर्वं व्रजं ररक्ष भगवान् गिरिधरस्तथैवेन्द्रस्यास्याक्रमणात् सनातनधर्मव्रजं रक्षितवान् विद्वानयं गिरिधर" इति। 'वेदप्रकाश'प्रभृतिभिरार्यसामाजिकैः पत्रैरपि स्वमुखेन पराजयः समाजस्य स्वीकृतः।

मासत्रितयानन्तरं गुरुमण्डलाश्रमे पूर्णानन्दसहकृतेन तैनैवेन्द्रमहाशयेन सार्द्धमस्य श्राद्धविषयकः शास्त्रार्थः समजनि, तत्रापि सर्वैः स्वीकृतः सनातनधर्मस्य[1] विजयः। अनन्तरं तु लाहौरप्रभृतिषु बहवः शास्त्रार्था अस्याभवन्, येतिप्रसिद्धाः।

तस्मिन्नेवाब्दे ( सन् १९१६ ईशवीये ) यदा ऋषिकुलस्य कृतेर्थसंग्रहार्थं प्रतिनिधिमण्डलं (डेपुटेशन) गृहीत्वा बङ्गेषु भागलपुरे समागतः श्रीमानस्माकं चरितनायकस्तदवसरेत्र व्याख्यानानामेतस्य तथा प्रभावः समजायत, यथा तत्रत्या वाकीलका न्यायाधीशेभ्यः साग्रहमुदित्वा ( विवादं कृत्वा ) व्याख्यानश्रवणाय न्यायालयावकाशकालात्प्रागेव तानपिधापयन्ति स्म। किं बहुना, महाध्यापकाः, वाकीलकाः, प्राड्विवाकाः, द्राकराः, अन्ये चाङ्गलशिक्षादीक्षिता अपि व्याख्यानमालामेतां शुश्रूषवः प्रतिदिनं व्याख्यानसमयात् प्रागेव

१ उभयोरपि शास्त्रार्थयोर्विस्तृतं विवरणं मदीये यन्त्रालये मुद्रितमस्ति।

समागत्य यादृशीं स्वोत्सुकतां प्राचीकटन्, तां स एव जानाति, येनावलोकितं तद् दृश्यमित्यहो व्याख्यान-प्रभावः श्रीमतः। मुङ्गेर-पाटलिपुत्रादिष्वपि महानासीद् व्याख्यानानां प्रभावः।

अथ १९१७ तमे ख्रिस्ताब्दे कैश्चिदधिकारिभि-र्वैमत्याद् ऋषिकुलनिवासोऽस्मच्चरितनायकेन परित्यक्तः। तदा महानभूत् सनातनधर्मावलम्बिषु कोलाहलः। सर्वे चर्षिकुलमधित्यक्तुमारब्धाः। स्थितावेवं विधायां यैर्वैमनस्यं प्रागभूत् तैरेव नम्रीभूयार्थितश्च-तुर्वेदमहाशयः। 'स्वपरिस्थितिपरवशेन स्वेच्छयैव मया त्यक्तमृषिकुलकार्यम्' इति समाचारपत्रेषु प्रख्यापयन् कोलाहलमशमयत्। त्यक्तकार्योऽपि च पुनर्द्रव्यसंग्रह-समितौ संगत्य सी. पी. प्रान्ते ऋषिकुलप्रचारमकरोत्। त्यक्तस्य पुनरुपादानं तु प्रधानाधिकारिभिरनुरुद्धा-याप्यस्मै मनीषिणे नारोचत। तदनु वर्षद्वयमयं स्वात-न्त्र्येण सनातनधर्मव्याख्यानरूपेणैव भारतस्य सर्वे-ष्वपि प्रान्तेषु ताभिस्ताभिः संस्थाभिः सादरमाहूतः पर्य-भ्रमत्। सीमाप्रान्त (क्वेटा-बलूचिस्तान) पर्यन्तमा-सीदस्य परिभ्रमणम्। सनातनधर्मे महती जागर्या तदात्वे दृश्यते स्म।

अस्मिन्नेवावसरे (सन् १९१७ ख्रिस्ताब्दे) जगद्गुरुश्रीवल्लभाचार्यचरणानां चतुर्थ-पञ्चमपीठा-धीश्वरैः काम्यवननिवासिभिः सुप्रसिद्धमहानुभावाचा-र्यप्रवर-श्रीदेवकीनन्दनाचार्यतनूजैः श्रीवल्लभाचार्यमहा-भागैः मुम्बईनगरे प्रान्तीयं सनातनधर्मसंमेलनमा-योजितम्। तत्कार्यसंपादनाय चतुर्वेदमहाशयः सादरं साग्रहं चाहूतः। 'वाणीविभूषण' विरुदविभूषितः श्रीनन्दकिशोरशुक्लमहोदयस्तस्य संमेलनस्य प्रमुखः प्रस्तोतासीत्। इदमपि संमेलनं चरितनायकस्य कार्यदक्षतया परिश्रमेण च पूर्णं साफल्यमभजत्। इत एव मुम्बईनगरस्य विद्वांसः श्रेष्ठिनो जनता चास्य प्रभावाक्रान्ताः जाताः। मोहमय्यां सुमहद्यशोऽस्य प्रसृतम्। आचार्यप्रवरैः श्रीवल्लभाचार्यमहानुभावैश्च सुदृढोऽभवदस्य संबन्धः। तैः स्वीयस्य 'वैष्णवधर्मप-ताका'नामकस्य पत्रस्य संपादनमस्यायत्तं कृतं कियन्तंचिदनेहसम्। स्वीययात्रास्वप्ययमनेकधा सहचरीकृतः। प्रातिस्विकेष्वपि कार्येष्वनेकधा समये समय आकारितः। महान् स्नेहानुबन्धो यावज्जीवन-मस्मिन् प्रदर्शितः। श्रीवल्लभसंप्रदाये सर्वाग्रग-ण्यैर्विद्वद्भिराचार्यप्रवर-श्रीगोकुलनाथमहाराजैरप्यस्यामेव यात्रायामभूत् प्रगाढः परिचयः। तेऽपि ततः प्रभृति स्वीयेषु चरितनायकमनुगृह्णन्ति, महतीमनुकम्पा-ञ्चास्मिन् दधति।

सन् १९१८ तमेब्दे श्रीमदनमोहनमालवीयमहो-दयानां महता समुद्योगेन कुम्भमहापर्वणि यदिदं सनातनधर्ममहासभाया महाधिवेशनं गोवर्द्धनपीठा-धिपतिश्रीशङ्कराचार्याणां नेतृत्वे समजायत, तस्य सकलोपि भारश्चतुर्वेदमहोदयस्य सुदृढयोरेव स्कन्धयोः स्थापित आसीत्। तत्र महासंमेलनं महासभायां प्रलीनम्। तस्या महासभायाः प्रधानमन्त्रित्वं स्वयं महामनसा मालवीयेन स्वीकृतम्। संयुक्तमन्त्रित्वे च विनियुक्तः श्रीचतुर्वेदमहोदयः। तस्मिन्नधिवेशने यैः खलु दृष्टमस्य कार्यकौशलं ते जानन्ति लोकोत्तरत्व-मस्येति किं विशेषतः प्रजल्पितेन। इत एवारब्धा सनातनधर्मस्य प्रधाननेतृत्वस्य गणना।

१९१४ ईशवीयेब्दे निखिलभारतवर्षीयसं-स्कृतसाहित्यसम्मेलनस्य संस्थापना श्रीचतुर्वेदमहो-दयस्यैव प्रयत्नेन ऋषिकुल एव समजनि। तदारभ्य वर्षद्वादशकं यावत् तस्य मन्त्रित्वमनेन निर्व्यूढम्। सर्वेष्वपि भारतस्य प्रान्तेष्वधिवेशनानि संमेलनस्य

कारयित्वा परं प्रभावमारोपितं सम्मेलनम्। कार्यविवरणानि, नियमावली, निबन्धावली, अभिनवपाठ्यक्रमश्चेत्यादीनि संपाद्य साहित्यसेवापि तद्द्वारेण सम्यग् विहिता। चिरात् परिचालितः संस्कृतरत्नाकरोऽपि तन्मुखपत्रतामापितः।

तेष्वेव दिवसेषु स्वकीयद्रव्यव्ययेन सुदूरेऽपि कोडियालमग्रामे बुभूषोः संस्कृतसाहित्यसंमेलनस्याधिवेशने (१९२६ खिस्ताब्दे) सम्मिलितो भवन् स्वीयान् पितृचरणान् रामेश्वरयात्रामथमचीकरत्। अनेनैव प्रसङ्गेन दक्षिणभारतस्य दाक्षिणैरनेकैः कविकोविदैः सह 'सख्यं साप्तपदीनमाहु'रिति कविकालिदासोक्त्यनुसारं सौहार्दमकल्पयत्। सुहृत्सु तेषु म० म० श्री टी० गणपतिशास्त्रिमहोदयः प्रकाशको भासनाटकानां विशेषतो गणनीयः। अनेनैव महाभागेन यात्राप्रसङ्गेन गच्छन् श्रीचतुर्वेदमहोदयः स्वीयान् गृहानानीयातिथ्यग्रहणाय बाध्यतां नीतः। श्रीमेघदूतविमर्श-रघुवंशविमर्शादीनां निर्मात्रा श्रीकृष्णमाचार्यमहोदयेनापि मद्रासनगरे श्रीचतुर्वेदमहोदयः साग्रहं स्वगृहेष्वेव ससम्मानं रक्षितः। मद्रासवासिना सुविख्यातेन वैद्यवर्य्येण श्रीडी० गोपालाचारलूमहोदयेन तस्मै सम्मानदानार्थं सुहृद्गोष्ठी (पार्टी) निमन्त्रिता प्रीतिभोजाय। तस्यां सुचिरं स्मरणार्थं राजतं पञ्चपात्राद्युपायनीकृतञ्चेत्यहो सौहार्दं चारलूमहोदयस्य। मद्रासनगरेऽस्य वक्तृताभिरुत्साहमधिगत्य गुर्जरप्रान्तीयैर्मरुदेशीयैश्च महाभागैः 'मारवाड़ी-गुजराती-पाटशाला'नाम्नी हिन्दीभाषायाः संस्कृतस्य चाध्यापनाय शिक्षालय एक एतद्धस्तेनैव प्रतिष्ठापितः। य उन्नतिमासाद्याद्यापि प्रचलतीति श्रूयते। यात्रेयं दक्षिणभारते यशःप्रसाराय पर्य्याप्तमस्य साहाय्यमदात्।

१९२९ तम ईसवीयेऽब्दे पटेल-विलाख्य एकः प्रस्तावः समुपस्थितोऽभूद् भारतराज्यपरिषदि, यत्र ब्राह्मणादीनां चतुर्णां वर्णानां पारस्परिको विवाहसम्बन्धोऽनुज्ञापनीय आसीत्। सनातनधर्मावलम्बिभिर्वर्णसंकरीकरणस्यास्य सर्वतोमुखो विरोध आरब्धः। तमनुरुध्यैव वाराणस्यामेका सङ्घटिता विराट्सभा। यस्यां किल काश्याः समस्तापि विद्वन्मण्डली समुपस्थिताऽभूत्। यस्याश्च खलु साभापत्यं जगद्गुरुणा शारदापीठाधीश्वरेण शङ्कराचार्य्येण श्रीत्रिविक्रमतीर्थमहोदयेनालङ्कृतम्। तस्यां च सभायां प्रज्ञादीप्तेन शिवप्रसादगुप्तमहाशयेन साकमस्माकं चरितनायकस्य वक्तृतारूपेण सः खलु विवादः सञ्जात आसीत्, तमाकर्ण्य नैकनरेन्द्रसमर्चितचरणयुगलकमलः श्रीसनातनधर्मप्रासादाधारस्तम्भभूतो वाचस्पतिरिवापरो व्याख्यानवाचस्पतिः श्रीदीनदयालुशर्मा मध्येसभमिदमघोषयद् "यदहं समस्तभारतीयार्यसमाजसदस्यान् सुधारकमहोदयाँश्चाकारयामि, यदि ते समेऽपि सम्मिलिताः केवलं गिरिधरशर्माणं युक्तिवादेन विजयेरन्, तत एवास्माभिः सर्वैः समस्तस्य सनातनधर्मस्य पराजयः स्वीक्रियेत" इति। मान्याः! वक्तृतायाः वैदुष्यस्य प्रत्युत्पन्नमतित्वस्य च कियतः परमरमाभिर्वर्ण्येत माहात्म्यम्। कथं च न भवेदनेनानवद्यगुणगणेन श्रीमतां महतो यशसो वितानमधिभारतम्। इतः प्रभृत्येव हिन्दूविश्वविद्यालये-धार्मिकसदस्यता चरितनायकस्य प्रवृत्ता, या क्रमेणोन्नताद्यापि प्रचलति।

अथ १९१९ मिते खिस्ताब्दे लाहौरनगरस्य सनातन-धर्मनेतृभिः साग्रहमाहूतोऽयं तत्र गत्वा 'सनातनधर्म-कालेज' नामकं महाविद्यालयं प्रतिष्ठाप्य तदध्यक्ष- ( प्रिन्सिपल )-पदमगृह्णात्। स्वल्पेनैव कालेन कालेजोऽयं तथा प्रतिष्ठां प्रापितो यथा ओरियण्टलकालेजप्रभृति-

पुरातनविद्यालयकर्मचारिणोऽप्यस्मै ईर्ष्यन्ति स्म । वर्षद्वयमयं विद्यालयः सनातन-धर्म-सभाधिकारे स्वातन्त्र्येण प्रचलितः, अनन्तरं त्वस्यैवोद्योगेन आङ्गल-सनातन-धर्म कालेजेन साकं सम्मिलितः । तत्कालेजाध्यक्षेण रघुवरदयालुमहाशयेनासीदस्माकं चरितनायकस्य दृढं सख्यम् । तदनुरोधेनायमाङ्गलभागस्यापि धर्मशिक्षकत्वं स्वीचकार, स्वकार्यकाल एव प्रतिष्ठापितस्य महाराजश्रीमदलवरेन्द्रेणोद्घाटितस्य छात्रावासस्यापि च निरीक्षकत्वमप्युपागच्छत् ।

किञ्चिदधिकमब्दपञ्चकं लाहोरनगरे निवसतानेन सुप्रसिद्धै रार्यसामाजिकैः श्रीराजारामशास्त्रि-भगवद्दत्त-प्रभृतिभिः कृताः शास्त्रार्थाः । समस्तेऽपि पञ्चनदप्रान्ते काले काले परिभ्रमता जागरितः सनातनो धर्मः । पञ्चनदप्रान्तीया 'सनातनधर्म-प्रतिनिधिसभा'प्येतत्सहयोगेनैव प्रतिष्ठापिताभूत्, यस्या उपसभापतित्वमप्यनेन निर्व्यूढम् । १९२२ खिस्ताब्दे अखिलभारतवर्षीय-हिन्दीसाहित्यसम्मेलनस्य द्वादशमधिवेशनमपि लाहोर-नगरे कारितम् । यस्य स्वागतसमितेरयं प्रधानो मन्त्री व्रियते स्म । नासीद्धार्मिकं सामाजिकं वा किमप्यान्दोलनं तथाविधं तदात्वे, यत्रास्य सहयोगो नापेक्षितोऽभूत् । विश्वविद्यालयेऽपि पाठ्यपरीक्षानिर्धारणसमितेः प्राच्य-विद्याविभागस्य सदस्यतामयमदधात् । अत्र श्रीरघुवर-दयालुशास्त्रिमहाशयस्य सहयोगेन विश्वविद्यालयपाठ्य-क्रमे बहु संशोधनमनेन कारितम् । विशारदश्रेणिभुक्तानां बुद्धेरगम्याः सांख्यवेदान्तादिग्रन्थाः, ये चिरात्तस्यां परीक्षायां प्रचलन्ति स्म ते निःसारिताः । शिवराजविजयसदृशा हिन्दूनामात्माभिमानवर्द्धका ग्रन्थाः पाठ्य-क्रमे प्रवेशिताः । उपयुक्तानां महाकाव्यसर्गाणां संग्रहं विधाय 'महाकाव्यसंग्रह'नाम्ना स्वटीकयालंकृत्य तादृशो ग्रन्थः प्रकाशितः परीक्षायां सन्निवेशितश्च, येन विलुप्तप्राया प्राक्तनी काव्याध्ययनशैली पञ्चनदेषु पुनर्जागृयात् । एवं संस्कृतसाहित्यरक्षार्थं बहु तत्र चेष्टितम् ।

एतस्मिन्नेवासरे अखिलभारतीयाप्येकाऽघटत घटना । संयुक्तप्रान्तनाम्नि प्रसिद्धेस्मिन्नाधुनिके भारतीयभूभागे आगरादिप्रदेशे 'मलकाना'नामिकैका-जातिरवात्सीत् । ये खलु वस्तुतः क्षत्रिया एवासन्, यवनसाम्राज्यकाले नाममात्रेण भजन्ते स्म यवनत्वम्, त एव मलकानानाम्ना ख्याप्यन्ते स्म । न खलु तेषां सह यवनैः पानाशनादिव्यवहारो न च सर्वथा यौनसम्बन्धः । सदाचारोपि भारतीयार्यसदाचारादभिन्नः । शिखां सर्वे दधाना आसन् । एकादशीव्रतं गङ्गास्नानादि चेति सर्वोयमार्यधर्मस्तेषु प्राचलत् । विवाहादिकमपि ब्राह्मणैरेवाकार्यत हिन्दूपद्धत्या । एवमनुश्रूयते, यदा किल यवनसेना यवनीकरणाय ग्रामानाक्रामन्त, तदा भीतिवशाद्यैर्वाङ्मात्रेणोक्तम् 'वयं यवनतां गताः' इति त इमे तावन्मात्रेण बान्धवैः परित्यक्ता भिन्नजातितामापेदिरे । शवखननकुप्रथा च तेषु पदं लेभे । तानवलम्ब्य १९२२-२३ तमे खिस्ताब्दे पञ्चाम्बुप्रान्ते ईदृशमान्दोलनं समारब्धम्, यदस्या जातेर्यवनत्वख्यातिमपनीय विशुद्धेषु क्षात्रकुलेष्वस्या निरर्गलः सम्बन्धो यथा स्यात् तथा प्रयतनीयम् । शवखननादिकुप्रथाश्चैभ्योपनेया इति । तदर्थं सनातनधर्मावलम्बिनां विदुषामेका समितिः श्रीदीनदयालुप्रभृतिभिरनुमता संघटिता, या हि 'पुनःसंस्कारसमिति'नाम्ना प्रख्यातिमगमत् । यस्यां हि समितौ भारतधर्ममहामण्डलस्य प्रसिद्धो नेता श्रीस्वामिदयानन्दः, लवपुरीयसनातनधर्मकालेजस्याचार्यः ( प्रिंसिपल )श्रीरघुवरदयालुः, मुलतानाभिजनः श्रीयदुकुलभूषणशास्त्रिवर्य्यश्चान्येपि च नैकलब्ध-प्रतिष्ठा विद्वांसः सम्मिलिता आसन् । पञ्चकीनामासां

सं० र० दर्शनाङ्कः



महामहोपाध्यायवेशविभूषिताः श्रीचतुर्वेदमहोदयाः ।

[सं० १९८१ वि०]

लेखकः समितेरस्या मन्त्रित्वमभजन्। अस्मिन्नप्यान्दोलने चतुर्वेदमहोदयेन न केवलं कायवाक्कर्मभिः प्रामुख्यमेव प्रादर्शि, किन्तु मासमेकं साभापत्यमप्यस्या निर्व्यूढम्। समित्याः प्रयत्नेन सहस्रशो मलकानाजातीयाः कृतप्रायश्चित्ताः स्वीयाः कुरीतीः परित्यज्य पुनः क्षत्रियकुलेषु सम्मिलिताः। कार्यमिदमेतादृशमासीद् येन हिन्दुषु यवनेषु च संघर्षरूपेण सर्वाप्तास्य चर्चा प्राचलन्। तेन राजनीतिकक्षेत्रस्य, सामाजिकक्षेत्रस्य च नेतृषु नामास्य ख्यातिमगात्।

ईशवीये १९२३ तमेऽब्दे 'हिन्दूसभाया, अधिवेशनमविकाशि सञ्जातम्। तदारभ्यैव हि हिन्दूसभाया महत्त्वमवर्द्धतेति प्रायो जानन्ति तत्सम्बद्धाः सर्वेऽपि जनाः। तदधिवेशनस्य सभापतित्वमलमकरोत् श्रीमदनमोहनमालवीयमहोदयः। तेन साकं कार्यकर्तृषु प्रधान आसीदस्माकं चरितनायक एव। अस्यैव महाशयस्य प्रतिभया पुरुषार्थेन च क्षपायाः क्षयीकृत्य प्रहरत्रयं विषयनिर्वाचन्यां द्वित्रवादनपर्यन्तं विवदमानैरपि स्वामिश्रद्धानन्दसदृशैः प्रमुखार्यसमाजिभिः सनातनधर्मसिद्धान्तविरुद्धो न कश्चिदपि प्रस्तावः समुत्थापयितुमपार्यत हिन्दूसभाया रङ्गमञ्चे। समेषामपि सुधारकाणामार्यसमाजिनां चात्र विषये आसीदीर्ष्यासंवलिता महती विप्रतिपत्तिर्यदयमेकाकी गिरिधरशर्मा सर्वानप्यस्मान् पराजयते। ते स्वकीयान् विचारान् नैकशः सभायां प्रकटयन्ति स्म यदेकाकिनः खलु गिरिधरशर्मण एवात्र परिषदि प्रामुख्यं नेतरेषाम्। स एव केवलः परेषां समेषामपि विचारान् प्रस्तावांश्च खण्डयतीति कोयं प्रकारः सभायाः ?" इत्याद्यनेकविधवचनजातैः। अनेनैवानुमेयमस्य कमनीयं कार्यकौशलं मनीषिमतल्लिकाभिः। तदनु तस्मिन्नेवाब्दे मालवीयमहोदयेन प्रयागे विद्वत्परिषदेका निमन्त्रिता। तस्यामपि परिषदि प्रामुख्यमेषामेवावर्तत। "अस्पृश्यैः सह कीदृशो व्यवहारस्त्रैवर्णिकैः कर्तव्यो वर्तमानेस्मिन् विपद्युगे" इति विषयमवलम्ब्य शास्त्रीयप्रमाणगर्भितैका व्यवस्थापि निरमायि महोदयेनानेन। किन्तु हन्त! परिस्थितिवशाद् ब्रह्मे गत्वा श्रीमालवीयमहोदयस्तद्व्यवस्थाविधानबहिर्भूतः सन्नस्पृश्यतानिवारणे शास्त्रमर्यादायाः सुदूरं निःसृतो यदा, तदास्य श्रीमालवीयमहोदयेन सह मतभेदः समजायत। द्वित्रवर्षानन्तरं देहल्यां मताभिक्यमासाद्यार्यसामाजिकैः स्वायत्तीकृता हिन्दूसभाप्येतत्प्रमुखैः सनातनधर्मावलम्बिभिः परित्यक्ता।

इतः प्रागेव श्रीमालवीयमहाभागेन वाराणसीस्थहिन्दूविश्वविद्यालये उपदेशकविद्यालयोऽप्येकः समुद्घाटनीय इति कृतासीद् व्यवस्था। तस्योपदेशकविद्यालयस्य नियम-विषय-पाठ्यक्रमादिकं सर्वमप्यनेनैव महाभागेन निरमायि, किन्त्वसौभाग्याद्धन्त! भारतीयानां न स विद्यालयोऽद्यापि स्वकार्ये साफल्यमभजत। दुर्विलसितं खलु विधेरिदम्।

अस्मिन्नेवावसरे राजपूतानाप्रान्तीयब्राह्मणसभायाः शेखावाटीप्रान्तस्थरामगढनगरे जायमानस्याधिवेशनस्य साभापत्यमपि सुदूरदूराल्लाहौरनगरादागत्य सुचारु समलङ्कृतमित्यपि न विस्मरणार्हम्।

लाहौरनगर एव निवसन्नयं पञ्चनदविश्वविद्यालयसौपार्श्व्येन भारतसम्राट्प्रसादीकृतां महामहोपाध्यायपदवीं लभते स्म सन् १९२४ तमे ख्रिस्ताब्दे। तस्मिन्नप्यवसरे प्रस्फुटाभवदस्य लोकप्रियता। विद्याप्रणयिभिः सनातनधर्मसंस्थाभिश्च महान्त उत्सवास्तत्र विरचिताः। अभिनन्दन-प्रेषकेषु श्रीदरभङ्गामहाराजसदृशा अप्यासन्। आसन्नत्रिंशानि तडिद्वृत्तानि

पत्त्राणि चोत्कर्षजुषां लभ्यन्ते स्म । सर्वत्रापि महानासीन् प्रमोदः ।

अथ १९२४ खिस्ताब्दस्यान्ते स्वस्थाने स्वशिष्यं श्रीपरमेश्वरानन्दशास्त्रिणं प्रतिष्ठाप्य लाहौरवासं परित्यज्य, जयपुरशिक्षाविभागाध्यक्षेण श्रीश्यामसुन्दरशर्मणा एम्० ए० विरुदभाजा साग्रहमाहूतोऽयं जयपुरमहाराजसंस्कृतकॉलेजसेवार्थमायाज्जयपुरम् । उक्तं हि पूर्वम्-विदेशनिवासे महदभूदसौकर्यं चतुर्वेदमहाशयस्य । पितातिवार्द्धक्यवशात्प्रज्ञाचक्षुष्कतां गतः । अतिवार्द्धक्ये स्वाभिजनपरित्यागेच्छा नैव तन्मनसि पदमदधात् । तत्परिचर्यार्थं गृहजना जयपुर एव स्थापनीया आसन् । पुत्र आसीद् बालः, तस्य शिक्षासमयापि संमुखेऽतिष्ठत् । एतत्सर्वमनुरुध्य जयपुरे कार्यकरणाभिलाषश्चिरादेवास्य चेतसि प्ररूढः । पूर्वं काले काले शिक्षाविभागाध्यक्षैर्दीयमानान्यपि पदान्ययम् 'मा भून्मत्सुहृदां तत्राधिकृतानामुन्नतिहानिर्मत्कृते' इत्यौदार्येण न स्वीकरोति स्म । इदानीं तु श्रीश्यामसुन्दरमहाशयेनाभिनवमेकं दर्शनाध्यापकपदं प्रकल्प्य तत्र स्वयमाहूतोऽयमवसरमिमं त्यक्तुं नैच्छत् । ततो लाहोरस्थैः श्रीरघुवरदयालुप्रभृतिभिः साग्रहं निषिध्यमानोऽपि पितृसेवाया आवश्यकत्वमुपदर्श्य जयपुरं प्रत्यागत एव । प्रस्थानकालेपि पञ्चनदीयेषु महान् कोलाहल आसीत् । बह्वीभिः संस्थाभिः प्रस्थानाभिनन्दनपत्त्राण्युपायनानि च बहुविधान्यर्पितानि । प्रतिष्ठितैर्नेतृभिरपि पुनः प्रत्यागमनप्रत्याशा सानुरोधं प्रकटिता । सनातनधर्मानुयायिनस्तु नेतृविरहितान् स्वान् मन्यन्ते स्म ।

इदमत्रावश्यमवधेयम्—यद् राजकीयसंस्थासु निवेदनपत्त्रप्रदानमन्तरेण न कस्यापि नियुक्तिरवलोकिता, किन्तु महानुभावोयं प्रार्थनापत्त्रादिकं किमप्यप्रेष्यैव श्रीमता शिक्षाविभागाध्यक्षमहोदयेन सादरं साग्रहमाहूतो जयपुरमायातः । संस्कृत-कालेजेऽष्टवर्षं संवत्सरं दर्शनमहाध्यापकपदे स्थित्वा महामहोपाध्यायश्रीदुर्गाप्रसादद्विवेदमहोदयैर्वार्द्धक्यवशाद् गृहीतेऽवकाशे विद्यालयस्यास्याध्यक्षत्वमलमकार्षीत् । तत आरभ्याष्टादशवर्षपर्यन्तं यथा कालेज-कार्यमयं कृतवान्, यथा वा कालेजीयकार्ये बाह्याभ्यन्तरेष्वङ्गेषु कृतानेन समुन्नतिः, कार्य-कालस्य कालेजस्य छात्रसंख्यायामध्यापकसंख्यायाञ्च यादृश्याशातीता समजायत वृद्धिस्तस्याः खलु वर्णनं जयपुर-संस्कृत-कालेजमनुरुध्य लिखिते स्वतन्त्रे निबन्धे भवितेति नात्र तस्योल्लेखाय प्रयत्यते । पाठकैस्तत एव तदवगन्तव्यम् । किन्तु जयपुरगमनानन्तरमस्य बहुभिः सार्वजनिककार्यैः बह्वीभिश्च लोकप्रियसंस्थाभिः सक्रियः सम्बन्धोऽभवत् । न केवलं सम्बन्ध एवापि तु बहवः संस्थास्तु महोदयस्यास्य सुचारु कार्यकरणेनैव प्रचलिता इति संक्षेपेण वर्णनं तस्य मन्ये नासामयिकं भवेत् ।

जयपुरमागत्य ब्राह्मणजातेः समुन्नतये शिक्षाविभागाध्यक्षश्रीश्यामसुन्दरमहाशयसहयोगेन 'ब्राह्मण-सभा'नेन संस्थापिता, मन्त्रित्वमपि चास्याः स्वकीययोरेव स्कन्धयोः संस्थाप्य सुसंगठनायास्याः बहु प्रयतितम् । अधिनगरं स्थाने स्थाने सभाया अस्या अधिवेशनानि विधाय पर्याप्तः प्रचारो व्यधीयत । ब्राह्मण-बालकाः सन्ध्यादिनित्यकर्मणि यथा भवेयुर्नियुक्तास्तथाभिविहितः प्रयत्नः । किन्तु यतः प्रभृति मन्त्रित्वमस्या अन्येन महाभागेन गृहीतम्, हन्त ततोऽस्तमितैव सा ब्राह्मण-सभा । नामापि न श्रूयते तस्याः ।

सनातनधर्ममण्डलनाम्ना प्रसिद्धैका धार्मिकसंस्था

बहोः कालादत्र प्रचलति स्म । समये समये विदेशा-दागतेनाप्यनेन व्याख्यानदानैः सोपकृता च । किन्तु कालमहिम्ना सुधारकमन्यैस्तत्राधिकारं कृत्वा सर्वथा सनातनधर्मविरुद्धा अपि प्रस्तावास्तत्र रचिताः । सना-तनधर्ममण्डलमञ्चे सनातनधर्मविरुद्धानि कार्यजाता-न्यसहमानेनानेन स्वप्रभावेण, युक्त्या, तर्केण, शास्त्रेण च सुधारकांस्तान् विजित्य पुनर्मर्यादापथे सुस्थापितं तन्मण्डलमद्यापि व्यवस्थयैव प्रचलतीति जानाति सम्यग् जयपत्तनस्था जनता । सदस्या एव संस्थायाः प्राणा इति जानन्नेवायं सहस्राधिकान् सदस्यान् ज्योतिर्वित्प्रवरश्रीशिवनन्दमहाशयसहयोगेन विधाय सुदार्ढ्यमस्य व्यधात् । वार्षिकोत्सवेषु च धार्मिक-सप्ताहकार्यक्रमं विरचय्य सनातनधर्मोपदेष्टारो गाय-काश्च सुप्रसिद्धास्तत्र समाहूताः । भारतधर्म-महामण्ड-लस्य सुप्रसिद्धः कार्यकर्ता स्वामिदयानन्दमहाभागोपि मण्डलमिदमुपकृतवानित्यत्र चरितनायकस्य प्रबल-प्रयत्न एव हेतुः । न केवलमेतावदेव, प्रयत्नेनास्य बहवः संप्रदायाचार्याश्चापि मण्डलमिदं सनाथयन्ति स्मेति न प्रच्छन्नं जयपुरजनतायाः । परार्यस्यैव मण्डलस्य वार्षिकोत्सवावसरे देवनायकाचार्य-कविर-त्नाखिलानन्दप्रभृतयोनेके सनातनधर्मनेतारः स्वी-योपदेशैर्जयपुरसनातनधर्मजनतामतूतुषन् । तस्मि-न्नेवावसरे संसारे सुखशान्त्योः स्थापनाया उद्देश्येन विष्णुयागोऽप्यकारि । यत्र सहस्राणि मुद्राणां व्ययी-भवन्ति स्म । तदिदं सर्वमस्यैव समुद्योगस्य फल-मिति जयपुरजनतायाः प्रत्यक्षचरम् ।

न केवलमयं सनातनधर्मसंस्थास्वेव कार्यमकार्षी-दपि तु राजकीयास्वद्धराजकीयास्वन्यास्वपि च जनतासभासु सोत्साहं कार्यं कृतवान् । जयपुरेन्द्रस्य युद्धक्षेत्रात् प्रत्यागमनकाले क्षत्रियसभया श्रीमद्राज-राजेन्द्रस्याभिनन्दनाय प्रबन्धमायोजनमकारि । तस्या-मपि सभायामारम्भिकमङ्गलादिकार्यजाते आसीदस्य पूर्णः सहयोगः । 'मौजमन्दिर-धर्मसभा'नाम्न्या धर्म-निर्णायिकाया राजकीयधर्मसभाया अपि सदस्यत्व-मयं धर्मान्वेषणे सादरं स्वीकृत्य सुचिरं साधु निरवहत् । राजकीय-बृहत्-सार्वजनिकपुस्तकालयस्य सदस्यत्व-मङ्गीकृत्य हिन्दी-संस्कृत-विभागस्य संयोजकत्वमपि च स्वीकृत्य तस्य प्रचारे बहु प्रयतितम् । विभागेस्मिन् पुस्त-कानां संख्यापरिवर्द्धनायापि महती चेष्टा विहिता ।

एवं राजकीयसंस्थासु कार्यं कुर्वन्नपि धन्व-न्तरिमहौषधालय--दादूमहाविद्यालय-कविमण्डलपाठ-शाला-साहित्यसमाजादिसंस्थास्वपि सक्रियमकरोत् सहयोगम् । कस्याश्चन साभापत्यम्, कस्याश्चन मन्त्रि-त्वम्, कस्याश्चन कार्यकारिणीसदस्यत्वं चेति गृहीत्वा कार्यभारं तासामुन्नत्यै सुबहु प्रयतितमिति न परोक्षं तत्रत्यानाम् । एवमनेकासु राजकीयाराजकीयसंस्थासु कार्यं कुर्वाणोपि महाराज-संस्कृत-कालेज-सदृश्या महत्याः संस्थायाः स्कन्धयोर्भारं वहन्नपि महाशयोयं बहिः-प्राभिर्धार्मिकसंस्थाभिर्जातीयसंस्थाभिश्च अक्षुण्ण-मेव पूर्वप्रचलितं संबन्धं रक्षितवानिति न साधारणीयं धोरणी । किमत्र विशेषप्रपञ्चेन-कार्यमेवास्य जीव-नम्, सनातनधर्म-सुरसरस्वतीसेवैव च जीवनस्य प्रधानं लक्ष्यमिति सर्वथा सुप्रत्यक्षम् । एतादृशस्य महापुरुषस्य यशोविस्तृतिर्नाम कियती मात्रा !

१९२६ तमे ख्रिस्ताब्दे श्रीमालवीयमहोदयेन विद्व-त्परिषदेका समाहूता । तत्रापि प्रामुख्यमस्यैव चतुर्वेद-महोदयस्यासीत् कार्यकरणे । एवमेव सन् १९२८ तमे ख्रिस्ताब्दे यत्खलु निखिलभारतवर्षीयं ब्राह्मणसंमेलनं वाराणस्यामजायत, तेन सार्द्धमेका विद्वत्परिषदपि

सङ्घटितासीन्मालवीयमहाशयेन । तत्रायमुभयत्रापि संमिलितोऽभवन् निमन्त्रितः । अस्यां परिषदि महाशयेनानेन "सच्छूद्राणां पुराणादिपठने वर्तते शास्त्रसंमतोऽधिकारः" इति पक्षमवलम्ब्य सुबहु-विचार विनिमयः कृत आसीत्, स श्रोतव्यो मन्तव्यश्च । एतत्परिगृहीत एव च पक्षः-सभापतिना श्रीशङ्कराचार्य-स्वामिभारतीकृष्णतीर्थमहोदयेन निर्णये उद्घुष्ट आसीत् । एवं सर्वतोमुखी प्रतिभास्य यशोविताने सम्मानदाने च सर्वदा साहाय्यं कृतवतीति किं विशेषप्रजल्पितेन ।

सन् १६२८ तमे खिस्ताब्दे पञ्चाम्बुप्रान्तीय-सनातन-धर्मसभाया उपदेशकानुपदेशशिक्षाप्रदानाय सादरमाहूतोऽयं तत्र गत्वा नियमानुसारमुपदेशकाँस्तान् सम्यक्प्रकारेण तथा शिक्षयामास यथा ते सनातनधर्मोपदेशदाने साफल्यमभजन्त । नेयं घटना सनातनधर्मप्रासादाधारस्तम्भभूतेष्वन्येपूपदेशकेषु, महोपदेशकेषु च घटितेति कथं नास्य यशो विस्तारयेत् ।

१६२६ तमे ऐशवीयेऽब्दे वर्णाश्रमस्वराज्यसंघस्य स्थापनाभूत् । यदा निखिले ह्याङ्गलभारते प्राचरद् धारासभाया उत्तीर्य शारडाप्रस्तुतोऽयमाचतुर्दशवर्षं बालिकानां विवाहनिषेधनियमस्तस्मिन् धर्मसंकटसमये चतुर्वेदमहोदयेनानेन पत्रमेकं प्रायशः समस्तेषु समाचारपत्रेषु प्राकाशि यन्महता दुःखेनासीत् परिपूर्णम् । तत्पत्रं यद्यैतिहासिकमपि वदेम मन्ये नात्र लेशतोऽप्ययुक्तिः । तद्धि, यावन्तः सन्ति सनातनधर्मावलम्बिनस्तान् सर्वान् संबोध्य समादिष्टवदात्मबलिदानाय । तत्पत्रं पाठकानां पुनः स्मरणायात्र प्रकाश्यते—

## सनातन-धर्म के नेताओं की निद्रा

समस्त भारत में अब यह समाचार फैल गया है कि शिमला-शैल पर भारत की भाग्य-विधात्री बड़ी व्यवस्थापिका सभा ने मि० सारडा का विवाह-बिल् पास कर दिया । वैदिक-सनातन-धर्म के मूलोच्छेद का उपक्रम होगया । अनादिकाल से अनन्त गगन-प्राङ्गण में सर्वोच्चभाव से देदीप्यमान-सनातन-धर्म-मर्यादा की ध्वजा को धराशायी बना देने की पूरी तैयारी हो गई, भारतीय-सभ्यता को पैरों तले कुचल डालने के लिए रिफार्मरों के प्रबल आक्रमण का शङ्खनाद शिमलाशैल से सम्पूर्ण-भारत में गूंज गया । पूर्वीय-सभ्यता को पाश्चात्य-साँचे में ढाल देने की मशीन बन गई । इङ्गलैण्ड की महारानी आदिभारतेश्वरी श्रीमती विक्टोरिया की धार्मिक अभयदान देने वाली घोषणा भारत-सम्राट् के वर्तमान कर्मचारियों द्वारा उपेक्षा की गुफा में तिरोहित कर दी गई । ब्रिटिश-राज्य की धर्म में हस्तक्षेप न करने की नीति आज बदल गई और राज्य-सत्ता के धर्म-सत्ता पर प्रभुत्व जमाने का युग आरम्भ हो गया । इस असाधारण घटना के अद्भुत अवसर पर भी सनातन-धर्म के नेताओं को जो गहरी नींद आ रही है, वह क्षीर-समुद्रशायी भगवान् की प्रलय-काल की नींद से कम दर्जे की किसी प्रकार नहीं कही जा सकती । जनता व्याकुल है, जिन्हें इस बिल् की कुछ भी खबर है, वे सर्प-बिल के समान ही इसके डर से थर-थर काँप रहे हैं, वे बेचारे रास्ता ढूंढ़ते हैं, कोई रास्ता बताने वाला नहीं । क्या भूतपूर्व दरभङ्गा-नरेश महाराजा श्रीरामेश्वरसिंह के स्वर्ग में पधारते ही सनातन-धर्म के नेता का सिंहासन आज शून्य ही होगया ? क्या आज कोई नेता उसे सम्हालने वाला न रहा ? सनातनधर्मान्दोलन के आदि प्रतिष्ठापक श्रीमान व्याख्यानवाचस्पति दीनदयालुशर्माजी इस

इस अवसर में रियासतों का उद्धार करने निकले हैं। दक्षिण और पूर्व के द्वार नापते हुए भी इस विवाह के बिल के संबन्ध में एक शब्द भी अभी उनके श्रीमुख से सुनाई नहीं दिया, मानों यह एक साधारणसी घटना होरही है, उनके ध्यान देने योग्य ही नहीं। इस घोर संकट के समय उनकी यह मौन-मुद्रा धार्मिक-जनता को आश्चर्य में डाल रही है। क्या, अपनी ही आँखों से अपने लगाये हुए इस सनातनधर्मान्दोलन के पौधे को छिन्न-भिन्न होता देख उनके हृदय में कोई भाव उदित नहीं होता? उन के तीक्ष्ण बाण जो आर्यसमाज के आक्रमण से सनातनधर्म की रक्षा कर सके थे, वे क्या आज सुधारकों का आक्रमण हटाने में कुण्ठित हो चुके? जगत्गंज के स्वप्रासाद में विराजमान श्रीस्वामी ज्ञानानन्दजी का 'महार्घ' सिंहासन अभी अडोल है। न जाने उनके मस्तिष्क का 'नीति-भण्डार' कौन से अवसर के लिये सुरक्षित है? श्रीस्वामी दयानन्दजी न मालुम किस कन्दरा में तपःसिद्धि प्राप्ति का प्रयत्न कर रहे हैं। खिलाफत आन्दोलन के समय गवर्नमैण्ट को चुनौती देने में सर्वाग्रसर होने वाले जगद्गुरु श्रीशङ्कराचार्यपीठाधिष्ठित श्रीभारतीतीर्थ-स्वामी महाराज कदाचित् आन्दोलनों से पूर्ण वैराग्य ले चुके हैं। अन्यान्य आचार्य महाप्रभु भी समय समय पर अपने प्रभाव की रक्षार्थ सभाओं का आयोजन भले ही कर लेते हों, किन्तु ऐसे अवसर में धर्म का नेतृत्व-यद्यपि वह उनका जन्मसिद्ध अधिकार है, तथापि उसे-सम्हालने का उन्हें अवकाश कहाँ?

श्रीमान् महामना मालवीयजी को भी ऐसे नेतृत्व के लिये अवकाश मिलेगा-इसकी कल्पना भी कल्पनातीत है। धर्म के संकट के समय चाहे भगवान् शङ्कर की भी समाधि टूट जाती थी, शेषशायी भगवान् नारायण की भी निद्रा खुल जाती थी, किन्तु सनातनधर्म के त्यागमूर्ति गोस्वामी गणेशदत्तजी की "उत्तरकाशी" की समाधि इस समय भी नहीं टूट सकती। थोड़े से मतभेद पर जिनकी प्रबल शक्ति ने गत कार्तिक मास में 'ब्राह्मणसम्मेलन' के रूप में एक बृहद् आयोजन उपस्थित कर दिखाया था, वे म॰म॰ पञ्चानन-तर्करत्न और म॰म॰ लक्ष्मण शास्त्री महोदय न जाने कब अपनी शक्ति से काम लेने की बात सोच रहे हैं। कहाँ हैं इस समय वे सनातन धर्म के महोपदेशक और महामहोपदेशक जो "सनातनधर्म की जय" की प्रबल चिल्लाहट से गगनतल को प्रतिदिन विदीर्ण कराया करते हैं। क्या इस समय कोई भी कर्तव्य उन्हें नहीं सूझता। मैं तो महाकवि भारवि के निम्नलिखित शब्द आज इन सब महानुभावों को अवश्य स्मरण कराऊँगा— जो कि उनने द्रौपदी के मुख से महाराज युधिष्ठिर के प्रति कहलवाये हैं—

> अथ क्षमामेव निरस्तविक्रम-
> चिराय पर्येषि सुखस्य साधनम्।
> विहाय लक्ष्मीपतिलक्ष्म कार्मुकं
> जटाधरः संजुहुधीह पावकम्॥

इस श्लोक का प्रकृतोपयोगी तात्पर्य यही है कि यदि इस अवसर पर भी सनातनधर्मावलम्बी और उनके नेताओं को मौनमुद्रा ही से रहना है, तो फिर सनातनधर्मसभा, महासभा, प्रतिनिधिसभा, महामण्डल, कान्फ्रेंस, प्रभाव जमाने की सभा इत्यादि रूप में जितना सनातनधर्म का आडम्बर है, उस सब को आज ही समाप्त कर देना चाहिये। जब सनातन-

धर्म का कोई नेता नहीं, कोई सङ्गठन नहीं, अपने भावों को प्रकाशित करने की कोई सामग्री नहीं, अपना अस्तित्व बनाये रखने की शक्ति उस में न रह गई, तो फिर इन निरर्थक वागाडम्बरों में दरिद्र देश का लाखों रुपया नष्ट कर ने से क्या लाभ ? भारत के भावी स्वराज्य में सनातनधर्म की जो दशा होगी, उसका नमूना तो देख लिया, अब नित्य रिफार्मरों की ठोकरें खाने और उनके उपहासपात्र बनने का खेल करना क्या कोई बुद्धिमत्ता कही जायगी। मैं नहीं समझता कि इस प्रकार का घोर अपमान सह कर भी सनातनधर्म के व्याख्याता किस मुँह से कहेंगे कि 'हमारे अनुयायी बीस करोड़ हैं' हमारी प्रबल शक्ति है। क्या अब सनातन धर्म की उन्नति के लिये गला फाड़ते उन्हें लज्जा न आवेगी ? इससे तो यही अच्छा है कि सनातनधर्म के नाम से सभा सोसाइटियों का जितना आयोजन है; सब बन्द कर दिया जाय, काल जिधर ले जाना चाहता है उधर देश को जाने दो। किसी के मार्ग में रोड़ा मत अटकाओ, जिस के चित्त में कुछ श्रद्धा बाकी हो, वे घर में बैठ कर राम राम जप लिया करें।

यदि सनातनधर्म के कोई नेता हैं और उनके चित्त में इस सङ्गठन युग में कार्य करने का कुछ भी उत्साह शेष है, यदि सनातनधर्म की छीछालेदर होती देख किन्हीं महानुभावों के हृदय से शोणित के अश्रु निकलते हैं तो उन्हें इस अवसर में आगे आना चाहिये। यह खास परीक्षा का समय है, इस समय गिर गये तो फिर उठने का अवसर नहीं है। मेरे विचार से इस समय सब से पहिला कर्तव्य यही है कि जितना जल्दी हो सके, सब प्रदेशों के सनातनधर्म के मुख्य मुख्य कार्यकर्ता किसी स्थान में एकत्र होकर इस बात का विचार करें कि इस अवसर में धर्मरक्षा का उपाय क्या हो सकता है। यह पब्लिक-मीटिंग न हो कर प्राइवेट मीटिंग होनी चाहिये। इसका किसी प्रकार का व्ययभार किसी संस्था पर नहीं पड़ेगा, सब को अपने २ व्यय से इस में संमिलित होना होगा। केवल कोई एक सनातनधर्म की संस्था-जो आगे आना चाहे, वही स्थान, तारीख आदि का निश्चय कर सनातनधर्म के नेता, उपदेष्टा, आचार्य, प्रधान-धर्म-संस्थाओं के कार्यकर्ता व भिन्न भिन्न प्रान्तों के चुने हुए सनातनधर्माभिमानियों को उसकी सूचना दे दे, और आगत प्रतिनिधियों के केवल ठहरने व मीटिंग करने के स्थान का प्रबन्ध कर दे। आगे का कर्त्तव्य आगत प्रतिनिधि ही स्वयं सोचेंगे। स्थान के लिए भी किसी पण्डाल के आयोजन की आवश्यकता नहीं, कोई धर्मशाला या पब्लिक हाल मांग लेना पर्याप्त होगा।

मेरे विचार से इस मीटिंग का स्थान देहली होना चाहिये-जहाँ आने में सब का व्यय और कष्ट प्रायः समान है, और जो इस विचार के सर्वथा उपयुक्त स्थान है। यदि वहां आयोजन न हो सके तो फिर काशी में होना चाहिये। एक मास से अधिक समय इस के लिए कदापि न लिया जाय, इस के भीतर जितना जल्दी हो सके यह आयोजन हो। हाँ, गवर्नमैण्ट-गजट की दो तीन छुट्टियों का अवसर मिल सके तो उत्तम है।

जो सज्जन वा जो सभाएँ मेरे इस तुच्छ विचार से सहमत हों, वे इस पर अपनी संमति 'हिन्दू-संसार' 'भारतमित्र' आदि किसी सनातनधर्म के ( संभवतः

दैनिक) पत्र द्वारा शीघ्र प्रकट करें और जो संस्था इस अवसर में अग्रसर होना चाहे, वह भी अपनी स्वीकृति की सूचना शीघ्र प्रकाशित करे। यदि कोई संस्था वा कोई सज्जन कार्यक्षेत्र में न उतरा तो फिर 'भगवदिच्छा'।

गिरिधरशर्मा चतुर्वेदी

---

अस्य पत्रस्यायं प्रभावः समजनि यद्भारतवर्षीय-राजधान्यां किल देहल्यां सर्वेषां सनातनधर्मनेतॄणां तस्मिन्नेवाब्देऽक्टूबरमासस्य २६ तारिकायामेका बृहत्सभा संघटिता। यस्यां खलु सभायां शतद्वयादप्यधिकाः प्रतिनिधयो निजव्ययेन सुदूरदूरतः समागत्य सहर्षं सोद्वेगं सोत्साहं च सम्मिलिताः। न केवलमेतावदेव, जगद्गुरुश्रीशङ्कराचार्यगोवर्द्धनपीठाधिष्ठिताः श्रीभारतीकृष्णतीर्थस्वामिनः धर्मप्राण-स्वर्गीयलक्ष्मणशास्त्रिद्रविड-सार्वभौम-पञ्चाननतर्कभूषणसदृशाः प्रकाण्डपण्डिताः व्याख्यानवाचस्पति-श्रीदीनदयालुश्रीस्वामिदयानन्दसदृशा धर्मनेतारः, श्रीश्यामसुन्दरचक्रवर्तिसदृशा राजनीतिनेतारश्चापि समायाताः। अयमपि महोदयस्तस्यां संसदि सम्मिलित इति तु मन्ये न वक्तव्यमपेक्षते, कर्णधारत्वादस्य। तत्रैव च वर्णाश्रमस्वराज्यसङ्घः स्थापितोऽभूत्। अचीकमन्त तत्रत्याः सर्वेऽपि सभासदो यदयं चतुर्वेदमहोदय एव सङ्घस्यास्य प्रधानमन्त्रित्वं भजेत इति; किन्त्वस्य राजस्थाननिवासकारणात् संस्थाया अस्या राजनीतिकत्वाच्चैतन्मित्रेण वाराणसेयस्वामिदयानन्दमहोदयेन मन्त्रित्वमस्याङ्गीकृतम्। विद्वद्वरेण्यः श्रीलक्ष्मणशास्त्रिद्राविडमहोदयश्च तत्कार्यपरिचालने संलग्न आसीत्। अस्यास्माकं चरितनायकस्योभाभ्यां सह मनोवाक्कायकर्मभिः सहयोगः सर्वेषु कार्येष्ववतिष्ठत्। स्वर्गीयः श्रीलक्ष्मणशास्त्री यावज्जीवितमस्यैव संमत्या सहयोगेन च कार्यं परिचालयति स्म। विषयमिममवलम्ब्यैव श्रीमता लक्ष्मणशास्त्रिणा श्रीपञ्चाननतर्करत्नमहाशयेन च (उभावप्यस्मिन्नेव व्यतिकरे व्यक्तमहामहोपाध्यायपदवीकौ) सार्कं स्नेहानुबन्धोऽस्य दार्ढ्यमभजत। धर्मप्राणस्य शास्त्रिवर्यस्य स्वःप्रयाणात् कार्यकर्तृसहयोगिनः प्रायोऽभावादेव हन्त! सोयं सङ्घो न तथा कार्यं कर्तुमपारयद् यथा ह्यभिलषितमासीत्। तथापि शास्त्रिमहोदयस्य स्वःप्रयाणादनन्तरमपि कलकत्ता-मुम्बई-प्रभृत्यधिवेशनेषु महान्तं स्वव्ययं सोढ्वापि सङ्घकार्यमस्मच्चरितनायकेन बहुतरं कृतमित्यास्तां विस्तरेण।

अस्यैव वर्णाश्रमस्वराज्यसङ्घस्याधिवेशनमुद्दिश्य यदायं मोहमयीं प्राप्तवान् तदास्य मनसि द्वारकायात्राया विचारः सहसैव प्रावर्तत। तदनुसारं तडिद्यन्त्रेण जयपत्तनस्थान् स्वपितृचरणानन्यानपि च कुटुम्बिनः समाहूय महतोत्साहेन संपादिता द्वारकायात्रा। किन्तु हन्त! तस्यां यात्रायां विधेर्दुर्विलसितेन शोचनीयैका समघटत घटना। महाशयस्यास्य मध्यमपुत्री शान्तिदेवी नाम वयसा सप्तवार्षिकी समुद्रस्नानकाले सहसैव तरङ्गततिपतिता पश्यतां पितृपितामहादीनां सागरतरङ्गैः खेलन्ती नश्वरमिदं शरीरं परित्यज्य लोकान्तरं प्राप्ता। महान् शोकोऽस्माकं चरितनायकस्य चेतसि प्रावर्तत, किन्तु विधिविचेष्टितं केन वा शक्यते वारयितुम्? अवसरेऽस्मिन् तत्रत्यैः पोरबन्दरमहाराजैरपि शोकप्रकाशनं विहितम्। विद्यालयानामवकाशस्तदात्व एव कारितः स्वकीयः प्रधानमन्त्री च श्मशानयात्रायां प्रेषितः। समाहूय समाश्वासितश्चरितनायकः, सुबहु सत्कृतः पूजितश्च। एवमियं द्वारकायात्रा दुःखसम्मिश्रैव संजातेति न

वक्तव्यमपेक्षते। तथापि तु शास्त्रोद्धारे (वेदद्वारका) भगवन्मन्दिरेऽस्य व्याख्यानमभवन्, यत्र प्रतिष्ठिता गोस्वामिप्रभृतय उपस्थिता आसन्।

तस्मिन्नेवाब्दे श्रीनगरकाश्मीरराज्यस्य प्रधानामात्य-(प्राइम-मिनिस्टर) दीवान-श्रीबदरीनाथमहोदयस्य विधवया धर्मपत्न्या शास्त्रश्रवणाय महोदयोऽयं सादरं समाहूतः काश्मीरान् गतवान्। किन्तूपनिषच्छ्रवणाय साग्रहं निवेदितस्तन्निशामनाय "स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरे" त्युपनिषदां साक्षाच्छ्रुतीनां श्रवणस्य नाधिकारो नारीणामिति स्पष्टं निषिषेध। अत एव च ततः परावर्तनायापि संननाह, किन्तु तयैवोपनिषच्छ्रवणाग्रहं परित्यज्य भागवतश्रवणाय साग्रहं विनिवेदितः श्रीमद्भागवतस्यैकादशस्कन्धं श्रावयामास। प्रवचनेनास्य भृशं सन्तुष्टा महोदयमेनं बहु सत्कृतवती तत्रभवती मन्त्रिपत्नी। काश्मीरराजधान्यां श्रीनगरेऽपि च व्याख्यानान्यस्य प्रभावन्त्यासन्। तेन तत्र सुधारकाणां प्रभावस्तिरोऽभवत्।

सन् १९३२ तम ईशवीयेऽब्दे श्रीयुक्त-मोहनदासकर्मचन्दगान्धिमहोदयेन अस्पृश्योद्धारनाम्ना स्पृश्यास्पृश्यव्यवस्थामामूलचूलमुन्मूलयितुमान्दोलनमेकमारब्धम्। तत्प्रसङ्गेन च तेनानेकवारं समाचारपत्त्रेषु प्राकाशि यत् सनातनधर्मावलम्बिनो बुधा यद्यस्पृश्यताया वास्तविकं तत्त्वं मां बोधयेयुस्तर्ह्यहं तत् स्वीकर्तुमवश्यं भजेय'मिति। तदवसरेऽस्माकं चरितनायकेन यरवदाकारागारसङ्केतेन पत्त्रमेकं तत्सविधे संप्रेष्य पृष्टमासीत्-यद् 'भवन्तः केन रूपेणास्पृश्यतामर्म जिज्ञासन्ते? धर्मविषये शास्त्राणि प्रामाण्यं लभन्ते न वा भवन्मते? यदि स्वीक्रियते शास्त्रप्रामाण्यं तर्हि कानि खलु शास्त्राणि प्रमाणत्वेनाङ्गीक्रियन्ते भवद्भिः? यदि शास्त्राणां न प्रामाण्यं तदा धर्मनिर्णये कः प्रकारः प्रचलति भवन्मत' इत्यादि। श्रीगान्धिमहोदयेन यरवदाकारागारादेव प्रत्युत्तरितम्—'यदहं शास्त्रप्रामाण्यं स्वीकरोमि। मुख्यं शास्त्रं मन्मते भगवद्गीतैवास्ती'त्यादि। तदा चतुर्वेदमहोदयेन पत्त्रमेकं पुनस्तेषां सविधे संप्रेषितम्, यत्र भगवद्गीतानुसारमेवास्पृश्यता प्रमाणिताभवत्, किन्तु हन्त! नास्य पत्त्रस्य किमप्युत्तरं श्रीयुक्तगान्धिमहोदयस्य सकाशादुपलब्धम्।

ईशवीये १९३३ तमेऽब्दे हरिद्वारेऽर्धकुम्भे श्रीमालवीयमहोदयेन पञ्चनदप्रान्तीयगणेशदत्तप्रभृतीनां सहयोगमवाप्य सनातनधर्ममहासभाया बृहदधिवेशनमकारि। तत्र-अस्पृश्यानां सर्वजनोपयुक्तमन्दिर-कूपादिषु-अधिकार उद्घुष्यते स्म। तादृशान् विवादग्रस्तान् विषयानवलम्ब्य शास्त्रार्थकरणायैका विद्वन्मण्डली, यत्र काशीस्था अप्यनेके विद्वांसः सम्मिलिता आसन्, श्रीशङ्कराचार्यपीठाधिष्ठितान् जगद्गुरून् श्रीमतो भारतीकृष्णतीर्थमहाभागानध्यक्षत्वे विनियोज्य महासभायामस्यां संप्राप्ता। तत्र-शास्त्रार्थे भवत्पक्षे कतमः खलु पण्डितो भवेद् वक्तेति मालवीयमहोदयेन पृष्टे काश्यादिनानादिग्देशागतैः सर्वैरपि विद्वद्भिर्वक्तृत्वेनायमस्माकं चरितनायक एव समुद्घोषितः। शास्त्रार्थः स सुस्थिरोऽभूत्। किन्तु शास्त्रार्थसमये समुपस्थिते श्रीमालवीयमहोदयस्तस्माच्छास्त्रार्थादेतत् कथयित्वा पराङ्मुखोऽभूद् 'यदहं नेच्छामि सार्वजनिकसभायां विवदितुमि'ति। एवमयं शास्त्रार्थस्तु यद्यपि स्थगितोऽभवत्, तथापि हिन्दूविश्वविद्यालयात्प्रकाश्यमान एव 'सनातन-धर्म'-पत्त्रे चिरकालं यावल्लेखमालास्माकं चरितनायकस्य प्रकाशिताभवत्। तद् दृष्ट्वा महाशयस्यास्य विषयमिममवलम्ब्य विचारगाम्भीर्यं स्फुटमेव प्रतीयते।

# श्रीमान् गाँधीजी को पत्र

श्रीमान माननीय गांधीजी महोदय !

स्पृश्यास्पृश्य-व्यवस्था को एकदम हटाकर पवित्र धर्मस्थान मन्दिरों को भी शास्त्रमर्यादाविरुद्ध आचरण से अपवित्र बनाने का जो आन्दोलन आपने उठा रक्खा है, उससे सनातन-धर्मावलम्बीमात्र का हृदय मर्माहत हो रहा है। इस सम्बन्धमें आपने अपने वक्तव्यों में अनेक बार कहा है और 'वर्णाश्रम-स्वराज्य-संघ' के सदस्य पं० श्रीराजेश्वर शास्त्रीजी को भी लिखा है कि मुझे यदि सनातनी समझा दें तो मैं मान सकता हूँ। इस विषय में विनय यह है कि यदि आप यह बताने की कृपा करें कि आप को समझाने का प्रकार क्या है ? तो उसके लिये यथाशक्ति प्रयत्न किया जाय। क्या आप प्रमाणों के आधार पर समझ सकते हैं ? वा युक्तिवाद के आधार पर वा अन्य किसी प्रकार से ? यदि प्रमाणों के आधार पर, तो आप किन किन ग्रन्थों को प्रमाण मानते हैं ? यदि युक्तिवाद पर, तो वैसा युक्तिवाद आपको अभिमत है ? और यह पूछने के लिए भी क्षमा कीजिये कि क्या आपके विश्वास से युक्तिवाद से तत्त्वनिर्णय हो सकता है ? यदि और कोई प्रकार है, तो वह क्या ? यदि यह बात समझ में आजाय तो कुछ उपाय निकल सकता है। यदि आपका उक्त कथन केवल उदारता-गर्भित सभ्यता-प्रदर्शन मात्र के लिये न होकर वास्तविक है, अर्थात् वस्तुतः आप सत्यान्वेषक बनकर इस विषय में निष्पक्ष विचार चाहते हैं तो इस विषय को कृपाकर आप अवश्य स्पष्ट करदें कि कौनसा तरीका आपके हृदय में उपादेयता का भाव उत्पन्न कर सकता है।

यह भी आपने अपने वक्तव्य में कहा है कि कुछ विद्वान अस्पृश्यता को शास्त्रविहित नहीं मानते, किन्तु आप जैसे सत्यान्वेषक को यह पता तो लगाना चाहिये कि कौन से सत्य बोलते हैं और कौन से चापलूसी में आकर एक प्रकार से वञ्चना कर रहे हैं। क्या इस के लिये कोई विचार की पद्धति निकालने की आप कृपा करेंगे ?

उत्तर के लिये उत्सुक रहूंगा।

ता० २५-१२-३२ आपका

गिरिधरशर्मा चतुर्वेदी

# श्रीमान् गाँधीजी का उत्तर

शास्त्रीजी महोदय !

आपका पत्र मिला है। मैं शास्त्र को प्रमाण मानता हूँ। ग्रन्थों की गिनती तो मुझे कोई देता नहीं है, न दे सकते हैं, ऐसा अबतक तो प्रतीत हुआ है। इस कारण मैंने गीता माता का शरण लिया है। मैं जो कहता हूं उसमें विनय रखने की मेरी चेष्टा है, परन्तु मेरा विनय सत्यका विरोधी न होने देने का भी मैं बड़ा प्रयत्न करता हूँ, और तो क्या कहूँ ?

आपका—

मोहनदास गांधी

ता० ६—१—३३

Superintendent

Yeravoda Central Prison

(Poona)

नोट:—श्रीयुक्तमोहनदासगाँधिमहोदयेन साकं कृतस्य श्रीचतुर्वेदमहोदयस्य यस्य पत्रव्यवहारस्य चर्चा निबन्धेस्मिन्नुल्लेखेन संचालितास्ति; पत्रव्यवहारः सोऽविकलः पाठकानां परिचयायप्रकाश्यतेऽत्रेति। —सम्पादकः

## श्रीमान् गाँधीजी के पत्र का उत्तर

तारीख २१-१-३३
पान का दरीबा, जयपुरसिटी
( राजपूताना )

श्रीमान् माननीय गांधीजी महोदय !

मेरे २४-१२-३२ के पत्र के उत्तर में आपका ६-१-३३ का पत्र प्राप्त हुआ। श्रीमान् ने शास्त्रों को प्रमाण मानते हुए श्रीभगवद्गीता पर विशेष श्रद्धा दिखाई है, यह हर्ष की बात है। सनातनधर्मावलम्बी भी श्रीभगवद्गीता को सब शास्त्रों का सार और धर्म का सर्वस्व समझते हैं। किन्तु यह तो स्वीकार करना ही होगा कि गीता में सूत्ररूप से धर्म के सिद्धान्त हैं। उनका विस्तार व स्पष्टीकरण दूसरे ग्रन्थों में हैं। यदि यह मान लिया जाय कि गीता में जितना कुछ कहा है, वही मात्र धर्म है, बाहर से कुछ न लेना, तब तो यह भी प्रश्न होगा कि मन्दिर बनाकर, उनमें भगवान् की मूर्ति स्थापित कर पूजा, दर्शन आदि करना गीता में स्पष्ट रूप से नहीं लिखा, फिर आप मन्दिरों को क्यों मानते हैं, और उन में दर्शनार्थ अछूतों को भेजने का क्यों आग्रह करते हैं? तब यही उत्तर होगा कि-'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु' इत्यादि सारभूत सिद्धान्त के आधार पर, दूसरे ग्रन्थों में जो मन्दिर में मूर्ति प्रतिष्ठित कर उपासना की पद्धति बताई है, वह भी मान्य है। बस इस ही प्रकार कृपा कर विचार करें कि सनातनधर्मावलम्बी जो वर्णव्यवस्था और उसी का अङ्ग छुआछूत ( स्पृश्यास्पृश्यव्यवस्था ) वा मन्दिरों में कई एक जातियों के प्रवेश का अनधिकार मानते हैं उसका भी मूल गीता में है। संक्षेप से निवेदन करता हूँ—

१—( क ) यह तो सिद्ध ही है कि वर्ण-व्यवस्था ( वर्णभेद ) और वर्णों के भिन्न-भिन्न अधिकार व कर्म गीता में माने गए हैं।

'ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः॥

इत्यादि बहुत से प्रमाण इस सम्बन्ध में हैं। वर्णों के भिन्न-भिन्न धर्म हैं--इसी आधार पर अर्जुन को ब्राह्मणोचित धर्म से हटा कर क्षत्रियोचित युद्ध में भगवान् ने लगाया है। और बार बार 'श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।' यह उपदेश दिया है। इस से स्पष्ट सिद्ध है कि सब का एक धर्म गीता को मान्य नहीं, वह 'स्वधर्म' और 'परधर्म' का विभाग स्पष्ट मानती हुई अधिकारभेद को स्थान देती है। और दूसरे का दूसरे के धर्म में जाना पाप समझती है। यह 'स्व' और 'पर' भिन्न-भिन्न वर्णों के ही लिए है, इस में तो कदाचित् किसी को सन्देह भी न होगा।

( ख ) केवल वर्णभेद ही नहीं, वर्णसंकर ( भिन्न-भिन्न वर्ण के माता पिताओं की सन्तान ) भी गीता के प्रथम अध्याय में ही माना है, और 'संकरो नरकायैव' कहते हुए उसकी अधमता भी स्वीकृत हुई है। इसलिए वर्णशंकर जातियों का धर्मदृष्टि से यदि निकृष्ट वा व्यवहार के अयोग्य माना जाता है तो, वह गीता के अनुकूल ही कहा जायगा, प्रतिकूल नहीं।

( ग ) जन्म से भी जातियों में पाप-सम्बन्ध होता है यह भी गीता स्वीकार करती है, तभी तो "येऽपि स्युः पापयोनयः" में, पापयोनि पद आया, इसका यही अभिप्राय है कि जो उत्पत्ति से ही पाप-

रूप हैं। यह सत्य है कि इस अंश में उस पापयोनि को भी ईश्वरोपासना का अधिकारी बतलाया है और ईश्वरोपासना से उसकी सद्गति भी मानी है; किन्तु हम सनातनधर्मी निषेध कब करते हैं? अछूतभाई भी ईश्वरोपासना करें, किन्तु अपने धर्म के अनुसार। हमारी और उनकी उपासना का स्थान और प्रकार एक नहीं हो सकता, यह पूर्वोक्त [क] [ख] प्रकार से गीता से ही सिद्ध है।

(घ) गीता के अन्तिम अध्यायों में गुणत्रयविभाग—सत्व, रज, तम के भेद-विस्तार से हैं, वहीं वर्ण व्यवस्था और स्पृश्यास्पृश्यव्यवस्था [छूआछूत] की मूलभित्ति है। वहां सत्व-रज-तम वालों के आहार, व्यवहार, श्रद्धा, उपासना आदि सब भिन्न भिन्न बताए गए हैं, और जो गुण 'सत्व आदि' प्रबल हो वह दूसरे को दबा लेता है, यह गुणों का स्वभाव भी बताया है। इसके ही आधार पर दूसरे ग्रन्थों में भिन्न भिन्न गुणप्रधान भिन्न भिन्न वर्ण और जातियों के आहार, व्यवहार, उपासना आदि के सांकर्य की निन्दा की गई है। दूसरे गुण का प्रभाव अपने पर न आवे इसलिए अत्यन्त विरुद्ध गुण वाले के साथ भोजन स्पर्श आदि सब ही व्यवहारों का निषेध किया गया है और गुणक्रमानुसार उपासना और उपासना के स्थान भी सब के भिन्न भिन्न माने हैं। सत्व आदि गुण वालों की मूर्त्ति ( उपास्य-देव ) तमोगुणी के अल्प-संसर्ग से भी प्रभावित न हो, इस लिए तमोगुणप्रधान जातियों का उन मूर्तियों के सामने जाना वा उन्हें प्रणाम करना भी शास्त्रों ने अनुचित ठहराया और तमोगुणवालों की उपास्य-मूर्त्तियों के द्वारा प्रणामादि उपासना सत्व-गुणवालों के लिए अनुचित मानी गई। क्यों कि उपास्य का तमोगुण उनमें न आवे। उपासना उपास्य के गुणधर्मों के ग्रहण के लिए ही होती है, और उपासक के गुणाधिकार के अनुसार ही उपास्य होना चाहिए, यह भी गीता में स्पष्ट है। तब अन्यान्य ग्रन्थों में प्राप्त यह छुआछूत का विवेक व मन्दिरों की व्यवस्था हमारी तुच्छ बुद्धि के अनुसार तो गीता के अनुकूल ही प्रतीत होती है। यदि मन्दिर और मूर्ति गीता के अनुकूल माने जा सकते हैं, तो उनकी यह व्यवस्था भी अवश्य गीता के अनुकूल ही कही जायगी।

आपने और आपके अनुयायी विद्वानों ने पेपरों में यह लिखा है कि शास्त्रों में जिन जातियों को अस्पृश्य कहा है, वे ही आजकल की अछूत मानी जाने वाली जातियां हैं—इस में कोई प्रमाण नहीं। इस पर निवेदन यह है कि प्राचीन कालकी कौन सी वस्तु आजकल किस रूप में है और क्या कहलाती है इस विषय में तो प्रसिद्धि ही प्रमाण मानी जा सकती है। हम सब हिन्दू हैं इस में क्या प्रमाण है? कोई ब्राह्मण, वा कोई क्षत्रिय है, इस में क्या प्रमाण है? यह देश भारतवर्ष है, यह गुजरात, यह मथुरा, यह काशी, यह विन्ध्याचल है— इत्यादि बातों में भी क्या प्रमाण है? यह सब तो प्रसिद्धि के आधार पर ही मानना होता है। यदि विरोध में कोई प्रबलप्रसिद्धि का ही प्रमाण मिले तो कोई प्रसिद्धि अप्रमाण होती है, अन्यथा प्रसिद्धि छोड़ने का कोई आधार नहीं होता। धर्मशास्त्रोक्त (चाण्डाल) जाति आजकल (महतर) है 'चर्मकार' 'चमार' है—इत्यादि सदा की प्रसिद्धि जब वर्तमान है, और उसी के अनुकूल शिष्टों का व्यवहार भी है-तब फिर इस में प्रमाण ढूंढने की क्या

आवश्यकता होती है ? यह समझ में नहीं आया। फिर विरोध का प्रमाण भी तो उन विद्वानों ने कोई नहीं दिया—जिस से कि इस प्रसिद्धि को निर्मूल माना जा सके। क्षमा करिये, ऐसे सन्देह उठाना तो 'डूबते को तिनके का सहारा' मात्र ही है। इन बातों से धर्म का निर्णय कैसे हो।

३—आपने सनातनधर्मावलम्बियों को यह आदेश दिया है कि जो जैसा समझता है, उसे वैसा मानने दो, उसकी स्वतन्त्रता मत छीनो। इस पर क्या यह निवेदन करने की धृष्टता की जासकती है कि फिर सनातनधर्मावलम्बियों की ही वह स्वतन्त्रता क्यों छीनी जाती है। सुधारक और सनातनी दोनों अपना अपना प्रचार करें, जिसे जो मानना होगा-मान लेगा। उपवास वा कानून का आश्रय फिर क्यों लिया जाता है ?

४—आपने अपने एक वक्तव्य में श्रीमान् आ० बा० ध्रुवजी आदि कई एक विद्वानों के नाम लिखे हैं कि इनको सनातनी पण्डित शास्त्रीय विचार द्वारा समझा देवें। इस पर निवेदन है कि क्या श्रीमान् उन महान् विद्वानों में से किसी को इस कार्य के लिए प्रस्तुत करने की कृपा कर सकते हैं कि वे मेरे जैसे तुच्छ व्यक्ति के साथ लेख रूप में शास्त्रीय विचार करने का समय निकाल सकें। कोई एक हिन्दी का पेपर चुन लिया जाय, जो पक्ष विपक्ष के विचारों को प्राप्त होते ही प्रकाशित करता रहे; वा पक्ष और विपक्ष दोनों अपने२ विचार शान्तिपूर्वक प्रकाशित करने को एक एक पृथक् पृथक् पेपर चुन लें। इस प्रकार दोनों ओर के विचार श्रीमान् की दृष्टि में आते रहेंगे। और आप को भी यह निर्णय करने का अवसर मिलेगा कि शास्त्रों का मन्तव्य यथार्थ में क्या है ? 'ब्राह्मणसर्वस्व' मासिक पत्र इटावा यू. पी. में मैंने इस विषय का एक लेख लिखा है। यदि उचित समझा जाय; तो उसे ही आरम्भिक लेख मान कर उस पर उत्तर प्रत्युत्तर आरंभ होजावें।

आशा है सुविधानुसार उत्तर की कृपा होगी।

आपका—

गिरिधरशर्मा चतुर्वेदी

## श्रीयुत मालवीयजी की सेवा में—

श्रीमान परम माननीय श्री मालवीय जी महानुभाव की सेवा में सविनय निवेदन।

कल ता० १३—४—३३ वैशाख कृ० ३ गुरुवार सं० १९९० को मध्याह्नोत्तर ४ बजे का जो समय श्रीमान ने शास्त्रीय-विचार के लिये साधारण सभा ( पब्लिक मीटिङ्ग ) में नियत किया है, उस समय आज्ञानुसार हम लोग उपस्थित होंगे। यदि पुलिस का प्रबन्ध चार बजे तक ऐसा रहा कि लोग इधर उधर आ जा न सकें तो जिस समय प्रबन्ध टूटेगा उस समय उपस्थित होंगे, और यदि प्रबन्ध पहिले टूट गया तो चार से पूर्व उपस्थित हो जायँगे। कृपाकर हम लोगों के लिये प्रधान स्टेज के सामने एक छोटा स्टेज और लगवा दें जिस पर हम लोग अपना पुस्तक आदि सामान ठीक तरह रख सकें, और हमारे लोग सावकाश बैठ सकें और महावीरदल के स्वयं-सेवकों को भी आज्ञा देने की कृपा कीजिये कि हमारे लोगों को उस स्टेज तक पहुंचने में किसी प्रकार की बाधा न डालें प्रत्युत सहायता दें।

ऋषिकुल हरिद्वार
वैशाख कृ० २ सं० १९९०

आपका अनुगृहीत—
गिरिधरशर्मा चतुर्वेदी

## श्रीयुत मालवीयजी का उत्तर—

प्रिय गिरिधर शर्मा जी,

आपका पत्र मुझे १० बजे रात के समय मिला। आपने लिखा है कि "हम लोगों के लिये प्रधान स्टेज के सामने एक छोटा स्टेज और लगवा दें, जिस पर हम लोग अपना पुस्तक आदि सामान ठीक तरह से रख सकें। और महावीरदल के स्वयं सेवकों को भी आज्ञा देने की कृपा कीजिये कि हमारे लोगों को उस स्टेज तक पहुंचने में किसी प्रकार की बाधा न डालें, प्रत्युत सहायता दें"। आपने कल देखा था कि सनातनधर्मसम्मेलन में कितने हजार स्त्री पुरुषों की भीड़ थी। आज वैशाखी का दिन है, आज, कल से भी अधिक भीड़ होने की संभावना है। ऐसी अवस्था में वहां एक दूसरा चबूतरा आपकी मंडली के बैठने के लिये और पुस्तकों के रखने के लिये बनाना वस्तुतः असंभव है, मेरे समझ में ऐसे शास्त्र विचार का प्रयोजन, जिसमें बहुत सी पुस्तकों का प्रमाण देना और विचारना पड़े और जिसमें कई दिन नहीं तो कई घंटो का समय अवश्य आवश्यक होगा, यह नहीं होना चाहिये कि हम लोग अपने अपने मतों का व्याख्यान सभा में एकत्रित जन-समूह को सुनावें, प्रत्युत शास्त्रविचार का प्रयोजन यह होना चाहिये कि शास्त्र को जानने वाले और समझने वाले थोड़े से विद्वान् एकत्र होकर एक दूसरे का अभिप्राय समझने और एक दूसरे को समझाने के लिये एक छोटी सी मंडली में बैठें-जिसमें सौ पचास से अधिक श्रोता नहीं होवें। आठ दस हजार पुरुष और स्त्रियों की सभा के बीच में बैठ कर दो स्टेज बना कर शास्त्रविचार करना, वस्तुतः असम्भव होगा और कल की तरह सभा का नियमन करना बहुत कठिन होगा। इसलिए मैं आपको सनातनधर्ममहासभा प्रयाग में स्वीकृत हुये प्रस्तावों की तथा मेरी लिखी अन्त्यजोद्धारविधि, और 'मंत्रमहिमा' की तीन २ प्रतियां भेजता हूं। इनको आप स्वामी शंकराचार्यजी को और और अपने साथ में काम करने वाले विद्वानों को दीजिये और आप लोग कृपा कर महासभा के प्रस्तावों को और ऊपर लिखी पुस्तकों

को देख कर मुझे लिख भेजिये कि महासभा के किस प्रस्ताव के विषय में आपका मतभेद है और ऊपर लिखी पुस्तकों में प्रकाशित मेरे विचारों से किस विचार के विषय में आप लोगों का मतभेद है और वह मतभेद क्या है ? आप मेरे लिखे प्रमाणों को स्वीकार करते हैं या नहीं ? और यदि नहीं करते हैं तो किन प्रमाणों के बल पर आप उनको अस्वीकार करते हैं। आपका यह लेख मिलने पर मैं जो कुछ उत्तर समझूंगा उसको लिखकर आपको भेज दूंगा। यह आप कल दोपहर तक मुझे कृपा कर सूचित कर दें, और यदि आप लोग इसको पसन्द करें तो कल दो बजे से आप लोग और मैं और मेरे मित्र, महावीरदल के डेरे में एक छोटे पंडाल के भीतर बैठकर जिसमें उभयपक्ष के पचास पचास पुरुषों से अधिक का प्रवेश न दिया जायगा, हम लोग अपने मतभेद को मिटाने और ऐक्यमत स्थापन करने के लिये प्रयत्न करें। आप कृपा कर अपने मित्रों को यह पत्र दिखा कर उनकी और अपनी सम्मति मुझको लिख भेजिये। यदि कल शास्त्र का विचार समाप्त न हो तो परसों १२ बजे दिन से ६ बजे सायंकाल तक फिर हम लोगों को मिलना उचित होगा। और जो जो बात सभा में किसी पक्ष से कही जाय, वह लिख ली जायगी, और वही दोनों पक्ष के हस्ताक्षर से प्रकाशित कर दी जायगी।

| | |
|---|---|
| हरिद्वार<br>वैशाख कृ० ३, १९९० | आपका अनुगृहीत—<br>मदनमोहन मालवीय |

## श्रीयुत मालवीयजी को पत्र—

श्रीमान् परममाननीय श्रीमालवीयजी की सेवा में सादर सप्रणति निवेदन।

अभी जब कि हम लोग आपके यहाँ आने को प्रस्तुत हो रहे थे, दो बजकर चालीस मिनट पर श्रीमान् का आज्ञापत्र मिला है जिससे कि सिद्ध होता है कि आज शास्त्रविचार न हो सकेगा। बड़ी निराशा हुई। श्रीमान् स्वयं इतनी बड़ी सभा में कल प्रकाशित कर चुके थे कि आज चार बजे शास्त्रविचार होगा और ऋषिकुल में भी पब्लिक मीटिंग में श्रीमान् ने श्रीमुख से प्रकाशित किया था कि कल चार बजे शास्त्रार्थ होगा। बहुतसी जनता मुझ से भी पूछ चुकी है कि शास्त्रार्थ होगा या नहीं ? मैं भी उनसे कह चुका हूँ कि श्रीमान् मालवीयजी ने सूचना दी है इससे अवश्य होगा। ऐसी स्थिति में जनता को हतोत्साह कर यदि हम शास्त्रविचार स्थगित कर देंगे तो दोनों पक्ष जनता के सामने मिथ्यावादी होंगे। इसलिये निवेदन है कि अब तो यह सब विचार जनता के समक्ष आज ही होना चाहिये। जनता का नियमन करने को आपके पास महावीर-दल बहुत है। इतनी ही जनता के समक्ष यह आपका क्षुद्र जन गुरुकुल में शास्त्रार्थ कर चुका है। वहाँ शान्ति-भंग लेशतः भी नहीं हुआ था।

जहाँ आप विराजमान हैं, वहाँ जनता के असंयत होने की या शान्तिभंग की कोई संभावना नहीं है जनता उत्सुकता से विचार सुनेगी। मेरी जो श्रीमान् में व्यक्तिगत श्रद्धा है उसमें यदि विचार के समय कुछ भी भेद प्रतीत हो जाय तो मैं प्रायश्चित्त के लिये प्रस्तुत रहूंगा। प्रमाणों पर विचार लिखकर एक दिन में भेज देना असम्भव है। इस समय यह विचार वाचिक ही होना चाहिये, जिससे कि सत्य की रक्षा हो। श्रीमान् के पण्डाल के समीप ही श्री-उपेन्द्राश्रमजी के आश्रम में (दण्डी बाड़ा) जिसके कि बाहर 'वर्णाश्रम-स्वराज्य-सङ्घ' का पण्डाल भी है, आपके पण्डाल से कुछ उत्तर की तरफ पूर्वाभिमुख है, वहाँ बैठे हुए हम लोग इसके उत्तर की प्रतीक्षा करेंगे। आज्ञा मिलते ही तत्काल उपस्थित हो जायँगे।

आशा है, पत्र देखते ही तत्क्षण श्रीमान् उक्त स्थान पर उत्तर में आज्ञापत्र भेज देंगे।

| | |
|---|---|
| वैशाख कृ० ३ १९९०<br>ता० १३-४-३३ | आपका अनुगृहीत<br>गिरिधर शर्मा चतुर्वेदी |

सन् १९२४ तमे ख्रिस्ताब्दे महाशयस्यास्य ज्येष्ठपुत्रश्रीदेवीदत्तशर्मणः पाणिग्रहणसंस्कारोऽभूत्। सोपि रूप्यकाणां सहस्राणि व्ययीकृत्याकारि। वरयात्रायाः प्रस्थानात्पूर्वस्मिन् दिने महता संरम्भेण प्रीतिभोजः समभवत्। यत्र जयपुरस्था विद्वांसो, राजवर्गीयाः, सजातीयाः, श्रेष्ठिनः सामन्ताश्च समवेता आसन्। वरयात्रायामपि शताधिका आसन् जनाः येषु राजगुरवो, वैद्याः, ज्योतिर्विदः प्रसिद्धा विद्वांसश्च प्रायशः सममिलन्। जयपुरात् स्थितो जन्यसमूहः कृष्णपुरं प्राप्य पङ्क्तीनामासां तेरुकस्यैव गृहेषु विश्राम्यन्ति स्म। तत एव च मृत्तरयानानां प्रबन्धं विधाय कमतरीं प्रति प्रस्थितः। तत्रास्यां वरयात्रायां विद्यावाचस्पतिश्रीशालग्रामशास्त्रिपञ्चाम्बुभूषणश्रीबलाकिरामशास्त्रिप्रभृतयोऽनेके सुविख्याताः पण्डिता अपि सम्मिलिता आसन्। चलच्चित्रपटस्य गानवादनादीनां प्रबन्धश्चानेन इन्द्रप्रस्थस्थस्य आत्मारामशोखमहोदयस्य वस्तुसंभारयातायातव्ययस्य व्यवस्थां कृत्वा तत्राकारि। बरेलीस्थः सुप्रसिद्धः कथावाचकः श्रीराधेश्यामशर्मापि वरयात्रायामस्यां सम्मिलितोऽभवत्। महाशयस्यास्य भागवती कथापि तत्र संजाता। एवमयं सुतोद्वाहसंस्कारो महतोत्साहेन महान्तं द्रव्यराशिं व्ययीकृत्य संपादित इति मन्ये यशोविस्तृतिहेतुष्वन्यतमं कारणत्वं भजते। एवं त्वयं महाभागो गार्हस्थ्यकार्येषु साधारणेषु, पुत्रयोरुपनयनसंस्कारयोः पुत्रीणां च विवाहादिसंस्कारेषु मुक्तहस्तो भूत्वा करोति कार्यमिति जानन्त्येतस्य सुहृदः सम्बन्धिनश्च, तथाप्यस्मिन् सुतोद्वाहकर्मणि उद्वेलितं व्ययेनोत्साहेनेति समुल्लेखनीयतां कोटिमाटीकते।

तस्मिन्नेवाब्दे हन्त! दीपावलीदिवसे चरितनायकस्य पितृचरणाः संसारमिममसारं परित्यज्य स्वः प्रयाताः। तेन महाशयस्यास्य मनसि यद्यपि महान् शोकसागरः समुद्वेलितस्तथापि कथञ्चित् धैर्यधारणं कृत्वा यथाशास्त्रं सम्पूर्णमन्त्येष्टिदैहि संपादयामासेति मन्ये न अत्युक्तमेतत्।

सन् १९३४ ईशवीयेऽब्दे वाराणस्यां विश्रुते हिन्दूविश्वविद्यालये 'पञ्चमहाभूतपरिषद्' आयोजि समजायत। यस्या हि संयोजकाः श्रीयादवजी त्रिक्रमजी-आचार्याः, म॰ म॰ श्रीगणनाथसेनकविराजाः आयुर्वेदमार्तण्डश्रीलक्ष्मीरामस्वामिप्रभृतयो लब्धप्रतिष्ठा वैद्यधुरन्धरा आसन्। नूतनपाश्चात्यपद्धत्यनुसरणशीलानां किल डाक्टरमहोदयानां भारतीयायुर्वेदशास्त्रेऽयमाक्षेपः प्रचलति—यदयं त्रिदोषसिद्धान्तः विज्ञानपथाद् दवीयानिति न विवेकशीलान श्रद्धास्पदम्। विषयेऽस्मिन् तेषामयमाक्षेपोऽप्यवश्यमवधेयो यदयं त्रिदोषसिद्धान्तः पञ्चमहाभूतसिद्धान्तयष्टिकामवलम्ब्य चलति। पञ्चमहाभूतसिद्धान्त ए भारतीयानां दर्शनानां यदा सर्वथाऽज्ञानविजृम्भितस्तदा का कथा तदवलम्बिनस्त्रिदोषसिद्धान्तवराकस्य 'मूलं नास्ति कुतः शाखा' इति। एतन्मतस्य निराकरणार्थमेवेयं परिषत् संयोजितासीत्। अस्यां च परिषदि वादि-प्रतिवादि-मध्यस्थप्रक्रियया विवेचनं समजनि। श्रीस्वामिलक्ष्मीराममहोदयस्यानुरोधेनास्माकं चरितनायकस्तस्यां न केवलं सम्मिलित एव अपि तु पञ्चभूतसिद्धान्तस्थापनायां प्रमुखभागोऽनेनैव महाशये गृहीतः। अस्याः परिषदो विवरणं नाशिकतः प्रकाशितम्, यस्मिन्नस्य वक्तृताः संमुद्रिताः सन्ति। ताः प्रपठ पाठकमहोदयाः श्रीचतुर्वेदचूडामणेः पाण्डित्ये प्रतिपादनशैल्याञ्च सम्यक् परिचिता जायेरन्नेवेति ना विस्तरेण तद्वृत्तं प्रकाश्यते। अधिकाशि विशेषः विश्वविद्यालये च वृत्तमिदमस्यावधि प्रसिद्धिं भज

यदस्यां परिषदि यदि पं० गिरिधरशर्मा न समागच्छेत्; पञ्चमहाभूतसिद्धान्तस्थापना तत्तर्हि न तथोत्तमतया संभवेत्।

१९३६ तमे ख्रिस्ताब्दे स्वगुरूणां समीक्षाचक्रवर्तिनां विद्यावाचस्पतिश्रीमधुसूदनझामहोदयानां सप्ततितमस्य वर्षस्य वर्द्धापनावसरे महाशयेनानेन महता संरम्भेणाभिनन्दनकरणमेषामायोजितम्। श्रीझाभिनन्दनसमितिरेका निरमायि। समितेस्तस्याः साभापत्ये नियोजितः श्रीलक्ष्मीरामस्वामिमहाभागः। मन्त्रित्वञ्चानेन स्वयं गृहीतम्। अनयोः प्रभावशालिनोर्महाशययोः समुद्योगेनैव जयपुरराजकीयाः प्रायः सर्वेऽपि प्रधानाः सामन्ता राजकर्मचारिणः श्रेष्ठिमहोदयाश्च समितावस्यां संप्रविश्य साहाय्यमस्याः कृतवन्त इति जानाति जयपुरराजकीया जनता। अस्यैवाभिनन्दनस्यावसरे निखिलभारतीयसंस्कृतसाहित्यसम्मेलनमप्याकारितं महाशयेनानेनाधिजयपुरम्। यस्य हि साभापत्यमलमकार्षीद् गोस्वामिकुलकौस्तुभाचार्यप्रवरश्रीगोकुलनाथमहाराजः। यत्र हि म० म० श्रीहाथीभाईशास्त्रिसदृशाः सुदूरदूरदेशतः समागत्य सम्मिलिताः पण्डितप्रकाण्डाः। अभिनन्दनमहोत्सवेऽस्मिन् वेदविज्ञानान्वेषण एव क्षपितायुष्काणां तत्रभवतां झामहोदयानां करकमलयो 'र्वेदाङ्कः' समुपायनीकृतोऽभवद्, यत्र वेदविषयमवलम्ब्य मुद्रिताः सन्ति मार्मिका लेखाः प्रकाण्डपण्डितानां भारतीयानाम्-जीवनचरितमभिनन्दनानि च झामहोदयस्य प्रकाशितानीति प्रायो जानन्ति रत्नाकरपाठकाः। अयं हि अभिनन्दनमहोत्सवः श्रीझामहोदयानां स्वरूपानुरूपः समजायतेत्यत्र चतुर्वेदमहोदयस्यैव चातुर्यस्य परिश्रमस्य च हेतुत्वमिति नात्र लेशतोऽप्यत्युक्तिप्रसङ्गः।

सन् १९३७ ईशवीयेऽब्दे श्रीविद्याधरशास्त्रिमहोदयस्य समुद्योगेन पञ्चाम्बुप्रान्तीयप्रसिद्धेऽमृतसरे नगरे निखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्याधिवेशनमभूत्। तस्य किलाधिवेशनस्य साभापत्यमस्माकं चरितनायकस्य शिरस्येवापतितम्। तत् कीदृक् सुचारुतया निर्व्यूढमिति तु त एव प्रत्यक्षद्रष्टारः प्रष्टव्याः। वयं तु मन्यामहे—सभापतिसिंहासनादस्य या खलु वक्तृता विद्वज्जनश्रवणातिथिः संजाता साद्यापि विद्वत्प्रवरैः संस्कृतमहत्त्वख्यापनायोपयुज्यत इति।

तस्मिन्नेवाब्दे अजयमेरुस्थे राजपुत्राणां शिक्षणालये श्रीमेयोकालेजे देवमन्दिरस्य प्रतिष्ठामहोत्सव आसीत्। तस्मिन् महोत्सवे श्रीकृष्णगढनरेन्द्रनिवेदितेन श्रीजयपुरपुरन्दरेण संप्रेषितोऽयमस्माकं चरितनायकोऽपि सममिलत्। तत्र मरुधराधीशस्य श्रीमदुम्मेदसिंहमहोदयस्य सभापतित्वे सभाया अप्यायोजनमभूद्। तस्यां सभायां श्रीचतुर्वेदमहोदयस्य तादृशी संजातामृतवर्षिणी वक्तृता, यस्याः किल प्रभावः समस्तेषु राजपुत्रेषु महाराजेषु च समभवत्। सभापतिना श्रीजोधपुरमहाराजेन तु सा कीदृक् भूरि भूरि प्राशस्यतेति प्रत्यक्षद्रष्टार एव प्रष्टव्याः।

१९४० ख्रिस्ताब्दे 'मारवाड़-प्रान्तीय-सनातन-धर्म-सभायाः' प्रसिद्धे जोधपुरनगरे भाविनोऽधिवेशनस्य सभापतिपदमलङ्कृतवानयं महाभागस्तत्सभायाः कार्यकर्तॄणामाग्रहेण। यद्यपि तस्मिन्नवसरे महाशयस्यास्य स्वास्थ्यं न समीचीनमासीत् तथापि सभापतिसिंहासनाद् यास्य सारगर्भिता वक्तृता समजायत सा खलु श्रोतव्यैवासीत्। अनुकरणीयञ्च साभापत्यमस्य सभाचतुरानपि नरान् उपदिशति स्म कार्यकरणकौशलमिति।

१९४२ तमे ऐशवीयेऽब्दे दशाम्बरमासे शेखावाटी-

प्रान्तस्थ-फतेहपुरनगरे जायमानस्य निखिलभारतवर्षीयधर्मसंघ-द्वितीयाधिवेशनस्य सभापतित्वमयमलंकृतवान् परिव्राजकाचार्यश्रीहरिहरानन्दकरपात्रिमहोदयानामनुरोधेन। तस्मिन्नधिवेशने यास्य वक्तृता समभवत्साऽपि मुद्रिता। यस्या हि समस्तसनातनधर्मानुयायिषु विद्वत्सु समजायत महान् समादरः। धर्मसङ्घस्यास्य वर्षं यावत् कार्यसञ्चालनमपि महाशयेनानेन सुचारुतया व्यधायि। अत्रेदमपि कथनं मन्ये नानावश्यकं भवेद् यदस्यैव कार्यकाले इन्द्रप्रस्थे (देहली) विधीयमानस्यैतिहासिकमहायज्ञस्य कोटिहोमात्मकस्याभूदायोजनम्। यद्यप्यसन्दिग्धमिदं शक्यते गदितुं यदयं महायज्ञो महामहिमभाजां परमहंसपरिव्राजकशिरोमणीनां श्रीहरिहरानन्दकरपात्रिमहाभागानां तपोविभूतेरेव फलमासीत् किन्त्वेतदपि न विस्मरणार्हं यदस्य महायज्ञस्य प्रारम्भिकः प्रस्तावः सुनपतनगरेऽस्मच्चरितनायकद्वारैव प्रस्तुतोऽभवत्। सम्बन्धेनानेन न केवलमस्य नैकवारमिन्द्रप्रस्थगमनमेवावश्यकं संजातं तत्र गत्वा महायज्ञस्यास्य क्षेत्रनिर्माणेऽपि श्रमः कर्तव्य आसीत्। यज्ञावसरेऽपि च तं सफलयितुमस्य महानासीत् सहयोग इति जानन्त्येव यज्ञद्रष्टारो महानुभावाः। अस्यैव च परामर्शेन भारतवर्षीयाः सर्वेऽपि सनातनधर्मोपदेष्टारः अनेके उद्भटा विद्वांसश्च महायज्ञमेनं सफलयितुं तत्र समवेता आसन्नित्यलमाम्रेडितेन। एवमग्रेतनेषु कर्णपुर (कानपुर) काश्यादिषु क्रियमाणेष्वपि यज्ञेषु महोदयस्यास्य प्रमुखत्वं सर्वविधकार्यकौशलं महोत्साहं चास्य प्रकटयतीति किं विस्तरेण।

सन् १९४३ ईशवीये वत्सरे हिन्दूविश्वविद्यालये संजातायाः प्राच्यविद्यासंसदो-(ओरिएिटयलकान्फ्रेन्स) ऽङ्गभूतायाः पण्डितपरिषदः सभापतिसिंहासनात् संस्कृतविद्याकेन्द्रभूतायां वाराणस्यां या खलु सारगर्भिता वक्तृता समभवत्, या हि 'संस्कृतरत्नाकरे' प्रकाशिताऽस्ति, तद्विषये एतावदेव वक्तव्यमस्ति यद् भारतीयदर्शनानामनेकवाक्यतासम्पादनाप्रकारः एतद्विधो नाद्यावधि क्वाप्यन्यत्र सफलीभवन् दृष्ट इति।

यथा ह्येवं धार्मिकसंस्थासु साहित्यसंस्थासु च चरितनायकस्यास्माकं यशोऽत्यधिकमात्रायां विस्तारमलभत, तथैव स्वीयायां माथुरचतुर्वेदजात्यामपि नेतृत्वमस्याक्षुण्णं प्रचलति। अखिल-भारतीय-माथुर-चतुर्वेद-सभाया वारद्वयं साभापत्यं सम्यङ् निर्व्यूढमित्येव न, अपि तु संस्थाया अस्याः समुत्पत्तेरारभ्याद्यावधि उपसभापतित्वमप्रतिहतं विराजते श्रीमति। संस्थाया अस्याः प्रमुखपत्रस्य चतुर्वेदीतिनामधेयस्य चिरकालं यावत् संपादकत्वमपि सुचारुतया साधितम्। चतुर्वेदमाथुरजातेर्भिन्नभिन्नेष्वपि पक्षेषु स्थिताः सदस्याः श्रीगिरिधरशर्माणमादरदृष्ट्यैव पश्यन्तीति नेयं साधारणी धोरणी। अस्यां जातीयसभायां बहुषु सुधारकंमन्येषु प्रधानेष्वपि धर्मविरुद्धा-विधवाविवाहादयः प्रस्तावा यन्न स्थानमलभन्त सोऽयमस्मच्चरितनायकस्यैव महिमेति सर्वेऽपि चतुर्वेदमहाभागा निर्व्याजं भणन्ति। मथुरायां श्रीवैजनाथचतुर्वेदप्रतिष्ठापितस्य श्रीमाथुरचतुर्वेदविद्यालयस्य पञ्चदशभ्यो ऽब्देभ्योऽद्यावधि अयमेव सभापतिः। अस्यैव परिश्रमेण कार्यं तदुन्नतिपथेऽग्रेसरीभवतीति।

### राजसम्मानः—

यद्यपि 'नरपतिहितकर्ता द्वेष्यतां याति लोके जनपदहितकर्ता त्यज्यते पार्थिवेन्द्रैः।' इति नीतिमूर्द्धन्यानां प्राज्ञानां घण्टाघोषस्तथाप्येतद्विरुद्धमस्मच्चरितनायकस्य न केवलं जनतायामेव समादरः किन्तु राजाधिराजेषु महाराजेष्वपि पर्याप्तं वर्तते सम्मानः। पाठकमहाभागाः! जयपुरधराधीशेन चरितनायकस्य सुदृढः सम्बन्धः

प्रसिद्ध एव। यतो हि तद्राज्यस्य वंशपरम्परागतः कवीश्वरः, तत्पूर्वजैः ससम्मानप्रत्तग्रामाधीशः, तत्सभायाः प्रकृष्टः पण्डितः, तदीयप्रधान-शिक्षा-संस्थायाः संचालकश्च महाभागोऽयमिति। तेन सम्बन्धेनैव राजपरिषद्यपि (दरबार) सुप्रतिष्ठितमस्य चरितनायकस्य स्थानम्। अनेकधा च भूतपूर्वैर्वर्तमानैश्च महाराजैः ससम्मानसाक्षात्कारावसरोऽप्यनेन लब्धः। मन्ये राज्यस्यास्य तु गौरवमिदं यदेतादृशः पण्डिततल्लजः सदाचारपरायणश्चात्र जनिं लब्धवान्।

न केवलं जयपुराधीशेनैवापि तु कमनीयकाश्मीरनरेशेन श्रीप्रतापसिंहदेवेन, दरभङ्गास्नेहापाङ्गवीक्षितेन मिथिलेश्वरश्रीरमेश्वरसिंहेन, अलवरेन्द्रश्रीजयसिंहनरपतिना, कृष्णगढाधीशेन श्रीयज्ञनारायणसिंहेन, किं बहुना करौलीवलानाथेन, धौलपुराधीशेन, पोरबन्दराधिशेन,सोलनसंरक्षकेणेत्यादिभिर्बहुभिर्महीमहेन्द्रैः सपुरस्कारसम्मानं लब्धवान् विद्वानयमिति किं नासाधारणं वृत्तम्? किं विशेषवक्तव्येन, धौलपुरमहाराणामहोदयेन तु मान्यस्यास्यानुरोधेनैव निखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य संरक्षकत्वमुररीकृतमिति वदन्ति विपश्चितः। न केवलमेतावदेव, क्षत्रियकुलकमलदिवाकरेण-उदयपुरधरणीन्द्रेण महाराणाश्रीफतहसिंहेन,वर्तमानमहाराणाश्रीभूपालसिंहमहोदयेन, मरुधराधीशेन श्रीमता उम्मेदसिंहेन, नाहननरपतिनेत्यादिभिश्च पूर्णः परिचयोऽस्माकं चरितनायकस्य। एवमेव बूँदी-कोटा-रींवौरछाधीशादिभिरनेकै राजभिः सह सुपरिचयोऽस्येति किमत्र बहु वक्तव्यम्।

कोट्यधीशा अनेके श्रेष्ठिमहोदयास्तु गुरुवदामनन्त्येनमिति बहुशो दृष्टचरम्।

अनेन हि महानुभावेन हिमालयाधित्यकातः सेतुबन्धरामेश्वरं यावत्, आ पश्चिमसमुद्राच्च पूर्वीयसमुद्रं यावत्सकलोपि भारतो देशोऽनेकशः पर्यालोडितः सनातनधर्मरक्षायै बद्धदृढपरिकरेण। धार्मिकव्याख्यानदानमनुरुध्य महाशयोऽयं कोटा-बलुचिस्तान-कराची-शिकारपुर-सख्खर-पेशावर-श्रीनगर-जम्मू-रावलपिण्डी-मुलतान-लाहोरामृतसर-जालन्धराम्बाला-शिमला-सोलन-नाहन-देहल्यागरा-मथुरा-कानपुर-मैनपुरीटावा-लखनऊ-फरुखाबाद-प्रयाग-वाराणसी-मेरठ-मद्रास-भागलपुर-मुंगेर-पटना-दानापुर-रोखडा-कलकत्ता-वैद्यनाथधाम-मुम्बई-सूरताहमदाबाद-राँची-जबलपुर-कटनी-शिवनी-तुमसर-मण्डला-मदुरा-हैदराबादेत्यादिषु प्रायो भारतस्य सर्वेष्वेव मुख्यमुख्यनगरेषु परिभ्रम्य सुधोपमैः स्वोपदेशैस्तत्रत्या जनताः समतूतुषदिति को नाम न वेद साक्षरो जनः?

**उपाधयः**-चरितनायकेनास्मकं व्याकरणादिविषयेषु परीक्षां समुत्तीर्य, ये खलूपाधयः प्राप्तास्तदतिरिक्ता बहवः प्रतिष्ठाप्रकाशका अप्युपाधयः समुपलब्धाः। तेषु भारतसाम्राज्यद्वारा वितीर्णं महामहोपाध्यायपदं मन्ये गणनार्हम्। यद्धीशवीये १९२४ तमेऽब्दे पञ्चाम्बुप्रान्तीयशासकसौपार्श्व्येन प्राप्तवानयम्। काश्यां प्रतिष्ठिताद् भारतधर्ममहामण्डलाद् व्याख्यानवाचस्पतित्वं महामहोपदेशकत्वं विद्यारत्नत्वं च, जगद्गुरुश्रीशङ्कराचार्यगोवर्द्धनपीठाधीश्वरात् श्रीमतो मधुसूदनतीर्थाद् विद्यानिधिपदम्, जगद्गुरुशंकराचार्यगोवर्द्धनपीठे संप्रति प्रतिष्ठितात् श्रीभारतीकृष्णतीर्थाद् विद्यावाचस्पतिपदं व्याख्यानवाचस्पतिपदं चायं प्राप्तवानिति किं नो न प्रमोदस्थानम्? किञ्च- भारतीयभिन्नभिन्नसंस्थाभ्यो भिन्नभिन्नकाले यानि शताधिकानि सम्मानपत्राण्युपलब्धवानयं तेषां पूर्णतया परिचये तु मन्ये स्वतन्त्रं पुस्तकमेव मुद्रितं स्यादिति व्यापारादस्माद्विरम्य केवलं द्वित्राणामादर्शरूपेणोद्धरणं पाठकमनोविनोदायात्र क्रियते—

# अभिनन्दनपत्रम्

## महामहोपाध्यायपण्डितगिरिधरशर्मचतुर्वेदशास्त्रि—

### व्याकरणाचार्य्यमहोदयानां सेवायाम्

सनातनधर्मैकशरणाः पूज्यचरणाः महोदयाश्चतुर्वेदमहोदयाः !

अमृतसरनगरस्थ सनातनधर्मसम्बद्धानां विविधसंस्थानां प्रतिनिधयो वयं संभूय श्रीचरणान् हृदयेनाभिनन्दामः, हार्दं च स्वागतं महाभागानां विदध्मः।

तापत्रयप्रशमयित्र्याः पापौघहारिण्याः श्रीभागीरथ्या रोधसि सनातनधर्मजननया स्थापितस्य "ऋषिकुलस्य" आचार्यपदं समलंकृत्य महत्या योग्यतया तत्रत्यकार्यजातं सुसम्पादयद्‌भिः श्रीचरणैः ऋषिकुलमादर्शभूतमादरणीयञ्चाक्रियत ।

महाभागाः ! पञ्चनदप्रान्तस्य केन्द्रीभूते लवपुरे सनातनधर्मविद्यालयस्य पोषकाः श्रीमन्त एव, यत्र च श्रीलैराचार्यपदं मण्डयद्भिः भूयांसोऽन्तेवासिनो देशदेशान्तरादागताः समध्यापिताः शास्त्रिपदमलङ्कुर्वाणास्तन्वानाश्च श्रीमहोदयानां यशोराशिं चिरमनुगृहीता वर्तन्ते ।

विपश्चिदपश्चिमाः ! महानुभावानां भवतामनुपमां योग्यतां संस्कृतविद्यायां प्रगाढपाण्डित्यञ्चाभिलक्ष्यीकृत्य भारतसम्राजा महामहोपाध्यायपदव्या श्रीचरणाः समलङ्क्रियन्त । किञ्च—भारतीयविविधविश्वविद्यालयोच्चपरीक्षाणां परीक्षकत्वमासादयन्ननयैव योग्यतया सुरसरस्वतीमुपासनैकव्रताः श्रीमन्तः।

निखिलभारतवर्षीयसंस्कृतसाहित्यसम्मेलनस्य बीजारोपकाः प्रवर्तकाश्च मान्या एव, यस्य च मन्त्रिपदं स्वीकृत्य देववाणी भृशमुपकृता । सत्यसन्धाः ! सारडैक्टनाम्नि विवाहनियन्त्रणनियमे प्रचलति श्रीमद्भिरेव सर्वतः पूर्वं स्वर्गीयलक्ष्मणशास्त्रिद्राविडमहोदयादीन् पण्डितशिरोमणीनेकीकृत्य वर्णाश्रमस्वराज्यसङ्घः प्रत्यष्ठापि, तत्र तत्र च तस्य शाखाः समुदघाटिषत ।

महोदयाः ! सनातनधर्मस्य रक्षकाः कलिकलुषितेऽस्मिन् काले भवन्त एव कर्णधाराश्च सनातनधर्मिणश्च विपत्पाथोधिपतितान् समुद्धर्तुम् । यादृशो ह्युपकारः सनातनधर्मिषु श्रीमद्भिः कृतः तेन चिरराय्याधमर्णाः सनातनधर्मिणो भवताम् ।

महोदयाः ! अद्यत्वेऽपि शतपथब्राह्मणनाम्ना मासिकं पत्रमनुसन्धानसौष्ठवं भवतां गमयति । असंख्यातगुणगरिमगरिष्ठानां महाभागानां गुणान् वयमेते कथमिव वर्णयामः । अन्ते नतेन शिरसा निवेदयामः यदेवमेव श्रीचरणाः सनातनधर्ममुन्नयन्तः सनातनधर्मिणोऽनुग्रहीष्यन्ति । ईश्वरश्च श्रीमद्भ्योऽलौकिकीं सनातनधर्मोन्नतेः शक्तिं प्रयच्छेत् इत्यनवरतं प्रार्थयमाना नमामो वयम् ।

निवेदकाः—

**एते वयं—भवदाश्रवाः—**

पं० हेमराज-श्रीधरादयः ।

( विविधसंस्थानां मन्त्रिणामध्यक्षाणां च ३४ सज्जनानां हस्ताक्षराणि )

# अभिनन्दन-पत्र

सेवामें—

महामहोपाध्याय, महामहोपदेशक, व्याकरणाचार्य, न्यायशास्त्री,
श्रीगिरिधरशर्माजी चतुर्वेदी, प्रिंसिपल सनातन-धर्म-संस्कृत-कॉलेज, लाहौर.

कुछ काल पहिले जिसका हमें स्वप्न में भी कभी विचार नहीं हुआ था, वही आपका पितृ-सेवा के निमित्त निज जन्म-भूमि के लिये प्रस्थान का समय अति-शीघ्रता से समीप आरहा है, जिससे विकासोन्मुख हमारे हृत्कमलों पर कठोर हिम-पात होने वाला है। ऐसे समय में हम लवपुर विचार-समिति के सदस्य हार्दिक कृतज्ञता के भावों को प्रकट करने के लिये एकत्रित हुए हैं।

श्रीमन्! यह आप से परोक्ष नहीं है कि आपके शुभकार्यों और विचारों से न केवल लाहौर की ही जनता प्रत्युत पञ्जाब-प्रान्त के सभी भागों के निवासी कृतकृत्य हुए हैं। यह कहना अत्युक्ति न होगी कि आपके निवास ने चिरस्थित अकर्मण्यता को दूर करके क्रिया-शीलता व धर्म-प्रचार में युगान्तर उपस्थित कर दिया है।

धार्मिक होने पर भी आपके व्याख्यानों में वैज्ञानिक-पद्धति की अवहेलना या उपेक्षा कभी दिखाई नहीं दी। आपकी कथा-प्रथा ने पुराणयुगप्रवर्तक भगवान् व्यास तथा प्रसिद्ध सिद्ध शुकदेवजी के कल्प का कल्पनामय चित्र, भक्तजनों के मानस-पटों पर अनेक वार निपुणता से अङ्कित किया है। शास्त्रार्थों में सदा जय-लक्ष्मी विजय-माला से आपके ही मनोहर कण्ठ को विभूषित करती रही। अध्यापकता जैसे अतिकठोर कार्य को आपने ऐसा सरल और चित्ताकर्षक बना दिया है कि जिसका प्रभाव पञ्जाब-मात्र में सीमा-बद्ध न रहकर गढ़वाल जैसे दुर्गम प्रदेशों में, फ्रांटियर जैसी क्रूर-भूमि में, मारवाड़ जैसे मरुस्थलों में, काशी जैसे विद्यापीठों-नहीं नहीं सुदृढ़ विद्या-दुर्गों-में समान-भाव से प्रतिदिन अधिकाधिक विस्तार करता जारहा है। उपासना-काण्ड की उदाहरण-स्वरूप, देवाराधन में तत्पर आपकी भव्य-मूर्ति, कट्टर से कट्टर नास्तिक के हृदय में भी ऐसा भयङ्कर भूकम्प उत्पन्न करती है कि जिससे नास्तिकता-रूपी प्रासाद के स्तम्भ ऐसे क्षति-ग्रस्त होते हैं कि उनकी सदा के लिये धराशायी होने के बिना दूसरी गति ही नहीं रहती। इन सब विशेषताओं के होने पर भी निसर्ग-सौहार्द, सस्मित-आलाप, अकारण-बन्धुता, विद्याभिरुचि, उच्चादर्श, निर्भयसम्मति, परोपकारव्रत आदि आपमें संख्यातीत सद्गुण ऐसे हैं जो शत्रु को भी क्षण-मात्र में मन्त्र-मुग्ध करके अपने वश में कर लेते हैं।

अन्त में हमारा यही हार्दिक विनय है कि आप अपने कर-कमलों से आरोपित विचार-समिति-रूपी नवजात-अंकुर को क्रमशः पल्लवित पुष्पित और फलित देखने के व्याज से इसके सदस्यों को समुचित अवसरों पर अपने दर्शनों से कृतार्थ करते रहें और भक्तवत्सल भगवान् से प्रार्थना करते हैं कि वह दयामय अपनी दया से आपकी शुभ-कामनाओं को सदा पूर्ण करे।

पौष वदि १० संम्वत् १९८०

विद्वद्विचार-समिति.
लाहौर.

अखिलभारतवर्षीयैकादशसंस्कृतसम्मेलनस्य सभापतीनां

महामहोपाध्याय-श्रीगिरिधरशर्मचतुर्वेदिनाम्

# स्वागताभिनन्दनम् ।

आर्याः !

वाराणसेया वयं संस्कृतच्छात्राः श्रीमतां स्वहृदयसमुद्भूतश्रद्धयाऽभिनन्दनं कुर्मः । भवद्दर्शनस्य सौवर्णावसरा इतः पूर्वमनेकवारमस्माभिः सम्प्राप्ताः । प्रतिवारञ्चास्माभिः प्रत्येकेन भवन्तम्प्रति सम्मानभावना शतधा प्रकाशिता । परन्तु नासीत्तदानीमस्माकमेतत्सुघटितस्वरूपं यदद्य दृश्यते । अत एव तदानीन्तनव्यक्तिगतश्रद्धाभक्त्यादिभावान् सुस्पष्टतया प्रकटयितुमद्य समष्टिरूपेण वयं समवेता भवत्सम्मुखे ।

विद्वच्चूडामणयः !

नूनं निखिलशास्त्राणामगाधज्ञानेन, विलक्षणसदसद्विवेचनशक्त्या, अद्भुततर्कप्रणाल्या, अनुपमेयकार्य-कुशल-प्रतिभया, अनुकरणीय-धर्म-प्रेम्णा च तत्रभवन्तः सततमस्मान् समुज्ज्वलादर्शमार्गं प्रदर्शयिष्यन्ति, ज्ञानक्षेत्रमस्माकं संवर्धयिष्यन्ति, शिथिलशरीरमस्माकमुत्तेजयिष्यन्ति, भविष्य-जीवनञ्चास्माकं कार्यक्षमं सम्पादयिष्यन्ति ।

तपोनिधयः !

साम्प्रतं सुरभारत्याः संस्कृतसमाजस्य च भाग्याकाशे या विपत्तिवारिदपङ्क्तिः समुपस्थिता सा भवतां हृदयमत्यर्थं संक्षोभयति । वयं पश्यामो निरन्तरं यद्भवन्तोऽस्मत्संस्कृतसमाजस्य वेपमानां बंभ्रम्यमाणां विपरीतविकरालोर्मिमालानिर्गीर्यमाणां तरीं रक्षितुं सततोद्योगपराश्चिन्ताकुला एव वर्तन्ते, यतन्ते च तां सुरक्षिततया विघ्नबाधाविरहितप्रदेशे समानीय अमरभारतीममरसिंहासने संस्थापयितुम् ।

अस्मदीय-साहससम्पन्न-श्रेष्ठतमकर्णधाराः !

अनुभवन्त्यहर्निशं श्रीमन्तो यदियं दुर्दशास्माकं दूषितदेशकालविपरीतलोकधाराऽस्पृष्टशिक्षाप्रणाल्यैव मुख्यतया समुपस्थिता यतो वयमित्थं समाजभारभूता इव, निकृष्टा इवावलोक्यामहे विश्वस्मिन् । वयं पश्यामोऽप्याशापूर्णहृदयैर्यद्भवन्तस्तादृशभीषणपरिस्थितेर्मूलकारणोच्छेदार्थमविरतपरिश्रमपुरस्सरं संलग्नास्तिष्ठन्ति ।

विषमसमयेऽस्माकमेकमात्रधुरन्धरमूर्द्धन्याः !

वयमाशोत्साहगर्वभावनापुरस्सरमेव भवतां स्वागतं कुर्मः । आशास्महे सुदृढं यद् गन्धहीनपुष्पपत्राञ्जलिमस्मदान्तरिकश्रद्धाभक्तिभावमवलोक्य, उदारहृदयाः श्रीमन्तः स्वीकरिष्यन्तीति ।

| कार्यालयः | वयं स्मः |
|---|---|
| वाराणसेयसंस्कृतच्छात्रसंघस्य | भवतां गंभीरज्ञानश्रद्धालवः, |
| पौषकृष्णा षष्ठी सं० १९९४ | वाराणसेयसंस्कृतच्छात्रसंघसदस्याः |

## ❀ अभिनन्दनम् ❀

श्रीमत्सु मान्यवर-पण्डितमण्डनेषु,
सुस्वागतं गिरिधरेत्यभिधाधरेषु ।
ब्रूमो वयं जयपुरेन्द्रसभासुभूषा-
भूतेषु वैदिकसुधर्मधुरन्धरेषु ॥

गीर्वाणवाग्गुणसुगुम्फनगौरवेषु
विद्यावदातहृदयेषु महाशयेषु ।
सम्राट्समर्पित-समान'महामहोपा-
ध्याया'भिधानगुणगौरवमण्डितेषु ॥

षट्शास्त्रवारिधिवगाहनमन्दराद्रीन्
वाचस्पतिप्रतितनूनतुलप्रभावान् ।
विद्यालयोऽयमयि! होलकरप्रभूणा-
मद्याभिनन्दयति मान्यतमान् बुधेन्द्रान् ॥

ज्येष्ठकृष्णा ११ सं० २००१
ता० ८-मई ४४
इन्दौर

महाराज-होलकर-संस्कृत-
महाविद्यालयाध्यापकवृन्दः
सच्छात्रवृन्दः ।

अलं प्रपञ्चेन—यस्य हि मेधा च प्रतिभा चानन्य-साधारणी, यः खलु शास्त्रेषु कृतभूरिपरिश्रमः, यः सातत्येन सनातनधर्मसेवायां सुरस्वतीसेवायां च गृहीतव्रतो भवेत्, तस्य यशःप्रसारः सम्मानश्च कियती मात्रा ?

'अङ्गनवेदी वसुधा कुल्या जलधिः स्थली च पातालम्'
सर्षपकश्च सुमेरुः कृतप्रतिज्ञस्य वीरस्येति,

संस्मृत्य भूतभावनं भगवन्तं चन्द्रार्द्धचूडामणिं प्रार्थये यदयं महानुभावः सुरभारतीं सेवमानः सनातन-धर्ममार्यसंस्कृतिं च प्राणपणेन प्रचारयन्नपि समुल्लाघतां भजमानः सुखं जीव्याच्छतं समाः ।

इदञ्चाप्याशंसे--

उद्योगशस्त्रप्रणयी प्रमृष्ट-
धीदर्पणालोकितकार्यकायः ।
बम्भ्रम्यमाणो वसुधान्तरेषु
समीहितार्थान् क्रमशोऽभ्युपैतु ॥ इति

## हरिद्वारस्थ ऋषिकुलब्रह्मचर्याश्रम-

# परिचयः

ऋषिकुलाख्योऽयं ब्रह्मचर्याश्रमः सनातनधर्मानुकूलेषु ब्रह्मचर्याश्रमेषु सर्वप्रधानः सकलभारतप्रसिद्धश्च। त्रिषष्ट्युत्तरैकोनविंशतिशततमे (१९६३) वैक्रमेऽब्दे फाल्गुनमासि सितद्वादश्याम् ७-३-१९०६ ख्रिस्ततिथौ श्रीमद्धरिन्द्रराजप्रमुखैस्तीर्थपुरोहितैः श्रीभारतधर्ममहामण्डल-महामहोपदेशकराय बहादुर श्रीदुर्गादत्तपन्तमहाशयस्योपदेशेन ज्वालापुर-कनखलस्थवैश्यधनिनां सहयोगेन चायं प्रतिष्ठापितः। आरम्भादेवैतत्प्रबन्धार्थं समितिर्या संघटिता, तस्याः सभापतिर्देहरादूननगरस्य सर्वप्रतिष्ठितो व्यवहारजीवी (वकील) सर्वमान्यो नेता श्रीमान् आनन्दनारायणमहोदय आसीत्। यस्य कौशलेन श्रमेण चायमाश्रमोऽत्यधिकामुन्नतिं गतः। पूर्वमयं कंचित्कालं ज्वालापुर एवैकस्मिन्नल्पे भवने परिचालितोऽभूत्, ज्वालापुरस्थानां हरिद्वारतीर्थपुरोहितानां गृहेषु घटान् निक्षिप्य प्रात्यहिकेन भिक्षान्नेन तान् प्रपूर्य तेनान्नेन ब्रह्मचारिणां भोजननिर्वाहः, वैश्यैः प्रत्तेन मासिकेन चाध्यापकवेतननिर्वाह इतीयं स्थितिरादौ प्रक्लृप्ता। वर्षानन्तरं तु राजनियमनिबद्धता (रजिस्ट्री) मस्य सम्पाद्य हरिद्वारज्वालापुरयोर्मध्ये गङ्गाकुल्याया उपकूलं सुविस्तृतं भूप्रदेशं क्रमेणात्मसात्कृत्य समित्या तत्रैवायमानीतः। तृणाच्छन्नासु कुटीषु तदा निवासाध्ययनादिकं प्रवृत्तम्। तदनु हरिद्वारतीर्थं प्रत्यहमागच्छतां गणनातीतानां सनातनधर्मावलम्बिनां यदा दृष्टिरस्मिन्नाकृष्टा, प्रचारार्थं तत्र तत्र शिष्टमण्डलं च गतम्, तदास्योन्नतिः क्रमेणावर्धत।

१९०८ ख्रिस्ताब्दे अस्मच्चरितनायको माननीयः श्रीगिरिधरशर्मा चतुर्वेदः सभापतिप्रभृतिभिराग्रहेण तत्र शिक्षाविभागाध्यक्षपदे नियुक्तः। अनेन शिक्षादि यथाशक्ति कृता, निखिलभारतीयविदुषां च सहयोगो यथासादितः, तदेतत्तच्चरितलेखकैः स्पष्टीकृतमेव। १९०९ ख्रिस्ताब्दस्यान्ते कलकत्तानिवासिनां मरुदेशीयानामाह्वानेन शिष्टमण्डलं (डेपूटेशन) तत्र गतम्, यस्मिन् दुर्गादत्तपन्तमहाशयोऽस्मच्चरितनायकश्च वक्तारावास्ताम्। तत्र मरुदेशीयैः प्रचुरो धनराशिरेकत्रीकृतः, तेन विद्यालयः, छात्रावासः, पुस्तकालयः, शिव-विष्णुमन्दिरे, औषधालयश्चेत्यादीनि कार्ययोग्यानि प्रचुराणि पक्वेष्टकचितानि भवनानि निरमीयन्त, लक्षाधिकं च द्रविणं स्थायिकोषे निहितम्। क्रमेणान्यान्यष्वपि प्रान्तेषु शिष्टमण्डलं गतम्—यथोचितं साफल्यं च लब्धम्। इदानीं भूसम्पत्तिस्तत्र प्रचुरा वर्तते, स्थायिकोषोऽप्यस्त्येव। परं सर्वेषां ब्रह्मचारिणां भोजनवस्त्रशिक्षादिव्ययो यद्वृद्धयापि न सम्पद्येत, तावान् कोषो नास्ति। शताधिका ब्रह्मचारिणः शास्त्रानुमतब्रह्मचर्यनियमेन तत्राधीयते। मुजफ्फरपुरस्य सुप्रतिष्ठितः सामन्तः (रईस) श्रीसुखवीरसिंहमहोदयो द्वितीयः सभापतिरासीत्, तेन पुनः कलिकातास्थमरुदेशीयेभ्योऽतिरिक्तं द्रव्यं संगृह्य, राजकीयं साहाय्यं (गवर्नमेण्ट ग्राण्ट) चाप्यवाप्य ऋषिकुलाङ्गत्वेनैवायुर्वेदमहाविद्यालयः (कॉलेज) तद्भूमावेव प्रतिष्ठापितः, सोऽप्युन्नतो वर्धते क्रमेण। कर्मकाण्डविभागश्चापि ऋषिकुले प्रचलति, शाखापाठशाला अपि ज्वालापुरादौ सन्ति। अस्मच्चरितनायकेन स्वतन्त्र एव शिक्षाक्रमस्तत्र परिचालितः, येन धर्मज्ञा धर्मसेवनोपयुक्ता विद्वांसस्ततः प्रस्तुताः स्युः। तरुकल-

रूपेण श्रीपरमेश्वरानन्दशास्त्रिविद्याभास्करः-(इदानीं लब्धमहामहोपाध्यायपदवीकः, लाहोरस्थसनातनधर्मकॉलेजसंस्कृतविभागस्याध्यक्षः) श्रीलीलाधरशास्त्री उपदेशभास्करः (यः सुप्रसिद्धो वक्ताऽभूत्, अन्ते च ऋषिकुल एवाध्यक्षपदे प्रतिष्ठितोऽभूत्, दुर्दैवादकाल एव स्वः प्रयातः) इत्याद्याः स्नातकास्ततः प्रादुरभवन्। परं मान्यः श्रीगिरिधरशर्मा यदा तत्कार्यं विसृज्य कार्यान्तरे संलग्नः, तदा येऽन्ये विद्वांसस्तत्राध्यक्षपदमलमकुर्वन् तैः काशीपरीक्षापद्धतिरेव तत्र प्रवर्तिता। अस्यामपि पद्धतौ श्रीरामानन्दव्याकरणाचार्यप्रभृतयः कतिपये योग्या विद्वांसो निसृताः। इदानीं पुनस्तत्र पूर्ववत् स्वतन्त्रः क्रमः प्रचालयितुमुपक्रम्यते।

सनातनधर्मावलम्बिभिरस्मिन् युगे परिचालितधार्मिककार्यगणनायाम् अस्यैव प्राथम्यमिति निःशङ्कं शक्यते वक्तुम्।

# संस्था-सम्बन्धः



( [illegible] )

एकतो गुरुपादाब्जमकरन्दात् दुर्गतिनाशः ।
परतो [illegible] ॥

प्रातःस्मरणीयचरणा [illegible] महामहोपाध्यायश्री[illegible] परीक्षा[illegible] सर्वतो [illegible] स्वर्णपदकं राजपारितोषिकं प्राप्य यदा सर्वशास्त्रावदात-प्रतिभाः सम्पन्ना अभवन्, तदैव सहारनपुरस्थाखिलभारतीयजैनमहाविद्यालये जैनशास्त्रीयक्लिष्टग्रन्थाध्यापनार्थैकं विशिष्टं विद्वांसमपेक्षमाणास्तद्विद्यालयाधिकारिणो जयपुरीये महाराजसंस्कृतविद्यालयेऽध्यक्षपदे विराजमानान् श्रीलक्ष्मीनाथशास्त्रिमहाभागान् पत्रद्वारा जैनशास्त्रीयदुरूहग्रन्थाध्यापनक्षमं विद्वांसं प्रेषयितुं प्रार्थयन्त । श्रीलक्ष्मीनाथशास्त्रिणः श्रीचतुर्वेदमहोदयानां विद्यागुरव आसन् । ते तदानीमध्यापितेषु निजशिष्येषु अस्मच्चरित्रनायकं पण्डितश्रीगिरिधरशर्मचतुर्वेदमेव तत्कार्यक्षमशेमुषीकमवधार्य तमेव महाभागं प्रैरयन् । एवं स्वगुरुप्रेरणया श्रीचतुर्वेदमहाभागा विद्यास्नाताः सर्वतः प्रथमं सहारनपुरस्थाखिलभारतीयजैनमहाविद्यालये अध्यापकपदाधिष्ठिता अभूवन् । तत्र हि कदाप्यघ्रातानपि जैनशास्त्रदुरूहग्रन्थान् महाभागोऽयं स्वल्पीयस्येव वयसि पञ्चतन्त्रकथावत् [illegible] समध्याप्य प्रौढप्रज्ञानां प्रवयसामपि विदुषां मन आश्चर्यमवीवहत् । एवं सफलमध्यापयतोऽस्य विद्वद्वरेण्यस्याध्यर्द्धमेव वर्षं यदा व्यत्यगात्, तदैव स विद्यालयो वाराणसेयस्याद्वादविद्यालयस्यैकाङ्गीकृत्य तदधिका-[illegible] [illegible] मन्महाभागा [illegible] ।

अथ जयपुरं प्रति [illegible] सहारनपुरस्योपकण्ठं प्रवहन्तीं कलिमलप्रध्वंसिनीं भगवतीं भागीरथीमनवगाह्य गृहान् गन्तुमनुचितमाकलयन् श्रीहरिद्वारमायान् । तत्र गतस्यास्य ऋषिकुलब्रह्मचर्याश्रमस्य [illegible] समभवन् । सनातनधर्मस्यैषैव संस्था यस्यां प्राचीनपरिपाटीमनुसरन्तो ब्रह्मचर्यमाचरन्तश्छात्राः समध्याप्यन्ते । तस्या [illegible] द्रष्टव्य इति समुत्सुकेन मनसाऽयमृषिकुलमागमत् ।

तत्र ऋषिकुलसंस्थापकानां [illegible] श्रीदुर्गादत्तपन्तमहोदयेनेशादेव परम्परागतेनास्य परिचयो जातः । तेन हि ऋषिकुलस्य [illegible] श्रीमदानन्दनारायण बी० ए०, एल्. एल्. बी० महोदयेनैनस्य परिचयोऽकारि । प्रथमपरिचय एवानन्दनारायणमहोदयः श्रीगुरुवर्यस्य गुणगणान् वार्तालापैरन्वीक्ष्य महाभागोऽयमृषिकुलस्यात्यन्तमुपयुक्त इति मनसाऽधारयत् । वार्तालापैश्चैनं स्वतन्त्रं विदित्वा, अपि भवानिमां संस्थां सनाथयितुमधिकारिवर्गस्य प्रार्थनां कृपयाङ्गीकरिष्यति ? इति सानुरोधं निवेद्य ऋषिकुलस्य कार्यभारः समर्थयोः श्रीचतुर्वेदमहोदयस्य

स्कन्धयोः नर्मविनमात्र दधामन्धन। अन्यैरपि सर्वै-रेवाधिकारिभिरयमृषिकुलस्याचार्यपदं ग्रहीतुं सप्रणय-मनुरुद्धः। अयं च तेषामकारणसुहृदामनुरोधं व्याहन्तु-मनीशानस्तदाज्ञां शिरोदुमङ्गीकृत्य सर्वमप्यधिकारिवर्गं प्रासीदत्। तत आवश्यककार्यवशाज्जयपुरं गत्वा अष्टोत्तरंकोनविंशतिशततमे १९०८ ख्रीस्ताब्दे ऋषिकुल-मागमत्। ऋषिकुलं तदा बाल्येन वयसा विनोदयदा-सीत्। तदानीन्तना ब्रह्मचारिणः केचन गङ्गालहरीम-परेऽमरकोषमितरे शिवताण्डवमन्ये महिम्नः स्तोत्रं केचिच्च कल्याणपञ्चाशिकेत्येवमादीनारम्भिकान् लघुलघु-ग्रन्थानध्यगीषत। बहवस्तत्तत्र पाठहीना एवासन्। तदा नासीत् कश्चिदपि निश्चितः शिक्षाक्रमो नैव च श्रेणी-विभागव्यवस्था। लोकदर्शनाय तु द्वित्रा अध्यापका स्वतन्त्रकोषारम्भिकान् बालान् वर्णिनो वृक्षमूले निरु-ध्यामरकोषादीनुच्चैः कण्ठोपयन्ति स्म। तदाह कश्चित्—

नासीत्तदा श्रेणि-विभागबन्धनं
नैवाभवत्कालविकल्पकल्पना।
अभूद् यथेच्छं पठनं च पाठनं
गङ्गालहर्याः शिवताण्डवस्य च॥
आगन्तुकानां प्रमुदे तदाऽभूत्
प्रगानमुच्चैः पुरतः स्थितानाम्।
एकस्वराणां समसूत्रबद्ध-
श्रेणिस्थितानां शिवताण्डवादेः॥

एतादृश्यामवस्थायां श्रीचतुर्वेदमहोदयेन ऋषि-कुलस्य कार्यभारः सम्भालितः। अनेन हि यथायोगं कक्षा विभज्य समयविभागेनाध्यापनमुपक्रान्तम्। स्वल्पे-नैव समयेनाध्यापनस्य समयविभागः श्रेणीविभागोऽध्ये-तव्यग्रन्थविभागश्चेत्येवमादिभिरावश्यकैर्विभागैः शिक्षा-स्वरूपं निर्मिमाणं यथा सम्प्राप्तशाणोत्कर्षणामिव दीप्ति-मतीमकरोत्। तदाप्रभृति ऋषिकुल-यशसैवैषां महा-भागानां यशोराशिर्दिगङ्गनानामंशुकमभूत्। भारत-वर्षस्य प्रत्यन्तप्रदेशेभ्योऽपि समागत्य समागत्य बहव ऋषिकुले दीक्षिताः समभवन्। धनिनश्च दानवीरा ऋषि-कुलमेव सर्वोत्तमं दानपात्रमगणयन्। गवर्नमेण्टयुनि-वर्सिटीषु प्रचालितं शिक्षाक्रममसारमिव मत्वा विहाय तं चतुर्वेदमहाभागः स्वकल्पितं स्वतन्त्रमेव शिक्षाक्रमं प्रावर्तयत्। तदन्वीक्षणार्थमेका शिक्षासमितिरनेन सङ्घटिता, यस्याः ख्यातनामानस्तत्तत्स्थाननिवासिनो विद्वांसः सदस्यतां लम्भिताः। प्रथममध्यमोत्तमैस्त्रिभिः काण्डैः शिक्षाक्रमं विभज्य प्रथममध्यमाभ्यां काण्डा-भ्यां साधारणीमुत्तमेन तूत्तमां शिक्षां व्यापयत्। साधा-रण्यां शिक्षायां मैट्रिकपरीक्षापर्यन्तमाङ्गलभाषाज्ञानं दशमलवान्ता गणितावगतिः, एशियायमेरिकान्तो भूगोलावगमो वेदस्मृतिव्याकरणन्यायकाव्यकोषालङ्कार-धर्मशास्त्रज्यौतिषादिविषयाणां मूलग्रन्थेषु प्रावीण्यमुद-पाद्यत। ब्रह्मचारिणां वाक्पाटवाय च प्रतिपक्षं वाग्वि-वर्द्धिन्यां सभायां संस्कृते हिन्दीभाषायाञ्च व्याख्यानानि, निबन्धपाठः, प्राचीनपरिपाटीपुनरुज्जीवनायाधीतग्रन्थानां क्लिष्टग्रन्थिनिर्मोकाय च परस्परं शास्त्रार्थ इत्येवं वाणी-परिसरे यद्यदावश्यकं तत्सर्वमपि समजिज्ञपत्। उत्तम-शिक्षाकाण्डन्तु अध्यापनं वैद्यकं ज्यौतिषं पौरोहित्य-मुपदेशनमिति पञ्चशाखमकल्पयत्। यस्याध्यापकवैद्यक-पौरोहित्येति तिस्रः शाखा इदानीं फलिताः समुल्लसन्ति। तत्राध्यापनविभागान्महामहोपाध्याय-पं० श्रीपरमेश्वरान-न्दशास्त्रिलवपुरीयसनातनधर्मकालेज-संस्कृतविभागाध्य-क्षसदृशाः व्याकरणाद्यनेकशास्त्राणां चूडान्तविद्वांसः, उपदेशकविभागाच्च विद्याभास्कर-व्याख्यानभास्कर-व्या-ख्यानदिवाकरेत्याद्यनेकबिरुदावलिविभूषितपं० श्री श्री—

यां सम्मिलितानां विदुषां सर्वेषामेव चेतश्चमत्कृतिमातनोत्। एवं चतुरस्थाया विद्वत्समितेः सभापतित्वमपि बहुवर्षमकरोदयम्। तस्याः समितेः परीक्षा अपि स्वतन्त्रा अभवन्नित्यतः तावत्प्रसक्त्यानुप्रसक्त्या। प्रकृतमनुसरामः-यत्प्रभृति संस्कृतसाहित्यसम्मेलनस्य महामन्त्रिपदमनेन महोदयेन कार्याधिक्यात्परित्यक्तं तदारभ्यैव तदन्तिमामवस्थामन्वभवदित्याप्तां दुःखोद्वहाभिः कथाभिः। अनेन तु महाभागेन हरिद्वारे मथुरायां प्रयागे आगरायां वाराणस्यां कालिकातायां लाहौरनगरेऽमृतसरसि मद्रासप्रान्ते–इत्येवं भारतस्य तेषु तेषु प्रान्तेषु तीर्थेषु वा सम्मेलनं महता समारोहेण प्रत्यब्दमधिवेश्य डॉ० सतीशचन्द्र "विद्याभूषण" M.A. कलिकातासंस्कृतकालेजस्य प्रिन्सिपलमहोदयः, C. I. E. हरप्रसादमहानुभावः, श्रीमान् रमेश्वरसिंहो दरभङ्गानरेशः, म० म० त० गणपतिशास्त्रिमहोदयः, महामहोपाध्यायः श्रीहाथीभाईशास्त्री, म०म० श्रीहरनारायणशास्त्री, महामहोपाध्यायः श्रीप्रमथनाथभट्टाचार्य इत्येवमादीन् विश्वविदितान्विदुषस्तत्सभापतिपदे प्रतिष्ठाप्य सम्मेलनस्य महत्सौभाग्यं संवर्द्धितमिति को न जानाति ? एवं चतुर्वेदमहाभागः संस्कृतसाहित्यस्य महतीं सेवां विदधानास्तत्सम्बन्धेनैकां कार्षापणिकामपि सम्मेलनस्य स्वत्वेन नास्पृशन्निति सर्वस्य विदितमेवास्ति। तदधिवेशनेषु सर्वेषु स्वव्ययेनैव सर्वत्र यातयातमपि व्यदधुरिति तु तिरोहितमपि प्रकाशयामि।

ऋषिकुलावासं वसताऽनेन महाभागेनैकं 'ब्रह्मचारि' नामकं मासिकपत्रं हिन्दीभाषया सम्पाद्य प्रकाशितमपरं च 'संस्कृतरत्नाकर' इत्याख्यं मासिकपत्रं संस्कृतभाषया सम्पाद्य संस्कृतसाहित्य-सम्मेलनस्य मुखपत्रतया प्रकाशितम्, ययोरस्य वैदुष्यपूर्णा बहवो विद्वद्भिरनुशीलनीया विचारा लिपिबद्धाः सन्ति। मन्ये श्रीगुरुचरणैर्वियुज्यमाना ऋषिकुलश्रीर्यथा शनैः शनैरस्तमुपयाता तथैव ब्रह्मचारिपत्रमपि तद्वियोगदुःखादिव नितरां शुष्यन्मृत्युशय्यामशयिष्ट। संस्कृतरत्नाकरस्तु तत्करसंवर्द्धितोऽद्याप्येतस्य महाभागस्य जन्मभूमेर्जयपुरात्प्रकाशितः सर्वेषामपि संस्कृतपत्राणां प्रथमां संख्यामधिगच्छति। तदित्थं संस्कृतसाहित्यसम्मेलनं संस्थाप्य दशवर्षाणि यावत्तस्य प्रधानमन्त्रिपदमलंकृत्य सर्वमपि कार्यभारं स्वयमुदुह्य सम्यक् समचालयन्।

ऋषिकुलकार्याद्विश्रम्य स्वतन्त्रतया सभासु विविक्षुभिः श्रीगुरुचरणैर्वार्द्धक्यात्स्थूलं पश्यतः पितुश्चरणयोः सेवाशुश्रूषाद्भिर्बहिर्वासमनादृत्य स्वगृहानेवाधिवस्तुं निरचायि। तथा निश्चितानामप्येतेषां प्रभावशालीनि व्याख्यानानि श्रोतुमुत्कण्ठितानां तासां तासां सनातनधर्मसभानां नित्यं करगतैः सानुरोधैर्निमन्त्रणैरहर्निशं धूमयानेनेतस्ततः प्रचरतामेषां महाभागानां स्वास्थ्यं शीघ्रमेवाशीर्यत। तस्मादचिरादेव निरन्तरप्रचरणाद्विरम्यैकोनविंशत्युत्तरैकोनविंशतिशततमे ख्रीस्ताब्दे सनातनधर्मसंस्कृतकालेजस्याध्यक्षपदं स्वीकृत्य श्रीचतुर्वेदमहाभागा लाहौरनगरं समायाताः। स्थानीयसनातनधर्मसभयाऽयं संस्कृतकालेजः संस्थापितस्तया चादावेव समौहूलस्यास्य महानुभावस्य करयोः कालेजीयकार्यसञ्चालनरश्मयः समर्पिताः। अस्य कालेजस्य सर्वा अपि व्यवस्था एनेन महाभागेन स्वयमेव विहिताः। वर्षद्वयमस्य कालेजस्य सर्वोऽपि प्रबन्धः सभया स्वयं विधाय पश्चात् आङ्गलभाषीयसनातनधर्म-कालेजस्य संस्कृतविभागैकाङ्गतया अकल्प्यत। तदैते महाभागाः संस्कृतविभागस्याध्यक्षपदे नियुक्ता आङ्गलविभागस्य च धर्मशिक्षकपदे अधिष्ठिता

यां सम्मिलितानां विदुषां सर्वेषामेव चेतश्चमत्कृतिमातनोत्। एवं भूतस्याया विद्वत्समितेः सभापतित्वमपि बहुवर्षमकरोदयम्। तस्याः समितेः परीक्षा अपि स्वतन्त्रा अभवन्नित्यलं तावत्प्रसक्त्यानुप्रसक्त्या। प्रकृतमनुसरामः-यत्प्रभृति संस्कृतसाहित्यसम्मेलनस्य महामन्त्रिपदमनेन महोदयेन कार्याधिक्यात्परित्यक्तं तदारभ्यैव तदन्तिमामवस्थामन्वभवदित्यास्तां दुःखोद्वहाभिः कथाभिः। अनेन तु महाभागेन हरिद्वारे मथुरायां प्रयागे आगरायां वाराणस्यां कालिकातायां लाहौरनगरेऽमृतसरसि मद्रासप्रान्ते—इत्येवं भारतस्य तेषु तेषु प्रान्तेषु तीर्थेषु वा सम्मेलनं महता समारोहेण प्रत्यब्दमधिवेश्य डॉ० सतीशचन्द्र "विद्याभूषण" M.A. कलिकातासंस्कृतकालेजस्य प्रिन्सिपलमहोदयः, C. I. E. हरप्रसादमहानुभावः, श्रीमान् रमेश्वरसिंहो दरभङ्गानरेशः, म० म० श० गणपतिशास्त्रिमहोदयः, महामहोपाध्यायः श्रीहाथीभाईशास्त्री, म०म० श्रीहरनारायणशास्त्री, महामहोपाध्यायः श्रीप्रमथनाथभट्टाचार्य इत्येवमादीन् विश्वविदितान्विदुषस्तत्सभापतिपदे प्रतिष्ठाप्य सम्मेलनस्य महत्सौभाग्यं संवर्द्धितमिति को न जानाति ? एवं चतुर्वेदमहाभागः संस्कृतसाहित्यस्य महतीं सेवां विदधानास्तत्सम्बन्धेनैकां काकणिकामपि सम्मेलनस्य स्वत्वेन नास्पृशन्निति सर्वस्य विदितमेवास्ति। तदधिवेशनेषु सर्वेषु स्वव्ययेनैव सर्वत्र यातयातमपि व्यदधुरिति तु तिरोहितमपि प्रकाशयामि।

ऋषिकुलावासं वसताऽनेन महाभागेनैकं 'ब्रह्मचारि' नामकं मासिकपत्रं हिन्दीभाषया सम्पाद्य प्रकाशितमपरं च 'संस्कृतरत्नाकर' इत्याख्यं मासिकपत्रं संस्कृतभाषया सम्पाद्य संस्कृतसाहित्य-सम्मेलनस्य मुखपत्रतया प्रकाशितम्, ययोरस्य वैदुष्यपूर्णा बहवो विद्वद्भिरनुशीलनीया विचारा लिपिबद्धाः सन्ति। मन्ये श्रीगुरुचरणैर्वियुज्यमाना ऋषिकुलश्रीर्यथा शनैः शनैरस्तमुपयाता तथैव ब्रह्मचारिपत्रमपि तद्वियोगदुःखादिव नितरां शुष्यन्मृत्युशय्यामशयिष्ट। संस्कृतरत्नाकरस्तु तत्करसंवर्द्धितोऽद्याप्येतस्य महाभागस्य जन्मभूमेर्जयपुरात्प्रकाशितः सर्वेषामपि संस्कृतपत्राणां प्रथमां संख्यामधिगच्छति। तदित्थं संस्कृतसाहित्यसम्मेलनं संस्थाप्य दशवर्षाणि यावत्तस्य प्रधानमन्त्रिपदमलंकृत्य सर्वमपि कार्यभारं स्वयमुदुह्य सम्यक् समचालयत्।

ऋषिकुलकार्याद्विश्रम्य स्वतन्त्रतया सभासु विविचुभिः श्रीगुरुचरणैर्वार्द्धक्यात्स्थूलं पश्यतः पितुश्चरणयोः सेवासुशद्भिर्बहिर्वासमनादृत्य स्वगृहानेवाधिवस्तुं निरचायि। तथा निश्चितानाञ्चैतेषां प्रभावशालीनि व्याख्यानानि श्रोतुमुत्कण्ठितानां तासां तासां सनातनधर्मसभानां नित्यं करगतैः सानुरोधैर्निमन्त्रणैरहर्निशं धूमयानेनेतस्ततः प्रचरतामेषां महाभागानां स्वास्थ्यं शीघ्रमेवाशीर्यत। तस्मादचिरादेव निरन्तरप्रचरणाद्विरम्यैकोनविंशत्युत्तरैकोनविंशतिशततमे ख्रीस्ताब्दे सनातनधर्मसंस्कृतकालेजस्याध्यक्षपदं स्वीकृत्य श्रीचतुर्वेदमहाभागा लाहौरनगरं समायाताः। स्थानीयसनातनधर्मसभयाऽयं संस्कृतकालेजः संस्थापितस्तया चादावेव समाहूतस्यास्य महानुभावस्य करयोः कालेजीयकार्यसञ्चालनरश्मयः समर्पिताः। अस्य कालेजस्य सर्वा अपि व्यवस्था एनेन महाभागेन स्वयमेव विहिताः। वर्षद्वयमस्य कालेजस्य सर्वोऽपि प्रबन्धः सभया स्वयं विधाय पश्चात् आङ्गलभाषीयसनातनधर्म-कालेजस्य संस्कृतविभागैकाङ्गतया अकल्प्यत। तदैते महाभागाः संस्कृतविभागस्याध्यक्षपदे नियुक्ता आङ्गलविभागस्य च धर्मशिक्षकपदे अधिष्ठिता

अभवन्। संस्कृतविभागस्य सर्वमपि कार्यभारं पूर्वं अत्रैव निरवहन्। एतेषामध्यापनवेलायां सनातनधर्मकालेज-संस्कृतविभागस्य परीक्षाफलमोरियंटलकालेजीयपरीक्षापरिणामादेतावदग्रे गतमभवद्यदोरियंटलकालेजस्य तात्कालिकेनाध्यक्षमहोदयेन ओरियंटलकालेजाध्यापका बहुवारमनुयुक्ता यत् सनातनधर्मकालेजीयपरीक्षाफलादोरियंटलकालेजीयपरीक्षाफलं नितरां पश्चिमं भवतीति कस्य हेतोः? तत्र समुचितमुत्तरमलभमाना ओरियण्टलकालेजाध्यापका कर्णेहत्य कृतश्रमा अपि परीक्षापरिणामप्रकाशनसमये समकुचन्। सनातनधर्मकालेजसंस्कृतविभागे केवलं पञ्चवर्षाणि अध्यापितम्। एतावता कालेनैव प्रायः सर्वोऽपि पञ्चापदेशोऽस्मद्गुरुवर्यशिष्यैरापूर्णः समभवत्।

चतुर्विंशत्युत्तरैकोनविंशतितमे ख्रीस्ताब्दे श्रीचतुर्वेदमहाभागा लवपुरीयसनातनधर्मकालेजसंस्कृतविभागाध्यक्षपदे स्वीयसर्वशिष्येषु प्रथमं महामहोपाध्यायं श्रीपरमेश्वरानन्दशास्त्रिणं प्रतिष्ठाप्य लवपुराजयपुरीयमहाराजसंस्कृतकालेजे समागताः। तत्रैकोनविंशत्या वर्षैर्महाराज-संस्कृत-कालेजस्याध्यक्षपदमधिरुह्य चतुश्चत्वारिंशदुत्तरैकोनविंशतितमे ख्रीस्ताब्दे एम्० के० संस्कृतविद्यापीठस्याध्यक्षासनमधिकृत्य पुनर्लाहौरनगरमागताः। एतेषां महाभागानां बुद्ध्यैवायं विद्यापीठः प्रसूतः। विद्यापीठस्यामूलचूलं स्वरूपमेभिर्महोदयैरेव निर्माय साम्प्रतं सञ्चाल्यते। आचार्यशास्त्रीत्याद्युत्तमपरीक्षासु समुत्तीर्णा वाक्पटवो विद्वांसोऽस्मिन् विद्यापीठे सनातनधर्मसिद्धान्तप्रचाराय साध्यन्ते। एतदर्थं न्यायवेदान्तमीमांसादि-दर्शनानि, पुराणानि, मन्वादिस्मृतयः, उपनिषदः, प्राचीनार्वाचीनेतिहासो, वैदिकं विज्ञानं वेदपुराणादिशास्त्रेषु तत्तद्विषयान्वेषणपरिपाटीत्येवमादयो विषया अध्याप्यन्ते। अन्यदपि चावश्यकं ज्ञानं तत्तच्छास्त्रेषु पारङ्गतानां विदुषां विशिष्टव्याख्यानैः शिक्ष्यते। वर्षद्वयेनैतद्विद्यापीठस्य शिक्षा परिसमाप्यते। प्रथमवर्षे पञ्चविंशतिरूप्यकाणि द्वितीयवर्षे च त्रिंशद्रूप्यकाणि प्रतिमासमध्येतृषु प्रत्येकं भोजनाद्यावश्यककार्यसाधनाय प्रदीयते ॥ इत्थं विदुषां विशेषज्ञानलाभाय इयं मद्वितीयैव संस्था श्रीमद्भिर्गुरुवर्यैः सञ्चाल्यते। अस्य विद्यापीठस्य सर्वोऽपि व्ययभारः श्रीमूलचन्द्खैरातीरामट्रष्टेनोद्वह्यते।

महामनःश्रीमदनमोहनमालवीयसंस्थापितहिन्दूविश्वविद्यालयस्य प्रधानपरिषदि पञ्चदशवर्षेभ्यः सदस्यतया सम्बद्धाः सन्ति। तदीयप्राच्यविद्याविभागस्य, धर्मविज्ञानविभागस्य च द्वाविंशतिवर्षेभ्यः सदस्याः सन्ति ॥ अन्येषामपि च हिन्दूविश्वविद्यालयस्य बहूनां विभागानां श्रीचतुर्वेदमहाभागाः सदस्यतां वहन्ति। तत्र धर्मशिक्षासमितेस्तु आरम्भत एव सदस्या इति हिन्दूविश्वविद्यालयो बहुविभागेष्वेभिर्महाभागैरनुप्राणितः।

पञ्चापीयविश्वविद्यालयस्यापि अनेकवर्षाणि यावत् पाठ्यनिर्धारकपरिषदः सदस्याः प्राच्यविद्याविभागस्य सदस्याश्चाभवन्। परीक्षकतासम्बन्धस्तु प्रायः सर्वैरेव विश्वविद्यालयैरेतेषामद्याप्यस्तीति साकल्येन तेषां सङ्ख्या यद्यपि न शक्यते इयत्तया निर्देष्टुं तथापि प्राधान्येनोपरिष्टात्सङ्ख्यायन्ते—

१—गवर्नमेन्ट-संस्कृत-कालेजो वाराणसेयः।

२—हिन्दू-विश्वविद्यालयो वाराणसेयः।

३—विहारोडीसासंस्कृतशोशियेशनः पटनास्थः।

४—संस्कृत-परीक्षा-समितिः कालिकातीया।

५—लखनऊ-विश्वविद्यालयः।
६—पञ्जाबीय-विश्वविद्यालयः।
७—इन्द्रप्रस्थीय-विश्वविद्यालयः।
८—जयपुरीयः संस्कृत कालेजः।
९—गुरुकुल-विश्वविद्यालयः।
१०—प्रयागीय-हिन्दी-साहित्य-सम्मेलनम्।

एतादृशैरन्यैरपि विश्वविदितैर्विद्यालयैर्महाविद्यालयैश्च प्रचारितानां प्रायः सर्वासामेवोत्तमपरीक्षाणामयं परीक्षको भवति।

एतावता संस्कृतसंस्थास्वेवायं लब्धादर इति मा मंसत तदर्थं हिन्दी-भाषासंस्थासंबन्धमपि अस्य महाभागस्य स्तोकं प्रदर्शयामः। लेखवृद्धिभयात्तु न साकल्येन निर्देष्टुमिह प्रभविष्यामः।

लवपुरीय-हिन्दी-साहित्यसम्मेलनस्वागतसमितेरयं मन्त्री अभवत्। संमेलनस्य स्थायिसमितेश्चिरं सदस्योऽभवत्। हिन्दीसाहित्य-सम्मेलनाङ्गभूतायाः दर्शनपरिषदोयमिन्द्रप्रस्थेऽध्यक्ष आसीत्। हिन्दी-साहित्य-संमेलनसम्बन्धि-मङ्गलाप्रसादपारितोषिकस्य निर्णायको द्विरभूद्दर्शनशाखे। काशीस्थनागरीप्रचारिणीसभायाश्च पञ्चविंशतिवर्षेभ्यः सदस्योस्ति। त्रिचतैर्वर्षैस्तु तत्कार्यकारिणीसमितेरपि सदस्योऽभवत्।

## धर्मसम्बन्धिसंस्थापरिचयः।

अथ धर्मसम्बन्धिसंस्थाभिरस्य कस्कः सम्बन्ध इति किञ्चिदुपक्रमे-भारतधर्ममहामण्डलेनैतेषां महाभागानामतिघनिष्टः सम्बन्ध असीत्। महामहोपदेशक-व्याख्यानवाचस्पत्यादि-सम्मानसूचकानि पदानि तेनैव सादरमुपहृतानि।

पञ्चोत्तरैकोनविंशतिशततमे ख्रीस्ताब्दे प्रयागे कुम्भपर्वणि सुगृहीतनामधेयैः श्रीमदनमोहनमालवीयमहोदयैरखिलभारतीयसनातनधर्मसभा स्थापिता। तस्याः १९१८ ईशवीयेऽब्दे प्रयागीयमहाधिवेशने प्रधानमन्त्रिपदं श्रीमालवीयमहोदयैरेव गृहीतं, सहकारिमन्त्रिपदन्तु श्रीगुरुचरणैर्विभूषितम्।

व्याख्यानवाचस्पति-पण्डितश्रीदीनदयालुमहाभागैः १९१५ ख्रीस्ताब्दे श्रीहरिद्वारे स्थापितस्य सनातनधर्ममहासम्मेलनस्यैते आरम्भत एव कार्यकारिण्याः सदस्या आसन्।

वर्णाश्रमस्वराज्यसंघस्य तु एते महोदया जन्मदातार एवेति न तिरोहितं समाचारपत्रपाठकेभ्यः।

सनातनधर्मशास्त्रनिर्णीते विवाहवयसि मिस्टर-शारदामहाशयेन शासनशक्त्या आसेधिते सति लुब्धान्तरस्यास्य महाभागस्य पत्रेणैव समुत्साहिता म०म०श्रीलक्ष्मणशास्त्रिद्रविड़सदृशा विद्वांस इन्द्रप्रस्थे सनातनधर्मानुयायिन एकत्रीकृत्य सभा अकुर्वन्।

परमहंसपरिव्राजकाचार्यस्वामिश्रीकरपात्रिमहोदयैः प्रतिष्ठाप्य संपोषितस्य धर्मसंघस्य द्वितीयेऽधिवेशनेऽयमेव महाभागः सभापतेरासनमग्रहीत्।

पञ्जाबप्रान्तीयसनातनधर्मसभास्थापने श्रीचतुर्वेदमहोदयानामपि पुण्यहस्त आसीत्। प्रतिनिधिसभाया उपसभापतिपदमेते महाभागाः सुचिरमध्यतिष्ठन्। पञ्जाबप्रान्ताज्जयपुरगमनानन्तरमपि अयं महाभागस्तया बहुधा सम्बद्ध आसीत्। अनेन हि प्रतिनिधिसभायाः प्रायः सर्व एवोपदेशकाः विशिष्टव्याख्यानैर्धर्मोपदेशेषु शिक्षिताः। परन्तु यत्समयमारभ्य प्रतिनिधिसभा स्पृश्यास्पृश्यव्यवस्थां शास्त्रविहितामतिलङ्घ्यास्पृश्यैः सह यथेच्छमरंस्त तदारभ्य तत्सम्बन्धं सर्वथा पर्यहरत।

सङ्क्षेपेण तु इदं शक्यते वक्तुं यद् देशव्यापिनी

तादृशी एकापि सनातनधर्मसंस्था नास्ति यथैते महाभागा सर्वथा अमम्बद्धाः स्युः ।

एकदेशिधर्मसभाभिरेवायं गृहीतहस्त आसीदिति न, यतो हिन्दूनभयाऽयमचिरमसुकपाणिरभवन । ऑलइण्डिया ... सभायां सदस्यस्तु आसीदेव। वाराणस्यां सुरलोकस्य श्रीमतो मदनमोहनमालवीयस्य साभापत्ये संवृत्ते ऐतिहासिके महाधिवेशने प्रधानपाणिरयमासीत् । मर्यादाविरुद्धङ्गतायास्तत्रमुख्या अपि स्पर्शमत्यजत् ।

एवं हरिद्वारस्थाया विद्वत्समितेः सभापतिर्जयपुरायसनातनधर्ममण्डलस्य,कविमण्डलस्य,साहित्यपाठशालायाश्च सभापतिरयमेव निजावासमये आसीत् । जयपुरायत्राह्मणसभाया मन्त्रिपदेऽपि अयमेवाशोभत ।

विज्ञानीयाः सभा यथैनं नामुचन् मजानीयसभाऽपि नथैव नामुञ्चत् । तथा च माथुरचतुर्वेदसभायाः १६१६ईशवीयाब्दे संस्थापिताया आरम्भादद्यावधि उपसभापतिरयमेवास्ति । किन्तु तस्याः प्रधानसभापतिरभूत् ।

जयपुरस्थराजकीयविद्वत्सभा या मौजमन्दिरेत्याख्यायते तस्याः सदस्याः सन्ति । जयपुरीयपब्लिकलायब्रेरीति प्रसिद्धस्य पुस्तकालयस्यापि सदस्याः सन्तीति किं विशेषतो विवेचनेन । यत्र यत्रायं महाभागोऽवात्सीत्तत्र तत्र सनातनधर्मसंस्थाभिर्विद्यासंस्थाभिश्चाखिलाभिरेवास्य दृढतरः सम्बन्धोऽवरीवर्तीदित्यहो अस्य कार्यकौशलं धर्मप्राणत्वञ्चेति शम् ।

---

मान्यानां श्रीगिरिधरशर्मणां

# सुरभारतीसेवा

( लेखकः—विद्याधरः शास्त्री M. A. प्रोफेसर, डूंगरकॉलेज, बीकानेर )

किं नाम कश्चन मादृशः शिष्यो गुरुवर्याणां गुणवर्णनं कर्तुं क्षमते । अत्रभवतामेषां महानुभावानां कृत्स्नमपि कार्यजातं किन्तु तथा स्पष्टं प्रतिभाति यथा सामान्यतमोऽपि जनस्तत्स्पष्टमवलोकयितुं प्रभुर्भवति । मन्येऽहं, सन्ति सेवाया विविधाः प्रकाराः, प्राचीनैर्र्वाचीनैश्चान्यैरपि महोदयैः स्वस्वनिर्णयानुकूला कृतैव सा सा संस्कृतभाषासेवा, मान्यवर्याणां सेवा दृश्यते किन्तु सर्वाङ्गपूर्णा सेवा । सर्वतः प्रथमं तु न हि कश्चन साधारणो विद्यार्थी संस्कृतभाषारहस्यमवगन्तुं शक्नोति । सन्ति समभवंश्च बहवस्तत्तद्ग्रन्थाध्यापनप्रसिद्धा विद्वांसः, कियद्भिः किन्तु तेषु तेषु ग्रन्थेषु सभालोचितो जीवनसारः । स्वस्वशब्देषु वा तदर्थेष्वेव न भवति शास्त्राणां तात्पर्यम् । येन हि भवेत्सर्वरहस्यावबोधः, जीवनगतिर्भवेत् प्रत्यक्षं भासमाना, गुणदोषविवेचनं च प्रस्फुरेत् प्रतिक्षणं परिस्फुटं तदेव शास्त्रज्ञानं ज्ञानपदवीमध्यारोढुं शक्नोति । छात्रावस्थायामेव मान्यैस्तल्लब्धमिति प्राथमिकीयं सेवा सर्वप्रधाना सेवेति सर्वैरेवाधुनिकैर्विद्यार्थिभिर्मनसि समाधेया । ततः परं हि किं नाम तदध्यापनं यस्मादध्यापिता न भवन्ति समानाः स्वेप्सितसरणिसमवगाहिनो वा स्वान्तेवासिनः । कुत्र न विलसन्ति सम्प्रति मान्यानामन्तेवासिनस्तेषु तेषु प्रान्तेषु । ऋषिकुले हि प्रातःस्मरणीयानां भाष्या-

चार्याणां पितामहचरणानां श्रीहरनामदत्तशास्त्रिणां पार्श्वस्थितेन कैशोरे मया पूज्यचरणानामन्तिके किञ्चिल्लब्धम्। तदानीं हि ये केऽपि छात्राः श्रीमतां सेवायामासन् सर्व एव ते सञ्जाताः प्रथिताः पण्डित-प्रवरा अध्यापयन्ति च सहस्रशः शिष्यान् तेषु तेषु विद्यालयेषु। कथमयं सेवाप्रकारः सततं प्रभवेत् दूर्वेव प्रवर्धमान इत्यत्र नात्र किञ्चन बहु निवेदनीयम्।

प्रतियुगं भवति विलक्षणमेव जगति किञ्चन परिवर्तनम्। भारतीयैः साम्प्रतिकैः केवलं प्राचीनसरणिसमवगाहनपरैः संस्कृतशिक्षकैर्न तदालोच्यते किन्तु बहुधा। फलं चाध्येतृषु पतति। न ते भवन्ति देशकालानुसारिशिक्षणप्रदाने शक्ताः। संस्कृतभाषा चेत्थं जनताभावाकर्षणविकला तिरस्क्रियते मूढैरपि लोकैः। प्राचीनशास्त्रसंरक्षणपरैर्मान्यैः किन्तु पूर्णमनुभूताऽवश्यकर्तव्यता तदनुकूलञ्चाथ विहितं शिक्षाप्रकारे परमावश्यकं परिवर्तनम्। पत्रसम्पादनम्,व्याख्यानदानम्, हिन्दीभाषायामपि निजाभिप्रायप्रकाशनं सर्वमेतत् युगानुकूलं सेवाकरणं मन्ये। न सम्प्रति कश्चनावश्यकैरेभिः प्रकारैर्विहीनः काञ्चन स्वभाषासेवां कर्तुमीष्टे।

सतापि विदुषा च यदि संस्कृतपण्डितेन न विधीयते धर्मरक्षा वृथैव तस्य तद् वैदुष्यमित्यपि स्पष्टं घोषयामि। सन्ति सम्प्रति तेषु तेषु विद्यालयेषु केचन संस्कृतभाषाग्रन्थप्रवणाः प्राध्यापका आचार्याश्च। न हि किन्तु ते स्वसंस्कृतिसंरक्षणे शक्ता भवन्ति। संस्कृतभाषा हि न केवलं भाषा अपि तु काचन मानवजीवनविकासिनी मान्या विलक्षणा शक्तिः। यावन्न सानुशील्यते तथैव तावन्न भवति सा फलदात्रीत्यपि सर्वैरभ्युपगन्तव्यम्। मान्यानां संस्कृतभाषाज्ञानं तदावश्यकधर्मरक्षणसम्पन्नमिति सौभाग्यमाधुनिकाना सर्वेषामेव निजधर्मरक्षणपराणां भारतीयानाम्।

समयोऽयं शुभामज्ञानाम्। भाषणशक्त्यविकलः तत्तत्सम्मेलनादिगृहीतभाग एव सम्प्रति जनान् प्रभावयितुं समर्थो भवति। मान्यैः संस्कृतसाहित्यसम्मेलनमन्त्रिपदासीनैरखिलेऽपि भारते पुनरपि संस्कृतभाषां प्रति सर्वेषामेव ध्यानमाकृष्य महती सेवा विहिता। चिरकालात् तत्तत्प्रान्तवर्तिनां विदुषां नासीत् क्वचन सम्मेलनसंगठनप्रकारः। अखिलभारतीयसंस्कृतसाहित्यसम्मेलनद्वारा सर्वेषामेव भारतीयानां प्रान्तानां तदन्तर्वर्तिनां नगराणां संस्कृतप्रगतेर्ज्ञानं जातम्। पारस्परिकेण विमर्शेन च बहु समुन्नतिसाधकं कार्यजातञ्चाविदितमपि स्वभावत एव सम्पन्नम्।

हिन्दीभाषायां विरला एव सन्तीदानीं तादृशो विद्वांसो यैर्हि प्राचीनभारतीयसंस्कृतेस्तत्त्वावलोचनं क्रियते। पाश्चात्त्यशिक्षाभिभूता हि ते प्रायशस्तदेव प्रतिपादयन्ति यद् वर्तते पाश्चात्त्यदेशेषु तेषां ग्रन्थेषु वा वर्णितम्। मान्यैर्दर्शनशास्त्रालोचनाद्धार्मिकरहस्याणां च तथा प्रकाशो विहितो यथा हिन्दीभाषाप्रणयिनोऽपि संस्कृतभाषाकृतज्ञा भवन्ति।

अपरा च मान्यानामनुकरणीया प्रणाली वैज्ञानिकी विश्लेषणरीतिः। अधुनातना हि भारतीयास्तदेव पठन्ति,तदेव च किञ्चन शृण्वन्ति यत्र भवेत् साम्प्रतिकस्य विज्ञानस्य कुत्रचित् कश्चन संसर्गलेशः। मान्यवर्यैः स्वव्याख्यानेषु शास्त्राणां तथा विचारः प्रारभ्यते यथा भवन्ति नवीना अपि युवकाः सर्वथा मुग्धाः। सर्वैरेव संस्कृतपण्डितैर्नित्यमनुकरणीया खल्वेषा रीतिः विनैनां न कश्चन तेषां वाक्यमेकमपि श्रोतुं सन्नद्धो भवति। यावच्च कश्चन शृणोत्येव न, तावत् किं कस्यचन भाषणस्य ज्ञानस्य वा फलं भवितुमर्हति? कीदृशी च तेन काचन संस्कृतभाषासेवा कर्तुं शक्यते।

संक्षेपतः कृतेऽस्मिन् सेवावर्णने मनसोऽधिकं संस्कृतोपकारश्च पूज्यप्रवराणां पावने दर्शन एव समुल्लसन्तं मन्ये। अनुभाव एव मान्यानां तादृशो येन स्वयमेव जनाः संस्कृतभाषायाः कश्चनायं महान् विद्वानिति दूरतो विलोक्यैव निश्चिन्वन्ति । न हि विद्याप्रभावः कदाचन गुप्तो भवति। संस्कृतभाषाया एव चायं कश्चन विलक्षणः प्रभावो येन मर्त्योऽपि देव इव दीप्तकान्तिर्विराजते। यत्र हि सर्वसौभाग्यदायिन्या भगवत्याः स्तवने—"रूपं देहि जयं देहि" इति स्तवनं विधीयते, तत्र रूपस्याप्येवं कृते भारतीया नित्यमीहन्ते। सात्त्विकी यत्र राजते कान्तिस्तत्र स्वत एव भवति श्रद्धाप्रादुर्भावः । श्रद्धाप्रादुर्भूतिश्चाविर्भावयति शिष्येषु गुरुवचनपालनशक्तिम्। इयमेव शक्तिरापाततः विकासयति तां तां भावां तत्तच्छास्त्रवचनविश्वासश्चेति भवेदपूर्णमपि पूर्णं मे स्तवनम्।

# साहित्य-सेवा

( ले०—पं० युगलकिशोरशर्मा—दर्शनवेदान्ताचार्यः, दर्शनाध्यापकः, संस्कृतकालेजस्य, जयपुरम् )

अयि विद्यावारिधिविगाहनविमलमानसाः, विस्फुरद्विज्ञानविद्योतितान्तःकरणाः, संस्कृतरत्नाकररत्नप्रचेतारः पाठकमहाभागाः! येषां प्रातःस्मरणीयानां पूज्यतमानां गुरुप्रवराणां श्रीचतुर्वेदमहाभागानाम् आकैशोरात् तुरीयवयःपरिणतिं यावत् समग्र एव जीवनकालः साहित्यसेवायामेव व्यतीतस्तेषां विषये यत्किमप्युच्येत तद् दिवाकरदीपदर्शनमिव न तेषां महत्त्वख्यापनायालम्, तथापि गुरूणां गुणगणगणनया आत्मानमेव पावयितुमेष मे यत्नः साफल्यमेष्यतीति सम्भाव्यते ।

अयि मान्याः पाठकमहाभागाः! अध्ययनकालादेव श्रीमतां प्रवृत्तिर्लेखनेऽप्यासीत्। अतोऽध्ययनेन सहैव अहमहमिकया प्रवर्तमाना लेखनकलाऽपि तदानीमेव प्रौढिमापन्ना। अध्ययनावस्थायामेव लिखिताः श्रीमतां धर्मसम्बन्धिनो लेखा हिन्दीभाषायाम् इटावानगरात् प्रकाशिते "ब्राह्मणसर्वस्व"नाम्नि यन्त्रे मुद्रणमेत्य शिक्षितजनानां श्रवणानि भूषयामासुः।

तेष्वेव दिवसेषु एकोत्तरैकोनविंशतिशततमे (१९०१) ख्रिस्ताब्दे सप्तमैडवर्डसम्राजो राज्याभिषेकोपलक्ष्ये जयपुरराजवर्गीयैः श्रीगोविन्ददेवमन्दिर एका विद्वत्परिषत् संयोजिता । तत्र च राजसम्मानिता विशिष्टा विद्वांस आशीर्वादात्मिका वर्णनात्मिकाश्च कविता अश्रावयन्। अस्यां विद्वत्परिषद्यपि प्रकृतमहाभागानां कविता प्राशस्त्येनोपयुक्तया विद्वन्मनोहारिणी जाता। तस्या एव कानिचित् पद्यानि निदर्शनार्थमत्रोपस्थाप्यन्ते—

> अद्योत्सवाम्बुनिधिवीचिपरिप्लुताङ्गा
> लब्धामया भवत भारतवासिलोकाः ।
> यच्छासितुं भुवनमेतदनल्पवीर्यः
> सिंहासने विशति सप्तम एडवर्डः ॥

[illegible]ः सागरमेखलां वसुमतीमेव नमो रक्षितुं,
[illegible] कृन्तति विद्विषां, बलवतामग्रेसरो गीयते।
[illegible]ः सर्वजना अमुष्य चरिते चन्द्रांशुविभ्राजिते,
[illegible] सम्पदमाश्रितेषु बहुशस्तैर्नैदवदः स्मृतः॥ २॥

उन्निद्राद्य गुणज्ञता सरलता लब्धास्पदोदारता,
स्वच्छन्दामलनीतिरास्तविभवा वर्वर्ति विद्या मुदा।
विक्रान्तः खलु विक्रमोऽपि सुतरामुत्साह उत्साहवान्
चौर्यं चोरितमेव दैन्यमतुलं दैन्यं समालम्बते॥ ३॥

भो विश्वम्भर! भवता तापात् पातव्य एष वर्तोऽसौ।
परिपालिते नृपेऽस्मिन् न स्याद् विश्वस्य पालनायासः॥

तत्रैव भगवन्मन्दिरे कविभिरन्येष्वप्यवसरेषु कविताः पठ्यन्ते स्म।

भूतपूर्वजर्मनयुद्धे जाते जर्मनपराजये यो विजयमहोत्सवः प्रार्थना च समभूत्, तत्रत्यमपि पद्यमेकं पाठकानां प्रमोदाय पुर उपस्थाप्यते—

विज्ञानोन्मत्तदृप्यत्प्रतिभटनिवहोत्कृत्तखण्डप्रसर्पत्-
कीलालक्षालितायां भुवि विकटतरैरायुधैरास्तृतायाम्
प्रज्वाल्य स्वप्रतापानलमतुलयशो वैरिणां तत्र हुत्वा,
शान्तिं लोकेषु धर्माभ्युदयसहचरीं प्राप्तवान् जार्जराजः

अध्ययनस्यापरिसमाप्तावेव तस्यामेवावस्थायां स्वसुहृद्वृन्दसहकारितया श्रीमद्भिः गीर्वाणवाङ्मयस्य संस्कृतरत्नाकरनामकमासिकपत्रस्य प्रकाशनं सम्पादनञ्च प्रारब्धम्, यद्धि तस्मिन् काले प्रायः दशवर्षाणि यावत् सुचारुरूपेण स्वविषयरत्नप्रभाभिः संस्कृतसाहित्यं व्यद्योतयत्। अस्मिन् पत्रे चतुर्वेदमहाभागानां स्वीया महत्त्वपूर्णा निबन्धाः कविताश्च प्राकाश्यं लेभिरे। तत एव कतिचित् प्रारम्भिकमङ्गलकविता उदाहरणार्थं प्रदर्श्यन्ते।

भजामस्त्वत्पादौ सकलसुरचूडामणिलसन्
मयूखै राजन्तौ सदयहृदये देवि वचसाम्।
हृतापाया मातस्तव पदसरोजस्मरणतो
गताः सिद्धिं सम्यक् श्रियमनुभवन्तीह विबुधाः॥

शान्तात्मभिरासेव्यं शीतकराकलितशेखरं शमिनम्
शंकरमाश्रितसुखदं शैलसुताप्रणयिनं नौमि॥

यत्रामृताह्वमकरन्दमवाप्तुकामा
गुञ्जन्ति योगिजनषट्चरणाश्चरन्तः।
देवेन्द्रमौलिमुकुटांशुविराजितं तद्
वन्देऽब्धिशायिपरमात्मपदारविन्दम्॥

एतदतिरिक्ता 'कथं स्यात् संस्कृतोन्नतिः' इति शीर्षकमवलम्ब्य विरचिताऽनुष्टुप्छन्दोमयी कवितैका अतीवोत्कृष्टा मार्मिकी प्रकाशिता, यस्या हि विद्वत्समाजे महान् समादरः समभूत्।

गद्यात्मकनिबन्धेषु "पुराणेतिहासविषयः" "चातुर्वर्ण्यम्" ( भागद्वयम ) "विधवाधर्ममीमांसा" "पितृविवेकः" 'कश्चित्कविः'' इत्यादिनिबन्धास्तात्कालिके 'संस्कृतरत्नाकरे' पत्रेऽतीवमहत्त्वशालिनः प्रकाशमापुः। संवादाः, सम्पादकीयाष्टिप्पण्यो, वर्षादौ वर्षान्ते च सम्पादकवक्तव्यानि च दर्शनीयतमानि भवन्ति स्म। विशेषतः १९७० विक्रमाब्दे फाल्गुने लिखितो "होलिकासम्मेलन"लेखः एका विनोदपूर्णाऽऽदरणीया च सामग्र्यासीत्। एकस्या दार्शनिकव्यक्तेरेतादृशी विनोदपूर्णा रचना विख्यापयति सर्वतोमुखीं प्रतिभाम्।

तस्मिन्नेव रत्नाकरप्रकाशनकाले "संस्कृत-चन्द्रिका"-नाम्न्यां पत्रिकायां दक्षिणभारतस्य प्रकाण्डविदुषां कस्तूरिरङ्गाचार्याणां व्याकरणविषय एको लेखः प्रकाशित आसीत्। तत्र तैराचार्यैः प्रसाधितं यद्-ओजस्विन्-शब्दादिष्ठन्-प्रत्यये कृते "ओजिष्ठ" इत्यादि-

प्रयोगाः साधयितुं शक्यन्त इति। श्रीमद्भिश्चतुर्वेदम-हाभागैरस्य स्पण्डनं संस्कृतरत्नाकरस्य प्रथम एव वर्षे लिखितं यद्धि शास्त्रीय-लेखेष्वेक उत्कृष्टतमो लेखो-ऽमन्यत। तस्मिन्नेव काले रत्नाकरस्य मासिकसम्मि-लनेषु श्रीमद्भी रचितैका सुमनोहरा गीतिरपि निःसृता, या पाठकमहोदयानां मनोरञ्जनायेहापि प्रकाश्यते—

## —गीतिका—

स्थायी—देवि ! तव सुखदं पदकमलम्,
भजे भवतापहरं विमलम् ॥
अन्तरा—रणन्मणिमञ्जुलमञ्जीरं,
विराजद्विमलनखरहीरम् ।
विजितविबुधारिशिरसि निहितं,
सुरार्पितकुसुमनिकरपिहितम् ॥
निःश्रेयसमधुवाञ्छया, सततं यदाश्रयन्ति ।
भक्तकुलानि दुरितविमुखानि हि मधुकरतामुपयन्ति ॥
यन्ति ननु जनुषः फलममलम्, देवि तव सुखदं०॥१॥

त्वमसि खलु जननि ! जगत्येका,
गुणभिदा भासि दशाऽनेका ।
परा वाङ्मनसपथातीता,
योगिभिः कथमपि हृदि नीता ॥
शतमखचतुर्मुखादयो, महिमानं तु तवैव ।
गायन्तीह सदा जगदीश्वरि ! पारं यान्ति तु नैव ॥
नैव वेदा अपि वदितुमलं, देवि ! तव सुखदं० ॥२॥

रजोमयि जननि निखिलजगताम्,
सत्त्वमपि परिपालिनि भवताम् ।
तमोमयि संहरणासक्ते ! त्रिविधगुणकर्मस्वनुरक्ते ॥
तत्त्वज्ञानपवित्रिते, जनमानसे विभासि ।
त्रिगुणातीता चित्सुखरूपा नैव विकारं यासि ॥
यासि न हि कथमपि कर्मफलम्, देवि ! तव सु०॥३॥

जना ये भवदाश्रयविमुखा,
भवन्ति न कथमपि लब्धसुखाः ।
विषयसुखवासनया निहताः,
पतन्ति हि भवकूपेऽविरताः ॥
ते तु विमलमतयो बुधा, विविधापदस्त्यजन्ति,
ये भुवनत्रयवाञ्छितभर्त्रीं भवतीमम्ब ! भजन्ति ।
भजन्ति त एव सुखं सकलम्, देवि ! तव सुखदं०॥४॥

तत्सामयिके रत्नाकरे विद्वद्भिः समस्या अपि पूर्यन्ते स्म। तत्र श्रीमद्भिः पूरिताः पूर्त्तयोऽपि मनः-कर्षिका भवन्ति स्म। तन्निदर्शनार्थं द्वित्राणि पद्या-न्यत्राप्युपस्थाप्यन्ते।

समस्या—"कल्पलतेव विद्या"
तत्रैतेषां पूर्तिरस्ति—
संस्कृत्य बुद्धिधरणीं गुरुणा प्रयुक्ता,
नित्यं शुभाशुभविवेककृतालवाला ।
सिक्तानिशं श्रमजलेन सुकीर्त्तिपुष्पा,
कामानियं फलति कल्पलतेव विद्या ॥ १ ॥

समस्या—"वर्षा मनः कर्षति"
लीलोन्मीलितमालतीपरिमला स्वादैकबद्धादर-
भ्राम्यद्भृङ्गकदम्बचारुरणितैर्झाङ्कारयन्त्यो दिशः।
आच्छाद्याम्बरमार्द्रयन्ति वसुधां वर्षा मनः कर्षति,
स्फूर्जत्कृष्णघनालिलब्धवसतिर्विद्युद् वियद्द्योतिका ।

समस्या—"नावश्यायैः पयसि सरसां दूयते पुण्डरीकम्"
क्रीडासक्ते भगवति हरौ कर्तुकामेऽस्य तोषं
प्रादुर्भूतेऽहमहमिकया तत्र सर्वर्तुसंघे ।
ग्रीष्मज्वालाजटिलमहसा हीयते नो वनश्री-
र्नावश्यायैः पयसि सरसां दूयते पुण्डरीकम् ।

अस्मिन्नेव संस्कृतरत्नाकरे पत्रे श्रीमद्भिरेकस्य महानिबन्धस्य 'प्रमेयपारिजात' नाम्नो लेखनं प्रारब्धम्। अस्मिन् महानिबन्धे गौतमोक्तानामात्मशरीरेन्द्रियादीनां द्वादशानां प्रमेयानां द्वादशप्रकरणानि रचयित्वा प्रत्येकं विषयेषु यानि आस्तिकनास्तिकमतानि तेषां सर्वेषां संग्रहः कृतोऽस्ति। अस्य १ संग्रहः, २ परीक्षा ३ रहस्यञ्चेति त्रयः स्कन्धा वर्तन्ते। अस्य आत्मप्रकरणस्य कश्चिद् भागस्तत्सामयिके संस्कृतरत्नाकरे प्रकाशितोऽपि वर्तते। यद्येष निबन्ध ईश्वरानुकम्पया पूर्णतामेष्यति, तर्हि संस्कृतसाहित्ये एकं विशिष्टं वस्तु भविष्यति, यद्धि विद्वत्समाजे समादृतं स्थानं प्राप्स्यति। दार्शनिकसंग्रहग्रन्थस्याभावं च संस्कृतसाहित्याद् दूरीकरिष्यति।

एतदनन्तरं चतुर्दशोत्तरैकोनविंशतितमे। (१९१४) खिस्ताब्दे संस्कृतसाहित्यसम्मेलनस्थापनाय तद्विषयक उद्योगः श्रीमद्भिरेव प्रारब्धः। सम्मेलनस्थापनानन्तरञ्च तस्य मन्त्रिपदमप्येभिरेवालञ्चक्रे। सम्मेलनस्य वार्षिकविवरण-(रिपोर्ट)-मपि प्रत्यब्दमेतेषामेव करकमलसम्पर्कात् प्राकाश्यमेति स्म। कियतीनाञ्च निबन्धावलीनामपि प्रकाशनं श्रीमद्भिरेव समये समये कृतम्। नियमावलीनां लेखनसम्पादनादिकार्याण्यपि वर्णनीयमहोदयद्वारा सम्पाद्यन्ते स्म।

संस्कृतसाहित्यसम्मेलनार्थं निबद्धेषु प्रबन्धेष्वपि द्वित्रा निबन्धा अतीव मार्मिकाः सन्ति। यथा—

१—दर्शनानामाविर्भावकालः, तत्क्रमश्च।
(संस्कृतसाहित्यसम्मेलनस्य प्रथमनिबन्धावल्यां मुद्रितः)

२—धर्मभेदः तत्परिणामश्च।
(अंशतः संस्कृतरत्नाकरे मुद्रितः)

३—दर्शनानामेकवाक्यताप्रकारः। (अमुद्रितः)

ततश्च संस्कृतसाहित्यसेवायां सुचारुरूपेण संलग्नतया संस्कृतसाहित्यस्योन्नायकत्वेन सप्तत्रिंशदुत्तरैकोनविंशतिशततमे (१९३७) खिस्ताब्देऽमृतसरनगरे यत् सम्मेलनस्याधिवेशनं जातं तत्र सभापतिपदेऽस्मच्चरितनायकानामेव चयनमभूत्। तत्र सभापतिपदमलंकुर्वद्भिर्या वक्तृता दत्ता साऽप्यतीव मननीया वर्तते।

तदानीमेव च संस्कृतसाहित्यसम्मेलनद्वारा विभिन्नप्रान्तीयानां विशिष्टविदुषां सम्मतीरेकत्रीकृत्य "संस्कृतशिक्षाक्रमः" संकलितः। तस्य भूमिकाऽतीव विशिष्टरूपेण विरचिताऽस्ति, यस्यामाधुनिके प्रचलिते संस्कृतशिक्षाक्रमे ये दोषास्तेषां विस्तृतरूपेण विवरणमस्ति।

एतदनन्तरं लाहौरनगरे निवसद्भिरेभिः सन्तगोकुलचन्द्रशास्त्रिणा लिखितस्य, पञ्चनदविश्वविद्यालये प्रवेशिका(मैट्रिक)-परीक्षायां संगृहीतस्य संस्कृतव्याकरणपुस्तकस्यानुवादप्रणाल्याश्च संशोधनं महता परिश्रमेण कृतम्। तत्रैव च मेहरचन्द्रलक्ष्मणदासनामकपुस्तकप्रकाशनकार्यालयस्यानुरोधेन लघुकौमुद्या एकं सटिप्पणं संस्करणमपि श्रीमद्भिरेव सम्पादितम्, तेन कार्यालयेनैव प्रकाशितम्। तत्रैव च श्रीमद्भगवद्गीतोपरि लोकमान्यस्य तिलकमहोदयस्य भाष्यानुसारिणी हिन्दीभाषामयी संक्षिप्तैका टीकाऽपि श्रीमद्भिर्लिखिता, या मेहरचन्द्रेण स्वीययन्त्रालयात् प्रकाशिता।

लाहौरनगरमलंकुर्वद्भिः श्रीमद्भिरेतदप्यनुभूतं यत् काव्यानां प्राचीना शिक्षाप्रणाली अतीव विकृता संजाता। काव्यानां पठनपाठनप्रकार इदानीं न व्युत्पत्त्याधायकः। अतोऽस्य परिष्काराय रघुवंशकुमारसंभवकिरातार्जुनीयशिशुपालवधेति महाकाव्यचतुष्टय्याः छात्रोपयुक्तान् (प्रायेण शृङ्गाररसरहितान्) नव

सर्गान् संगृह्य तदुपर्येका छात्रोपकारिणी टीका श्रीमद्भिरतीव परिश्रमेण व्यलेखि, तस्य च सटीकस्य संग्रहस्य तत्रैव महाकाव्यसंग्रहनाम्ना प्रकाशनमपि श्रीमद्भिरेव कारितम्।

अस्यां टीकायां प्राचीनप्रणाल्यनुसारं, पूर्वं पद्यानामन्वयः, तदनु व्याकरणांशानां विवेचनम्, अनन्तरं पर्यायव्याख्या, पश्चात्तात्पर्यार्थस्य स्वतन्त्रसंस्कृतेन विवरणम्, अन्ते चालङ्कारव्यङ्ग्यार्थादीनां विवेचनमित्येष क्रमः समाश्रितः।

अनेन संग्रहनिर्माणेन काव्यानां पठनपाठनसरणावतीवोपयोगः संजातः।

एष संग्रहः- पञ्चनदविश्वविद्यालयीयविशारदपरीक्षायाः पाठ्यक्रमेऽष्टौ दश वा वर्षाणि यावत् सन्निविष्ट आसीत्। जयपुरराजकीयसंस्कृतपरीक्षास्वपि विंशतिवर्षेभ्य इदानीं यावत् पाठ्यक्रमे संलग्नोऽस्ति।

लाहौरनगरे चत्वारिंशदुत्तरैकोनविंशतिशततमे (१९४०) ख्रिस्ताब्दे मोतीलाल-बनारसीदास-कार्यालयस्यानुरोधेन बालमनोरमानामकसिद्धान्तकौमुदीटीकायाः सम्पादनं संशोधनञ्चापि श्रीमत्करकमलैरेव सम्पन्नम्।

विद्यार्थिवर्गस्य निबन्धरचनाया उत्तममार्गप्रदर्शनाय प्रबन्धपारिजातनामकमेकं पुस्तकं स्वसुहृद्भट्टश्रीमथुरानाथसाहित्याचार्यमहोदयानां सहकारितया श्रीमद्भिरेव व्यरच्यत।

एतदतिरिक्तं समये समये संस्कृतसाहित्यक्षेत्रे श्रीमद्भिः प्रदत्ताः संस्कृतमय्याः कियत्यो वक्तृताः पत्रेषु प्राकाश्यं लेभिरे, अतिमहत्त्वशालिन्यश्च ताः। तासु निम्नलिखिता विशेषतो मननीयाः सन्ति।

१—जयपुर-राजकीय-संस्कृतपाठशालाया उपाधिवितरणोत्सवेषु प्रदत्ता वक्तृताः [ वि० सं० १९८२ ] त आरभ्य।

२—कांगड़ीस्थगुरुकुले संस्कृतपरिषदः सभापतिपदात् प्रदत्ता वक्तृता।

३—काश्यां हिन्दूविश्वविद्यालये समाहूतायां पञ्चमहाभूतपरिषदि प्रदत्ता पञ्चमहाभूतसमर्थनविषयिणी वक्तृता। पञ्चमहाभूतपरिषदः कार्यविवरणे प्रकाशिता। ( वि० सं० १९९२ )

४—अमृतसरनगरे संस्कृतसाहित्यसम्मेलनस्य सभापतिपदतः प्रदत्ता वक्तृता। संस्कृतरत्नाकरे मुद्रिता। ( वि० सं० १९९४ )

५—काश्यां हिन्दूविश्वविद्यालये प्राच्यविद्यापरिषदोऽन्तर्गतायां पण्डितपरिषदि प्रधानपदमधिष्ठाय वितीर्णा वक्तृता। ( वि० सं० २००० )

एतदतिरिक्तं काशीस्थगवर्नमेण्टसंस्कृतकालेजीयपरीक्षाणां विहारोत्कलपरीक्षाणाञ्च कृते पाठ्यक्रमस्य संशोधनविषये याः सम्मतयः प्रदत्तास्ताः पण्डितवर्गस्य विशेषतो विचारणीयं वस्तु वर्तते।

जयपुरे समागमनानन्तरञ्च श्रीमन्तः कियता कालेन विश्रान्तिमनुभवन्तं संस्कृतरत्नाकरं १९३- ख्रिस्ताब्दे पुनरुदजीवयन्। अस्मिन् पुनः प्रकाशसमये समयेऽस्य प्रकाशकाः श्रीमन्तः स्वयमेवाभूवन्। अस्य रत्नाकरस्य प्रथमवर्षाङ्केषु "शास्त्रीयः प्रश्नः" इति नाम्ना यो विवेचनाक्रमः श्रीमद्भिरुपक्रान्तस्तस्मिन् यदि विद्वद्वर्गस्योपयुक्तप्रकारेण सहयोगोऽभविष्यत्तर्हि सोऽपि विषय एको महत्त्वपूर्णो सामग्र्यभविष्यत्। किन्तु हन्त! विदुषामेतादृशे कार्ये ध्यानं नैवाकृष्यते।

अस्मिन् नूतनप्रकाशितेऽपि रत्नाकरे चतुर्वेदमहाभागानां समस्यापूर्त्तयोऽतीव शोभनाः सम्पद्यन्ते। यथा—

**गीयतां न गाथा धनमदबधिराणां पुरः**

**चाटुशतैरात्मा ननु लाघवं न नीयताम्॥**

नीयतां नयेन कुलं कञ्चिन्महिमानमहो
सादरं समोपकृतौ तनुरपि दीयताम् ।
दीयतां न दृष्टिरन्यवसुवनितासु, न वा
श्रवसाप्यहह परनिन्दाविषं पीयताम् ।
पीयतां पुराणगणे द्वैपायनवाक्यसुधा
मानसमदीय ! यशो गोपशिशोर्गीयताम् ॥

अस्य रत्नाकरस्यास्माद् दर्शनाङ्कात् पूर्वं त्रयो विशेषाङ्काः पाठकानां पुरः प्राकाश्यं प्राप्तवन्तः । तेषु वेदाङ्के 'वेदेषु विज्ञानं, तस्य क्रमिको ह्रासश्चे'ति शीर्षकनिर्दिष्टः शिक्षाङ्के च 'शिक्षायां दोषास्तदपनयोपायाश्चे'ति शीर्षकयुक्तः, एतौ द्वावपि प्रबन्धावतिविस्तृतौ, विदुषां च प्रत्यक्षरं मननीयौ वर्तेते ।

एतदतिरिक्तं काशी-गवर्नमेन्टकालेजप्रकाशितायां मासिकपत्रिकायां प्रकाशितः 'ऋतं च सत्यञ्च' लेखोऽप्यतीवोपयुक्तो वर्तते ।

जयपुरनिवासकाल एव स्वर्गीयविद्यावाचस्पति-श्रीमधुसूदनझामहोदयानां गीताविज्ञानभाष्यस्य श्रीमद्भिर्महता परिश्रमेण सम्पादनं कृतम्। झामहोदयप्रकाशितेषु च कतिपयेष्वन्येष्वपि ग्रन्थेष्वेभिर्व्याख्या लिखिताः, याः साम्प्रतमपूर्णा अप्रकाशिताश्च वर्तन्ते । भूमिकास्तु बहुषु ग्रन्थेष्वेतल्लिखिताः प्राकाश्यमाप्ताः ।

समये समये च कियद्भ्यश्चिन् महानुभावेभ्यः समर्पणाय यान्यभिनन्दनपत्राणि प्रकृतमहानुभावैर्विलिखितानि, तान्यपि साहित्ये उपयुक्तानि वस्तूनि सन्ति । तेष्वेकस्य कियानंशो निदर्शनाय पाठकानां पुर उपस्थाप्यते। एतदभिनन्दनपत्रं हरिद्वार ऋषिकुलतः, भूतपूर्व-दरभंगा-महाराजाय समर्पितमासीत् ।

## अभिनन्दनपत्रम्—

मङ्गलाचरणानन्तरम्—

श्रीमन्महाराजाधिराज !

अद्य किल चिरन्तनार्जितपुण्यपुञ्जपरिपाकसुलभं भुवनभर्त्तुरकम्पयाऽनुकम्पयोपनतं श्रीमद्दर्शनसुखमनुभावमनुभावं विगलितवेद्यान्तरा आनन्दगद्गदैर्वचोभिरेव विहितस्वागतविधयो, हर्षभरोद्गच्छदश्रुजलैरेव परिकल्पितार्घाः, भवदनुकम्पावशीकृतं भवदीयमेवेति कृतसाहसं मानसमासनमुपकल्पयन्तो, निर्मलं भवद्भावमेवाचमनीयमुपनयन्तः कृतज्ञतां मधुधारां प्रेम्णि दध्नि समायोज्य विहितमधुपर्काः, बुधजनसमासेवितां गामेव गां समर्पयन्तः क्षमैकसाराणां करुणापारावाराणां श्रीमतामेवाऽश्रितरक्षणपराणां भुजकल्पतरुच्छायायां सुखं निषण्णा धन्यंमन्याः स्मः ।

राजद्राजपदं महत्त्वमहितं वंशे व्यतानोत्पदं,
यस्याऽन्वर्थतया स्वयं वसुचयं दुग्धे च विश्वम्भरा ।
धर्मं योऽवति वेनवत् प्रतिभटे संजागरूके कलौ,
साक्षात् सैष रमेश्वरो द्विजवरः किं नातिशेते पृथुम् ॥१॥

यस्मिन् भूपवरे रमेश्वर इति प्राप्ते प्रथामीर्ष्यया,
प्रायः प्रादुरकार्षु रात्मगुरुतां धीकान्तिकीर्त्यादयः॥
सौभाग्यं परिरक्षितुं ननु रमाऽप्याविष्करोत्यद्भुतं,
सौन्दर्यं स्वमहर्दिवं स हि महाराजः कथं वर्ण्यताम् ॥२॥

विविधेष्टिविततयशसा श्रोत्रियकुलकमलभानुना भवता
परिरक्षिता नु जनता स्मरति न जनकञ्च याज्ञवल्क्यञ्च ॥३॥

विलोक्य याज्ञवल्क्यमेव वैदिकाध्वधूर्वहम्,
पुरा प्रजाभरं समार्पिपद् विदेहभूपतौ ।
समर्प्य साम्प्रतं तु मैथिलेश ! वेदपारगे,
द्विजेन्द्र ! तद् द्वयं भवत्यभूद् विधिः सुनिर्वृतः ॥४॥

अनवद्यविश्वविद्यालयो महामण्डलं सुकर्मपरम् ।
चिरमेधतामृषिकुलं सुदृशा करुणार्द्रया भवतः ॥५॥

प्रस्तुतमस्माभिः पूर्वं प्रस्तावप्रारम्भे यदस्मच्चरितनायकस्य हिन्दीभाषालेखनप्रवृत्तिरध्ययनावस्थायामेव जागर्तिमापन्नेति। दिने दिने पर्यवर्धिष्टैव साहित्यसेवाप्रवृत्तिः। पञ्चोत्तरैकोनविंशतिशततम-( १६०५ ई० ) खिस्ताब्द्यां "भाषाया अनस्थिरता" इति विषयमवलम्ब्य हिन्दीसाहित्यक्षेत्रस्य सुप्रसिद्धा महारथिनः सरस्वतीपत्रिकासम्पादकाः श्रीमहावीरप्रसादद्विवेदिनः, भारतमित्रपत्रस्य च सम्पादका बालमुकुन्दगुप्ताश्च, अनयोरुभयोर्मध्ये यः प्रचण्डः संघर्षः समचलत् तदा प्रस्तुतमहाभागानामध्ययनकाल एवासीत्, तथापि तस्यामेवावस्थायां चतुर्वेदमहाभागैः गुप्तपक्षसमर्थनमेव लक्ष्यीकृतम्। अस्मिन् विद्वद्विवादविषये एतेषां कियन्त एव लेखा भारतमित्रपत्रे चित्रिता अभूवन् । द्विवेदिमहाभागानामाजीवनमेभिर्विमुखीभावस्यायमेव मुख्यो हेतुः । अनन्तरञ्च "कालिदासस्य निरङ्कुशाता" अस्मिन् विषये "मनसाराम" इत्युपनाम्ना स्वर्गीयस्य पं०जगन्नाथप्रसादचतुर्वेदिनः पूर्वोक्तद्विवेदिमहाभागैः परमसंघर्षः प्राचलत्, तत्रास्मच्चरितनायकेन चतुर्वेदपक्ष एव स्वीया विस्तृता सम्मतिः समलेखि ।

तदनन्तरं वृन्दारण्यस्था गोस्वामिनो मधुसूदनलालमहोदयाः स्मार्तधर्मः, स्मार्तमर्म इति नामभ्यां द्वे लघुपुस्तिके (ट्रैक्ट) प्राकाश्यं नीत्वा स्मार्त्तेषु अयन्यं आहरन् । तेषामुत्तरमस्मच्चरितनायकेन "स्मृतिविरोधपरिहार"—इति शीर्षकेण भारतधर्ममहामण्डलतः प्रकाशितायां निगमागमचन्द्रिकायां मुद्रापयित्वा स्मार्त्तानां शिर उन्नामितमिति नाविदितमेतदैतिवतां धीमताम् ।

अनन्तरञ्चैव लेखाः पुस्तकाकारेऽपि परिणतिमलभन । एतदेवैतेषां हिन्दीसाहित्यक्षेत्रे प्रवेशस्य द्वारमभवत् । हिन्दीसाहित्यसमाजे पूर्वोक्तनिबन्धस्य चर्चा सुचारु प्राचालीत् ।

हिन्दीभाषापत्रेषु वर्णनीयवर्णनानामेतेषां सुप्रसिद्धा धार्मिकाः साहित्यसम्बन्धिनश्च महत्त्वशालिनो निबन्धा निरसरन् । ये हिन्दीविद्वत्समाजे समधिकं समादृता अभूवन् ।

हरिद्वारे ऋषिकुलमञ्चकुर्वन्त एते 'ब्रह्मचारी' नामकं हिन्दीपत्रं समरीसरन् । स्वजातीयस्य 'चतुर्वेदी' नामकभाषापत्रस्यापि त्रिचतुरवर्षाणि यावत् सम्पादकत्वमलमकुर्वन् । एषु पत्रेष्वप्येतेषामतीव विशिष्टा लेखाः प्रकाशिताः ।

एभिरेव लिखिता अनेका लघुपुस्तिका अपि हिन्दीसाहित्ये प्रचारमापुः । कियन्तश्च लेखाः पुस्तकाकारेषु संगृहीता अभूवन् । तेषु केषाञ्चित् तालिका अधो निर्दिश्यते—

| पुस्तकनाम | प्रकाशनस्थानम् |
|---|---|
| १—ब्रह्मचर्यम् | हरिद्वारतः ऋषिकुलात् |
| २—विधवाधर्मः | " |
| ३—गोभक्तिः | मथुरा |
| ४—क्या अस्पृश्यता कल्पित है ? | इटावा (ब्रह्मप्रेस) |
| विस्तृतलेखाः, वक्तृताश्च | |
| ५—स्मृतिविरोधपरिहार | काशी |
| ६—वेदविज्ञान | इटावा (ब्राह्मणसर्वस्वपत्रे) |
| ७—वेद में वैज्ञानिक शिल्प | " |
| ८—विद्यावाचस्पति श्रीमधुसूदनजी-ओझा का जीवनचरित्र | (सुधापत्रिकाया विशेषाङ्के) |
| ९—पुरुषार्थ क्या है ? | ब्रह्मचारिपत्रे, द्विवेदाभिनन्दनग्रन्थे, समये २ अनेकेषु पत्रेषु च मुद्रितम् । |

| पुस्तकनामानि | प्रकाशनस्थानम् |
| --- | --- |
| १०—गोस्वामी तुलसीदासजी के दार्शनिक विचार। | ब्रह्मचारिपत्रे, नागरीप्रचारिणीपत्रिकायाम्, तुलसीग्रन्थमालायाम्, अन्येष्वपि च पत्रेषु। |
| ११—वर्तमान †हिन्दी में संस्कृत शब्दों का ग्रहण। | हिन्दीसाहित्यसम्मेलनस्य लाहौरनगराधिवेशननिबन्धावल्याम्, पृथगपि पुस्तकाकारे। |
| १२—दीपावली *और भगवान् रामचन्द्र | देहलीतः, हिन्दूसंसार-पत्रस्य विशेषाङ्के |
| १३—सदिच्छाओं के सुपरिणाम— | खण्डवा-'प्रभा'-पत्रिकायां प्रथमवर्षे |
| १४—समालोचना से साहित्य के लाभ। | हिन्दीसाहित्यसम्मेलनस्य तृतीयनिबन्धावल्याम् |
| १५—उन्नतिरहस्य | 'ब्रह्मचारिपत्रे' |
| १६—धार्मिक दुर्बलता के लक्षण | ,, |
| १७—देवसभा§ में ऋषि का फैसला | ,, |
| १८—आध्यात्मिक और आधिदैविक-मानवधर्म-(युद्धाङ्के) | |
| १९—कृष्णावतार पर वैज्ञानिक दृष्टि। | "कल्याण प्रेस" गोरखपुर (श्रीकृष्णाङ्के) |
| २०—शिवमहिमा | "कल्याण" गोरखपुर (शिवाङ्के) |
| २१—भगवद्गीता में बुद्धियोग | "कल्याण प्रेस" गोरखपुर (श्रीभगवद्गीताङ्के) |
| २२—पुराणों का क्रम | "कल्याण" गोरखपुर (पद्मपुराणाङ्के) |

## शास्त्रार्थाः—

१—‡ वर्णव्यवस्था ('ब्रह्मचारी'पत्रे) कोरोनेशनमुद्रणालय(आगरा)तः पुस्तकाकारेऽपि।

२—श्राद्धोपरि शास्त्रार्थः 'ब्रह्मचारी'पत्रे

३— ,, लाहौरतश्च (यो हि लाहौरीयसुप्रसिद्धविदुषा राजारामशास्त्रिणा सह जातः)

४—श्राद्धविषये लेखबद्धः शास्त्रार्थः पुस्तकाकारे (पं० रामगोपालशास्त्रिणा सह मीरपुरे (पञ्जाब) जातः

५—संस्कारविषये शास्त्रार्थः 'ब्रह्मचारी'पत्रे (यो हि आर्यसमाजस्य सुप्रसिद्धविदुषा बी० ए० रिसर्च-स्कालर इत्याद्युपाधिधारिणा भगवद्दत्तेन सह जातः)

६—शास्त्रार्थत्रय पं० कालूरामशास्त्रिद्वारा, कर्णपुरे पुराणविषये लेखबद्धम् अमरोहा (कानपुर)

७—मूर्तिपूजा- 'ब्रह्मचारी'पत्रे (आर्यप्रतिनिधिसभायाः प्रधानोपदेशकेन पूर्णानन्देन साकं संघटितः)

एतदतिरिक्तम्— वाराणसेयहिन्दूविश्वविद्यालयस्य प्रारम्भिकावस्थायां बाबूभगवानदासमहोदयेन यदान्दोलनमुत्थापितम्—यद् ब्राह्मणा एव धर्मोपदेष्टारः कथं भवेयुः, इतरेषामप्युपदेष्टृत्वे कथं नाधिकार इति-तदानीं पूर्वोक्तबाबूमहोदयानां खण्डनविषयणी अस्मच्चरितनायकस्य लेखमाला तत्स्थानीये आज-नाम्नि पत्रे प्रकाशिताऽभूत्।

एवं स्पृश्यास्पृश्यव्यवस्थाविलोपविषये श्रीमतां

---

†एषा पुस्तिका हिन्दीसाहित्यसम्मेलनस्य साहित्यरत्नपरीक्षायां कियन्ति वर्षाणि यावत् सन्निविष्टाऽऽभूत्।

*अस्यां विजयदशम्यां रावणवधः, दीपावलीदिने भगवतो रामचन्द्रस्य राज्याभिषेक इति प्रचलितयोः प्रवादयोः सप्रमाणं खण्डनमस्ति

§स्व० कविवर-नाथूरामशङ्करलिखिताया एकस्या व्यङ्ग्यकविताया उपरि लिखितमेकं प्रहसनम्।

‡अत्र गुरुकुलेऽस्मिन्नस्य सुप्रसिद्धस्य शास्त्रार्थस्य विस्तृतं विवरणं समालोचना च स्वयं चतुर्वेदकरकमलाङ्कता वर्तते।

विख्यातयशसां मालवीयमहोदयानां ये विचारास्तेषां निराकरणमपि प्रकृतमहाभागैस्तेषामेव-सनातनधर्म-नामके पत्रे कृतम् ।

एवमेव जगत्प्रसिद्धगान्धिमहोदयैः महापि पत्रव्य-वहारद्वारा श्रीमद्भगवद्गीताया आधारेण चतुर्वेदमहा-भागाः स्पृश्यास्पृश्यव्यवस्थामसाधयन्, यद्धि धार्मि-काणां कृत एकमतीव मननीयं वस्तु विद्यते ।

एवमेवैतैर्लिखिता अनेकेषां लघुबृहत्पुस्तकानां भूमिकाः समालोचनाश्च दर्शनीयतमा वर्तन्ते । यथा हि-ब्रह्मचारिपत्रे १-सप्तशती ( सतसई ) सञ्जीवनभा-ष्यभूमिकाया आलोचना, २-पञ्चदशीसारस्यालोचना, इत्यादि ।

समाचारपत्रेषु प्रकाशितानामीदृशानां लेखानां संख्यास्तु बाहुल्येन वर्तन्ते, येषां यदि संग्रहः स्यात्तर्हि तत्संकलने नैकमतिविशालं पुस्तकं सम्पादयितुं शक्यते ।

दीपावली-विजयदशमी-होलिकादिषु प्रसिद्धेषु महोत्सवेषु प्रकृतमहानुभावानां महत्त्वशालिनो निबन्धा ब्रह्मचारिपत्रे, चतुर्वेदिपत्रे च समये समये निसृताः सन्ति । चतुर्वेदिपत्रे च संस्कारेषु जातीयास्वपि समस्यासु कियन्त एव लेखाः श्रीमद्भिरतीव मार्मिका लिखिताः ।

वारद्वयञ्च माथुरचतुर्वेदमहासभायाः सभापति-पदमलङ्कुर्वद्भिरेभिः प्रदत्ता वक्तृताद्वयी महत्त्वपूर्णाऽस्ति, या च चतुर्वेदिपत्रे प्रकाशिताऽपि विद्यते ।

श्रीमन्तश्चतुर्वेदिपत्रिकायां "फैशन का रोग" नामक-मेकं लघूपन्यासमपि समलिखन्, यो हि हास्यरस-स्यैकं शोभनं निदर्शनमस्ति ।

रामगढग्रामे सम्पन्नाया राजस्थान-ब्राह्मण-सभायाः फतेहपुरे संयोजितस्य धर्मोत्सवस्य च सभापतिपदात् प्रोक्ते वक्तृते अपि मननीये प्रकाशिते च वर्तेते ।

इदं [illegible] सम्पूर्णतायां प्रमाणं [illegible]म-क्षरि[illegible]नायकद्वारा [illegible]ऽपि [illegible] यन्त्रोटावेव सम्पन्ना ।

साम्प्रतं ब्रह्मचारितनायकेनैव सनातनधर्मसिद्धा-न्तेषु "धर्मपरिज्ञान" नामक एको [illegible] ग्रन्थो लिख्यते । यो हि परमेश्वरस्य परयाऽनुकम्पया समाप्तिमेष्यति चेत्तर्हि चरितनायकस्य [illegible] स्थिरीकरणे विशेषतोऽलं भविष्यति ।

अस्मच्चरितनायका [illegible] परम्परया राजकीयकवीश्वरपदमलंकरोति । अतो राजकीयपुस्त-कालये समये समये समस्यापूर्तिक्रमेण बह्वीर्व्रज-भाषामयीः कविता अपि कृतवान् । तासु कानिचित् पद्यानि निदर्शनार्थमुपस्थाप्य निबन्धोऽयं परिसमाप्य-तेऽस्माभिः ।

## हिन्दीपद्यानि—

गोचारक गोबिन्द के, नमहुँ चरण जलजात ।
जिन नख इन्दु छटा छुवत, भय तम तुरत बिलात ।१।

समस्या—ऋतुराज है ।

सुभग रसाल मञ्जरीन को लगाय टोप,
कुसुम पराग नेकटाई सजि साज है ।
सुन्दर सुरूप तरु कोंपल पहरि कोट,
मधुकर बटन सम्हारे विधि आज है ॥
बल्ली बाँधि गैटिस रु सस्य पतलून डाँटि
बूँटन सों बूँटन को लीनों सब काज है ।
सुरभि समीर वर मोटर सवारी चढ़ि,
आवत दिखात नव्य सभ्य ऋतुराज है ॥२॥

समस्या—ब्याह उमाह सों ।

आवत हैं उत तें मघवा वर,
बादरसाजि बरात उछाह सों ।

बिजुन के चमकावत कोतिल,
फूलझरी चलैं बूँद अथाह सों ॥
इन्द्रवधून मिसैं मेंहदी के
रचाय के फूल इतै अति चाह सों ।
साजत सारी हरी सुथरी यह
भूमि-वधू बड़ व्याह उमाह सों ॥३॥

समस्या—हारे रघुनाथ जीती जानकी जनक की ।

कौतुक विवाह सखी दोउन खिलात जुआ,
पीत जल बीच डारी मुद्रिका कनक की ।
राम सावधान ज्यौं ही लागे हैं उठान, वधू-
अँगुरी छुवत उठी लहर रनक की ।
कँपि कर छूटि परी मूँदरी वधू के हात,
बाल भाव लीन्ही गहि लाज न तनक की ।
तारी दै कें गारी तब गाय उठीं बाल सब,
हारे रघुनाथ जीती जानकी जनक की ।

समस्या—जात नहिं जानी है ।

सुन्दर सुघर रूप तनु तरुनाई छाई,
नूतन रसाल पै वसन्त सी सुहानी है ।
मन में उछाह दिन रैन चाह देखिवे की,
चँद चाँदनी सो सुभ जोग सुखदानी है ॥
करि परिरम्भ पोढ़े चित्रमाला फूल सेज,
नैन मद-छाके मुख अटपटी बानी है ।
फूले ना समात गात पूरी हो न पात बात,
दंपति नवेले रात जात नहिं जानी है ॥ ५ ॥
सुनत विमान-गाथा सांच ना समानी मन,
बाबुन बखानी यह बुढ़िया-कहानी है ।
आज परतच्छ या 'विलून' प्राच्य सभ्यता के,
जंघ बिच नवजुग गोली सी चलानी है ।
देखें बाल वृद्ध नर नारी आसमान ओर,
कहत हवाई कोउ चील चित मानी है ।
छिन मँडरानी आँख उठत उड़ानी परी,
नेक न पिछानी कहूं जात नहिं जानो है ॥ ६ ॥

समस्या—भ्रमर लेहु पहिचान ।

करत चितेरे चतुरई कागद कमल समान ।
तुम जनि भूलो भेद को भ्रमर लेहु पहिचान ७
देखि कतहुं करवीरहू रूप गुलाब समान ।
मति लपटहु मकरन्द सों भ्रमर लेहु पहिचान ८
मुख मम पद्म न होय यह दुहु चखमार न आन ।
काहि सताओ भ्रम-भरे भ्रमर लेहु पहिचान ९
गई शिशिर की आपदा आगम ऋतुपति जान,
प्रकटी कली गुलाब की भ्रमर लेहु पहिचान १०

सकारानुप्रासः—

सुन्दर सलिल सर सरिता सरसावन,
सुच्छ सत सैकतनि सुषमा सजावनी ।
सुघर सुहाग सित सुमन समूह सार,
सुरभि समीरन सनेह संरसावनी ॥
स्यन्दनाङ्ग सितपत्र सारस समाज सिरै,
सहज समद सुर सबद सुनावनी ॥
संभु सिर सुरसरि सुभग सरोज सम,
सीतकर सोभा सनी सरद सुहावनी ॥ १ ॥
सत सत सरितनि सलिल समृद्धि सचि,
सिन्धु में सरोवर सरोजहू समायो है ।
सस्य संपदासों सनी सघन सरब सहा,
सुमन सुराग सट्पदन सिखायो है ॥
सुभग सुदामनी की सोभा समुहाय रही,
सीकरन सुखद समीर सरसायो है ।
सुभ सर सरबस सुन्दरी सजै हैं साज,
स्याम बैन स्यामा सुनो सावन सुहायो है ॥२॥ इति

# श्रीगुरुचरितम्

( रचयिता—पं० श्रीचन्द्रभानुशर्मशास्त्रिमहोदय', लवपुरम् )

मनोवाक्कायसन्तापाः प्रशमं यान्ति वीक्षिताः ।
यया दयार्द्रया नित्यं *गौरवीं तां दृशं नुमः ॥१॥

यत्कृपाकणिकासक्ता सिकता गिरितां गता ।
तं विहाय समुन्नत्यै कं श्रिये वद संश्रये ॥ २ ॥

यस्याननसहस्रेण शेषः शक्तो न भाषितुम् ।
कथमेकमुखस्तस्य गुणान् गणयितुं क्षमः ॥ ३ ॥

वाणी॰सुरपदी यत्र ‖कालिन्दी लेखनी मता ।
उभयोर्मध्यगा नित्यं स्वान्तश्छन्ना सरस्वती ॥ ४ ॥

जङ्गमस्तीर्थ¶राजोऽयं दर्शनस्पर्शनादिभिः ।
हरन् पापं दिशन् पुण्यं स्तोतुं वा केन शक्यते ॥५॥

तथाप्याजन्ममूकेन लब्धो यस्य कृपालवः ।
तेनैव मुखरा वाङ् मे जाता तदभिनन्दने ॥ ६ ॥

—साद्गुण्यम्—

नवनीतोपमं चित्तं दृष्टिः सुरसरित्समा ।
वशीकरणमन्त्रस्य तुलां वागधिरोहति ॥ ७ ॥

प्रीतिश्चरणयोर्मातुः¶ प्रवृत्तिः सत्यभाषणे ।
व्रते तपसि चोत्साहो दार्ढ्यमिन्द्रियनिग्रहे ॥ ८ ॥

साम्मुख्यं चिति, वैमुख्यं यस्य वैषयिके सुखे ।
श्रद्धा शास्त्रसमादेशे शीलं सच्चरिते हिते ॥ ६ ॥

—नामनिर्वचनम्—

नासीदाख्यसमस्तस्य महाध्यायिषु कश्चन ।
अर्थानां यो गुरूक्तानां दैव्यां गिरि धरोऽभवत् ॥१०॥
अतस्त्वन्वर्थनामाऽयं जातो गिरिधरो भुवि ।

—यशोवृद्धिः—

यशोनाम्नैव देशेऽसौ ख्यात इत्येव तद्यशः ॥११॥
असामान्यगुणैर्भ्रात्रा सह§नाम्नाऽप्यवर्द्धत ।
एवमस्य यशोराशिर्वर्द्धमानो दिने दिने ॥१२॥

मनोः पाणिप्रपन्नस्य लीलां मत्स्यस्य सोऽहरत् ।
दृष्ट्वेमं सर्वविद्यानां निधिं शङ्कररूपिणः ॥१३॥

शङ्कराचार्यचरणाः पदं विद्यानिधिं ददुः ।
भूसमुद्रव्रतीशोऽयं महाराजेषु पञ्चमः ॥१४॥

गुरोर्गुणगणश्रेणीः सप्तद्वीपातिलङ्घिनीः ।
श्रुत्वा 'महामहोपाध्याय' पदव्या व्यभूषयत् ॥१५॥

---

* गुरोरिमां गौरवीमिति विग्रहः । ॰ गङ्गा ‖ यमुना ¶ तीर्थानां राजा—प्रयागः । ¶ आचार्याः । § पूर्वं नाम यशश्चोभे लघुनी आस्ताम्, ततः क्रमेण यशश्च नाम च भ्रातृभावेन व्यस्तृणीताम् । यथा—पूर्वं यदा यशोऽल्पमासीत्तदा नामापि गिरिधर इति लघ्वेवासीदथ क्रमेण वर्द्धमाने यशसि तत्सहैव गिरिधरशर्मचतुर्वेद उपाध्यायः, ततः पं०गिरिधरशर्मा चतुर्वेदो व्याकरणशास्त्री इति । तदनन्तरम्—श्रीमान् पं०गिरिधरशर्मा चतुर्वेदी व्याकरणाचार्यो न्यायशास्त्री । ततो महामहोपाध्यायः श्रीमान् पं०गिरिधरशर्मा चतुर्वेदो व्याकरणाचार्यो न्यायशास्त्री विद्यानिधिः व्याख्यानवाचस्पतिः विद्यावाचस्पतिरित्येवं यशसा सहैव नामावर्द्धत ।

'विद्यावाचस्पतिः' सोऽयं 'व्याख्यावाचस्पति'स्तथा।
अन्यैरपि पदैर्विद्भिः शोभनैः समभाव्यत ॥१६॥

संस्थाभिः सम्बन्धः—

याभिर्याभिस्तु विद्यादिगुणसम्बन्धयोगतः।
पादौ निपत्य संस्थाभिः पतित्वेन स्वयं वृतः॥१७॥
तासु तास्विह संस्थासु प्राणप्रदतया स्थितः।
सौभाग्यमपुषत्तासां तैस्तैश्चारुगुणैरयम् ॥१८॥

ऋषिकुल-सौभाग्य-वृद्धिः—

सैवमृषिकुलं बालं [१] भगीरथरथानुगा ।
सुताङ्कलालितं पूर्वं वात्सल्येन व्यलोकयत् ॥१९॥
भागीरथीसुताप्यस्मै तं समर्प्य सुतं स्वयम् ।
निश्चिन्तेवाभवल्लोके, योग्ययोगो ह्यचिन्तता ॥२०॥
सोऽयं न्यासधिया तस्य नित्यं सावहितेक्षणः।
तपःशौचसदाचारविद्यादिग्रहणे धियम् ॥२१॥
अयुङ्क्त, स च मेधावी बालक्रीडापराङ्मुखः।
सद्यो जग्राह बालोऽपि हितं हारि गुरोर्वचः॥२२॥
तत्र 'स्वर्णे सुगन्धो' हि मया प्रत्यक्षमीक्षितः।
यादृशः स [२] गुरुस्तस्मादेवा[३]च्छिष्योऽपि तादृशः।२३॥
गुरुशिष्यसमायोगावुभे ते सद्गुणाशयः।
स्पर्धयेवाभ्यवर्द्धन्त परस्परजिगीषया ॥२४॥
स्पर्धाजिगीषे विद्वेषं विना यद्यपि नेष्यिते।
सौहार्देन तु तत्रासीदुभयोस्तुल्ययोगिता ॥२५॥

अहो सत्सङ्गमाहात्म्यं विद्वेषं यत्र ते उभे।
अहासिष्टामपि च्छन्नं धीरैरपि सुदुस्त्यजम् ॥२६॥
एवं मम गुरुस्तत्र[४] ग्राहयन्नमितान् गुणान्।
शिशूनप्यकरोत्तूर्णं वृद्धश्रद्धाधिकारिणः ॥२७॥
उभे सन्ध्ये जपन्तस्ते जुह्वतश्च हुताशनम्।
वसाना अपि कौपीनान्याददानाः कमण्डलून् ॥२८॥
दधानाः पीतवस्त्राणि बिभ्राणाः काष्ठपादुकाः।
भासमानाश्च मौञ्जीभिः पालाशैर्दण्डकैरपि ॥२९॥
अन्तःप्रकाशा ज्ञानेन भ्राजन्तस्तेजसा बहिः।
ब्रह्मचर्यं चरन्तस्ते भूयांसो वामना इव ॥३०॥
विद्यां भिक्षितुमायाता गुरुं मन्येऽन्य[५]दुर्लभाम्।
एवमस्मद्गुरुः साक्षाच्चतुर्वेदनिधिः स्वयम् ॥३१॥
विद्यारत्नानि हस्ताभ्यामुभाभ्यां वितरन्नयम्।
विश्रुतो भारते वर्षे ग्रहीतारः समागमन् ॥३२॥
[६]वङ्गाद् भोजकटं यावदाकश्मीरकुमारिकम्।
तत्र लीलाधरः सोऽपि भगवान् परमेश्वरः ॥३३॥
बटुकेन सहैवासीत् काशीनाथो नरोत्तमः ।
एवं नैकविधै रूपनामभिः प्रेमवल्लभः ॥३४॥
एकोऽपि व्यभवद् द्वेधा तपो भूयस्त्वहेतवे।
नासीत्तन्नगरं यस्मान्नायाता ब्रह्मचारिणः ॥३५॥
मुक्तामालेव सा रेजे गुरोः सद्गुणगुम्फिता।
देशदेशान्तरायातद्विजबालकबड्कका ॥३६॥

१—भगीरथरथानुगा—गङ्गा, तस्याः सुता—हरिद्वारे गङ्गाया निस्सृताऽतिमहती कृत्रिमा सरित् 'नहर' इत्याख्याता, तदङ्कलालितं तत्तीरस्थितमित्यर्थः। २—म०म०श्रीमत्पण्डितगिरिधरशर्मचतुर्वेदः। ३—ऋषिकुलबालः। ४—ऋषिकुले।
५—अन्यस्मिन् पुरुषे दुर्लभां विद्यां गुरुं (श्रीगिरिधरशर्मचतुर्वेदं) भिक्षितमायाता इति योजना।
६—वङ्गदेशात् कच्छकाठ्यावाडप्रदेशान्तम्।

—कलिकातामन्त्रणम्—

एवं विद्यातपःशौचसदाचारगुणान्विताः ।
§सुदूरवासिनो वैश्या धनिनोऽस्य¶ वशंवदाः ॥३७॥
मुक्ताः सत्पात्रसम्पर्काद् भवन्ति पतिता अपि ।
मेघाभिवृष्टपानीयशुक्तिरत्र निदर्शनम् ॥ ३८ ॥
इति ये दानमाहात्म्यं विदुः प्रत्यक्षहेतुभिः ।
स्वस्थानन्यस्तपादाब्जरजःसंस्पर्शनोत्सुकाः ॥३९॥
भक्त्या विनम्रभावेन धनाढ्यास्ते न्यमन्त्रयन् ।
कलिकातां समागन्तुं गुरुभिर्ब्रह्मचारिणः ॥४०॥
भगवानपि विश्वात्मा भक्तभावविभावितः ।
यथाऽऽहूत इवायाति तथेमे ब्रह्मचारिणः ॥ ॥
गुरुभिर्भावितात्मानः कलिकातामथागमन् ।

—स्वागतसमारोहः—

तत्र यावान् समुत्साहो दर्शनान्दोलितात्मनाम् ॥४२॥
सुस्वागतविधौ दृष्टस्तन्न वर्णयितुं क्षमः ।
भ्रा¹ ब्रह्माऽथ शेषो वा साक्षाद् $वाचोऽधिदेवता॥४३॥
धूम्रयानं यदा प्राप्तं कालकाता‡समासने ।
पुष्पवृष्टिस्तदा तत्र पुरुषैर्महती कृता ॥४४॥
यथा न शक्यते भूमिर्नेत्रेणा स्वल्पापि वीक्षितुम् ।
लब्धागमनवृत्तान्तास्तथा पुष्पाण्यवाकिरन्॥४५॥
सनातनस्य धर्मस्य जयोद्घोषेण तन्महत् ।
जनतोदीरितेनासीत्स्थासनं† परिपूरितम् ॥४६॥
धूम्रयानावतीर्णाः स्वैस्तेजोभिर्द्योतितैर्मुखैः ।
पीताम्बरपरिच्छन्ना ज्वालामिव वह्नयः ॥४७॥
परेषामप्रसह्यास्ते व्यराजन् ¶भूदिवौकसः ।
गुरवस्तु तदा सर्वैर्भक्त्या विनतकन्धरैः ॥४८॥
पादयोः पुण्यमिच्छद्भिर्गृहीताः स्वागतेरितैः ।

हावड़ानामनिर्वचनम् ।

तत्र तत्स्वागतं दृष्ट्वा मत्सराविष्टमानसाः ॥४९॥
प्राहुः केचन भाषायां 'हा! बड़ा' स्वागतं त्वहो ।
'हावड़ा' तद्दिनात्प्रस्ये स्थानं तत्ख्यातिमाययौ॥५०॥

नगरप्रवेशः—

धनिनः स्वानुरूपेषु भूषितेषु विशेषतः ।
समानीतेषु यानेषु शनैरारोहयन् बटून् ॥५१॥
गुरुं दृष्ट्वा चतुश्चक्रे षोडशाश्वविभूषिते ।
रथे समाविशच्छ्रद्धा भानुं समाश्रयायिनम् ॥५२॥
महाराजोचितं दृष्ट्वा जना मार्गे बभाषिरे ।
महाराजत्वमाख्याति रूपमस्य च वैभवम् ॥५३॥
चन्दनेनाङ्गलग्नेन पुष्पैः श्रद्धासमर्पितैः ।
लाजाभिरवकीर्णाभिः समाच्छादयन्त ते तदा ॥५४॥
गाढचन्दनपङ्केन घन*कर्पूरवासिना ।
भक्त्या दत्तेन तत्रासीद्भूमिः सञ्जातकर्दमा ॥५५॥
आशीर्भिर्ब्राह्मणानान्ते जयघोषैस्तथा विशाम् ।
वाद्यैर्बहुविधैर्यानैः सह¶ प्राविशन् पुरम्* ॥५६॥

---

§मुम्बईकालकातादिसुदूरदेशवासिनः । ¶अस्यर्षिकुलस्य । $सरस्वती । ‡स्टेशने । †स्टेशनम् । ¶ब्राह्मणाः । *घनकर्पूर-शब्दयोर्यद्यपि पर्यायता, तथाप्यत्र घनशब्देन कर्पूरस्य परिमाणबहुत्वविवक्षितं बोद्धव्यम् ।

---

*काव्यस्यास्य इयानेव भागोऽस्माभिरासादितः । कृतेपि महति प्रयत्ने नाग्रेतनोंशः समुपलब्ध इत्यनेनैव संतुष्येयुः सहृदयाः पाठकमहाभागाः—

—सम्पादकः

# * गुरुकुलशास्त्रार्थः

अध्यापनेन व्याख्यानैरपि धर्मे सनातने ।
चिरात्प्रसुप्तप्रायेऽसौ जागरामुदपादयत् ॥ १ ॥
ख्यातिरध्यापने याऽऽसीत्ततः शतगुणाऽभवत् ।
व्याख्यानरीतिर्वै दुष्ययशोडिण्डिमघोषणा ॥२॥
ते न प्रान्तपुरग्रामा सा न ग्रामटिकाऽभवत् ।
सभा न निष्फला जाता यत्रानेन विना कृता ॥ ३ ॥
एतन्नाम्नैव साफल्यं सभासौभाग्यवर्द्धिना ।
प्रकाशितेनाप्नुवन्ति नैति यास्त्वेप ता अपि ॥ ४ ॥
जन्मना वर्णधर्मे स्वर्यातश्राद्धे तथा पुनः ।
विधवाऽऽवेदने व्याख्याः श्रुताः शास्त्रानुमोदिताः ॥५॥
युक्तियुक्तैर्हेतुमद्भिर्वेदवाक्यानुसारिभिः ।
व्याख्यानैर्घोषिताऽनेन स्वीयधर्मातिशायिता ॥६॥
सनातनस्य धर्मस्य गुणोत्कर्षासहिष्णवः ।
आर्यसामाजिका जाताः शङ्कातङ्कितमानसाः ॥७॥
स्फूर्तिः सनातने धर्मे चतुर्वेदेन या कृता ।
वर्द्धतेऽनुदिनं शुक्ले पक्षे सेन्दौ कला यथा ॥८॥
अथास्मदीयसिद्धान्ताः शास्त्रतर्कहृतश्रियः ।
तारा इव न राजन्ते प्रभाते विगतत्विषः ॥९॥
तस्मात्सर्वैर्मिलित्वायमार्यधर्ममहारथैः ।
न्यायेनान्यायतो वापि जेतव्य इति धार्यताम् ॥१०॥
एवं ते संविदं कृत्वा मुंशीरामादयोऽग्रगाः ।
जन्मना जातिरास्थेया कर्मणा वेति चिन्तने ॥११॥
द्वन्द्वं प्रधानवक्तारं सन्नह्य निजपक्षतः ।
समाह्वयन् कृतात्मानो गुरुं गुरुकुलोत्सवे ॥१२॥
हसत्पङ्कजशोभाभ्यां लोचनाभ्यां पठन्नयम् ।
पत्रं संहृष्टरोमाऽभूदिदमाहातिहर्षितः ॥१३॥
चिरवाञ्छितकालो मे सम्प्राप्तोऽद्य मयेति सः ।
आसीद् गुरुवराणां श्रीशालग्रामसुधां सुहृत् ॥१४॥
सम्प्राप्ताखिलसद्रत्नसाहित्याम्बुधिमन्थनः ।
कण्ठोरवः पाणिनीयेऽरण्ये वेदान्तपारगः ॥ १५ ॥
साङ्ख्ये प्रथमसङ्ख्यातः ख्यातो वैशेषिके नये ।
न्यायेऽतुल्यबलो राजनीतौ स्नातश्चिकित्सिते ॥१६॥
धन्वन्तरिसमो यस्य कीर्तिस्तम्भो विराजते ।
सुधाधवलितोद्यापि धन्वन्तर्यौषधालयः ॥ १७ ॥
श्रीलक्ष्मणपुरे रम्ये गोमतीतीरवर्तिनि ।
विद्वद्भिर्मित्रवर्यैः श्रीशालग्रामादिभिः सह ॥ १८ ॥
कृत्वा सुसम्मतिं तत्र स्वीकारं समपद्यत ।
प्रतिपत्रैस्तदा पत्रैरुत्तरं प्रति चोत्तरैः ॥ १९ ॥
नियमा निरधार्यन्त स्वस्वपक्षसमाञ्जिनः ।
स्थापना केन कर्तव्या केन दातव्यमुत्तरम् ॥२०॥
भाषणे चरमः पक्षः स्वस्य वा स्यात्परस्य वा ।
प्रमाणे किमुपस्थाप्यं किंवा स्यादप्रमाणकम् ॥२१॥
एतद्विनिर्णये भूयान् समयः समजायत ।
सिद्धान्तो न स्थिरीभूतो विकल्पाकुलचेतसोः ॥२२॥
पक्षयोरुभयोस्तत्र परस्परजयैषिणोः ।
कैश्चिद् दृढाग्रहग्रस्तैः शास्त्रार्थे शिथिलायिते ॥२३॥
शास्त्रार्थो न निरोद्धव्यः पाल्यस्तेषां दुराग्रहः ।
गुरुणा समयज्ञेन नयप्रज्ञाप्लुतं वचः ॥ २४ ॥

❀ पूर्वस्यैव कवेरिदं गुरुकुलशास्त्रार्थवर्णनमपि सहृदयानां रञ्जयिष्यंति चेतांसीति प्रकाश्यतेऽत्रेति— —संपादकः

बुद्ध्या निध्याय कर्तव्यमित्युदारमुदीरितम् ।
ततः शास्त्रार्थसन्देशः सर्वत्र समघुष्यत ॥ २५ ॥
दैनिकैः पाक्षिकैः साप्तरात्रिकैर्मासिकैरपि ।
समाचारवहैः पत्रैर्देशे देशे गृहे गृहे ॥ २६ ॥
"इन्द्रः प्रसिद्धो लोकेऽस्मिन् गिरिपक्षपरिच्छिदे ।
अत्रापि गिरिपक्षं वाग्वज्रे णेन्द्रोपवक्ष्यति" ॥२७॥
"पूर्वं गिरिधरादेव त्रायमाणात्तु गोकुलम् ।
इन्द्रस्य मानभङ्गोऽभूदिदानीमपि तत्तथा ॥ २८ ॥
भविष्यति न सन्देह" इत्येवं जनतामुखे ।
आसन् बहुविधा वाचः स्वपक्षपरिवर्द्धिकाः ॥२९ ॥
अथ शास्त्रार्थवेलायां सम्प्राप्तायां सहस्रशः ।
इष्टमित्रैः सहासेदुः श्रोतारः पक्षयोर्द्वयोः ॥३०॥
तिलं धर्तुं न तत्रासीद्भूमिर्जनतयाऽऽकुला ।
श्रोतुं न शक्यते शब्दः स्वेनापि समुदीरितः॥ ३१ ॥
एवमाकुलिते लोके श्रीमान् गिरिधरः सुधीः ।
शालग्रामादिभिर्मित्रैः शिष्यैर्लीलाधरादिभिः ॥३२॥
अवरूढः स्वकायानात्प्रविशन्मण्डपं मुदा ।
अयमेवायमेवेति सभ्यैरुद्ग्रीवमीक्षितः ॥३३॥
अथाध्यतिष्ठद्वेदिं स्वां पूर्वमेवोपकल्पिताम् ।
ग्रन्थैरपेक्षितैः पूर्णां काष्ठपीठोपशोभिताम् ॥३४॥
सभाध्यक्षेण सम्बोध्य पूर्वं सर्वे सभासदः ।
नियमान् ग्राहिताः सम्यग्वक्तारौ तु विशेषतः ।३५।
नावाच्यं केनचिद्वाच्यं नो वै करतलध्वनिः ।
जयोद्घोषो न कर्तव्यः पक्षयोरुभयोरपि ॥३६॥
कार्यो न कलहो मध्यान्नैव कार्ये गतागते ।
शान्त्या सर्वैस्तु श्रोतव्यं कर्तव्यो निर्णयः स्वयम् ।३७।
समुन्मार्यात्मनो दूरमाग्रहग्रहिलां धियम् ।
घण्टिकाशब्दतो ज्ञेयं स्वपर्यायसमापनम् ॥३८॥
भाषणे घण्टिकाशब्दः प्रत्येकं द्विर्भविष्यति ।
पूर्वेण भाषणाकोचः परस्मात्स्वासने स्थितिः ॥३[illegible]॥
एवं सभाधिपतिप्रोक्तेषु प्रवक्तारौ स्वकं स्वकम् ।
सिद्धान्तं समुपस्थाप्य पक्षमाक्षिपतां परम् ॥४०॥
हेत्वाभासतया हेतून् युक्तीश्च प्रतियुक्तिभिः ।
दृष्टान्तान् प्रतिदृष्टान्तैस्तावदूषयतां मिथः ॥४१॥
इन्द्रो गिरिधराक्रान्तः सञ्जात इति श्रोतृषु ।
व्याहरत्सु मृताः सर्वे विषादेन समाजिनः ॥४२॥
मान्यः सामाजिकेष्वासीद् विद्वानार्यमुनिस्तदा ।
सर्वैः सम्प्रार्थितः सोऽयमिन्द्रस्यासीत्सहायकः ॥४३॥
यं यथार्यमुनिर्मन्त्रमिन्द्रकर्णे तदाऽजपत् ।
तमेवेन्द्रोऽवदद्वाग्मित्यासीदिन्द्रसंस्थितिः ॥४४॥
आर्यसामाजिकाः सर्वे विद्वांसो यत्र सङ्गताः ।
धर्मः सनातनस्तत्र विजेतेति जना जगुः ॥४५॥
शास्त्रार्थे तत्र महात्मा गान्ध्यभूल्लोकविश्रुतः ।
दर्शकः प्राह केनापि पृष्टो जयपराजयौ ॥४६॥
आर्यसामाजिकानां हि सञ्जातोऽत्र पराजयः ।
सनातनस्य धर्मस्य विजयोऽत्रेति मे मतम् ॥४७॥
यस्मिन्दिने जिताः सर्वे गुरुणाऽऽर्यसमाजिनः ।
शास्त्रार्थेऽस्य यशोभास्वानुदयं तद्दिनादधात् ॥[illegible]॥
तदा प्रभृति कुत्रापि यत्र शास्त्रार्थभूमिका ।
उत्थिताऽत्थापिता वा स्यात्तत्राधारशिला स्वयम् ॥४९॥

# विद्या और गुरु



(ले० कविशेखर पं०माधवरामशर्मा शैवाल, शास्त्री, बी. ए. प्रोफ़ेसर-महेन्द्र-कॉलेज, पटियाला.)

विद्या अतीत की वाणी है जो दूर से बोलती है और एक ही रूप में बोलती है। गुरु का व्यक्तित्व भूत, वर्तमान और भविष्य की जीवित वाणी है जो अनन्त रूपों में बोलता है। विद्या केवल बोलती है, न सुनती है, न देखती है। गुरु बोलता है, सुनता है और हमें देखता भी है। इस देखने में जादू है। विद्या बोलती है पर हम उसके व्यवहार को नहीं देख सकते। हम गुरु की वाणी को ही नहीं सुनते, उसके व्यवहार को भी देख सकते हैं। इस व्यवहार में ही ज्योति के दर्शन होते हैं। गुरु का जैसा व्यक्तित्व होता है वैसी ही ज्योति के दर्शन होते हैं। मैं समझता हूँ, विद्या इतना प्रभाव नहीं डालती जितना गुरु का व्यक्तित्व। विद्यार्थि-जीवन में हम ऐसी बहुतसी पुस्तकें पढ़ते हैं जो जीवन में बिलकुल भुला दी जाती हैं या धुँधली पड़ जाती हैं। अच्छे गुरु का व्यक्तित्व कभी धुंधला नहीं पड़ता और उसका मूक-प्रभाव जीव को सदा स्फूर्ति देता रहता है। वही एक ज्योति है जो विद्या के शिथिल हो जाने पर भी जीवन को रचना का संदेश देती रहती है। विद्या एक दिव्य ज्योति है परन्तु जिस ढंग से गुरु विद्या से परिचित करता है, वह ढंग ही सबसे अधिक महत्त्व की चीज़ है और वह ढंग व्यक्तित्व से पैदा होता है। जैसा गुरु होता है वैसा ही उसका ढंग होता है। ज्ञान के बँधे बँधाये बोझ को गधे की तरह शिष्य पर धर देने वाले भी गुरु होते हैं। ऊंट की तरह रोते चिल्लाते शिष्य को ज्ञान से लादने वाले भी गुरु होते हैं। केवल अक्षरों के लछमन झूले पर चढ़ाकर ज्ञान की गंगा-पार कराने वाले भी गुरु होते हैं। केवल भय के ज़ोर से कड़वी दवाई की तरह कुछ पुस्तकें शिष्य के गले में उतार देने वाले भी गुरु होते हैं। हंटर के ज़ोर से मनुष्य-जीवन का असली ज्ञान भुलाकर केवल सरकस का घोड़ा बना देने वाले भी गुरु होते हैं। स्वयं कुछ न समझ कर शिष्यों को साथ लेकर अन्धकार में भटकने वाले भी गुरु होते हैं। और बिना ही बोले अपने व्यक्तित्व से ही जीवन को कमल की तरह जगा देने वाले भी गुरु होते हैं।

मुझे बहुत से गुरुओं के चरणों में बैठने का सौभाग्य मिला। उन सब के आगे मेरा सिर झुकता है। पर अमिट प्रभाव मेरे जीवन पर केवल दो तीन गुरुओं का ही पड़ा है। वह प्रभाव ही मेरे जीवन का सार है। यदि मैं कुछ और अधिक पुस्तकें पढ़ जाता तब कुछ नहीं था, कुछ पुस्तकें और कम पढ़ जाता तब भी कुछ नहीं था। यदि उनके व्यक्तित्व का प्रभाव न पड़ता तो मेरे जीवन में या मेरे ज्ञान में मुझे किसी विशेषताका अनुभव न होता। इन गुरुओं के संसर्ग से मैंने जिन विशेषताओं का अनुभव किया, वे विशेषतायें केवल पढ़ाने वालों से मैं जन्म भर में भी न जान सकता। इन गुरुओं के संसर्ग से मैंने

पाई आलोचना शक्ति, कविता, गंभीरस्वदेशप्रेम, बंधनहीन तूफानी मौलिकता, विचित्रता की उपासना, भारतीय-सभ्यता का रहस्य और समुद्र जैसी गंभीर मानसिक मर्यादा। सौभाग्य से मुझे इन विशेषताओं का एक एक विचित्र गुरु मिला।

ऋषिकुल में वेद, वेदांग, साहित्य, इतिहास, व्याकरण, दर्शन क्या कुछ नहीं पढ़ा। परन्तु ज्ञान की उस घोर तपस्या में मेरे जीवन पर सबसे पहला और सबसे अधिक जो प्रभाव पड़ा, वह कुछ व्यक्तियों की विशेषता से जितना संबन्ध रखता है उतना पढ़ाई से नहीं। श्रीपद्मसिंहजी शर्मा-सतसईसंहार लिखकर कभी कभी महाविद्यालय ज्वालापुर से ऋषिकुल आया करते थे, साहित्याचार्यजी की संमति लेने। श्रीपद्मसिंहजी सदा अपने साथ लम्बे और सुदामा की तरह झुके हुए पुरुष को लाया करते थे, जिन्हें सब 'महाप्रभु' कहा करते थे। आप आंखें मींचकर बड़ी ही मस्ती से रसखान की कवितायें सुनाया करते थे। आपके ढंग में काफी आकर्षण था। फिर पद्मसिंहजी सतसई-संहारका हिस्सा सुनाते। इस पर दुनियाँ भर की आलोचनायें चलतीं, अपने पक्ष के लिये खूब खींच तान होती। इस मण्डल के अंतिम प्रमाण थे, कविराज शालग्रामजी शास्त्री साहित्याचार्य। ये बड़े छात्रालय के सामने दरी बिछा कर प्रायः शाम को विचार किया करते थे। इस मण्डल में ये ब्रह्मचारियों को नहीं आने देते थे। मुझे इनकी बातें सुनने का शौक था। मैं इनकी तरफ पीठ करके कहीं दूर अपनी पुस्तक खोलकर अनजानसा बैठा रहता और चरक की तरह इन्हीं की बातें सुनने की कोशिश करता। जो कुछ ये जोरसे बोलते मैं सुनता रहता। कवियों और काव्यों की इस विचित्र चर्चा से मेरे जीवन में एक लगन पैदा हुई, कवि बनने की इस उमंग को सींचा साहित्याचार्यजी के व्यक्तित्व ने। आप पाठ्य-पुस्तक पढ़ाते पढ़ाते उसकी तेज आलोचना शुरू कर देते और न जाने कहाँ कहाँ की विचित्र बातें सुना जाते, जिनका पढ़ाई से कोई संबन्ध भी न था। आपका बात कहने का ढंग विचित्र था और साथ ही आपकी भावभंगी में कलात्मक जीवन था। आपके ढंग में Romance था। आदर और भयसे पुराने आचार्यों के सामने झुके रहने का भय और संकोच उन्होंने ही तोड़ा था। मैंने पहिली बार जाना था कि महाकवियों की और पुराने आचार्यों की कितनी खुली आलोचना की जा सकती है। उन्हीं दिनों में आप साहित्य-दर्पण की हिन्दी टीका लिख रहे थे। उन्होंने ही छुट्टी के दिन होने वाले पहाड़ों के भ्रमणों में बातों बातों में स्वदेश प्रेम की वह गंभीर पीड़ा पैदा की थी जो इतनी ऊंचाई से गिरने वाले को याद करके हुआ करती है। आप पहाड़ के प्रत्येक वृक्ष, पौधे, बेल, फूल, घास और पक्षी आदि के बारे में कुछ न कुछ ज्ञान कराते ही रहते थे। आपका विवेचन अधिकांश वैद्य के भाव से होता था। परन्तु उस इशारे से मेरे हृदय में मार्मिक प्रकृति-प्रेम पैदा हुआ। उनके और श्रीपद्मसिंहजी के आनुषंगिक संसर्ग से मेरे हृदय में तीव्र आलोचना का संकेत पहुंचा। ऋषिकुल में—धर्म और शास्त्रों की उस ठोस दुनियां में—मेरे जीवन में एक कवि पैदा हुआ, जिसमें वैदिक भारत की उच्चता थी और जिसके रक्तों में सोम की ओस का नशा था। उस नशे में देवताओं, गंधर्वों, राक्षसों और यक्षों की जीवित झिलमिलाहट थी जो वेदाचार्यजी की विचित्रता से पैदा हुई थी। साहित्याचार्यजी ने कभी कुछ लिखने को

नहीं कहा था। वे अपनी ही कवितायें और आलोचनायें सुनाते रहते थे। मुझे याद है, जब मैं अपनी पहिली कविता उनको दिखाने गया था, उसे बिना ठीकसर पढ़े ही तिरस्कार के तीव्र-व्यंग्य से उन्होंने कहा था 'इस मूर्खता को छोड़ कर अभी विद्याग्रहण करो'। परन्तु उनका संसर्ग जिस अंकुर को पैदा कर चुका था उसे उखाड़ देना अब उनके हाथ में नहीं रहा था। अब वह अदृश्य रूप से फैलता जा रहा था। सारे शास्त्र और काव्य खतम कर लेने पर भी मेरे जीवन में वह झलक पैदा हो न सकती जो इन महानुभावों के व्यक्तित्व से पैदा हुई थी।

काशी में कितने ही गुरुओं से पढ़ने का सौभाग्य मिला। श्रीशिवकुमारजी के भी दर्शन हुये जिनको शास्त्रों का अवतार माना जाता था। इसी काशी में दो व्यक्तियों ने मेरे जीवन पर अमिट प्रभाव डाला। जब मैं हिन्दू-युनिवर्सिटी में शास्त्राचार्य-श्रेणि का विद्यार्थी था, तब काशी के विद्वानों में आश्चर्य माने जाते थे—श्रीगोस्वामीजी कवि-चक्रवर्ती श्रीदेवीप्रसादजी और हिन्दूयुनिवर्सिटी के प्रिंसिपल रामावतारजी पांडेय साहित्याचार्य, M.A.। गोस्वामीजी भारतेंदु हरिश्चंद्र की तरह कीमती से कीमती इत्र सिरपर उंडेल कर शान से अपने मकान में बैठे रहा करते थे। किसी को पढ़ाना पसंद नहीं करते थे। कहा करते थे, जो अर्थ भारत भरमें किसी को न आता हो मेरे से केवल वही पूछने आओ। मैंने उनको भी पढ़ाने के लिए प्रसन्न कर लिया था। मैं युनिवर्सिटी से ३ मील के करीब उनके घर पढ़ने पहुँचता, शामको। मुझ पर उनकी किसी विशेषता का असर न पड़ सका। आज उनकी शकल भी धुंधली सी याद है। जल्दी ही मैंने उनके जाना छोड़ दिया था। कविचक्र-वर्तीजी एक जीते जागते आश्चर्य (Romance) थे। आपके पिता महातान्त्रिक दुःखभंजनजी का महान् रहस्य आपके जीवन में आ चुका था। दुःखभंजनजी हमारी सदी के वे विलक्षण तान्त्रिक और कवि थे जिन्होंने काशी के राजा चन्द्रशेखर का एक काव्य लिखा था पर फिर्दौसी की तरह राजा से झगड़ा होजाने पर आपने दरबार में ही 'चन्द्रशेखर' शब्द का अर्थ 'गधा' किया था। उनके बारे में भी इतनी विचित्र बातें प्रसिद्ध न थीं जितनी उनके पुत्र कवि-चक्रवर्तीजी के बारे में थीं। अच्छी से अच्छी और बुरी से बुरी, जो लिखी भी नहीं जा सकतीं। कहते हैं, उठती उमर में आप रंडियों के साथ नाचने गाने में मस्त रहते थे या पतंग उड़ाया करते थे। पढ़ने का नाम भी नहीं जानते थे। फिर आप बहुत दिनों तक श्मशानमें अघोरी होकर तन्त्र सिद्ध करते रहे। आप किसी से नहीं पढ़े। एक दिन अचानक सर्वतन्त्र-स्वतन्त्र होने की घोषणा करके आप काशी में पढ़ाने बैठ गये। जिसने जो कुछ पढ़ना चाहा आप वही पढ़ा देते थे। हर समय शराब में मस्त रहना आपकी प्रसिद्धि थी। गोरे, सुन्दर, गोल मुंह, पुष्ट शरीर, छोटी गरदन। कविचक्रवर्तीजी गंगा के किनारे गद्दी लगाकर शाम को पढ़ाया करते थे। नियम कोई न था। जो कोई जो कुछ पढ़ना चाहता आप पढ़ाते रहते। कई तरह की बातें भी होती रहतीं। इतनी विद्वत्ता के साथ वे अपने को गुण्डा भी कहते थे। इसमें शक नहीं, अपने पिता की तरह आप पूरे उद्दण्ड थे। सारी काशी के पण्डितों को कुछ नहीं समझते थे। शाम को उनसे पढ़ने के लिये और उनकी बातें सुनने के लिये मैं

कई मील से आया करता था। एक बार उनके अहंकार का रौद्ररूप देखा और एक बार उनकी विलक्षण बुद्धि का चमत्कार देखा। ध्वन्यालोक पढ़ते हुए मैं कह बैठा- रामावतारजी तो इसका और ही अर्थ करते हैं। यह सुनते ही आपकी आंखें जलने लग गईं। गर्जकर पूछा-तुम रामावतार के शिष्य हो? कुछ डरते हुए मैंने कहा-मैं उनसे भी पढ़ता हूं। फिर तो बड़े क्रोध से बोले-तो तुम मेरी परीक्षा लेने आते हो। सैंकड़ों रामावतार मेरे पेशाब में बह सकते हैं। जाओ, उससे कहो इस बात पर मेरे से शास्त्रार्थ करे। देखो, ठीक इन्हीं शब्दों में कहना। उसका उत्तर लाये बिना मेरे यहाँ मत आना। बोलो-तुम इसी तरह कहोगे? वे बड़े जोर से दीवार पर मुक्कियाँ मारने लगे, और कहने लगे, अबे! हम गुण्डे भी हैं, यदि हमसे पढ़ना है तो उसको ठीक हमारे ही शब्दों में कहना। मैं दो गुरुओं के बीच में आगया। मैंने संकोच से कहा—आप आज्ञा देते हैं तो मैं जरूर कह दूँगा।

जब मैंने यह घटना अपने प्रिंसिपल को सुनाई तो उन्होंने लापरवाही से हँस कर कहा—कविजी से कहो, वे स्थान और दिन निश्चित करलें,मैं उनके दर्शनों को उत्सुक हूं। काशी के ये दोनों विलक्षण और उद्दण्ड विद्वान् शायद पहले कभी नहीं मिले थे। काशी में इनके शास्त्रार्थ की धूम मच गई और शानदार शास्त्रार्थ हुआ। काशी के सब पण्डित कविजी के साथ थे और रामावतारजी अकेले थे। काशीवाले सदा उनके विरोधी थे क्योंकि वे काशी के न थे, नास्तिक थे और एक बार सारी काशी को शास्त्रार्थ में हिला चुके थे। काशीपक्ष से 'लक्ष्यतावच्छेदक' की कहीं लग जाता। रामावतारजी एक बार भी लक्ष्यतावच्छेदक नहीं मानते थे। शास्त्रि वे सुबोधसंस्कृत में एक एक पक्ष काटते जाते थे। ऐसे शास्त्रार्थों से कुछ घंटों में जीत-हार का क्या निर्णय होता है। मैं इस पर निर्णय देने योग्य भी नहीं हूं। इतना ही कह सकता हूं काशीपक्ष की लक्ष्यतावच्छेदक की आंधी देखने लायक थी और रामावतारजी की हिमालय जैसी अचलता और युक्तियां देखने लायक थीं। रामावतारजी ने वह ठोस काम किया है जो सदियों को प्रभावित करता रहेगा।

एक बार शामको मैं कविजी के घर ही पढ़ने चला गया। कवि दुमंजिले बरांडे में अकेले बैठे कुछ लिखित पुस्तकें पढ़ रहे थे। तरंग में बोले—तुमने हमारे पिताजी की कविता पढ़ी है? अभी तक नहीं—मैंने कहा। आप उनका एक लिखित संस्कृत-काव्य सुनाने लगे। आध घंटे के बाद बोले-देखो, ये उनके हस्ताक्षर हैं। मैंने लेकर पढ़ा सर्ग के अंत में लिखा था लवपुरनिवासिनीभुजंगो''''भंजनो महाकविः। आपने अपने आधे नाम को अत्यन्त अश्लील बना कर लिख रखा था। अंधेरा हो चला था। प्रकाश कराने का आपको ध्यान न था। अंधेरे में हम दोनों छाया-मूर्तियों की तरह बैठे थे। आप अचानक बोले—तुम मेरी बुद्धि का अंत देखना चाहते हो? मैंने कहा-बुरे भाव से नहीं, आश्चर्य से तो देखना चाहता हूँ। उन्होंने कहा-अच्छी बात, तुम या तुम्हारे कोई और गुरु, एक शब्द के कितने अर्थ कर सकते हैं? मैंने बड़ा जोर लगाकर कहा-एक शब्द के शायद सौ अर्थ हो सकते हों। बोले-अच्छा, तुम छोटे से छोटा कोई संस्कृत शब्द कहो, हम सूर्य निकलने

-तक उसके अर्थ करेंगे। मैं अंधेरे में कुछ न देख सका. वे क्रोध कर रहे थे या सच कह रहे थे। फिर जोर से बोले—चुप क्यों है, कोई शब्द बोल। मैंने अपनी समझ में सबसे सादा शब्द कहा 'राम'। उन्होंने तुरन्त कहा—तुम काशी की व्याकरण-मध्यमा पास कर चुके हो। लो, सावधान होकर सुनो। वे राम शब्द के अर्थ करते जा रहे थे और मैं मन ही मन गिनता जा रहा था। जब वे सौ तक पहुँच गये, मैं गिनना भूल गया। वे प्रवाह से बोलते जा रहे थे और उनका आवेश बढ़ता जा रहा था। मैं व्याकरण, साहित्य और कितने ही कोष पढ़ चुका था। कहाँ कहाँ के प्रत्यय धातु लगाकर वे बोल रहे थे। कैसे कैसे अर्थ कर रहे थे। पड़दे की ओट से पढ़ा रहे शेष की तरह वे अंधकार में बोल रहे थे। मुझे एक नशा सा हो रहा था क्योंकि मैं जानता था कि वे सिद्ध तान्त्रिक हैं। अब मैं इतना ही समझ रहा था कि वे निरर्थक नहीं बोल रहे थे। कुछ देर के बाद मैंने सोचा मुझे इनका अंत देखने की धृष्टता नहीं करनी चाहिये, और पैर पकड़ कर मैंने उनको रोका। उसी अंधकार में उन्होंने मुझ से पूछा था—क्या तुम तन्त्र-दीक्षा लेना चाहते हो?

प्रिंसिपल रामावतार उस समय काशी में सबसे बड़े आश्चर्य थे। आपकी हरएक परीक्षा में प्रथम पास होने की प्रसिद्धि थी। आपने सरकारी छात्रवृत्ति इसलिये न ली थी कि आप कॉलेज में जाकर विलायती प्रोफेसरों के शिष्य नहीं होना चाहते थे। अंग्रेजी आपने स्वयं पढ़ी थी। वेद पढ़ाने के लिये जब आपको जर्मनी बुलाया गया तब आपने इतने बड़े लोभ के समय उत्तर दिया था—मैं अपना ज्ञान अपने गरीब देश को ही देना चाहता हूँ, रुपये के लोभ से बाहर नहीं बेचना चाहता। एक शाम अकेला मैं आपकी कोठी पर कुछ पढ़ रहा था। काशी-नरेश की बग्घी आपको लेने आई थी, आपने कहा था—अभी मैं पढ़ा रहा हूँ, फिर कभी आना।

आपका अध्ययन इतना अथाह था कि आपको 'विद्याराक्षस' कहा जाता था। क्योंकि आप विद्या को राक्षस की तरह खा गये थे। किसी भी विषय का प्रोफेसर छुट्टी जाता तो उसी की क्लास को आप पढ़ाने जा बैठते। आप उन आचार्यों में से हैं जो ऋषि माने जाते हैं। आपने नास्तिक-मत का उद्धार करके 'परमार्थ-दर्शन' नामका सातवाँ दर्शनशास्त्र लिखा था और काशी के कंपनीबाग में झंडा लगाकर उसका खण्डन सुनने के लिये बैठे थे। आपका यह आह्वान भारत के सब विद्वानों के लिये था। महीना भर कैसे २ विद्वानों से आपका शास्त्रार्थ चला! अंत में काशी के विद्वानों के अनुरोध से, अजेय-काशी की प्रतिष्ठा रखने के लिये, आपके गुरु श्रीगंगाधर शास्त्रीजी आपको वहाँ से उठाकर लाये थे। हमारे युग की यह एक ऐतिहासिक घटना थी कि बिखरे हुए चार्वाक-मतने 'परमार्थ-दर्शन' के रूप में सुव्यवस्थित होकर, रामावतारजी के रूप में झंडा गाड़ कर भारत के षड्दर्शनों को ललकारा था और हमारी सदीने उसे परास्त न करके सुलह से उसका झंडा हटाया था। आपका 'मुद्गरदूतम्' संस्कृत कविता में कितना महान् विद्रोह है। आप हँस कर कहा करते थे। आज के संस्कृत-कवियों को समयानुसार कविता करनी चाहिये। जब हम लोग कहते-वर्तमान चीजों पर कविता सजती ही नहीं। इस पर मुस्करा कर आपने अपना एक श्लोक सुनाया था जो कुछ इस तरह था—

द्विचक्रिकारोहणजातखेदस्वेदोद्गमः । वेग.वकीर्ण.केशा

दुपहर की गर्मी में साइकल पर जाती एक विलायती लड़की का वर्णन था जो बुरी तरह सजता था। साइकल चलाने की थकावट से पसीने के बिंदु उभर आये थे और वेग की तेजी से उसके सुनहरी बाल बिखरे हुए थे'''। आपकी क्लास में बैठकर क्या कुछ नहीं पढ़ा जाता था और क्या कुछ नहीं सुना जाता था। देखने में आप विद्वान् की अपेक्षा सुडौल पहलवान् लगते थे। फूले हुए नहीं, मोटे हड्डों के दृढ़ और बड़े ऊँचे व्यक्ति, 'वपुःप्रकर्षेण जनातिगेन' का सा असर डालने वाले। बड़ी बड़ी आँखें थीं, पर दिन रात पढ़ने से दूर तक साफ नहीं देख सकते थे। आप ऐनक लगाने के विरुद्ध थे और यही सलाह दिया करते थे। महाकवि गेटे को भी ऐनक से कितनी चिढ़ थी ? वह ऐनक वाले से बात करना भी पसन्द नहीं करता था। आपको वैसी कोई चिढ़ नहीं थी, प्रकृति के भरोसे रहना आपका सिद्धांत था। आप शायद ४० की उमर पार कर चुके थे। इतना ज्ञान, इतनी बड़ी नौकरी, इतना अधिकार और ऐसा उच्छृङ्खल स्वभाव मैंने किसी विद्वान् में नहीं देखा। आप कभी कभी हैट रखते थे। प्रायः नंगे सिर रहते थे। बहुत छोटे छोटे बिना किसी फैशन के, रूखे, काले बाल। जरासी लम्बाई पर भारी सिर। चराईदार बहुत-चौड़ा ललाट। सदा तनीदार सूती बंडी पहनते थे। छोटीसी सादी धोती जिसमें से घुटनों तक से लेकर आपकी मजबूत टांगें दीखती रहती थीं। पैरों में बिना ऊपर की एड़ी के काले सलीपर। कंधे पर कभी गडदी और छोटी भी डाल लेते थे। कान तक ऊँची बांस की मोटी लाठी सदा हाथ में रखते थे। यों सजकर अपनी कोठी से पैदल ही आप पढ़ाने चलते और आप हिन्दू यूनिवर्सिटी में प्रिंसिपल थे ! जिनको मालवीयजी ने खुशामद करके बिहार सरकार से उधार मांगा था। आपको देखकर—'दण्डी धारयेद् यष्टिसोदकं च कमण्डलुम्' वाली मनु की उक्ति याद आजाती थी। रास्ते भर में हर प्रसंगपर ठहरते और सबकी सब तरह की बातों का उत्तर देते हुए पहुंचते। आप पुस्तकालय में बैठकर पढ़ाया करते थे। हम आपसे शास्त्राचार्य श्रेणि में पढ़ते थे। आपके यहाँ खास कुछ पढ़ाने का नियम नहीं था; जो भी बात चल पड़े या जो भी पुस्तक सामने आपड़े वही पढ़ा दी जाती थी। आप गम्भीर से गम्भीर बात को हास्य में लेते थे और नाराज होना जानते ही न थे। एक दिन एक झल्लाया सा किसी श्रेणी का छात्र कई पत्रे लिये हमारी क्लास में आकर बोला—मैं आप को कुछ सुनाना चाहता हूं। आपने तुरन्त कहा—सुनाओ। उसने तो एक नाटक रच दिया। उसने जोरशोर से कई पत्रों के प्रस्ताव में आप को कोसना शुरू किया—आपने मुझे फेल करवा दिया, मेरी छात्रवृत्ति बन्द करवा दी, मैं अब आप के नाम से गङ्गा में डूब मरुंगा, आप को मुझे फेल करने में रहम न आया, आप ब्राह्मण नहीं, आप तो कसाई हैं.........। हम सोच रहे थे। ऐसे पागल को बाहर निकाल देना चाहिये। आपने शान्ति से सब सुना, फिर मुस्करा कर बोले— तुम्हें यूनिवर्सिटी ने फेल किया है, मैंने नहीं। तुम शान्ति से पढ़ो और भोजन मेरे यहाँ कर जाया करो। एक बार विलायत का कोई बड़ा साहब आया। मालवीयजी ने आप का परिचय कराया। आप उसी तरह अधनंगे से बैठे थे। साहब ने कहा— आप इतने बड़े विद्वान हैं! पर भेसभूसे तो ठीक नहीं है। आपने उस साहब को एक

लंबी फटकार दी थी। आपने कहा था—मैं देखता हूँ, तुम्हारे मैनर्स ठीक नहीं। गरम देश के इस जलते हुए दुपहर में तुमने अपने को कपड़ों में किस तरह क़ैद किया है। तुम कितने व्याकुल हो अपनी बनावट में। मैं प्रकृति की हवा में कितना शान्त हूँ। यदि तुम्हें मेरे देश का व्यवहार पसंद नहीं तो मैं तुम्हारे व्यवहार को उससे भी बुरा समझता हूँ।

एकबार आपने मालवीयजी को कहा था-मालवीयजी, ऐसे ऐसे मकान बनाकर गरीब-देश का रुपया ईंटों में क्यों लगा रहे हैं, सीधे राह ज्ञान और कला-कौशल पर क्यों नहीं खरचते ?

आप पूरी तरह प्रकृतिवादी थे। पढ़ाते समय प्रायः कहा करते थे, तिरस्कारसे नहीं, उत्साहित करने की सहानुभूति से—तुम मच्छर जाति के मनुष्य क्या पढ़ोगे ? तुम्हारे में कोई खाने वाला ही नहीं दीखता। देखो, जब हम पढ़ते थे, आठ आने रोज की भाजी खाजाते थे, जब कि इतनी सस्ती थी। भाजी से बुद्धि बढ़ती है। तुम शायद पान खाते हो, सोडा पीते हो, हम भोजन के बाद एक छटांक चने चबाया करते थे। वे जो कुछ कहा करते थे उसकी सचाई मुझे अधिक मालूम थी। मैं पढ़ने या बातें सुनने प्रायः उनकी कोठी जाया करता था। आप काठ की चौड़ी चौकी पर या बिना बिछी खाट पर बैठ कर, एक धोती लगाये, लिखा करते थे। जीवन के पिछले दिनों में तो आप बिलकुल नग्न बैठ कर लिखा करते थे। कारण बताते थे कि उनकी विचार समाधि में कपड़ों के स्पर्श-ज्ञान का विघ्न न पड़े। कैसी विचित्र लगन के पुरुष थे। दिन-रात पढ़ते लिखते थे। अकेले आप के लिये घीमें तले सेर सावतमाह और तीन सेर के करीब दही आया करता था। आप लिखते लिखते खाजाया करते थे। भोजन में पता नहीं वे क्या कुछ खाते होंगे। उनकी बातों से प्रभावित होकर मैं भी बहुत दिनों तक रोटी छोड़कर कोरी भाजी ही खाता रहा। कितनी बार शाम को वे बाजार से आते मिलते, बगल में लाठी, बायें हाथ पर मिठाई से भरी मिट्टी की हांडी और दायें हाथ से सरे-आम खाते हुए। काशी के हलवाई मिठाई खुले मुंह की हाँडी में देते थे। मिलते ही कहते, अरे शरमा कर दूर से क्यों निकलते हो, लो, तुम भी लो। कैसी ताजी है ! जूठी नहीं, देखो, हम ऐसे खारहे हैं। कहकर वे पूरा पेड़ा दूर से ही मुंह में फेंक लेते। रास्ते में खाना कोई बुरी बात है ? पहले घर पहुंचने की आशा में रहो, फिर बैठ कर खाने में समय खराब करो और दुष्ट बबुआ से छीन झपट करो। हम अपना समय भी बचा रहे हैं और कसरत भी कर रहे हैं। देखो मैं स्वयंपाकी हूँ, अपनी चीज आप खरीद कर खाता हूं, यों समझाकर वे कुछ न कुछ देकर वहीं खाने को बाधित करते। उन्होंने मुझे प्रातः ४ बजे पढ़ने या बातें करने का समय दिया हुआ था। जाडे में ठिठुरता मरता जब मैं कोठी पहुंचता, वे एक मन पक्के से बड़ी गागर को रस्सा बांधकर आप ही खींच कर न्हाते होते थे। उनकी कोठी में ही कूआ था। कितना ठंडा पानी जाड़ों का और पत्थरों का शहर काशी ! एक दो तीन क्या, वे दसों गागरें सिर पर उंड़ेलते रहते। फिर वहीं सूती बंडी पहन कर, लठ्ठ लेकर घूमने निकल पड़ते। हम अंधेरे में मीलों बाहर जाते। मैं 'व्यक्तिविवेक' पढ़ा करता था। पुस्तक मेरी बगल में होती, वे एक प्रसंग जबानी समझाते जाते। सूर्य निकलने पर कहीं बैठते। मैं पुस्तक पढ़ता और वे दुबारा समझा देते।

इस यात्रा में कितनी बातें होती और कैसी घटनायें होती, कौन कल्पना कर सकता है ! मुझे क्या क्या पूछने का शौक था और उन्हें बोलने का कितना शौक था। मैदान में निकल कर आप मुझे दूर दूर चलने को सावधान कर देते थे। तब आप अपनी मोटी लाठी को चक्र में घुमाते जाते और मुझे समझाते जाते, समझाना भी क्या था, 'व्यक्तिविवेक' या इससे भी अधिक कोई उपद्रव का कोई प्रश्न। कहते हैं याज्ञवल्क्यजी ने सूर्य के साथ चलते चलते सूर्य से विद्या पढ़ी थी। पढ़ता पर मैं तलवार की धारपर ही था। चलते चलते यदि मैं गलती से उस सुदर्शन चक्र की सीमा में आजाता या लाठी कभी उनके हाथ से निकल जाती तो मेरी काशी में तुरन्त मुक्ति हो जाती। एक दिन सूर्य निकलने ही वाला था, काफी दूर तक दीखता था। हमारे सामने से एक हाथी निकल गया। आपने सरलता से पूछा यह कोई बहुत बड़ा पहलवान् था जो इतना झूमता जारहा था ? मैंने सरलता से कहा—यह हाथी था। कुछ गम्भीरता से मुस्कराते आपने कहा—अरे ! इन पुस्तकों ने मुझे वैसी दिव्यदृष्टि दे दी है ! इतनी बड़ी बड़ी आंखों से आप इतनी दूर नहीं देख सकते थे फिर भी ऐनक के विरुद्ध थे।

हर बात पर आपकी आलोचनात्मक दृष्टि रहती थी, और हर बात को हास्य रूप में लेते थे। पर आप के हास्य में विचित्र गहराई रहती थी। उन दिनों आप संस्कृत का विश्वकोष बना रहे थे। बच्चों की तरह ललचाकर कहा करते-ऐसा शब्द ले आओ जो हमारे कोष में न हो और इनाम ले लो। मैं बहुत दौड़ धूप करता, सदा हार जाता। एक बार तो जीत ही गया। उनके कोष में 'टक' शब्द नहीं मिला था। ज्ञान में वे कितने महान थे और स्वभाव में कैसे सरल और हँसमुख थे। आपके संसर्ग से मैंने पाश्चात्य-सभ्यता का यथार्थ उपहास सीखा, और भारतीय विद्या तथा सभ्यता का अदम्य अहंकार सीखा।

शरीर भी कितना प्रभाव डालता है। आजतक केवल तीन ही विद्वानों के शरीरों ने मुझपर प्रभाव डाला है। रामावतारजी, महाकवि टैगोर, महामहोपाध्याय-प्रिंसिपल-श्रीगिरिधरशर्माजी चतुर्वेदी, व्याकरणाचार्य। इनके केवल शरीर को देखकर ही एक विचित्र संदेश मिलता है। तान्त्रिकाचार्य कविचक्रवर्ती और नास्तिकाचार्य रामावतारजी से जो स्वतन्त्रता सीख रहा था वह बहुत खतरनाक हो जाती यदि गुरुजी ( श्रीगिरिधरशर्मा चतुर्वेदी ) की गंभीरता का प्रभाव उसको समुद्र की तरह सीमित न रखता। काशी जाकर ऋषिकुल से सीखे संध्यापूजनादि मैं छोड़ चुका था। हमारे छात्रालय में कोई भी रसोइया न था क्यों कि सब छात्रों को किसी भी जाति का रसोइया स्वीकार न था। यह थी हमारे ब्राह्मण-धर्म की हालत। प्रात: एक मील चलकर कॉलेज पहुंचते, दुपहर की गर्मी में जलते जलते छात्रावास में पहुँचकर अपनी अपनी रसोई चढ़ाते फिर चौका बर्तन करते। पत्थरों का शहर काशी। मेरे सब साथी इस काम में अभ्यस्त लगते थे। मैं अकेला पंजाबी आफत में पड़ गया। समय बचाने के लिए मैंने सब बर्तन मिट्टी के रख लिये। उन्हें धोकर रख देता था। आग जलाने और पकाने में भी समय लगता था। उन दिनों काशी भर में रोटी की एक भी दुकान न थी। विश्वनाथ के पीछे कहीं एक कौंचरी बेचती थी। वह भी कच्ची नहीं, पक्की। तवे पर तेल का केवल एक छींटा दे कर। पूरी वैष्णव थी। माँस नहीं बनाती थी। छोटे मोटे शूद्र

**पं० श्रीकन्हैयालालशर्मा न्यायाचार्यः**-बाल्यादेव जयपुरपाठशालायामधिगतविद्यः प्राप्तन्यायाचार्यपदोऽनेकशास्त्रनिष्णाततर्कशास्त्रस्य प्रधानाध्यापको जयपुरकालेजे, वर्तमाने धर्म-व्यवस्थापिकायाः पण्डितपरिषदः प्रधानोऽध्यापनकार्याद् विश्रामवृत्ति लभते। अयं हि—पदे पदे स्वागतं चतुर्वेदमहाभागेषु दर्शयति।

**श्रीमान् पं० केदारनाथशर्मा सिद्धान्तपञ्चाननमहोदयो जयपुरनिवासी**-एष महाभागः स्वपितुर्महामहोपाध्याय पं० दुर्गाप्रसादमहोदयादेव[ सर्वप्रथमकाव्यमालासम्पादकात्] समधिगतकाव्यकलानैपुण्यः सम्प्रति जयपुरराजकीये सुप्रसिद्धे ज्योतिषयन्त्रालये प्रधानपण्डितो गणितशास्त्रस्य भारतप्रसिद्धो विद्वान्, शास्त्रान्तरेऽपि कृताधिकारोऽत्यन्तं रसिकोऽखिलभारतीयास्वनेकासु संस्थासु लब्धादरो बाल्यादेव चतुर्वेदमहाभागेषु कृतसौहार्दोऽद्यापि तद्वद् दृश्यते।

**स्वर्गीयः—श्रीमान् पण्डितश्चन्द्रधरशर्मा गुलेरीमहोदयः**—सर्वत्र भारते सुप्रसिद्धो विद्वान्, यस्य विद्वत्तामगाधां दृष्ट्वा हिन्दूविश्वविद्यालये तात्कालिकैरधिकारिभिः संस्कृतशिक्षां वैधानिकीं कर्तुं सर्वप्रथमं ओरियण्टल-फैकल्टी-डीन्-पदे साग्रहमावाहितः। अस्य महाभागस्यैव विधानकौशलेनैवाद्यापि तत्र संस्कृतकालेजे नियमा यथेच्छं न परावर्तयितुं शक्यन्ते, सुसम्बद्धश्च तत्कार्यं निर्वहति। एष महाभागः स्वयं बी. ए. पदवीमुपगतोपि संस्कृतभाषणं संस्कृतलेखनञ्च भारतमानमर्य्यादारक्षायै परमावश्यके मन्यते स्म। अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य सभापत्याय श्रीमज्जगद्गुरुभारतीकृष्णातीर्थसदृशान् एव विदुषो हृदयेनाभिनन्दति स्मेति तत्कालीनैस्तन्मन्त्रिभिः सह प्रवृत्ते पत्रव्यवहारे स्पष्टमुपलब्धुं शक्यते। एतस्य महाभागस्याध्यक्षत्व एव भारतप्रसिद्धस्य जयपुरज्योतिषयन्त्रालयस्य पुनरुद्धारो भूदित्यपि द्रष्टुं शक्यते। ईदृशं मित्रं प्राप्य कस्य चेत आनन्दभृतं न स्यात्। ईदृशं सुयोग्यं मित्रमवाप्य नियतमेवाहृष्यच्चतुर्वेदमहाभागः। मन्ये एष महाभागो यदि चिरमजीविष्यद् अवश्यं संस्कृतपण्डितानां संस्कृतभाषायाश्च महानुपकारोऽभविष्यत। किन्तु नैतत्सह्यमासीद् विधातुरित्यहो भारतभारत्योर्दौर्भाग्यम्।

**श्रीमान् स्व० पं० सोमदेवशर्मा गुलेरी महोदयः**—जयपुरपाठशालायां सहाधीती चतुर्वेदमहाभागस्य तत्रैवाध्यापकपदं स्वयोग्यतया प्रापेति स्वज्येष्ठस्य पं० चन्द्रधरस्य गतिङ्गतः।

**श्रीमान् स्व० पं० रमाकान्तओझामहाभागो जयपुरनिवासी**—श्रीमतां राजगुरूणां पण्डितश्रीचन्द्रदत्ताचार्याणामनुजो बाल्यादेव सौहार्देन चतुर्वेदमहाभागानामन्तरङ्गं मित्रम्। जयपुरराजकीयशिक्षाविभागे लब्धवृत्तिरपि सरलस्वभावः सम्प्रति नामशेषतां गतः।

**स्व० श्रीमान् पं० विजयचन्द्रचतुर्वेदी वेदाचार्यः**—जयपुरसंस्कृतकालेजेऽधिगतविद्यो तत्रैव वेदाध्यापकपदम्प्राप्तः स्वविद्याप्रभावाल्लोकविश्रुते वाराणसेयगवर्नमेण्टसंस्कृतकालेजे वेदाध्यापकपदमुपगतो मध्ये वयस्येव स्वर्गं गतः।

**श्रीमान् ठाकुरदत्तशास्त्री मुलतानी 'वैद्यरत्नम्' लाहौर**-एष महाभागो जयपुरसंस्कृतकालेजे प्राप्तसौहार्दश्चतुर्वेदमहाभागेषु, प्रतिदिनं प्रवर्धते यशसेति प्रमोदस्थानम्। एतच्चास्य विद्योत्कर्षे लोकसम्माने च प्रबलं प्रमाणम्, यत् एतदागमनमन्वेवाऽऽयुर्वेदचिकित्सापद्धतिर्लवपुरेऽप्रामाण्यमलभत, न पुनस्ततः पूर्वम्।

पञ्चनदीयायुर्वेदसम्मेलनस्य साभापत्येनायमायुर्वेदं प्राख्यापयन्। अभूतपूर्वोयं चिकित्सको लङ्काप्रदेशीयान्तराग्रियपरिषदि चैष भारतीयरतिनिधिगौरवमलभत।

भिषक्चूडामणिः श्रीहरिप्रसादमहोदयः—एष सहारनपुरवास्तव्यः सहारनपुरनिवासप्रसङ्गे मित्रतां गतः।

पण्डितप्रवरो वंशीधरमहोदयः- ज्वालापुरीयविद्यालयाध्यक्षोऽयं हरिद्वारनिवासकाले मित्रतामुपगतः।

पण्डितप्रवरः श्रीशालग्रामशास्त्रिसाहित्याचार्यमहोदयः—संस्कृतसाहित्यस्याभूतपूर्वः समीक्षकोऽपि भिषक्तमेषु निरतिशयमादरमलभत। महाभाग एष संस्कृतपण्डितेषु नवीनां पद्धतिं प्राचीचरद् यन् पारतन्त्र्यमनुभूय ऋषिकुलब्रह्मचर्याश्रमहरिद्वारस्य प्रधानाध्यापकत्वे, गङ्गातीर एव, दृढव्रतोयं पारतन्त्र्याय जलाञ्जलिमुदसृजन्। 'क्रियासिद्धिः सत्वे भवति महतां नोपकरणे' इति क्रान्तदर्शिनो वाक्यं परिपालयन्, लक्ष्मणपुरे मृत्युञ्जयमौषधालयं व्यवास्थापयद्, यच्छरणमत्यद्याप्यनेकेषामशरणानां महारोगिणाम्। आयुर्वेदपद्धतेः परिपन्थिनां मुखमर्दनायायुर्वेदमहत्त्वनामानं निबन्धं न्यबध्नात्, यदुत्तरमद्ययावदपि न प्रतीच्यपद्धतेरुपासकाः प्रदातुं प्रभवन्ति। साहित्यदर्पणस्य विमलां नाम्नीं टीकां विरच्य प्राचीनटीकाकृतां मतिभ्रममप्यपानुदत्। दर्शने सुवेषः प्रसन्नवदनस्ताम्रलोचनोऽद्वैते कृतमतिरद्वितीयप्रभावोऽद्वैतमेवानुभवति सम्प्रति।

स्व० महामहोपाध्यायः श्रीहरनारायणशास्त्रिमहाभागः-देहलीविश्वविद्यालयस्य संस्कृतविभागे प्रधानाध्यापको धर्मस्य महामहोपदेशकः, अखिलभारतवर्षीयसंस्कृतसाहित्यसम्मेलनस्य प्रधानाध्यक्षतां स्वगुणैरासादयन्, वपुषा, वचसा, मनसा, तत्र तत्र शासकेषु तथा प्रभावमुदपादयद्येष महोदयो यथा न विशुद्धः संस्कृतभाषापण्डितः समर्थिष्यते।

स्वर्गीय-महामहोपाध्यायः- श्री त०गणपतिशास्त्रिमहोदयः—एष महाभागो लेखकेनादृष्टशरीरो विश्रुतकीर्तिरनेकेषां प्रसिद्धानामप्रसिद्धानां न्यायवेदान्तादिग्रन्थानां दुर्लभानां लम्भनेन सुसम्पादनेन संस्कृतसाहित्य बहूपाकरोन्, शिल्पतन्त्रादिशास्त्राणान्त्वपूर्वमेव प्रकाशनमेतद्द्वाराऽभवदिति बहुशास्त्रदर्शिनो विदन्त्येव। अ० भा० संस्कृतसाहित्यसम्मेलनस्य सभापतिपदमपि महाविदुषाऽनेन व्यभूष्यत।

स्व० म. म. पण्डितप्रवरो गणेशदत्तशास्त्री-प्रसिद्धतमो विद्वान् पञ्चनदेषु अद्वैतपक्षपाती संस्कृतसरस्वतीप्रवाहयिताऽनेकेषां विदुषां व्युत्पादको पञ्चनदविश्वविद्यालये। शिक्षया, दीक्षया, परीक्षयाऽप्रतिमूर्तिर्वार्द्धक्ये श्रीसनातनधर्मकालेजलवपुरे संस्कृताध्यापकः कीर्त्यावशिष्यते। एतत्सम्बन्धादेव तत्पुत्रः प्राच्यप्रतीच्यशिक्षापद्धत्योः प्रकाण्डपण्डितः श्रीमान् डा० प्रभुदत्तशास्त्रिमहोदयः आई. ई. एस्. विद्यासागरः वङ्गीयराजशाही-गवर्नमेण्टकालेजस्य भू० पू० प्रधानाचार्यश्चतुर्वेदमहाभागानां मित्रेष्वन्यतमतामुपगतः।

स्वर्गीयः श्रीलक्ष्मणशास्त्रिद्राविड़महोदयः-परित्यक्तमहामहोपाध्यायपदः समस्तभारते प्रसिद्धतमो विद्वान् न्यायवेदान्तादिशास्त्रेषु पारदर्शी। काश्यां हिन्दूकालेजे संस्कृतभाषाध्यापको भूत्वा कलिकातायां दर्शनशास्त्राध्यापकपदममण्डयत्। वार्द्धक्ये सयूथ्यैर्वियूथ्यैश्च वृश्च्यमानं धर्मतरुमवेक्ष्य द्रुतचेतास्तद्र-

स्थार्थं वर्णाश्रमस्वराज्यसङ्घे समवेत्य विद्वद्भिस्तदुपायत्वेन प्रतिनगरं धर्ममुपादिशत् । वैशिष्ट्यं त्वस्य महाभागस्य जटान्तं वेदाभ्यासः, श्रौतानां यागानां पारदर्शित्वञ्च । सन्ति पण्डितास्तर्केषु शब्देषु वेदघोषेष्वपि । विरलः पुनर्नव्यन्यायादिषु निष्णातोऽपि श्रौतयागानां अनुष्ठाता वर्तमाने समये, यस्मिन् कर्मकाण्डस्य स्वाध्यायं तदनुष्ठानं तद्विस्त्वेन स्व-ख्यापनमपि स्वस्मिन् शिवत्रमिव मन्यन्ते शब्द-तर्क-वेदान्तादिवादनिपुणाः । एष महाभागो रुग्णः सन् कालिकातायां डाक्तरैः पररक्तप्रवेशेन स्वास्थ्यायोक्तः पररक्तप्रवेशे दोषं परिपश्यन् दौःस्थ्यं वरं मन्यमानः ततः प्रातनिवृत्तः काश्यां देहमुदसृजत् ।

स्व०-परमहंसपरिव्राजकमूर्धन्यः श्रीस्वामी दयानन्दमहाभागः ( काशीस्थः ) प्राच्यप्रतीच्यदृग्भ्यां सनातनधर्मरहस्यवित् तत्प्रचारकोऽपूर्वो वाग्मी सर्वस्य विद्वद्वर्गस्य बुद्धेर्गोचरो विशेषतो धर्मरसिकस्य । सोऽयं महाभागः शतशो धर्मप्रचारकान् महानिबन्धान् न्यभान्त्सीत्, पाश्चात्त्यविज्ञानदृशा च तत्र धर्मतत्त्वं सनातनधर्मिणामाचारेषु समस्थापयत् । वर्णाश्रमेतरेऽपि पाश्चात्त्यसभ्यतोपासकाश्च तद्भाषणैः प्राभाव्यन्त । यावज्जीवमेष महात्मा धर्ममेवासेवत, त्यक्तैषणोऽपि, भारतधर्ममहामण्डल-वर्णाश्रमस्वराज्यसङ्घाभ्याम् । धर्ममेव प्रचारयितुमाङ्लविश्वविद्यालयेषु कान्हपुरे सनातनधर्मकालेजमाङ्लविद्यालयं महता परिश्रमेण कीर्तन्यगुणः स्वर्गः स्वामी महाभागः समुदघाटयत् । श्रीचतुर्वेदमहाभागैः सह सहजामेवास्य मैत्रीं प्रतिव्यवहारं दृष्ट्वा योगिनां धार्मिकेषु भावेषु मुदितां नाम भावनां प्रत्यक्षमपश्यम् ।

स्व०श्रीरघुवरदयालुशास्त्री एम. ए. एम. ओ. एल. महोदयः-भूतपूर्वः सनातनधर्मकालेजाध्यक्षः लौकिके व्यवहारे, भाषणे, दर्शने स्मितमुखः, पञ्चनदविश्वविद्यालये शासकोत्तमेषु च महतीं प्रतिष्ठां स्वश्रमेणोदपादयत्, चतुर्वेदमहानुभावैः सह मैत्रीं निरन्तरं प्रावर्धयत् । अस्यैव महाशयस्य कालेजप्रधानाध्यक्षतायां सम्राजा चतुर्वेदमहोदयाय महान् उपाधिसम्मानः समर्पितोऽभवत् । एतत्समय एव श्रीस्वर्गीयपं० गणेशदत्तशास्त्रिमहाभागोऽप्युपाधिना सममान्यत ।

**श्री-कृष्णमाचार्यशास्त्री मद्रदेशीयः**--प्रसिद्धतमः काव्यरसिकानाम् । महाभागेनानेन रघुविमर्शनाम्ना रघुवंशे महाकाव्ये विस्तृता टीकाऽक्रियत, यत्र महाविदुषो मल्लिनाथस्य कृतिः स्थले स्थले सम्यग् विवेचिता दृश्यते । मेघसंदेशादयः स्वतन्त्राः कृतयोऽनेकशोऽस्य विद्वत्प्रवरस्य द्रष्टुं शक्यन्ते ।

**स्व०महामहोपाध्यायः श्रीहाथीभाईशास्त्रिमहोदयाय:**--जामनगरराज्यप्रधानपण्डितः सर्वशास्त्रपारदर्शी परम आस्तिकोऽखिलभारतवर्षीयसंस्कृतसाहित्यसम्मेलनं स्वसभापत्येनान्वगृह्णत् ।

**पं० श्रीदेवनायकाचार्यमहोदयः काशीस्थः**--प्रसिद्धतमो धर्मव्याख्याता भूतपूर्वः प्रचारको वर्णाश्रमस्वराज्यसङ्घस्य ।

**पं०श्रीरमापतिमिश्रः मुम्बापुरीस्थः**-प्रसिद्धतमः प्राचीनपद्धत्या शास्त्राभ्यासिनां तेजपालसंस्कृतकालेजे प्रधानपण्डितः, अखिलभारतवर्षीयवर्णाश्रमस्वराज्यसङ्घस्यान्यतमः कार्यकर्ता । धर्मसम्बन्धिनीषु संस्थासु चतुर्वेदमहाभागानां सहकारीति मैत्रीनिमित्तम् ।

**स्वर्गीयः श्रीमान् पं० रामचन्द्रशास्त्री** [ पर्वतीयः ] मुम्बईनिवासी । ज्योतिर्वित्सु लब्धप्रतिष्ठो मुम्बय्यां धनिकसमाजेऽपि लब्धादरः स्वप्रभावेण प्रतिष्ठापितसंस्कृतमहाविद्यालयः, मुम्बय्यां गतेऽब्दे समा-

योजितश्रीमद्भागवतमहानुष्ठानो धार्मिकाग्रणीः स्वविद्याप्रभावेणैवाधिगतप्रचुरधन आढ्यतमः सम्प्रति कैलासवाससुखमनुभवति ।

**रायबहादुरोपाधिः पण्डितव्रजनाथगोस्वामी** आगरास्थकारोनेशनप्रेसप्रतिष्ठापकस्तत्रत्यजनतासु सुप्रसिद्धो धार्मिको व्यवसायी गण्यते । स्वभावमधुरोऽयं महाभागस्सनातनधर्मानुयायी सन्ननेकासु संस्थासु प्रमुखतां लभते । भारतसम्राजा रायबहादुरोपाधिना सम्मानितस्यास्य चतुर्वेदमहाभागे प्रीतिरपि प्रत्यहं वर्धते ।

**स्व० श्रीमान् रामनारायणकविराजमहोदयः** सरयूपारीणब्राह्मणः प्रसिद्धो भिषक् सुखेन प्रसवायौषधमाविष्कुर्वन् महतीं ख्यातिमुपगतः ।

**स्व० श्रीमान् पं० नृसिंहदेवशास्त्री दर्शनाचार्यः**- पञ्जाम्बुविश्वविद्यालयीयप्राच्यविद्याविभागे दर्शनशास्त्राध्यापकोऽनेकेषां दार्शनिकालङ्कारिकग्रन्थानां सुप्रसिद्धो व्याख्याता । मुक्तावल्या अतिसरलतया भावार्थव्याख्यया दर्शनशास्त्रमुपकुर्वन् संस्कृतसाहित्यं चिन्तयन्नेव विधातुर्निलयङ्गतः ।

**श्रीस्वामी आत्मस्वरूपमहोदयः**-गुरुमण्डलाश्रमहरिद्वारे सुप्रसिद्धस्तपस्वी स्वगुरुभ्यः श्रीबालरामोदासीनस्वामिमहाभागेभ्योऽधिगतविद्य आत्मानं चिन्तयन्नेव संसारमत्यजत् ।

**श्रीमान् प्रद्युम्नझा महोदयः**—स्व० विद्यावाचस्पति-पं० श्रीमधुसूदनझामहोदयानां सुपुत्रो द्वारवङ्गाधीश्वरस्यान्तरङ्गं मित्रमाखेटकादिषु, नृपान्तरस्यापि विश्वासपात्रम्, सम्प्रति जयपुराधीश्वरं समाश्रितः पूज्यपादस्य स्वर्गस्य स्वपितुः सम्बन्धादत्यन्तं स्नेहपात्रं चतुर्वेदमहाभागानाम् ।

**श्रीमान् रामभद्र ओझामहोदयः**-एम. ए. एल. एल. बी. पदवीकोऽलवरराज्ये शासनसमितौ शिक्षासचिवो भूत्वा राज्याधिकारेषु समुत्कृष्टं सम्मानमलभत । ततश्च विरामवृत्ति लभतेऽधुना ।

**श्रीमान् स्व० घूटरझामहोदयः**-- वेदान्तसाहित्याचार्यः, तर्कव्याकरणादितीर्थः, साहित्यवेदान्ते च प्रकृष्टो विद्वान । वाग्मी प्रसन्नवदनो वैदुष्येण च समस्तेऽपि भारते विख्यातः, काव्यकलासु निपुणः, पूर्वमृषिकुलब्रह्मचर्याश्रमस्य प्रधानाध्यापकः पश्चाच्च लक्ष्मणपुरविश्वविद्यालये प्राच्यविभागे साहित्यदर्शनाध्यापकस्ततो महाराजसंस्कृतकालेजे जयपुरेऽध्यक्षतां गतः श्रीचतुर्वेदमहोदयानां सुहृत्स्वन्यतम आसीत् । अस्य हि यथाध्यापने तथैव लेखने भाषणेऽपि पूर्णासीत् प्रौढिः ।

**पं० श्रीपुरुषोत्तमशर्मा चतुर्वेदी**—अजमेरस्थमेयोकालेजे धर्मशिक्षकः संस्कृताध्यापकश्च शुद्धाद्वैतसंप्रदायस्य रहस्यवित्, प्रवक्ता, प्रसिद्धस्य रसगङ्गाधरस्य ( नव्यन्यायभाषाजीवनस्य ) हिन्दीभाषायां यथावद् गद्यपद्यव्याख्याता, बाल्यादेव महामहोपाध्यायपादानामनुग्रहभाजनम् । यद्यप्येष महाभागः साहित्याचार्यपरीक्षां दित्सु रसगङ्गाधरग्रन्थग्रन्थीन् श्रीचतुर्वेदमहोदयेभ्य एव सम्यगभ्यस्यत, तथापि मित्रत्वेन गृह्णमाणस्य सर्वशास्त्ररसिकस्यास्य विदुषो मित्रत्वमेव ।



## सजातीयेषु मित्राणि—

श्रीमान् रायबहादुरोपाधिकः पं०राधेलाल-चतुर्वेदी ( Coprativ) समितौ राजेष्टतरश्चतुर्वेद-( माथुर ) समाजे सर्वतोऽधिको धनी, डेपटीकल-क्टरपदात् प्राप्तावकाशः, रीवांराज्ये साचिव्यमुपगतः; कालिकातानगर्य्यां प्रसारितव्यवहारश्चतुर्वेदमहाभागे-षु कूटस्थां मैत्रीं प्रकाशयति।

श्रीमान् पं०द्वारिकाप्रसादचतुर्वेदी—( प्रयागस्थः ) हिन्दीसाहित्यसम्मेलनस्य प्राणभूतः प्रख्यातो विष्णुभक्तो धर्मिकाप्रणोल्लेखकश्चतुर्वेदमहा-भागस्य सम्मानेषु स्वसम्मानमेव मन्यते।

स्व० श्रीमान् पं० जगन्नाथप्रसादचतुर्वेदी-प्रसिद्धो हिन्दीसाहित्यसेवी, अखिलभारतवर्षीय-हिन्दीसाहित्यसम्मेलनस्य लवपुरीयाधिवेशने सभापति-पदं सगौरवं व्यभूषयत्। श्रीमहामहोपाध्यायमहोदयेषु निगूढां मैत्रीमुपागमत् साजात्यसम्बन्धात्, साहित्य-सेवित्वसम्बन्धाच्च।

श्रीमान् स्व०मुन्नालालचौबे सूबेदारमहोदयो ग्वालियरराज्ये सुप्रतिष्ठितो माथुरचतुर्वेदेषु तज्जातीय-सम्मेलनेषु प्रमुखोऽधिकारी माथुरचतुर्वेदसम्मेलनेषु सर्वाग्रणीत्वेन महामहोपाध्यायपादानश्लाघत।

श्रीविश्वेश्वरदयालुश्चतुर्वेदी— आगराप्रान्ते देशसमाजसेवाकार्येषु लब्धप्रतिष्ठो राजकीयपुरुषै-राननेरोमजिस्ट्रेटपदं ससम्मानं अर्पितोऽपि तत्प्रान्ते राष्ट्रसेवाकार्येषु दत्तचित्त एवेति चित्रम्।

मथुरापुर्य्यां-रायसाहबपदेन सम्मानितः श्रीबनवारीलालमहोदयः—जानपदिकशासनसमिति-सचिवः ( डिस्ट्रिक्ट बोर्ड सेक्रेटरी ) एवं

श्रीमान् गिरधारीलालवाकीलकमहोदयश्च चतु-र्वेदमहाभागे विशिष्टां प्रीतिं सम्मानञ्च दर्शयतः।

## उपदेशकेषु मित्राणि—

श्रीमान् पण्डितप्रवरः कविरत्नमखिलानन्द-शर्मा सुप्रसिद्धः सनातनधर्मोपदेष्टा सर्वत्र भारते। कण्ठेन कोकिलः, दर्शने मधुरः प्रकृत्या हास्यमूर्तिः, प्रतिपक्षमानमर्दने सिंहविक्रमः, काव्यकलासु स्वच्छन्द-वाक्प्रवाहः, सर्वशास्त्रनिष्णातोऽनेकासां धर्मोपदेशि-नीनां कृतीनां कर्ता, जन्मतः प्रभृत्येव कृतदैवीवागधि-कारश्चतुर्वेदमहाभागानामत्यन्तं मित्रम्।

श्रीमान् स्वर्गतः पण्डितयदुकुलभूषणः शास्त्री मुल्ताननिवासी पञ्चाम्बुप्रदेशे प्रसिद्धो धर्मोप-देष्टा वैदिकम्मन्यानामभिमानोपनोदनेऽत्यन्तं पटुस्तत एव प्राप्तप्रतिष्ठश्चित्तेन यदुकुलभूषणचरितमेव निरन्तरं ध्यायँस्तत्रैव व्यलीयत।

श्रीमान् स्व०पण्डितकालूरामः शास्त्री-कानपुरा-मरौधानिवासी वैदिकमानिनां मतिभ्रमापनुत्तये कृत-भूरिपरिश्रमः प्राचुर्येण प्राप्ततत्पुरस्कारो धर्मसम्बन्धिनो भाषासाहित्यस्य प्रवर्धयिता, हास्यप्रियः शास्त्रार्थकला-निपुणोऽस्मिन्नेवाब्दे भौतिकं देहमुदसृजत्।

स्वर्गीयः श्रीमान् पं० ज्वालाप्रसादमिश्रः-विद्यावारिधिः मुरादाबादनिवासी सुप्रसिद्धो धर्मोपदेष्टा बहूनां संस्कृतग्रन्थानां वेदानां, स्मृतीनां, पुराणानां नि-बन्धग्रन्थानां रामायणादिभाषानिबन्धानां च लोकोप-काराय हिन्दीभाषायामनुवादकर्ता हिन्दीसाहित्यसे-विष्वपि सर्वप्रथमगणनार्हः सम्प्रति कीर्तिशेषश्चतुर्वेद-महाभागमधार्मिकतमोनिराकरणकृतधियमुद्यन्तमवलो-क्यात्यन्तमहृष्यत्।

श्रीमान् स्व० पं० दुर्गादत्तपन्तमहोदयः रायबहादुरोपाधिरानरेरीमजिस्ट्रेट (Hon.Majistrate) पदमधिष्ठितो राणीखेतकुमाऊँग्रामनिवासी सनातनधर्मप्रचारे लब्धसम्मानो भारतसम्राजोऽधिगतपदाधिकारः स्वभावमधुरः कृशशरीरः प्रायो धर्मसभासु दत्तवहुसमयः, ऋषिकुलब्रह्मचर्याश्रमवासकालादेव चतुर्वेदमहाभागेऽर्पितसौहार्दः सम्प्रति कैलासवासमनुभवति।

श्रीमान् पं० नन्दकिशोरवाणीभूषणमहाभागः उन्नावनिवासी—सनातनधर्मप्रचारे लब्धकीर्तिर्लिखितानेकभाषानिबन्धोऽत्यन्तवृद्धोऽद्यापि सनातनधर्मप्रचारे बद्धकटिर्दृश्यते।

श्रीमान् पं० गणेशदत्तशास्त्री वाजपेयी-ग्वालियरराज्ये लब्धप्रतिष्ठोऽत्यन्तप्राचीनो धर्मोपदेशकः, आकृत्या दर्शनीयमूर्त्तिः, सुवेषो गौरवर्णः, जनतासूपदेशपाटवमभ्यस्यन् कृतवृत्तोद्देश्यकोपदेशोऽनुकरणीयोपदेशकौशलोऽद्यापि युवेव दृश्यते।

स्वर्गीयः—पण्डितः श्रीदीनदयालुशर्मा व्याख्यानवाचस्पतिमहाभागः–सुप्रसिद्धो धर्मोपदेष्टा, यस्य कीर्तिमद्याप्यखिलभारतीयाः सनातनधर्मसभाः प्रत्युत्सवं गायन्ति, गास्यन्त्यपि। अनुकरणीयचरितस्यास्य महाभागस्योजस्विन्या वाण्येव प्रतिपक्षिणां हृदयानि व्यदीर्यन्तेव। अमुष्यैव प्रबलप्रयत्नेन वैदिकाभिमानिनां प्रचारमवरोद्धुं लवपुरे देहल्याञ्च सनातनधर्मकालेजशिक्षणालयः, सनातनधर्मप्रचारकं "हिन्दूसंसार"नामकं पत्रञ्च क्रमशः समुदभवताम्। एष महाभागश्चतुर्वेदमहाभागेभ्योऽत्यन्तं वृद्धोऽपि, श्रीगिरिधरशर्माणं (श्रीगुरुं) परपक्षमानमर्द्दने श्रुत्या, स्मृत्या, युक्त्या धृतगिरमवधार्यावधीरितान्योपदेशश्रवणः कृतकृत्याः सनातनधर्मसभा मन्यते स्मेति सौहार्दं दर्शयन् मित्रेषु गणितः।

श्रीमान् पं० बालमुकुन्दमहोपदेशकमहाभागः जोकालियांनिवासी सनातनधर्मप्रचारेऽत्यन्तं निपुणः सनातनधर्मसभासु प्रचुरं यशोऽलभत।

श्रीमान् पं० राधेश्यामशर्मा कथावाचकः—वरेलीनिवासी, ऋषिकुलवासमसमयादेव प्राप्तसुहृद्भावश्चतुर्वेदमहोदयेषु, सुप्रसिद्धः समस्तभारते कथया धर्मप्रचारेऽस्ति। बह्वीषु रङ्गस्थलीषु कथावाचकमहाभागरचिताः कृतयो नाट्यन्ते, प्रशस्यन्ते च दर्शकैस्तत्र तत्र। श्रीरामायणन्त्वनेन महाभागेन स्वच्छन्दं सरलया भाषया सर्वसाधारणोपयोगि कृतमिति विदन्त्येव विद्वांसः। सुप्रसिद्धं श्रवणकुमारनाटकन्तु नाट्यजानमेतद्रचितं कियतीं प्रसिद्धिमलभतेति सहृदया एव तत्र प्रमाणम्। अस्य नाटकस्य भूमिकाभागः श्रीचतुर्वेदमहाभागैरेव लिखितोऽस्ति। येनेदं नाटकं प्रतिष्ठायाश्चरमां सीमानमप्राप्रुवदद्यापि बहूनि संस्करणानि लभते लप्स्यते च।

श्रीमान् पण्डितः केदारनाथगौड़महोदयः-प्रसिद्धहरिद्वारस्थर्षिकुलब्रह्मचर्याश्रमस्य प्रधानमन्त्री सन्नपि प्रेतविद्यायां ( परलोकविद्यायां ) सुनिपुणः प्रेतविद्याविषयकस्य कस्यचन पत्रस्य सम्पादकोऽप्यभूत्। अस्य महाभागस्य ऋषिकुलसम्बन्धादेव श्रीचतुर्वेदमहोदयैः सह मैत्र्यमभवत्। अद्यत्वेऽपि सा तथैव प्रवर्धते।

बहवः खलु पुण्यात्मनां मित्राणि सम्भवन्ति न तानि सर्वाणि नामनिर्देशं संख्यातुं शक्यन्ते। तत्क्षम्यतां लेखकः पाठकमहाभागैरिति शम्।

# महामहोपाध्याय—श्रीगिरिधरशर्म—चतुर्वेदमहाभागस्य

# शिष्यपरिचयः

( लेखकः—म० म० पं० श्रीपरमेश्वरानन्दशास्त्री, सनातनधर्म-संस्कृतकालेजप्रधानाध्यापकः, लाहौर )

प्रकटिताशेषदेशविश्रुतविबुधरत्नमालायां जयनगरराजकीयसंस्कृतपाठशालायां बृहस्पतिमिव यमभिनन्दनीयचरितमधीतिबोधाचरणैस्त्रिदशाः सकला अपि विद्याः समुपतिष्ठन्ते स्म; अथ यस्तासामपेक्षाबुद्धिसिद्धमपि चतुर्दशत्वं प्रचारणेनापि साधयितुकामो नैकानन्तेवासिनस्ताः समध्यजीगपत्; सभासु वादिव्रातवेतण्डचण्डकण्ठीरवस्य, पाठशालासु सारस्वतामृतवितरणेन मर्त्यानप्यमृतान्धसः सम्पादयतः, धर्मप्रवचनेषु नवनवाभियुक्तिभिर्धार्मिकजनशङ्कापङ्कप्रक्षालनेन प्राप्तदिगन्तविश्रान्तयशसस्तस्य श्रीचतुर्वेदमहाभागस्य प्रेष्ठान् लब्धप्रतिष्ठान् अत्रभवच्चरणारविन्दयोर्बद्धनिष्ठान् कतिपयानन्तेवासिन इह गणयामः।

यद्यप्यध्ययनकालेऽपि काँश्चित स्वसतीर्थ्यानप्यत्रभवन्तश्चतुर्वेदमहोदयाः समपीपठन्, तथापि संप्राप्ताखिलविद्यानामेतेषां स्वपाठशालात्यागमनु सर्वतः प्रथमं मथुरावास्तव्यः पण्ड्योपनामा श्रीमानोङ्कारेश्वरशर्मा अत्रभवत्पादमूलमुपसद्य व्याकरणशास्त्रमध्यगीष्ट। यश्च पश्चाद् वटोदर-( बड़ोदा ) राज्ये सम्मानार्हं राजपुरोहितपदमलभत। अथाप्रतिमभवद्वैदुषीसमाकृष्टहृदयैर्गुणगृह्यैः कैश्चन जैनश्रेष्ठिभिः प्रार्थिता अत्रभवन्तः सहारनपुरेऽखिलभारतीयजैनमहाविद्यालये प्रधानाध्यापकपदमलमकुर्वन्। तत्रत्यानां भवदन्तेवासिनां मुख्यतमः श्रीमक्खनलालजैनो लशकर-( ग्वालियर ) राज्यान्तर्गते मुरैनानाम्नि ग्रामे जैनमहाविद्यालये तदध्यक्षपदमध्यासीन इदानीं जैनेषु प्रधानपण्डितः परिगण्यते।

अथ केनचित् कारणेन तस्मिन् जैनमहाविद्यालये तत्संचालकैः सहारनपुरात् काशीं प्रति प्रतिष्ठापयिषिते स्पृहणीयचरिताः श्रीचतुर्वेदमहोदयास्तैः सविनयमनुरुध्यमाना अपि तात्कालिकपरिस्थितिपरवन्तः काशीं गन्तुमप्रभवन्तः, ततो नातिदूरप्रवाहिनीं पुण्यसलिलां भगवतीं भागीरथीमवगाह्य गृहान् प्रतियियासवो हरिद्वारमागमन्। तत्र च विद्याध्ययनस्य प्राचीनामार्षपद्धतिमुज्जीवयितुकामैः कैश्चिन्महापुरुषैश्चिरप्रतिष्ठापितस्य हरिद्वाराद् दक्षिणस्यां दिशि ज्वालापुरमुपतिष्ठमानमध्वानमर्धमतिक्रम्य वामेन विराजितस्य तदात्वे घनारण्यप्रायं सुरसरित्कुल्याकूलमुपाश्रितस्य ऋषिकुलब्रह्मचर्याश्रमस्य कैश्चिच्छ्रीमदानन्दनारायणादिभिर्मुख्यतमैः कार्यकर्तृभिश्चिराद् विद्यया तपसा चरितेन च तदाश्रमानुरूपमाचार्यमन्विच्छद्भिः कर्णाकर्णिगोचरीकृतभवदुपगमैर्भवत्पादमूलमुपसृतैः साग्रहमभ्यर्थिता भवन्तस्तदाचार्यकं ग्रहीतुम्। अथ भवन्तोऽपि प्रकृत्या दाक्षिण्यवन्तस्तं भद्रजनप्रणयं विहन्तुमपारयन्तः स्ववैदुष्योपायनमिव तैः सबहुमानमुपह्रियमाणमिदमभ्युपयन्ति स्म। भवादृशं तपोनिष्ठमाचारवतां श्रेष्ठं विद्वद्गोष्ठीगरिष्ठमाचार्यमासाद्य स आश्रमः परमामुन्नतिमभ्यपद्यत। किं वर्णयामस्तस्य तदानीन्तनस्य ऋषिकुलब्रह्मचर्याश्रमस्य—

यत्राभवल्लसदनन्तसुधांशुकान्त-
वैदुष्यकान्तिनिचयः प्रचयो बुधानाम्।
मेधाविसाङ्गनिगमाध्ययनानुधावि--
सद्वर्णिनश्च शतशः समुखं न्यवात्सुः॥

तत्र ऋषिकुलब्रह्मचर्याश्रमे श्रीचतुर्वेदमहाभागाः प्रायो नव वर्षाण्यतिष्ठन्। तत्रत्येषु भवच्छिष्येष्वेकतमो व्याख्यानभास्करः **श्रीलीलाधरशास्त्री** नैकानि वर्षाणि बीकानेरराज्यान्तर्गतचूरूनगरे ब्रह्मचर्याश्रमाध्यक्षपदमलङ्कृत्य ततः पञ्चनदप्रान्ते धर्मप्रचारेण, लायलपुरस्थ ऋषिकुलब्रह्मचर्याश्रमे प्रधानाचार्यपदाधिष्ठानेन च महतीं प्रतिष्ठां प्राप्नोत्। एतद्गुणगणावर्जितहृदया हृदयालवः केचिद्धरिद्वारस्थर्षिकुलब्रह्मचर्याश्रमाधिकारिणः पितुर्दाये पुत्रमिव धर्माधिकारिण इममेव महाभागमुक्ताश्रमाचार्यपदेऽध्यासीनमकुर्वन्। परं हन्त! अकारणदारुणो दुर्विधिरसावसूयन्निव तद्गुणेभ्यः, ईर्ष्यन्निव ऋषिकुलोन्नतये, निर्घृणस्तमेनमश्रान्तकर्मपरायणम्, निर्व्याजधर्माचरणं प्रकृत्या मितमधुरभाषिणं महात्मानं नैकविधापत्परम्परापरीतं विधायाकाण्ड एव स्वकवलमकरोत्।

साहित्याचार्यव्याकरणतीर्थोपाधिविद्यानिधिः पन्तोपाभिधः **श्रीप्रेमवल्लभशर्मा शास्त्र्यपि** ऋषिकुलीयभवच्छिष्येष्वन्यतमो वर्तते। एष हि महाभागोऽध्ययनकाल एव स्वरचिताभिर्ललिताभिः कविताभिराश्रमवासिषु स्वभविष्णुतां द्योतयति स्म। अयमिदानीं मुरादाबादनगरे राजकीयकालेजे प्रधानसंस्कृतपण्डितपदमध्यास्ते। आसां पङ्क्तीनां लेखकोपि [ **श्रीपरमेश्वरानन्दशास्त्री** ] तदानीमेव ब्रह्मचर्याश्रमे श्रीचतुर्वेदचरणारविन्दयोश्चञ्चरीकतां प्राप्य तत एव विद्यारसं कंचन स्वदते स्म।

इदानीं मयराष्ट्र—( मेरठ ) नगरे संस्कृतप्रोफेसरपदमुपभुञ्जानः श्रीप्रेमवल्लभपन्तानुजः श्रीकृष्णानन्दः पन्तः साहित्याचार्यः एम० ए०, शास्त्री: लवपुरस्थे पञ्चनद-विश्वविद्यालयीयप्राच्यमहाविद्यालये प्रधानपण्डितपदमध्यासीनः प्राप्तपरप्रतिष्ठो जनतामनोरञ्जनजिज्ञासुजनहृद्ग्रन्थि-विमोचनव्याख्याननिपुणो व्याकरणतीर्थाद्यनेकपरीक्षोत्तीर्णः **श्रीजगदीशभट्टश्च** भवच्छिष्यतासौभाग्यशालिनौ। पटियालाराज्ये महेन्द्रकालेजपण्डितः परमरसिकः संस्कृताङ्गलभाषयोस्तुल्याधिकारः साहित्यसमालोचनचतुर आङ्गलभाषामयानामनेकेषां काव्यानां रचयिता शैवालापपदः **श्रीमाधवशर्मशास्त्री** बी० ए०; बहावलपुर-कालेजस्थः **श्रीमदनसिंहवर्मा**, थलास्युपाह्वौ पण्डित**श्रीमाधवनन्दहरिरामशर्माणौ**; पण्डित-**काशीनाथ-वंशीधर-कमलनयन**—प्रभृतयश्चानेके हरिद्वारमावसतां भवतां शिष्यतां स्वीकृत्य कृतकृत्यतामात्मनोऽमन्यन्त मन्यन्ते च। बीकानेरराज्ये डूँगरकालेजे महोपाध्यायो दार्शनिकमूर्धन्यो व्याख्यानकलाधरः **श्रीविद्याधरशर्मा शास्त्री** एम० ए. एम्. ओ. एल्. महोदयोपि भवच्छिष्यतयात्मानं धन्यं मन्यते। एवं जोधपुर-राजकीय-संस्कृत-कालेजे प्रधानाध्यापकः **श्रीतारादत्तपन्त** एम. ए. साहित्याचार्यः, बटोदरावास्तव्यस्तत्रत्यहाईस्कूले प्रधानपण्डितो विद्याभास्करः **श्रीमणिशंकरः** शर्मोपाध्यायोपि चर्षिकुलेऽध्यापयतां श्रीगुरुचरणानामन्तेवासित्वमवाप्य स्वात्मनोः कृतकृत्यत्वमूरीकुरुतः।

अथ चतुर्वेदमहाभागाः स्वस्य हरिद्वारावासजनकादृष्टसमाप्तेर्वा ऋषिकुलब्रह्मचर्याश्रमस्य सौभाग्यभोगकालध्वंसाद् वा पञ्चनदभूमेर्भाग्योदयाद् वा कुतश्चिदपरिहरणीयाद्धेतोः ऋषिकुलभुवं विरहय्य

जयपुरमभिप्रस्थिताः। ऋषिकुलाधिवासकाल एव प्रखरपाण्डित्यसनाथितानुपमवाग्मिताप्रभूतं भवद्-यशःसौरभं दिग्विदिक्षु प्रसृतमभूत्। सकृदास्वादित-भवद्व्याख्यानरसा कापि सनातनधर्मसभा न भवन्तमृते वार्षिकं स्वमुत्सवं सफलममन्यत। एतादृशीषु सभासु लवपुरीय-सनातनधर्मसभाप्येकतमा। पञ्चनदप्रान्ते धर्मप्रचारमभिलषद्भिः, जनताहृदयेष्वनुदिनं ह्रसन्त्या आर्यसंस्कृतेर्महिमानं स्थेमानमानिनीषुभिरेतस्याः सदस्यैरितश्चतुर्विंशतेर्वर्षेभ्यः प्राक् श्रीगुरुचरणानाम् ऋषिकुलत्यागमनु प्रायो वर्षद्वयान्तरेण सनातनधर्मसंस्कृतकालेजं नाम किमपि संस्थानं प्रतिष्ठापितम्, यदद्यापि दीवान-कृष्णकिशोर-सनातन-धर्म-संस्कृतकालेजनाम्ना प्रचरति। तत्र च तैः श्रीगुरुचरणा एव प्रधानाध्यक्षपदमलङ्कर्तुं साग्रहं प्रार्थ्यन्त, स्वीकृतं च तैः।

प्रायोऽर्धषष्ठं हायनपञ्चकं तत्पदप्रतिष्ठितैर्भवद्भिः शताधिका अन्तेवासिनः शास्त्रिपरीक्षां समुत्तारिताः। एषु फ़ीरोज़पुरनगरे कस्मिंश्चिदाङ्ग्लमहाविद्यालये महोपाध्यायपदमधितिष्ठन् श्रीवृन्दावनशास्त्री एम० ए०; तदनुजः श्रीबदरीदत्तशास्त्री एम० ए, गढवालवास्तव्यौ श्रीवनमालिदत्त-शालग्रामशास्त्रिणौ, कनखलस्थ-बस्तीरामपाठशालाध्यापकः श्रीशक्तिधरः शास्त्री, हजारामण्डलान्तर्गतहरिपुरनगर श्रीकृष्णभक्तसंस्कृतविद्यालये, सीकरराज्यान्तर्गत-रामगढीय-हरनन्दरायसंस्कृतकालेजे च प्रधानाध्यापकपदे कृताध्यापनः, पुराणेषु कृतान्वेषणः, स्वकृते पुराणविषयके महाप्रबन्धे गोयनकोपाह्वश्रीगौरीशङ्करश्रेष्ठिप्रतिष्ठापित-विद्वत्परिषदः प्राप्तपारितोषिकः, लवपुरस्थे मूलचन्द्रखैरातीराम-सनातनधर्मसंस्कृतविद्यापीठे पुराण-धर्मशास्त्राध्यापकः श्रीमान् चन्द्रभानुशर्मा शास्त्री, तदनुजो वाग्मिवरः श्रीमानात्मचन्द्रशर्मा शास्त्री, मूलतागाभिजन-लवपुरस्थ-भारतविश्रुत-कविराज-ठाकुर-दत्तशास्त्रिवैद्यवराणामात्मज आयुर्वेदोपाध्यायः श्रीभानुदत्तो वैद्यः, इन्द्रप्रस्थे करौलबागवीथ्यां कृतवसतिरिवस्थ्युपाह्वः श्रीसिद्धगोपालशर्मा शास्त्री पटियालावास्तव्य आयुर्वेदाचार्य इदानीं कराँचीनगरे कस्मिंश्चित् प्रतिष्ठितौषधालये प्रधानवैद्यो विट्ठलोपाख्यः श्रीदेवसिंहवर्मशास्त्री, धौलपुरराज्यवसतिः स्वर्गीयः श्रीदुर्गाप्रसादशास्त्री, पिण्डीमही-गवर्नमेंट-हाईस्कूलाध्यापकः श्रीचेतरामशास्त्री, श्रीदेवशर्मशास्त्री, श्रीप्रेमनिधिशास्त्री, स्वर्गीयः श्रीदीनदयालुशास्त्री, एम० ए०; लवपुरस्थदयालसिंहहाईस्कूले संस्कृताध्यापकः श्रीमदर्जुनदेवशास्त्री, पटियालानगरे सनातनधर्म-हाईस्कूले संस्कृतपण्डितः श्रीशुकदेवशास्त्री, गढवालप्रान्तान्तर्गत-खोलाग्रामवास्तव्यः सुव्युत्पन्नमतिर्धिल्ड्यालोपाभिधः श्री-श्रीधरानन्दशास्त्री व्याकरणाचार्यः, संस्कृतकविताविताननिपुणो जेहलाभिजनः श्रीकृष्णशास्त्री, श्रीकेदारनाथशास्त्री वैद्यः, फतेहचन्द्रकालेजाध्यापकः श्रीपूर्णचन्द्रशास्त्री, झझ्झरस्थ-राजकीय-स्कूलाध्यापकः पण्डित—विश्वम्भरदत्तशास्त्री, इमे प्रधानतो गणेयाः। एवमत्रैवाध्यापयतामत्रभवतां सनातनधर्महाईस्कूले लवपुरे संस्कृताध्यापकः श्रीरघुनाथदत्तबन्धुशास्त्री, लवपुरस्थ-डी. ए. वी. हाईस्कूले संस्कृताध्यापकः श्रीदीवानचन्द्रशर्मा शास्त्री, अमृतसरस्थि[illegible]विद्यमाने बैजनाथहाईस्कूले संस्कृताध्यापकः श्रीमनोहरशास्त्री, गागरमलसंस्कृतपाठशालाध्यापकः श्रीलोकमान्यशास्त्री, गुजराँवालानगरे गवर्नमेण्टहाईस्कूलेऽध्यापकः श्रीलक्ष्मणदत्तशास्त्री, फिरोजपुराभिजनः श्रीराधेशशास्त्री, वृन्दावनाभिजनौ श्रीसुखलालरामकृष्णशास्त्रिणौ

मं० र० दर्शनाङ्कः



श्रीचतुर्वेदमहोदयानां संपन्नशिष्यो
मध्यप्रदेशे सुप्रसिद्धो विद्वान् पं० श्रीशिवदत्तशास्त्रिसाहित्यरत्नमहोदयः,
तुमसर (सी. पी.)

विद्यानिधिः कविराजः **श्रीभोलानाथशास्त्री** जम्बू-काश्मीरनिवासी, देहरादूननगरे कृतवसतिः **श्रीचक्रधरशास्त्री बहुगुणः** एम, ए. लक्ष्मणपुरे कस्मिंश्चिद् राजकीयविभागे नियुक्तः **श्रीचक्रधरशास्त्री हंसः** एम. ए, एल०टी, **पं० बालकृष्णभट्टशास्त्री** साहित्याचार्यश्चेत्यादयो बहवो योग्यतमाः पुरुषाः शिष्यत्वमङ्गीकृत्यात्मनो धन्यान् मन्यन्ते। एवमस्यां शिष्यरत्नमालायां तुमसरवास्तव्यः कमलासरस्वत्योरुभयोरपि प्रणयपात्रं साहित्यरत्नं **श्रीशिवदत्तशर्मशास्त्री**, शेखावाटीप्रान्तान्तर्गत–रामगढ़ीय–रामनारायणहरनन्दराय-रुईया–संस्कृतकालेजे प्रधानाध्यापकपदे विद्यमानः कविताकर्मणि कुशलः आयुर्वेदशास्त्रे च कृतपरिश्रमः **श्रीहनुमत्प्रसादशर्मा शास्त्री** साहित्याचार्यश्च मन्ये न विस्मरणार्हौ।

अथ तदानीं श्रीमद्गुरुचरणानां जन्मभूमौ जयनगरे तत्रत्यराजकीयसंस्कृतकालेजाध्यक्षपदे तात्कालिकाध्यक्षमहामहोपाध्याय-श्रीमद्दुर्गाप्रसादशर्मद्विवेदानां विश्रमग्रहणस्यासन्नतया रिक्ततामुपैष्यति तदानींतन-शिक्षाविभागाध्यक्षेण एम. ए. विरुदधारिणा श्रीश्यामसुन्दरमहोदयेन तत्पदं विश्वविश्रुतपाण्डित्येन प्रबन्धपटुना विदुषाऽलंकरिष्यमाणं दिदृक्षमाणेन तादृशगुणगणशालिनो भवन्त एव तत्पदाध्यासनोचिता निरचीयन्त। तं चात्मनिश्चयं चरितार्थयितुकामेन तेन महोदयेन अत्रान्तरे श्रीगुरुचरणास्तत्र दर्शनशास्त्राध्यापकपदमलङ्कर्तुं संप्रार्थ्यन्त। गुरुचरणा अपि विद्याप्रदानेन स्वप्रतिष्ठाहेतोः स्वमातृसंस्थायाः सेवासु ह्यैवाकिनस्तदानृण्यमिव गन्तुकामाः सौभाग्यादुपनतं तदवसरमपरिजिहीर्षन्तः, अनुदिनमेधमानवार्धक्याद् भवदेकमात्रपुत्रान् स्वपितृपादाँस्तच्छेषजीवने सन्निधायैव शुश्रूषमाणास्तत्पदमुररीकार्षुः।

अथ गुरुचरणानां लवपुरत्यागसमाचारमत्याचारमिवात्मनि विधेर्मन्वाना नितरामदूयन्त लवपुरवासिनः, प्रायतन्त चात्रभवतो जयनगरप्रस्थानाद् वारयितुम्। धिग् विधेर्दुर्लङ्घ्यताम्! लवपुरनिवासस्य सार्धपञ्चवर्षात्मकेऽस्मिन्नल्पीयसि काले श्रीमद्भिरक्रियन्त शतशो धर्मप्रवचनानि, अकथ्यन्त पुराणकथाः, अश्राव्यन्त धर्मशास्त्राणि, व्यधीयन्त लोका धर्मकर्मसु बद्धादराः। इत्थमनेकैरुपकारैर्भवद्भिरुपकृता लवपुरीयजनता कृतवेदितामात्मनः प्रकाशयन्ती जयनगरमभिप्रतिष्ठासमानेभ्योऽत्रभवद्भ्यो यत्र तत्रानेकासु सभासु श्रद्धाञ्जलिनिवेदनान्युपायनपुरस्कृतानि नैकान्यभिनन्दनपत्राणि ससम्मानमुपाहरत्।

अथ जयनगरीय-राजकीय-संस्कृत-पाठशालाऽपि वृद्धा जननीव विद्यावयोभ्यां दक्षमात्मजं भवन्तं भाविनं स्वरक्षाध्यक्षमधिगम्य नितान्तं प्रसीदन्ती प्रतिदिनवर्धमानसौभाग्या शोभते स्म नितराम्। अष्टादशवर्षाण्येतदध्यक्षपदेऽपि ससम्मानं सयशः सफलं चाध्यास्यात्रभवन्त इदानीं राजकीयनियमानुरोधात् ततोऽवसरं गृहीतवन्तः।

अत्राप्येतस्मिन् काले बहवश्छात्रा दर्शन-धर्मशास्त्रव्याकरणादिष्वनेकेषु शास्त्रेषु भवद्भिर्विनीताः पाण्डित्यमधिगत्य सप्रतिष्ठमात्मनो जीवनं निर्वहन्ति। तेषु टिहरीराज्याभिजनः कश्चिद् **विश्वदेवशर्मशास्त्री** स्वर्गतः दर्शनशास्त्रे परं नैपुण्यमधिगतवान्। मैठाण्युपाख्यः श्रीनगरोपकण्ठवसतिः **श्रीनेत्रमणिशर्मा** दर्शनशास्त्रीदानीं लवपुरस्थे मूलचन्द्र-खैरातीरामसंस्कृतविद्यापीठे दर्शनाध्यापकपदमलङ्करोति। एष महाभागो जयनगरे मोपाह्व-समीक्षाचक्रवर्ति-विलक्षणानुपमवैदुष्य-विद्यावाचस्पतिश्रीमन्मधुसूदनशर्माभिनन्दनमहोत्सवावसरे प्रवर्तमानायां प्रबन्धपाठ-

प्रतियोगितायामीश्वरसिद्धिविषयकं स्वरचितं प्रबन्धं प्रपठ्य ससाधुवादं पारितोषिकं जितवान्। ९०

**मोहनदेवशर्मशास्त्री** बी० ए०, लवपुरस्थसनातन-धर्म-संस्कृत-कालेजे दर्शनशास्त्रमध्यापयति। अयमपि विलक्षणप्रतिभः। पञ्चनदीयविशारदशास्त्रिपरीक्षयोः समस्तेषु परीक्षितेषु प्राथम्यं प्राप्नोत्। मुजफ्फरनगरमण्डलवर्सातः **श्रीराघवानन्दशास्त्री** तत्रैव स्वप्रान्ते कंचन श्रेष्ठिनं वेदमध्यापयति। दर्शन-धर्मशास्त्र-व्याकरण-साहित्यादिष्वनेकेषु शास्त्रेषु विनीतः **श्रीवृद्धिचन्द्रशास्त्री** व्याकरण-धर्मशास्त्राचार्यो जयपुरराजकीयसंस्कृतपाठशालायां धर्मशास्त्रविभागे प्रधानपण्डितपदमधितिष्ठति। **श्रीयुगलकिशोरशर्मा** चतुर्वेदो धर्मशास्त्र-दर्शनवेदान्ताचार्यो जयपुरराजकीयसंस्कृतपाठशालायां दर्शनशास्त्रमध्यापयति। लक्ष्मीगोपालमन्दिर-महन्तपदमधितिष्ठतः श्रीगोविन्ददासशास्त्रिमहाभागस्योत्तराधिकारी **श्रीलक्ष्मीनारायणशर्मा** व्याकरणाचार्यः **श्रीगुलाबचन्द्र चतुर्वेदो** व्याकरणाचार्यः, **श्रीश्यामसुन्दरशर्मा** दर्शनाचार्यः, **श्रीफूँदालालशर्मा शास्त्री** साहित्याचार्यः, **श्रीजगदीशशास्त्री** व्याकरणाचार्यश्च भवदन्तेवासिन एव। राजगुरुश्रीचन्द्रदत्तशर्मचतुर्धुरीणानां तनयौ **श्रील-श्रीभवदत्तदुर्गादत्तशर्माणौ** व्याकरण-साहित्याचार्यावपि भवदन्तेवासित्वसौभाग्यं धत्तः। तयोः श्रीदुर्गादत्तशर्मा जयपुर एव राजकीय-संस्कृत-पाठशालायां व्याकरणाध्यापकोऽस्ति। स्वर्गतः **श्रीमदनलालशर्मा** चतुर्वेदोऽपि भवत्सकाशात् काव्यप्रकाशमधीते स्म। शतपथब्राह्मणे हिन्दीभाष्यनिर्माता, ईशोपनिषदि हिन्दीविज्ञानभाष्यलेखकः, बालचन्द्रयन्त्रालयाध्यक्षः, कलकत्ता-बम्बई-दक्षिणहैदराबादादिमहानगरेषु स्वव्याख्यानैः प्राप्तप्रतिष्ठः **श्रीमोतीलालशर्मा** गौडोऽपि तत्रभवत एव दर्शनशास्त्रमध्यैत।

**राजवैद्य-श्रीनन्दकिशोरशर्माणः श्रीमुकुन्ददेवशर्माण-**श्चात्रभवन्तमुपेत्य दर्शनशास्त्रादिकमधीतवन्तो भवदन्तेवासित्वलाभेन गर्वमनुभवन्ति। **श्रीजयरामदासस्वामी** भिषगाचार्यः, वैद्यवरः **श्रीकल्याणप्रसादमहोदयः** भिषगाचार्यः, मुल्तानाभिजनो भिषगाचार्यः **श्रीरामदासस्वामी शास्त्री** चिकित्सकधौरेयः, साहित्याचार्यौ **श्रीनन्दकुमाररामचन्द्रशर्माणा**वपि च भवतोऽन्तेवासिनः सन्ति। एवं जयपुराभिजनः **कथाभट्टश्रीनन्दकिशोरशर्मा** साहित्याचार्यः, दाधिमथः **श्रीजगदीशशर्मा** साहित्याचार्यश्चापि तत्रभवतोऽन्तेवासित्वं लब्धवन्तौ।

अस्यां श्रीमच्चतुर्वेदचरणशिष्यरत्नस्रजि तज्ज्येष्ठात्मजः **श्रीमान् देवीदत्तशर्मा चतुर्वेदोऽपि** न खलु नान्तर्भावनीयो विद्वद्भिः पाठकैः। य एष काशीहिन्दू-विश्वविद्यालये प्राच्यभाषाविद्वत्परिषन्महोत्सवावसरे बिडलाछात्रावासे प्रवर्तमाने विद्यार्थिवाक्संघर्षे नितान्तमतर्कितपूर्वमपि विषयमवमम्ब्य निरर्गलविशुद्धेन धारावाहिणा संस्कृतभाषणेन सर्वमप्युपस्थितं विबुधमण्डलं विस्मयाचान्तचित्तं हर्षविकसिताननं च वितन्वन् राजतीं सरस्वतीप्रतिमां विजित्य जयनगरराजकीयसंस्कृतपाठशालायाः सम्मानवर्धने स्वगुरोः सहकृत्वैवाभवदिति।

# श्रीगुरुवर्याणां कुटुम्बपरिचयः

(लेखकः—पं० श्रीभवदत्तशर्मा मैथिलः, व्याकरणाचार्यः, जयपुरम्)

श्रीगुरुचरणानां पूर्वजानां परिचयो वंशपरिचये समुल्लिखित एव। प्रथमपरिणयप्रसङ्गोऽपि चाध्ययनकालशीर्षके लेखे समागतः। केवलं कन्यात्रयं प्रसूय श्रीगुरुचरणानामष्टाविंशत्यब्दपरिमित एव वयसि स धर्मपत्नी स्वः प्रयाता। तदनु त्रिंशेऽब्दे एभिर्जयपुरप्रान्तीयरामगढस्थरावतकुलान्तर्गतश्रीसोनीलालचतुर्वेदसुतया श्रीवंशीधरछोटीलालभगिन्या गुलाबदेवीत्याख्यया सह द्वितीयः परिणयः कृतः। एतस्या अपि कन्याद्वयं सुतद्वयं चेदानीं वर्तत इति संभूय कन्यापञ्चकं सुतद्वयञ्च गुरुवर्याणां सन्ततयः।

तत्र ज्येष्ठस्तनुजः पण्डितश्रीदेवीदत्तशर्मनामा अष्टाविंशतिवर्षकल्पः स्वप्रतिभाप्रभाप्रभावितसकललोको दिव्यगात्रश्चास्ते। अस्योपनयनसंस्कारः स्मृत्यनुसारमष्टमेऽब्द एव साधु सम्पन्नः, तत आरभ्य अग्निहोत्रादिस्मार्तकर्म परिपालयतानेन नववर्षपर्यन्तमखण्डब्रह्मचर्यव्रतमाचरितम्। उपनयनानन्तरं वेदाध्ययनमाकलयता वेदाङ्गव्याकरणस्याप्यध्ययनमनेन साधु सम्पादितम्। अल्पीयसा कालेनैव पाणिनिशास्त्रस्योच्चतमा ग्रन्थाः—मनोरमाशब्दरत्नवैयाकरणभूषणसारमहाभाष्यशेखरादयः सव्युत्पत्ति समधीताः। बाल्यकालादेवायं परममेधावी कुशाग्रबुद्धिः प्रत्युत्पन्नमतिश्चास्ते। साहित्यशास्त्रस्यालङ्कार-ग्रन्थान् साहित्यदर्पणकाव्यप्रकाशादीनपि सहजमधीतवानयम्, लब्धवांश्च तेन पाटवातिशयं वाचोयुक्तिषु। दर्शनशास्त्रसिद्धान्तानामपि तत्तद्ग्रन्थपर्यालोचनया साधु परिचयं प्राप्तवान्। श्रीगुरुचरणमनुकुर्वाणा व्याख्यानशक्तिरस्य बाल्यकालादेव प्रस्फुटा; अतो व्याख्यान-कलापाटवं जन्मतोऽधिकृतमिव लक्ष्यते। छात्रदशायां विवादप्रतियोगितासु निबन्धपाठेषु व्याख्यानादिषु च नैकदा प्राथम्यं लब्धमनेन। संस्कृतशिक्षाशेखरायमाणायां वाराणस्यां संघटिता निखिलभारतवर्षीयवादविवादप्रतियोगिता। या च काशीरामवादविवादनाम्ना सुप्रसिद्धा। परःशतच्छात्राणां प्रतियोगितायामप्यनेन सगौरवं प्राथम्यं प्राप्तम्; हंसवाहनायाः श्रीसरस्वतीदेव्याः रजतप्रतिमया च साधु पुरस्कृतो विजयोपलब्ध्ये।

[illegible] काव्यादीनां दर्शने प्रवृत्तिस्तथैव नाटकाभिनयेऽप्यभिरुचिः। महाराज-संस्कृत-कालेजीय-च्छात्रैः प्रदर्शिते 'उत्तर-रामचरित'नाटकाभिनये लवचरित्रमभिनयतानेन तथाभिनयपाटवं प्रदर्शितं येन दर्शकगणो मुग्धश्चकितश्चाभवत्। सप्तभिः सुवर्णपदकैः बहुभी रजतपदकैश्च साधु सम्मानितोऽयम्। आङ्गलभाषाज्ञानमपि कार्योपयोगि सम्पन्नमस्य। हिन्दीभाषाया वेत्ता कविश्चास्तेऽयम्। वर्णेन कान्तगौरो मनोहरस्वरूपश्चाकृत्याऽयम् आगराप्रान्तान्तर्गते कमतरीग्रामे परम-प्रतिष्ठितकुले ऊढवान्। अस्ति तनयाचतुष्टयी एकस्तनूजश्चास्य। तासामभिधेयानि भवानीदेवी, लक्ष्मीदेवी, सरस्वतीदेवी, इन्दिरादेवी चेति।

चिरञ्जीविनो नाम ईश्वरप्रसादः। अयं हि बालो नामानुगुण्यं साधु प्रकटयति।

द्वितीयस्तनूजन्मा शिवदत्तशर्मनामा द्वादशवर्षवयस्कः परममेधावी कुशाग्रबुद्धिश्चास्ते। अस्याप्युपनयनसंस्कारोऽष्टमेऽब्द एव सम्पन्नः। अयं हि एकश्रुत इव सहजमेव श्लोकानायत्तीकरोति। बहूनि स्तुतिसामयिकपद्यानि मुखस्थान्यस्य। वाचि माधुर्यं स्फुटत्वञ्चास्यापि जन्मसिद्धमेव। अमितजनाकीर्णासु निर्भयोऽयं मङ्गलमाचरति। शरीरशोभाप्यस्य सौन्दर्यमनुकुर्वाणा लोकातिशायिनी। संप्रत्ययं स्वशाखानुसारम्—ऋग्वेदं व्याकरणञ्चाधीते। आङ्गलभाषाज्ञानमपि संस्कृताध्ययनेन सहैव सम्पादयतीति प्रमोदास्पदम्।

गुरुचरणानां दुहितरस्तु पञ्चसंख्याका इति निगदितमेव पूर्वम्। तासु सर्वज्येष्ठा गोदावरीदेवी मैनपुरीनगरस्थ—पण्डितश्रीभगीरथचतुर्वेदेनोद्वाहिता। अयं हि महानुभावः परमधार्मिकः सरलचित्तः प्राचीनमर्यादापालकश्चास्ते। अमुष्यां हि तनयायामेकः पुत्रो दिनेशचन्द्रनामा प्रतिभानाम्नी च कन्या जन्म लेभाते। दिनेशचन्द्रो लाहौरनगरे श्रीगुरुचरणसमीचायामेवायुर्वेदाध्ययनं कुरुते।

द्वितीया कन्या राधादेवीत्यभिधाना इटावानगरीवास्तव्येन पण्डितश्रीमाताप्रसादमहोदयेन परिणीता। वाक्कीलतायामयं दक्षः प्राप्तगौरवश्चास्ते। अस्यां तनयायां फतेहबहादुरो वीरेन्द्रश्चेति द्वौ पुत्रौ कन्याद्वयं चास्ति।

तृतीया कन्या त्रिवेणीदेवी कमतरीनिवासिना कान्हपुरप्रवासिना पण्डितश्रीकामताप्रसादचतुर्वेदमहाभागेनोद्वाहिता। कान्हपुरे रेलवेविभागे कार्यं करोत्ययं महाशयः। अस्याः महेन्द्ररवीन्द्रौ द्वौ बालकौ बालिकाश्च चतस्रः।

चतुर्थी कन्या शकुन्तलादेवी वस्त्रचित्रणचतुरा परमविदुषी गृहकार्यदक्षा च सिकन्दरपुरनिवासिना जगदलपुरप्रवासिना विदुषा श्रीनत्थूलालोपनामकेन बुद्धिप्रकाशमहाभागेन परिणीता। अयं हि महाभागः तत्रत्यराजकीये आङ्गलविद्यालये अध्यापयति। आङ्गलभाषाज्ञानं श्लाघनीयमस्य। चन्द्रहासप्रकाशनामको द्वौ तनूजावस्य कन्या चैका सरोजाख्या।

पञ्चमी कन्या मालतीदेवी ग्वालियरराज्यान्तर्गते तरसोकग्रामे प्रतिष्ठितकुलसम्भूतेन श्रीगिरीशचन्द्रमहोदयेन विवाहिता। अस्यां सन्ततिर्न विद्यतेद्यावधिः। गिरीशचन्द्रमहोदयस्तु कलिकातानगरे व्यापारकार्ये निरतः।

गुरुचरणाना पितृव्यपुत्रश्चैको भ्राता गङ्गाप्रसादनामा वर्तते, हिण्डौनग्रामे राजकीय-पाठशालायामध्यापयति। नैकापि सोदर्या भगिनी गुरुचरणानाम्-तथापि पितृव्यपुत्री एका भगिनी वर्तत एव। या हि आगराप्रान्तान्तर्गत—होलीपुराग्रामे वैद्यरामकृष्णमहोदयेन परिणीता। दैवदुर्विपाकात्सा वैधव्यमनुभवतीति खेदास्पदम्। नास्याः पुंसन्ततिः, कन्यास्तु तिस्रो वर्तन्ते।

आसीदेका गोकुलीनाम्नी ज्येष्ठा पितृष्वसा गुरुपादानाम्। यया हि गुरुवर्याणां बाल्यकाले पालनपोषणादिकं साधु सम्पादितम्। नास्याः सन्ततिरेकापि।

अपरा पितृष्वसा चिन्तामणीनाम्नी अलवरराज्यान्तर्गते गोविन्दपुराग्रामे विवाहिता। वर्तेते तस्या नन्दनलाल आनन्दीलालश्चेति द्वौ पुत्रौ।

तृतीया पितृष्वसा भरतपुरनगरे परिणीता। तस्यां हि शिवराजमिश्रनामास्ति—एकः पुत्रः।

एवं गुरुचरणानां कुटुम्बिनः सर्वत्र प्रसृताः सानन्दं निर्वहन्तीति गौरवास्पदं प्रमोदास्पदञ्चेति विरम्यते।



सपरिवाराश्चतुर्वेदमहोदयाः

| वामतः प्रथमपङ्क्तौ— | द्वितीयपङ्क्तौ— | तृतीयपङ्क्तौ— |
|---|---|---|
| १. पौत्री भवानीदेवी | १. दौहित्राणामन्यतमश्चन्द्रहासः | १. दौहित्रीष्वन्यतमा सरोजिनीदेवी |
| २. पुत्रो देवीदत्तशर्मा, तदुत्सङ्गे तद्भागिनेयः प्रकाशचन्द्रः | २. आसन्द्यामुपविष्टाश्चतुर्वेदमहोदयाः | २. पौत्री लक्ष्मीदेवी |
| ३. कनिष्ठपुत्रः शिवदत्तशर्मा | ३. पौत्र ईश्वरप्रसादः | |

# मान्यानां काले कालेजोन्नतिः



(ले०—श्रीवृद्धिचन्द्रशर्मा शास्त्री, व्याकरणधर्मशास्त्राचार्यः, प्राध्यापको महाराज-संस्कृत-कालेजस्य- जयपुरम् )

स्मिन्नेवाभिनन्दनग्रन्थे निबन्धान्तरेषु पठितमेव
ाठकमहोदयैर्यद् वर्षपञ्चकं यावद् लवपुरस्थ-स-
र्मकालेजाध्यक्षपदे सुचारु कार्यं कृत्वा सर्वस्मिन्
प्रान्ते हिमालयाधित्यकासु वर्तमाने गढवाल-
व स्वोपदेशैः शिष्यपरम्पराभिश्च स्वकीयं यशो
। एतावतालपकालेनैव शतशश्छात्रान् शास्त्रपा-
( विधाय दृष्टिदौर्बल्यमनुभवतः पितुः सेवामनु-
न महतीमर्थहानिं सोढ्वाऽपि पञ्चापप्रान्तसदृशं
त्रं परित्यज्य, तत्रत्यं सकलमपि कार्यभारं स्व-
| योग्यतमे श्रीपरमेश्वरानन्दमहोदये विन्यस्य
९२४ तमे ईशवीयेऽब्दे दशाम्बरमासे राजकीय-
पाठशालाया दर्शनाध्यापकपदमलङ्कृत्य समा-
श्रीचतुर्वेदमहोदयाः स्वाभिजनञ्जयपुरमिति ।
समये पङ्क्तीनामासां लेखकः पाठशालाया
अधीयान आसीद् व्याकरणोपाध्यायश्रेण्याम् ।
स्मात्समयात् पूर्वमेव श्रीचतुर्वेदमहोदयानां
समग्रेपि जयपुरे आसीत् प्रसृतः । अन्यत्र
वेन्त एते यदाकदाचन स्वगृहानायान्ति स्म, ततः
ागमनवृत्तं सर्वत्रापि जयपत्तने प्रसारमल-
सनातधर्मानुयायिनी जनता उपदेशश्रवणाय
चातक इवैषामागमनं प्रत्यैक्षत । सनातन-धर्म-
ाख्यायां धार्मिकसंस्थायाञ्च महानुभावानामेषां
धिवेशनं विधाय व्याख्यानान्यभवन्; यान्याक-
शिक्षिता प्रतिष्ठितापि जनता बाहुल्येनोपास्था-
त्यक्षमनेकशो दृष्टचरम् । एवं वैदुष्येणैषां पूर्व-
मेव प्रभाविता जयपत्तनस्थाः प्रतिष्ठिता नैके स्नातकाः,
ये च शास्त्रान्तराणां समभवंश्चूडान्तविद्वांसस्तेऽप्यासन्
प्रतीक्षमाणाः, कदा चतुर्वेदमहोदयाः समागच्छेयुरत्र
कदा च वयमेतेषामन्तेवासित्वमङ्गीकृत्य भारतीयवि-
द्यानां शेवधीभूतं दर्शनशास्त्रमधीयीमहीति । तथा च
पाठशालायाममीषां नियुक्तिकालाव्यवहितमेव दर्शन-
शास्त्रश्रेणिः परिपूर्णाऽभवद् योग्यैश्छात्रैः ।

यदा ह्येते महानुभावा लवपुरं परित्यज्यात्र समा-
यातास्तस्मिन् समयेऽमीभिः साकमेव पञ्चापशास्त्रिप-
रीक्षायां समुत्तीर्णावपि श्रीविश्वदेव-नेत्रमणि-शर्माणौ
पर्वतीयौ दर्शनशास्त्राध्ययनाय जयपुरमायातौ । एवं
महोदयस्यास्यागमनात् पूर्वं नामापि न श्रूयते स्म यस्य,
तस्यैव दर्शनशास्त्रस्याध्ययनार्थं राजवैद्यकुलालङ्कारः
श्रीनन्दकिशोरशर्मायुर्वेदाचार्यः, जनप्रियचिकित्सकः
श्रीमुकुन्ददेवशास्त्री, सिद्धाध्यापकः श्रीसिद्धगोपालशास्त्री
चेत्याद्या नैके योग्यतमाः स्नातकाः पुनश्छात्रताङ्गता
इत्यागमनसमयादेवास्य पाठशालाया अस्याः समुत्क-
र्षोवलोकितो लोकैः ।

आगमनात् पूर्वमेषां पाठशालाया अमुष्याः समे-
षामध्यापकानां कृते होराचतुष्टयं स्थातव्यमासीत् । न
कस्याप्यासीद् रिक्तान्तरम् । रिक्तान्तरेपि च पाठशाला-
यामुपस्थितिरासीदावश्यकी । किन्तु सर्वतः पूर्वमस्मा-
भिरवलोकितं यदेते महानुभावा विलम्बेन समागमन-
वकाशात् पूर्वमेव च पाठशालायाः प्रत्यावर्तिषत स्वगृ-
हानिति महदाश्चर्यं प्रभावश्चैषां तात्कालिकानामस्माकं

मनस्युदेति स्म च्छात्राणाम्। अग्रे गत्वा श्रीचतुर्वेदानामध्यक्षत्वे दृष्टमस्माभिः प्रत्येकं प्राध्यापकस्य ( प्रोफेसर ) कृते रिक्तमेकमन्तरमत्यावश्यकमभूत्। नावश्यकमभूद् रिक्तान्तरेपि पाठशालायां प्रतिष्ठानमिति।

एवमधयद्र्धवत्सरं दर्शनाध्यापकपदे स्थित्वा तात्कालिकैः पाठशालाध्यक्षैः म० म० श्रीदुर्गाप्रसादद्विवेदमहोदयैर्वार्द्धक्यवशाद् गृहीतेऽवकाशे सन् १६२६ तमे ख्रिस्ताब्दे जुलाईमासे इमे विद्यालयस्याध्यक्षपदमलमकुर्वन्। तस्मिन् समये पाठशालायामस्यां प्रवेशिकाविभागे एकेन न्यूनं सपादशतं [१२४] छात्राणामधीते स्म, कालेजविभागे च केवलं षष्टिश्छात्राः पठन्त आसन्। संभूय १८४ छात्राः पाठशालायामस्यामध्यगीषत। अध्यापकाश्चासन् प्रवेशिका-कालेजोभयविभागे संभूय पञ्चविंशतिः [२५]। कार्यालये चास्तां द्वौ कर्मचारिणौ सेवकाश्च चत्वारः। छात्राणां नैयून्यवशाद् भवनमपि संकुचितमासीत् विद्यालयस्याधिकार इति मन्ये नावश्यकं भवेद् वक्तुम्। क्रमशश्छात्राणां वृद्धिः प्रारब्धा। अध्यापकाश्चापि वृद्धिं गताः संख्याभिः। कर्मचारिणां वर्द्धनमपि कार्याधीनमिति, सम्पन्ने कार्याधिक्ये सुतरां तेषां वृद्धिरिति वृद्ध्युन्मुखीयं पाठशाला नामतः कर्मतः प्रतिष्ठातश्च विस्तारमलभतेत्यग्रुपदमेव प्रकटयिष्यामः।

अध्यक्षत्वमूरीकृत्य पाठशालाया अस्या रश्मयः स्वकीययोर्गृहीताः करयोस्तदारभ्यैवास्याः समुन्नतये समारब्धा चेष्टा। पितुः पाण्डित्यं वत्सस्य नामकरण एव ज्ञातं भवतीत्याभाणकमनुसरद्भिर्महाभागैरेभिः सर्वतः प्रथमं संस्कृत-पाठशालाया अस्याः प्रभाववर्द्धनार्थं वास्तविकस्वरूपावबोधार्थं च "महाराज-संस्कृत-कालेज" इति राजाज्ञामनुगृह्य नामधेयं विहितमिति मन्ये न विस्मरणार्हम्। एवमस्याध्यापका अपि तदारभ्यैव प्रोफेसरपदवाच्याः सञ्जाताः।

**अध्यापकवृद्धिः**—लोकयात्रानिर्वहणार्थं राजभाषाज्ञानमत्यावश्यकं तदभावे च संस्कृत-विदुषामियं दशेति सम्यग् जानानैरेभिर्महोदयैः स्वकीये विद्यालये राजभाषा-( अंग्रेजी )ध्यापनार्थं सर्वतः पूर्वं तद्भाषाकोविदः शिक्षक एकः शिक्षाविभागाध्यक्षमहोदयात् संयाचितः। आङ्गलभाषाशिक्षणं च तदारभ्य प्रारब्धम्। तदग्रिम एव वत्सरे, चतुर्णां वेदानामध्यापनमप्यस्मिन् विद्यालयेवश्यं प्रचलेदिति निधाय मनसि शिक्षासचिवाज्ञयावशिष्टवेदत्रय्या अध्यापनार्थं नियुक्तवन्त एते वैदिकत्रयीम्। इतः पूर्वं केवलमस्यां पाठशालायां शुक्लयजुर्वेदस्यैवाध्यापनं प्राचलत्। एतादृशे विशाले खलु विद्यालये "स्वाध्यायोऽध्येतव्यः" इति भगवत्याः श्रुतेरेवाज्ञयाध्येतव्यानां प्रधानशेवधीनामार्याणां वेदानां चतुर्णां सर्वाङ्गीणाध्यापनाभावो मन्ये विकलतामेवास्य ख्यापयति स्म। सा ह्यनेन व्यापारेण दूरीभूतेति किमत्र गदितव्यम्। वेदचतुष्टय्या ह्यध्यापनं सर्वेभ्यः प्राचीने वाराणसेय-गवर्नमेण्ट-संस्कृत-कालेजे, सुप्रसिद्धे काशीहिन्दू-विश्वविद्यालयेऽपि च नाद्यावधि प्रचलतीति तदध्यापनप्रबन्धं विधाय गौरवं प्रापितैव नूनं पाठशालेयम्।

हिन्दी-भाषाया अप्यध्ययनमेतेषामध्यक्षत्वकाल एव प्रारब्धम्। एतदभावे आचार्यपदं प्राप्ता बहवः स्नातका हिन्दीभाषाभाषणे लेखने च बहुधा स्खलन्तोवलोकिता इति समयानुरोधेन तदध्ययनमप्यावश्यकं मन्वानैरेभिरुपाध्यायश्रेणिपर्यन्तं रक्षिता सानिवार्यरूपेण। आरम्भे चैकः संस्कृत-साहित्याध्यापक एव हिन्दीभाषाया अपि नियतानपीपठद् ग्रन्थान्, किन्तु किञ्चित्कालानन्तरं स्वतन्त्राणामपि हिन्दीपरी-

त्राणां पाठ्यग्रन्थाद्यध्यापनेऽध्यापकस्यैकस्य नियुक्तिः प्रार्थिता श्रीमद्भिः, स्वीकृता च तात्कालिकैः शिक्षाविभागाध्यक्षमहोदयैरिति तृतीयेयं क्षतिः पूर्णतां गता। तदारभ्यैव च शास्त्र्याचार्यश्रेणिस्था अत्रत्यारछात्रा हिन्दीविशेषयोग्यतायाः परीक्षामुदतरन्, यस्या हि समुत्तरणमाङ्गलविद्यालये हिन्दी-संस्कृताध्यापने नितान्तमुपयुक्तमासीदिति जीविकाप्रश्नोऽपि कथञ्चिदत्रत्यानां समाहितः स्नातकानाम्।

संस्कृत-वाङ्मये भगवन्तं विहाय वेदं प्रमुखतयाध्येतव्यानि दर्शनधर्म्मशास्त्रपुराणान्येवेति त्रिंशद्वर्षाध्ययनस्यानुभवेनाहं निःशङ्कतया शक्नोमि वक्तुम्। भाषायाः, स्थूलतया विश्वस्मिन् वर्तमानानां पदार्थानाञ्च परिचयाभावेन शास्त्रीयपदार्थेषु प्रवेशाभावात् 'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकमि'ति शास्त्रान्तरावबोधनार्थं वैशेषिकव्याकरणयोरध्ययनं सार्थकत्वं भजतां नाम, न स्वतन्त्रतया तयोः किञ्चिदुल्लेखनीयं फलमिति करोहत्य विवेचनीयम्। किन्तु हन्त! मध्यमेऽस्मिन् भारतस्यावनतिप्रधाने युगे तयोरेव क्रोडपत्रादिषु परिश्राम्यन्तस्तेनैव च स्वात्मनः शिक्षितान् मन्वाना आग्रहग्रहग्रहिलतया पथिप्रदर्शनाभावेन वाद्यापि तत्रैव कृतकार्यतां भजन्तः शास्त्रान्तरेष्वावश्यकेष्वपि न प्रविविक्षन्ति भावुका भूसुरार्भका' इति विधिदुर्विलसितादन्यत् किमहं वच्मि भारतस्य। शतशः समाम्रेडितेऽप्यस्मिन् विषये मामकैर्विद्वद्धौरेयैरद्यापि देशस्यास्य प्रायः सर्वासु संस्कृत-पाठशालासु व्याकरणन्यायसाहित्याध्ययनमेव प्रचलतीति किमु वक्तव्यं विदितवेदितव्यानां पाठकमहाभागानां पुरः। सैव दशासीत् जयपुरसंस्कृतपाठशालाया अपि। न चासीदध्ययनं षड्दर्शनानां न धर्मशास्त्रस्य, न च पुराणादेरिति क्रमशस्तद् वैकल्यमपास्तमेतैः। दर्शनाध्यापने तु स्वयं नियुज्य सा दूरीकृतैव महती त्रुटिः। धर्म्मशास्त्रस्यापि प्राचारितमध्ययनं विद्यालयेऽस्मिन्। एतस्य स्वतन्त्रविभागं प्रतिष्ठाप्य तत्रैको धर्माचरणचणो जयपुरराजकीयधर्मसभायाश्च सदस्यः अध्यापकः शिक्षाविभागाध्यक्षमनुकूल्य नियोजितः। पुराणानामपि पाठ्यं निर्धारितं तदर्थमध्यापकोऽपि च याचितः, किन्तु सामयिकशिक्षाविभागस्य पुराणैः परिचयाभावान्न तदध्यापकस्य नियुक्तिं कर्तुं प्राभवन्निति चेतसि तेषां खेदानुभव एवाद्यापि।

सर्वदर्शनानां सम्मिलितो यथैको विभागोऽमीषां काले प्रचलितस्तथैव सकलदर्शनमूर्द्धन्यस्य वेदान्तस्यापि पृथक् प्रचलितो विभागः। तत्रापि च छात्रा अध्यैयत परीक्षाञ्चाददुः। यद्यप्ययं विभागो बहोः कालात् प्राक् पाठशालायामस्यामासीत्प्रचलित इति श्रूयते, किन्तु चिरकालात् विलुप्तप्राय एवाभवत्। तस्य पुनरुज्जीवनमेभिरेव कृतम्। कर्मकाण्डावबोधाय च पौरोहित्यश्रेणिरपि प्रचालिता। एवं दर्शनं धर्मशास्त्रं वेदान्तं पौरोहित्यं चेति विषयचतुष्टयेऽप्याचार्यान्तमध्ययनमेषां प्रयत्नेन प्रारब्धमिति न परोक्षं जयपुरनिवासिनामन्येषां च विदुषाम्। तत्र दर्शनवेदान्तधर्मशास्त्राध्यापनार्थमेकं दर्शनधर्म्मशास्त्रवेदान्ताचार्यपरीक्षोत्तीर्णं सुयोग्यं विद्वांसमपि यत्नेन नियुक्तवन्त एते।

आयुर्वेदसदृशे प्रायोगिकप्रधानेऽपि विभागे इतः पूर्वं केवलमध्यापकद्वयी ग्रन्थाध्यापनमात्रं कुर्वती विषयस्यास्योपाध्यायशास्त्र्याचार्यपरीक्षामदापयत्। तत्र वैद्यरत्नस्य स्वसुहृदः स्वर्गीय-श्रीलक्ष्मीराम-स्वामिनो भिषगाचार्यस्यायुर्वेदप्रधानाध्यापकस्य सम्मतिं गृहीत्वा विभागस्यैतस्य वास्तविकरूपप्रदानार्थं सुबहु प्रयतनं विधाय प्रायोगिकशिक्षायाः प्रबन्धोऽप्यकारि। रसायनशालाञ्च निर्माप्य तत्र भैषज्यनिर्माणव्यवस्थापि विहिता। एकश्चाध्यापकश्छात्रबाहुल्याद् ग्रन्थाध्यापनेऽप्य-

धिको नियोजितः; अपरश्च रसायनशालाकार्ये-इति संभूयायुर्वेदविभागे चत्वारः सञ्जाताः प्राध्यापकाः। रसायनशालायां कार्यकरणार्थं सेवकत्वेन विशेषं नियुक्ता पूरुषद्वयी। कर्मचारी (Clerk) चैको रक्षणार्थं-मौषधानामोषधीनां तद्विभागस्यायव्ययादीनाञ्च पृथङ् नियुक्तः। "सर्वमनवद्यं ग्राह्यमवद्यञ्च परिहेय"मिति नीति-मनुसरद्भिरेभिः प्रतीच्यायुर्वेदस्य शल्यचिकित्सादि-शिक्षणार्थं महता प्रयत्नेन द्राक्करोप्येको विभागेऽस्मिन् विनियोजितः। क्रीतानि च तदुपयोगीनि यन्त्रादीनि। यत्र रक्तमूत्रादीनां परीक्षा, साधारणी शल्यशिक्षा, कीटाणु-शास्त्रसिद्धान्तशय्याधिशायिनी चिकित्सापद्धतिश्च छात्रैरधीयत इति विभागस्यास्य सुबहु विस्तारो महो-दयानाममीषां समये समजायत। फलञ्चास्य प्रत्यक्ष-मेव दरीदृश्यते यच्छात्रा न केवलं ग्रन्थाध्ययनेनात्मनः कृतकृत्यतामवापुरपि तु प्राच्यार्वाचीनप्रायोगिकविषयं सम्यग् ज्ञात्वौषधनिर्माणादिकं च सर्वं परिज्ञाय वास्तविकभिषक्तां वहन्तो भिषग्-भिषग्वर-भिषगा-चार्यपरीक्षामुदतरन्नुत्तरन्ति च।

कस्यापि वस्तुनो वास्तविकस्वरूपज्ञानाय नेतिहासा-दन्यत्किमपि तात्त्विकसाधनम्। इतिहास एव वस्तुनो वास्तविकस्वरूपपरिचयाय प्रभवतीति मन्वानैरेभिः पूर्वमुपाध्यायश्रेण्यां रचितो भारतीयेतिवृत्तसारः। ततश्च सत्यपि नैकविद्वद्विरोधे शास्त्र्याचार्यश्रेण्योरपि विषयममुं प्रवेश्यावश्यकं तदध्यापनार्थमेक इतिहासप्रा-ध्यापकोऽपि परिवर्द्धितः पाठशालायामस्याम्।

साहित्यविभागेप्यास्तां प्राग् द्वावेव प्राध्यापकौ। अमीषामागमनकाले एव शास्त्रान्तरस्थानां विनेयानां व्युत्पत्तये व्याकरण-साहित्योभयशास्त्रकाननकण्ठीरवः, कर्ता काव्यानां, रचयिता विचित्रच्छन्दसां, वक्ता व्यङ्ग्यो-क्तीनामेकः पण्डितपुंगवो नियोजितः श्रीशिक्षाविभा-गाध्यक्षेण। एतेषामागमनादनन्तरमेकः साहित्यशास्त्री च विनियुक्त इति संभूयात्रापि विषये चत्वारः संजाताः प्राध्यापका इति मन्ये पूर्वापेक्षया द्विगुणिता संजाता-ध्यापकसंख्या।

**छात्रपरिषदः स्थापनम्**—आरम्भादेव श्रीमद्भि-रालोचित यन्न केवलं गुरुमुखादध्ययनमात्रेणैव छात्रा लोकयात्रां निर्वोढुं प्रभवन्ति। स्वगतमनोभावान् प्रक-टयितुं यावन्न तेषामभ्यासः स्यात्, न स्याच्च विषया-न्तरेषु चञ्चुप्रवेशस्तावन्न सर्वाङ्गीणं वैदुष्यं समुल्लसेत्तेष्विति एकस्याश्छात्रपरिषदः स्थापनमकार्षुः। यस्या अधिवेशनानि प्रतिपक्षं पूर्णिमायाममायाञ्च कालेज-भवनैकदेश एवाभवन्, भवन्ति च। यत्र पूर्वनिर्धारिते विषये छात्राणां निबन्धपाठः शास्त्रीयवा-दविवादश्चाभवत्। तेन छात्राणां लेखने भाषणे तथा-भ्यासोवर्द्धत यथा ते न नैकवारं वाचनिके लेखबद्धे च विवादे स्थानीयासु बह्वीषु संस्थासु सक्रियं भागमेवागृ-ह्णन्नपि तु बहिःस्थासु च विवादे परान् विजित्य जयपुर-संस्कृत-कालेजस्य नामोन्नामितमिति चतुरस्रम्। विवादे-ष्वेषु हरिद्वारस्थायुर्वेदकालेजीयविवादो वाराणसेय-च्छात्रविवादश्चोल्लेखनार्हौ। वाराणस्यां तु निखिलभार-तीयच्छात्रपरिषदि विवदमानेन चतुर्वेदेन श्रीदेवीदत्त-शर्मणा भगवत्याः शारदाया राजती प्रतिमां विजित्य स्थानीयसंस्कृत-कालेजे स्थापिता सेति किं नैतच्छात्र-परिषदः समुल्लेखनीयं फलम्?

**उपाधिवितरणोत्सवः**—पाठशालाया अस्याः प्रार-म्भादेव वार्षिकपरीक्षायामुत्तीर्णेभ्यश्छात्रेभ्यः पारितो-षिकं वितीर्यते स्म। तच्च कदाचित् शिक्षाविभागाध्यक्षः समागत्य कदाचिच्च पाठशालाध्यक्ष एव केवलः पाठशा-लीयपण्डितान् समेत्य व्यतरत्। सन् १९२५ तम ईशवीये शिक्षाविभागाध्यक्ष-श्रीश्यामसुन्दरशर्मणा

प्रयत्नेन वार्षिकोत्सवस्य रूपं परिवर्द्धितम्। समाहूतैका बृहत्पण्डितसभा। संस्कृतभाषाप्रणयिनो राजकर्मचारिणः सभ्या नागरिकाः सामन्ताश्च तत्रामन्त्रिताः। तेषां सम्मुखे पारितोषिकं प्रमाणपत्रादिकं च छात्रेभ्यो विनीर्णम्। छात्राणां वादविवादश्चाभवत्। तद्द्वितीये संवत्सरे श्रीचतुर्वेदमहोदयानां प्रयत्नेन जयपुरराजकीयस्वतन्त्रपरीक्षाणां सम्मानवर्द्धनाय तेनैव शिक्षाविभागाध्यक्षेण शिक्षासचिवमनुरुध्य कालेजस्यास्य "उपाधिवितरणोत्सवः" प्रारम्भि, यत्रान्यैः सचिवैः सह स्वयं शिक्षासचिवः समागत्य शास्त्र्याचार्यपरीक्षोत्तीर्णेभ्यः स्नातकेभ्यः प्रमाणपत्राणि सुवर्ण-रजतपदकानि च व्यतारीत्। उपदेश एतेभ्यः समाश्रावित 'औपनिषद',उपाधिवितरणवक्तृता च प्रसिद्धैकस्य विदुषोऽभवत्। वार्षिकविवरणम् (रिपोर्ट) अमी पाठशालाध्यक्षमहोदयाः स्वयमपठन्। संवादाभिनयादिकं विनोदपूर्णं कार्यक्रमश्च तस्मिन् दिने निरधारयन्। तद्द्वितीयेपि दिवसे महोत्सवं विरचय्य पण्डितसभानाम्ना कार्यक्रममरचन्। तत्र शास्त्रीयविचारश्छात्राणां निबन्धपाठः कविसम्मेलनश्चेत्यादिकार्यसंपादनानन्तरं पारितोषिकवितरणमप्यभवत्। एवमयमुपाधिवितरणोत्सवः समुल्लेखनीयां कोटिमभजत, यत्र महामहोपाध्यायरायबहादुरेत्यादिविरुदभाजः ख्यातनामानः श्रीगौरीशङ्करहीराचन्द्रौझामहोदयाश्चापि निमन्त्रिताः सममिलन्। अनेनोत्सवेन संस्कृतकालेज-गौरवं राजवर्गीयाणां, सामन्तानां जयपुरजनतायाश्च दृष्टौ परां कोटिमगमदित्येषाप्येतेषां सेवा न विस्मरणार्हा।

**प्राध्यापकसमितिनिर्माणम्**—इतः पूर्वमत्रत्या अध्यक्षा एव शिक्षाविभागाध्यक्षाज्ञया यत्किञ्चिदपि समाज्ञापयन्ति स्म, कार्यं वा कुर्वन्ति स्म। तेन बहुषु कार्येष्वध्यापकानामसंतोषोपि स्वाभाविक एवेति निरीक्ष्यैभिः प्राध्यापक-(प्रोफेसर) समितिर्निरमायि। कालेजसम्बन्धीनि प्रायः सर्वाणि कार्याणि तस्यामेव समितौ निर्धार्याण्युरेते। बहूनां विदुषां सहयोगेन गुणदोषविचारपूर्वककार्यकरणे हानेः संभावनापि नाभवत् परितोषश्च समेषामजायतेति 'एका क्रिया द्व्यर्थकरी प्रसिद्धा' सिद्धा। अनयैव च समित्या प्रवेशिकाश्रेणीनां सकलोपि पाठ्यक्रमो निरधार्यत। उपाधिपरीक्षाणामपि पाठ्यं पूर्वमत्र समित्यां निर्धार्याध्यक्षसंमुखमुपातिष्ठिपन् प्राध्यापकाः—इति समित्यानया कार्यकरणे महत्सौकर्यमभवत्।

**क्रीडा-प्रबन्धः**—छात्राणां स्वास्थ्यपरिवर्धनाय व्यायामस्योपयोगितां लक्ष्यीकृत्य व्यायामशिक्षकस्यापि नियुक्तिः कारिता। कालेज-विभागेपि च व्यायाम-शिक्षणार्थं प्रबन्धं विधाय कालेजीयाध्यापकमेकं व्यायामसमितिमन्त्रित्वे विनियोज्य राज्यतः क्रीडनार्थं छात्राणां क्रीडाक्षेत्रं च परिगृह्य नियतरूपेण व्यायामशिक्षाः प्रचारिताः। तत्र प्राचीनार्वाचीनाश्च खेलाः खेलन्तश्छात्रा न केवलं स्वास्थ्यमेवालभन्तापि तु व्यायामप्रदर्शनसंघर्षे (टूर्नामेंट) प्राथम्यमप्यगृह्णन्। नैकवारं संस्कृत-कालेजीयाश्छात्राः पादकन्दुक (फुटबॉल) क्रीडायां "महाराज-हाई-स्कूल-महाराजकालेजा" दिप्रसिद्धसंस्थानां छात्रैः सह तथा क्रीडन् यथात्रत्यः शिक्षाविभागाध्यक्षोपि परं प्रासीदत्, आश्चर्यं चावहत्। तद्दर्शनार्थं सोत्कठं समागताः सहस्राणि नागरिकाश्च भूरि भूरि प्राशंसिषुरत्यत्रत्यांश्छात्रानिति क्रीडोन्नतिरपि चरमां कोटिं प्रापिता।

**बालचरसङ्घस्थापनम्**—बालकेषु सेवाभावजागरणाय बालचरसङ्घोऽप्येकः स्वीयविद्यालये स्थापितः। संस्कृताध्येतृच्छात्रेषु प्राय ईदृशानां कार्याणां कृते नोत्साहः समुदेतीति कृत्वा पूर्वं स्वकीयं सुतमदीक्षयन्ने-

तेस्मिन् कर्मणि तद् दृष्टान्येऽपि बहवश्छात्रा बालचर-संघमाविशन्। एतैर्बालचरैर्जनसेवा तु यथानियमं विहितैव, पाठशाले यवार्षिकोत्सवेषु नैकवारं संवादाभिनयैरागन्तुकसभ्यजनताऽपि परितोषितेति न कि वक्तव्य-कोटिमाटीकते।

**नाट्यसंघस्थापना—** संस्कृतभाषापि किं व्यावहारिकी भवितुमर्हति? संस्कृताध्येतारश्छात्रा अपि किं घोषणादन्यत् किमपि कार्यं शक्नुवन्ति कर्तुमित्यपवादमामूलचूलमुन्मूलयितुं नाट्यसङ्घमेकं संस्थाप्य पूर्वं संवादाभिनयानुपाधिवितरणोत्सवेष्वचीकरन्। तदवलोकनेनातिप्रभावितः शिक्षासचिव-[Education-minister]स्तात्कालिकः श्रीनरेन्द्रसिंहमहोदयः स्वयमाज्ञापयद् यदेभिश्छात्रैः सवेषभूषं किञ्चिन्नाटकं रामसिंहदेवनृपतिनिर्मापिते रामप्रकाशनामके रङ्गेऽभिनेयमिति। सौभाग्यात्तादृगवसरोपि संप्राप्तः। श्रीमज्जयपुरमहीमहेन्द्रस्य श्रीमानसिंहदेवनृपतेर्महिषी स्वकुक्षेः कुमाररत्नं प्रासूत। तदानीमखिलैरपि नागरिकैरनेकविधा महोत्सवा रचिताः। राज्याश्रितैः सर्वैरपि विभागैश्चापि मुक्तहस्तमुत्सवाः कर्तुमारब्धाः। संस्कृतकालेजेनापि विरचितो महोत्सवः। तस्मिन् महोत्सवे स्वयं महाराजः श्रीमान् मानसिंहमहोदयः समागत्य विदुषामुत्साहमवर्द्धयत। किन्तु नैतावतैव विदुषामेतेषां सन्तोषः समभवत्। चिरस्मरणीयः प्रसङ्गेऽस्मिन् कश्चिदुत्सवविशेषः करणीय इति तैर्निर्धार्य भवभूतिरचितमुत्तररामचरितं नाटकमभिनीतं रामप्रकाशाख्ये रङ्गस्थले। तच्च कीदृक् कलापूर्णमभिनीतमिति तु जयपुरमहीमहेन्द्रमदीया जनता चैव प्रष्टव्या, वयं स्वमुखात् श्लाघमाना त्रपामहे। ईदृशस्याभिनयस्य साफल्ये वर्णनीयचरितानां परिश्रम एव मुख्यो हेतुरिति निर्व्याजं भणनीयम्। यत्किमपि कार्यं करणीयं तत्सर्वोत्कृष्टमेव भवेदिति विचारेणैव रङ्गमञ्चचतुरान् साहित्यरत्न-पं० प्रभुनारायणशर्मसहृदय-दामोदराचार्यप्रभृतीन् संगृह्य स्वयं चाभिनये छात्रेषु परिश्रम्य जनतायाः सम्मुखमुपस्थापितं निदर्शनं 'संस्कृतज्ञाः किं न कर्तुं पारयन्ती'ति। अभिनयोत्सवेऽस्मिन् श्रीमन्तो जयपुरपुरन्दराः श्रीमानसिंहमहोदयाः पुनरप्युपस्थिताः प्रारम्भात् समाप्त्यन्तं सकलमप्यभिनयं न केवलं दृष्टवन्तः किन्तु शतशः करतलध्वनिभिर्मन्दहासैश्च स्वात्मगतां प्रसन्नतां प्राचीकटन्। विशिष्टाँश्चाभिनेतॄन् सुवर्णादिपदकदानार्थं रूप्यकशतद्वयीं च वितीर्य "न मया छात्रैः कृत ईदृशोऽभिनयः कुत्राप्यवलोकितः" इति न्यगदन्निति मन्ये नेयं साधारणी घटना। समागताः सर्वेपि सामन्ताः सचिवाश्च चिरमस्माष्टुः स्मरन्ति च प्रासङ्गिकचर्चायामद्यावधिस्तदभिनयस्येति न केवलं संस्कृतकालेजस्येतिवृत्तेपि तु जयपुरराज्यस्येतिहासे सुवर्णाक्षरैर्लेखनीयं कार्यमीदृङ् नाद्ययावत् कयापि शिक्षासंस्थया निष्पादितमिति नात्र बहु वक्तव्यम्।

अनेनैव नाट्यसङ्घेन सन् १९४० तम ईशवीये पुनरेकं 'पाण्डवविजयनाटक'मभिनीतम्, यद्धि वेणीसंहारस्य बालभारतस्य च कियतोंशान् संगृह्य स्वप्रतिभोत्थानंशाँश्च प्रवेश्य रङ्गयोग्यमकारि, अन्येषामपि विदुषां सहयोगमवाप्य चरितनायकेनैवास्माकम्। यत्रासन्नद्विसहस्रं रूप्यकाणि व्ययीभूतानि। तानि च सर्वाणि जनतायाः सकाशादेवाधिगतानि प्रवेशशुल्करूपेणेत्यनेनैवोन्नेयमस्य जनप्रियत्वम्। अत्र जयनगरनरेन्द्रास्तु नोपस्थातुं प्राभवन् किन्तु तात्कालिकः प्रधानसचिवः(Prime Minister) राजोपाधिकः श्रीज्ञाननाथमहोदयः समुपातिष्ठत। स चेदृशः प्रभावितोऽनेनाभिनयेन यज्जयपुरकार्यकालानन्तरम् 'इन्दोर'राज्यस्य प्रधानसाचिव्यमूरीकृत्य तत्र निवसतानेन वार्ताप्रसङ्गेन बहवः

शिक्षिताः समुपदिष्टाः "नास्माभिस्तथाभिनयोऽवलोकितः कदापि, यथा हि जयपुरसंस्कृतकालेजीयच्छात्रैरभिनीत" इति। अनेनाप्युन्नेयं तस्य प्राशस्त्यमित्यलं प्रपञ्चितेन।

छात्रावासः— एतेषामाध्यक्ष्यकालेऽध्ययनार्थमायुर्वेदे विषयान्तरेष्वपि च सुदूरदूरतश्छात्राः समुपागमन्निति प्रायो निगदव्याख्यातम्। तेषां निवासस्थानादीनां सुप्रबन्धाभावेऽध्ययनं न सुचारुतया प्राचलदिति अधिकारिवर्गे वारंवारं विनिवेद्य छात्रावासकृतेपि विस्तृतमेकं स्थानमासादितं 'माधवविलासं' नाम। एतद्धि स्थानं महाराजप्रथममाधवसिंहदेवेन स्वविहाराय निर्मापितमतिमनोहरं सुविशालञ्चेति किमत्र वक्तव्यम्। तत्रासन्नत्रिंशाश्छात्राः प्रायशः सानन्दं न्यवात्सुः। तस्यैव भवनस्य महाप्राङ्गणे क्रीडाव्यवस्थापि विहिता। यत्र शतानि च्छात्रा असम्बाधमक्रीडन्। छात्रावासस्यास्य निरीक्षणार्थमेकः कालेजीयाध्यापकश्छात्रावासाध्यक्षत्वेन नियोजितः। एतस्मिन् छात्रावासे वारमेकमुपाधिवितरणमपि निष्पन्नम्। श्रीकृष्णजन्माष्टमीमहोत्सवस्तु प्रतिवर्षमभवदेव, उत्सवान्तराणि च्छात्रैः क्रियमाणानि वसन्तोत्सव-परिहाससम्मेलनादीनि च बहूनि तत्राभवन्, येषु सर्वेषु स्वयमुपस्थाय सक्रियं च भागं गृहीत्वा विद्यार्थिनामुत्साहं प्रवर्द्धयन्तस्तेषु जीवनसञ्चारं व्यदधुरिति प्रत्यक्षचरम्।

स्थानवृद्धिः—सन् १६२४ तम ईशवीयेब्दे यदा ह्येते महानुभावाः पाठशालायामस्यां नियुक्तास्तदा २५ अध्यापकाः, द्वौ कर्मचारिणौ चत्वारश्च सेवका आसन्निति निगदितमेवासीत् पूर्वम्। छात्राणां संख्यापि सर्वथा नगण्यासीत्। (कालेजविभागे ६० प्रवेशिकाविभागे च १२४) किन्तु क्रमश एषां काले परिवर्द्धमाना सा पञ्चशत्यः प्रापदासन्नम्। सन १६४३ तमे ख्रिस्ताब्दे, यदा ह्येते कालेजकार्यतो विश्राममगृह्णन्, कालेज-विभागे १६५ छात्राः, स्कूल-विभागे च २८६ छात्रा अध्यगीषत। तदनुसारमध्यापकवृद्धिः कर्मचारि-सेवकानाञ्च वृद्धिः सुतरामापततीति किमु वक्तव्यमिति सञ्जाता अध्यापकाः ३६ कर्मचारिणः ४ सेवकाश्च १०। स्थानवृद्धिमन्तरा कथमेतेषां भवेत् समावेश इति सा सुतरामधिकारिवर्गैः करणीयासीत्। सर्वतः प्रथमं प्रधानमन्दिरस्य संमुखे वर्तमानस्य प्रथमाङ्गनस्योभयोः पार्श्वयोर्वर्तमाने विशाले पञ्चद्वारके भवने प्रधानसचिवस्य तात्कालिकस्य रेनाल्डमहोदयस्याज्ञया समुपलब्धे। ततो बहिः प्राङ्गणस्य दक्षिणपार्श्वे द्वितीयखण्डे सन्ति यानि कोष्ठानि तानि, ततः पार्श्वयोरुभयोर्वर्तमाने चन्द्रिके (चांदनी) प्रथमखण्डस्थितं कोष्ठकमेकं चोपलब्धानि। ततश्च रसायनशालाकार्यार्थं द्विभूमिको निजमन्दिरस्य दक्षिणदिग्गतः प्रासादः सप्राङ्गणः स्वायत्तीकृतः। ततो मन्दिरप्रवेशप्रधानद्वारोपरि स्थितं कोष्ठत्रयं स्वाधिकारे कृतमिति पर्याप्ता संजाता स्थानवृद्धिर्यद्यपि तथापि तु अध्यपनाध्यापनस्य न तथा सुचारु व्यवस्था जातेति नूतनानां षण्णां विशालानां कोष्ठानां निर्माणाय राज्यतः समुपलब्धासीदाज्ञा, किन्त्वेतेषां विश्रमग्रहणकालसान्निध्यात् नैतैर्विशेषेण प्रायत्यतेति निःसृतो भूयान् कालः, कालेजस्य दौर्भाग्याच्च नाद्यावधिस्तस्य योजना सफलतामाप्नोदिति किमत्र विशेषानुशयेन।

यद्यपि वर्तमानेस्मिन् जयपुरस्थावरवृद्धिप्रसङ्गे नूतनस्य संस्कृत-कालेजभवनस्यापि योजना मन्ये न दुःशका। यतो हि नेदं विद्यालयस्थानमध्ययनाध्यापनाय तथोपयोगि यथा ह्यपेक्षितम्, किन्तु समयमहिम्ना

संस्कृत-शिक्षालये धन्यस्यैव कस्यचिन् महापुरुषस्य दृक्पातो भवत्यानुकूल्येनेति संस्कृतगिरामुपासकानां 'कालो ह्ययं निरवधिर्विपुला च पृथ्वी'ति भवभूतेर्वचसि विश्वसतां कथमपि चक्षुषी निमील्य कालयापनमन्तरा कान्या गतिरिति नात्राधिकं किमपि वक्तव्यम्।

**बहिरङ्गवृद्धिः**—जयपुरराजकीयपरीक्षाणां हिन्दू-विश्वविद्यालयेन पञ्जाबविश्वविद्यालयेन च समकक्षता स्वीकृतेत्यत्र श्रीचतुर्वेदमहोदयानामेव प्रयत्नो मुख्यत्वभावइति। वाराणसेय-गवर्नमेण्ट-संस्कृतकालेजेनापि यास्य सत्ताङ्गीकृता मन्ये तत्राप्येत एव हेतुः। न केवलं संस्कृत-विश्वविद्यालयैरेव साम्यमस्योरीकृतमपि तु राजपुत्रप्रान्तीयशिक्षासमित्या (Rajaputana Board) जयपुर-संस्कृत-कालेजपरीक्षाणां प्रामाण्यमङ्गीकृतमाङ्गलपाठशालास्वध्यापनाय। आगराविश्वविद्यालयेनापि बी० ए० परीक्षाप्रदानस्याधिकारः प्रत्तः केवलमाङ्गलसाहित्यविषयमवलम्ब्य परीक्ष्येभ्य एतत्कालेजीयोपाधिपरीक्षोत्तीर्णेभ्यः, सोप्यमीषामेव परिश्रम-प्रभाव-मूलकः।

**संस्कृत-कालेज-परीक्षाणां पाठ्यनिर्धारणाय शिक्षासमिति-(बोर्ड)निर्माणव्यवस्था**—परीक्षाणां सुव्यवस्थायै शिक्षासमितेर्योजना श्रीचतुर्वेदमहोदयैरेव रचिता शिक्षाविभागाध्यक्षसमक्षे। स्वीकृतायाञ्च तस्यामामूलचूलपाठ्यसंशोधनं खण्डपरीक्षाप्रकारप्रारम्भणं च प्राचालयन्नेते महाभागा येन छात्राणामध्ययने महत्सौकर्यं सम्पन्नम्। अस्यां समितौ तर्कभूषण-पं०श्रीप्रमथनाथभट्टाचार्यः, म० म० पण्डित-बालकृष्णमिश्रः, डा० बालकृष्णपाठकः, रामयत्नोझाः, यादवजीत्रिविक्रमाचार्यः, पं० राधाधरिशास्त्री, पं० हनुमत्प्रसादसाहित्याचार्य इत्यनेके विद्वत्तल्लजाः सुदूर-दूरतः शिक्षाविभागाध्यक्षेण समाहूताः सदस्यत्वेन संगत्य पाठ्यनियमादिकं समशोधयन्। एतादृशानां भारतख्यातयशसां विद्वद्धौरेयाणां संसदि साभापत्यमेतैस्तथा निर्व्यूढं यथा ते सर्वेऽपि स्वात्मतुष्टाश्चतुर्वेदमहोदयान् हृदयेन प्रशशंसुः। हिन्दूविश्वविद्यालयस्थायुर्वेदकालेजाध्यक्षेण डा० बालकृष्णपाठकमहोदयेन तु मत्समक्षमेवैतन्निगदितं यत् "जयपुरराज्यशिक्षाविभागः श्रीचतुर्वेदमहोदयानामनुभवैरत्रत्यकार्यकालोत्तरमपि यदि कार्यं सम्पादयेन्मन्ये महत्सौकर्यं सौष्ठवञ्च भवेदत्रे"ति न किं कालेजस्य कृते गौरवास्पदमेतत्?

**कालेजीय-प्रतिभापत्र-निःसारणम्**—छात्राणां लेखाभ्यासोपि नितरामुपयुक्त इति चेतसि विचार्य कालेजस्य मासिकपत्ररूपेण 'प्रतिभा' नामकमेकं पत्रमपि लिखितरूपेण प्रकाशयितुमारब्धम्। यत्र न केवलं छात्राणामेवापि तु प्राध्यापकानामपि महत्त्वशालिनो लेखा निरसरन्। यद्यपि द्रव्याभावात् सा मुद्रापयितुं न पारिता तथापि तत्र विहितश्छात्राणां परिश्रमोवश्यं श्लाघ्यः। यदि विषयान्तरेष्विव राज्यस्यास्मिन् विषयेपि समुदारदृष्टिकोणः स्यादवश्यं कालेज-समुन्नतौ साधकोयं स्यादिति मे मतिः।

**राजसभा-(दरबार)यां वेत्रासनप्राप्तिः**—इमे एव महाभागाः प्रथमाध्यक्षाः येषां संस्कृत-कालेजाध्यक्षत्वेन राजसभायां प्रवेशो राज्यानुमतोऽभूत्। साधारणराजसभास्विव विशिष्टास्वपि राजसभासु सादरमेतेषां समभूदाह्वानं शुभाशंसनश्रावणायाभिनन्दननिशमनाय चेत्यनेकशो दृष्टचरम्।

**बाह्याक्रमणतो रक्षा**—सन् १९२९ तमे ख्रिस्ताब्दे शिक्षाविभागे बहु परिवर्तनं परिवर्द्धनञ्चाभूत्। यद्यपि इतः प्राक् सन् १९२३ तम ईशवीयेब्देऽपि, यदा

जयपुराभिजनः श्रीयुतपं०श्यामसुन्दरशर्मा एम० ए०महोदयः शिक्षाविभागाध्यक्षपदमलमकरोत्, शिक्षाविभागस्याशातीता समुन्नतिः परिवृद्धिश्च संजातासीत्; किन्तु महाशयस्यास्य गुणग्राहितया भारतीयार्यसंस्कृतिपक्षपातितया संस्कृतभाषायाः प्रणयितया च विषमेऽप्येतस्मिन् समये संस्कृतस्य संस्कृत-कालेजस्य चोन्नतिरेव समजायत न पुनरवनतिः, किन्तु द्वितीयोयं परिवृद्धिसमयः समागतो यदा, तदात्वे शिक्षाविभागाध्यक्षपदेऽवर्तत श्रीकैलासप्रसादकिचलूमहोदयः 'स्पेशल-एजुकेशन-ऑफीसर'नामकं विरुदमुपगृह्णेति प्रायो विदन्त्येव जयपुराभिजना जनाः। अयं हि महानुभावः श्रूयते, यद्यपि शिक्षाव्यवस्थायामतीवप्रौढः व्यवहार-कुशलः सुशीलः, समुदारवृत्तिश्चासीत्, तथापि तु भारतीयसंस्कृतेर्दौर्भाग्यात्, प्राक्तनभारतस्य संस्कृतशिक्षाप्रधानकेन्द्रान् काश्मीरान् स्वाभिजनान् मन्यमानो भूसुरकुलमलङ्कुर्वाणोपि संस्कृतशिक्षया सर्वथाऽपरिचितो यवनान्यां कृतश्रमश्चासीत्। अस्य समये शिक्षाविभागस्य परिवृद्धे पदाधिकारिणामध्यापकानां निरीक्षकाणां च वेतनवृद्धे महान् व्ययो निर्द्धारितोऽभूत्। तदा सचिवैः संभूय शिक्षाविभागाध्यक्षः समाज्ञप्तो यदस्मिन् विभागे काचिन्न्यूनता विधेया, येन राजकीयवार्षिकाय व्ययव्यवस्थायां (बजट) न भवेदसौकर्यम्। अनेन चोत्तरितम्-यत् संस्कृतकालेजमन्तरास्मद्विभागे न न्यूनतायाः सर्वथावकाशलेशोपि। संस्कृत-कालेजसंस्थायांस्त्रिंशत्सहस्ररूप्यकाणां व्ययोस्मद्दृष्टौ वैयर्थ्यं भजते। नैतस्य कमप्युपयोगं पश्याम इति।

एतादृशस्य शिक्षानुभविनः शिक्षाविभागाध्यक्षस्येदृशीं सम्मतिमवलोक्य सचिवैरप्यस्मिन् विषयेऽवधेयमेवेति किमाश्चर्यम्। किन्तु चिरकालात् प्रचलितायाः संस्थाया अस्याः सर्वथा समुच्छेदस्तु सहसा नारोचत तेभ्यः। वस्तुतः संस्कृतविद्यालयस्य व्ययो निरर्थक उत धत्ते किमपि फलमित्यन्वेष्टुं समितिरेका तैर्निरधारि, यत्र हि समित्यां सचिवेषु वयोवृद्धो गृहसचिवः Home-minister) रायबहादुरस्वरपुरोहितगोपीनाथएम्. ए० महोदयः साभापत्यमगृह्णात्, जयपुरराज्यसचिवानां श्रद्धास्पदीभूतः प्रकाण्डपण्डितः श्रीवीरेश्वरशास्त्रिद्राविडमहोदयः, जयपुरराज्यप्रधानपण्डितो विद्यावाचस्पतिः श्रीमधुसूदनझामहाशयः, जयपुरमहाराजानामाङ्गलकालेजाध्यक्षः श्रीमाधव-रामचन्द्र-ओकमहोदयः सामन्तेषु हिन्दीप्रौढपण्डितः खाचरियावासाधिपतिः श्रीकल्याणसिंहमहोदयश्च समितावस्यां सदस्यत्वमभजन्त। एतैश्च पञ्चभिः संभूय सूक्ष्मान्वेषणमारब्धम्। बहवश्च दुःसमाधेयाः प्रश्नाः संस्कृत-विद्यालयाध्यक्षत्वे नियुक्तानां श्रीचतुर्वेदानां पुरतस्तथा स्थापिताः, येषामुत्तरेष्वेव संस्कृतविद्यालयस्यास्य निहितमासीद् भागधेयम्। किन्तु महाशयानामेषां प्रतिभाप्रभावात्, प्रत्युत्पन्नमतित्वात्, भारतीयसंस्कृतेः संस्कृतग्रन्थानां मार्मिकावबोधसत्वाच्च तथा प्रत्युत्तरितमेतैर्यथा ते सर्वेपि संस्कृतशिक्षाया उपयोगमङ्गीकृतवन्तः। तैः संभूय यद् विवरणं समितेः प्रकाशितं तदवलोकनार्हमेव। तस्मिन् काले यद्येतादृशाः संस्कृतसाहित्यस्य मार्मिका विद्वांस आध्यक्ष्यपदे नाभविष्यन् न जाने संस्कृतविद्यालयस्यास्य कीदृशी दुरवस्था समपत्स्यतेति मन्ये कल्पनापि तस्य न रमणीया। कदाचिदितिहासपृष्ठेष्वेव नामधेयमस्य भवेन्निहितम्। आस्तां तावत्-कियन्ति कार्याणि परिगणनीयानि। समासतः केवलमेतदेव वक्तव्यम्-यदेते महानुभावाः संस्थानां प्राणभूता भवन्ति। यासु यासु संस्थास्वेते प्रविशन्ति ताः सर्वाः समुत्कटकोटिकां लभन्ते चेतनाम्, परित्यज्य गतेष्वेतेषु निष्प्राणस्य विग्रहस्येव तस्या गतिरिति बहुशो दृष्टं श्रुतञ्च। याः

याः संस्थाः परित्यज्य महाभागा इमेऽन्यत्र यातास्तासां तासां संस्थानां परिस्थितिः सत्स्वपि सुयोग्यव्यक्तीनां हस्तेषु रश्मिषु नाद्यापि तथोत्कर्षशालिनी सम्पन्नेति करकङ्कणदर्शने कि दर्पणेन। आस्तां तावत्, एवं सर्वथा-वहितेन येन बाह्याक्रमणतो रक्षा, सुतनिर्विशेषपरिपालनञ्च यस्याः संस्थायाः कृतं भवेत् तया संस्थया कृतज्ञता त्ववश्यमेषां प्रकाशनीयेति मत्वाभिनन्दनरूपेण संस्थाप्रयुक्तान् द्वित्रान् कृतज्ञताप्रकाशकान् शब्दान् श्रीमत्सेवायां समर्प्य विरम्यते—"प्रायशः समुत्कृष्टानां समुत्कटकोटिकानां च संस्थानामध्यक्षत्वं प्राप्य सकला हि विद्वांसो धन्यान् मन्यन्त आत्मनः; किन्तु महाभाग ! त्वादृशं कुशाग्रधियमुदारं महामहिमशालिनञ्चाध्यक्षं प्राप्याहं सञ्जातास्मि धन्येति मन्ये नात्युक्तिपूर्णं वचः।

"यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः"

इति भगवतः कृष्णस्यादेशानुसारं राज्यान्तरैरपि मदीयमनुकरणं विधीयते, किमतः परं स्याद् गौरवस्य चरमसीमा मदीयस्य। गौरवं मे प्रदाता भवान् चिरं जीव्यादिति शम्।



# ग्रन्थान्तनिवेदनम्

श्रीमन्तोऽभिनन्दनाङ्कदर्शनप्रणयिनः पाठकमहाभागाः! तत्र भवद्भिः कलितकृपाङ्कः सोऽयं विशेषाङ्कः परिसमाप्यतेऽनेन निबन्धेन। सुदीर्घेऽस्मिन् समये कलिताः स्युः कामं कतिपयेऽवधयः, नूनमभिलङ्घिताश्चापि ते भवेयुर्भूयसा, किन्तु महासमरसमारोहेऽस्मिन् कैः कैः सङ्कटैः सह सङ्कुलसमरसांमुख्यमस्मामुकपनतमिति क्षणं चेद्विमृशेयुर्महाभागास्तर्हि सोऽयमस्माकमपराधो भवेद् भूयसा परिलघुरिति दृढं मनसि विश्वसिमः। निबन्धनीयविषयसूच्या सह प्रेषितं प्रार्थनापत्रमतिरिच्य विलेखनीयान्यभूवन्कतिचिदनुरोधपत्राणि स्मारकपत्राणि च नामाङ्कितानां महामहिम्नां विदुषां परमपवित्रसेवायाम्। किन्तु पिशाचप्रस्तानीव तानि नादर्शयन् किञ्चिदपि फलं प्रयोजनाय। पर्यन्ते तदधिष्ठितनगरनिवासिनः कांश्चिदस्माकं सहायकानवलम्ब्य मुहुस्तद्द्वारा शीघ्रताशतैर्मुहुरनुरोधपत्रैश्च यथाकथंचिदधिगतास्तेषां निबन्धाः। किन्तु कदा? यदा मुद्रणीयनिबन्धास्तावदर्धतोऽत्यधिकं मुद्रिताः, येन हि लेखव्यवस्थाकरणे सुबहुरसुविधा समुपातिष्ठत संमुखेऽस्माकम्। किञ्च "छान्दसाक्षराणि निसर्गतो दुर्वाच्यानि भवन्तीति" मुद्राराक्षसाक्षराणि विशेषाङ्कानाममीषां संपादनानुभवात् सुदृढसत्यतया प्रमाणितान्येव।

येषु पत्रेषु महामहिमभिः पण्डितपुरन्दरैर्निबन्धा अमी विलिखितास्तेषां पत्राणां कथा तु दूरे तावदास्ताम्। महासमरे पत्रनियन्त्रणस्य (कंट्रोल) सोऽयं समयः! कथंकारं वा तदेतदालोचयितुमर्हेत। किन्तु पण्डितमहाभागानां हस्तगतापि कृपा नास्माकं भागधेयेऽभूत्। अर्थात्कतीनांचिन्निबन्धानामीदृशान्यासन्नक्षराणि येषां कारणात्प्रत्यक्षविषयेऽप्यनुमानस्य सामग्री समघटत। अर्थात् प्रत्यक्षं संमुखस्थितेष्वप्यमीषु लेखेषु अर्थानुसंधानेन पूर्वापरसंदर्भसंगत्या च यथाकथंचिदनुमेयान्यभूवन्नक्षराण्येषाम्। अर्थज्ञाभिमानिनामस्माकमेवेयं यदा दशा तदा मुद्रालयीयाऽक्षरयोजकानां का स्यात्परिस्थितिरिति सुमहति समयसंकोचेपि भूयसां निबन्धानां पुनः प्रतिलिपिरिह कारणीया समापतत्। अस्तु, यथाकथंचित् संपादनसंकटमिदं समुल्लङ्घ्य मुद्रणाय चेदग्रे समभिसरामस्तर्हि तत्रापि वैलक्षण्यमखिलदयगतं भवति। यस्मिन्मुद्रणालये पूर्वमासीन्मुद्रणस्य वार्ता तेन प्रेम प्रकाशितं प्रत्यक्षमात्मनः स्वार्थसिद्धिमात्र एव, न पुनः सभ्यतासंरक्षणे। अत एव विवशतया द्वितीयस्मिन् 'कल्याण'मुद्रणालये मुद्रणप्रबन्धः कर्तव्योऽभूद्यो हि नगरात्क्रोशद्वयदूरवर्ती।

व्यतिकरेणानेन मुद्रणप्रारम्भिकपत्राणाम् (प्रूफ) इतस्ततः समाहरणे लेखप्रेषणादौ च कियती वा संभवेदसुविधेति स्वयमेवानुमातुं शक्नुयुः पाठकमहाभागाः। एवमादावसौविध्येऽपि मुद्रणालयकर्मचारिणामनपनयनीययोपेक्षया पुनः परिक्षयोऽभूत्कार्यस्य। 'प्रूफ'पत्रद्वारा अशुद्धीनां शोधननिर्माणे तेषां गजनिमीलिकया द्वित्रिवारान् प्रारम्भिकपत्राणीतस्ततः समाहरणीयान्यासन्निति त्वनिवार्यमेव तावत्। किन्तु विलम्बातिशयभयादन्तिमे मुद्रणादेशपत्रे (आर्डरी प्रूफ) यानि शोधनान्यस्माभिर्निरमीयन्त न तान्यपि मुद्रणालयीयैः परिशोधितानि, येन समधिकसावधानतायामपि समत्राशिष्यन्त पाठकानामपरितोषकराण्यशुद्धानि कानिचित्। किन्तु न तान्यर्थबोधे भ्रममुत्पादयेयुरित्यस्माकं विश्वासः।

दर्शनाङ्कस्यास्य दर्शनीयतासंपादनायाऽऽसीदस्माकं समधिकसमीहा। किन्तु महासमरेणानेन तादृशी परिस्थितिरुपस्थापिता यया हि कृतेऽपि भूयसि व्यये नालभ्यत समीहिता सामग्री। अवाञ्छाम भूयांसि त्रिवर्णाङ्कितानि ब्लाकचित्राण्यस्मिन्प्रकाशयितुम्। किन्तु सामयिकात्सामग्रीदौर्लभ्यात्स मनोरथो मनस्येवोत्पद्य विलीनः। प्रबलेच्छायामपि मसृणमुत्तमञ्च पत्रं

नारिमन्नायोजयितुमपारयाम। परमप्रयत्नेन यदिदं पत्रम् (कागज) उपलब्धं तद्धि सामान्यमात्रमीक्षेत, किन्तु मूल्ये तदिदमसामान्यम्। मुद्रणसौष्ठवार्थमत्यधिकं प्रायत्यत किन्तु लोभवशाद् धृष्टतमैः सीसकाक्षरैः (टाइप) उत्कृष्टकार्यसम्पादनव्रतिनां मुद्रणालयाधिकारिणामनुकम्पया न सम्पादयितुमशक्यत तदपि।

अस्तु, तिष्ठतु सौष्ठवं पृष्ठे। अस्माकं प्रेरणाशतेनापि चेन्मुद्रालयीयाः समये मुद्रणकार्यं परिसमापयिष्यन् तर्हि पाठकमहाभागानामुपालम्भभाजनं तु न वयमभविष्याम। किन्तु न संवृत्तं तदपि। अनुग्राहकमहाभागानामुपालम्भशतानि विनतमस्तकं विषह्य विलम्बेन तमिममङ्कमङ्के तेषां समुपस्थापयाम इति प्रत्यक्षोयमस्माकं मन्तुः। किन्तु विवशतावृत्तान्तेऽस्मिन् पाठकमहानुभावानां संमुखमुपस्थापिते तेऽपि मन्ये मनाग् विमर्शयितुं पारयेयुर्यदस्माकमेव शुद्धोऽयमपराधोऽथवाऽन्येऽप्यत्रांशभागिन इति। अस्तु, परिसमाप्तिमङ्गलेऽस्मिन् दूरमपैतु तावदपराधकथा।

विशेषाङ्कस्यास्य दर्शननिबन्धाः कीदृशाः संपन्नाः येन शीर्षकेणाभिप्रवृत्ताः कियत्साफल्यमिहाधिगतमिति न वयमालोचयितुं वाञ्छामः, न चाप्यधिकारोऽस्माकम्। गतेषु विशेषाङ्केष्वन्ते या काचिदेकत्र समाह्रियत समालोचना तां लोचनातिथीकुर्वन्तो बहवः सन्तो यथा प्रासीदन् तथा बहवो लेखका व्यषीदन्नपीति विदितमभूतपूर्वानुभवेन। अत एव निबन्धानाममीषामालोचनाचिन्ता चतुरचूडामणिषु पाठकेष्वेव परित्यज्य परिशिष्टमिदं निवेदनीयमुपसंहरामः संक्षेपेण।

यैर्महाभागैर्विशेषाङ्कस्यास्य संपादने यत्किञ्चिदपि साहाय्यं समवालम्बि सर्वेषामपि तेषां परां कृतज्ञतामावहति सेयमभिनन्दनसमितिः। रत्नगढस्थ-एस०, एच० आयुर्वेदमहाविद्यालयाध्यक्षवैद्य-मणिरामशर्मणो भिषगाचार्यमहोदयस्य प्रयत्नेन समवाप्यत तत्प्रान्ताद् भूयसी तावदार्थिकी सहायता। प्रदर्शितश्च महाभागेनानेन भूयानुत्साहोऽभिनन्दनकार्येऽस्मिन्निति भूयस्तरामुपकृताः समितिकार्यकर्तारः। एवमेव वाराणसेयराजकीयसंस्कृतकालेजाध्यापकपं० श्रीभगवत्प्रसादवेदाचार्यमहाभागस्याप्युपकारभारमावहन्ति समितिकार्यकर्तारो येन हि परममाननीयमहामहोपाध्यायपं० श्रीगोपीनाथकविराजमहोदयप्रभृतिनिबन्धकमहोदयेभ्यो निबन्धाधिगमे द्रव्यसंग्रहकार्ये च दत्ता भूयसी सहायता।

समितिसंबद्धेभ्योऽत्रत्यमहानुभावेभ्यो धन्यवादप्रदानं यद्यपि नोचितं प्रतर्कयेयुर्बहवः किन्तु निखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य स्वागतमन्त्रिणो राजकीयकालेजायुर्वेदाध्यापक—भिषगाचार्यश्रीजयरामदासस्वामिमहाभागस्योपकारमकीर्तयन्तो वयमकृतज्ञमात्मानं भावयामो येन हि महाभागेन विशेषाङ्कस्यास्य मुद्रणे, द्रव्यसंग्रहाय मित्रादीनां प्रोत्साहने च भूयस्तरां साहाय्यमस्माकमन्वष्ठीयत।

तदेतदादिभिर्दयालुभिर्महाभागैर्दत्तहस्तावलम्बा वयं विलम्बापराधेऽपि समयेऽस्मिन् सुदुःशकमिमं विशेषाङ्कमादाय दयावतां पाठकमहाभागानां सविधमुपतिष्ठामहे महेश्वरानुग्रहेण। दयालवो दयालवोन्मेषेण प्रमादवैगुण्यमस्माकमपनयन्तः संतुष्येयुः पाठकमहाभागाः स्वाभाविकसौजन्येनेति सविनयबहुमानमावेदयामः। निवेदयामश्च निखिलजगन्नायकं भगवन्तमन्तःकरणेन यदेष प्रत्यूहसमूहमामूलमपोहयन् पूरयतादस्माकमिव पाठकमहाभागानामप्यखिलमनोरथान्।

विद्याभिनन्दनाङ्कोयं निबन्धचयबन्धुरः।
निदर्शनाङ्को भवताद्दर्शनाङ्को मनीषिणाम्॥

—भट्टश्रीमथुरानाथशास्त्री

# ग्रन्थान्तनिवेदनम्

श्रीमन्तोऽभिनन्दनाङ्कदर्शनप्रणयिनः पाठकमहाभागाः ! तत्र भवद्भिः कलितकृपाङ्कः सोऽयं विशेषाङ्कः परिसमाप्यतेऽनेन निबन्धेन। सुदीर्घेऽस्मिन् समये कलिताः स्युः कामं कतिपयेऽवधयः, नूनमभिलङ्घिताश्चापि ते भवेयुर्भूयसा, किन्तु महासमरसमारोहेऽस्मिन् कैः कैः सङ्कटैः सह सङ्कुलसमरसांमुख्यमस्मानुपनतमिति क्षणं चेद्विमृशेयुर्महाभागास्तर्हि सोऽयमस्माकमपराधो भवेद् भूयसा परिलघुरिति दृढं मनसि विश्वसिमः। निबन्धनीयविषयसूच्या सह प्रेषितं प्रार्थनापत्रमतिरिच्य विलेखनीयान्यभूवन्कतिचिदनुरोधपत्राणि स्मारकपत्राणि च नामाङ्कितानां महामहिम्नां विदुषां परमपवित्रसेवायाम्। किन्तु पिशाचप्रस्तानीव तानि नादर्शयन् किञ्चिदपि फलं प्रयोजनाय। पर्यन्ते तदधिष्ठितनगरनिवासिनः कांश्चिदस्माकं सहायकानवलम्ब्य मुहुस्तद्द्वारा शीघ्रताशतैर्मुहुरनुरोधपत्रैश्च यथाकथंचिदधिगतास्तेषां निबन्धाः। किन्तु कदा? यदा मुद्रणीयनिबन्धास्तावदर्धतोऽत्यधिकं मुद्रिताः, येन हि लेखव्यवस्थाकरणे सुबहुरसुविधा समुपातिष्ठत संमुखेऽस्माकम्। किञ्च "छान्दसाक्षराणि निसर्गतो दुर्वाच्यानि भवन्तीति" मुद्राराक्षसाक्षराणि विशेषाङ्कानाममीषां संपादनानुभवात् सुदृढसत्यतया प्रमाणितानीव।

येषु पत्रेषु महामहिमभिः पण्डितपुरन्दरैर्निबन्धा अमी वि[illegible]तास्तेषां पत्राणां कथा तु दूरे तावदास्ताम्। महासमरे पत्रनियन्त्रणस्य (कंट्रोल) सोऽयं समयः। कथंकारं वा तदेतदालोचयितुमर्हति। किन्तु पण्डितमहाभागानां हस्तगतापि कृपा नास्माकं भागधेयेऽभूत्। अर्थात्कतीनांचिन्निबन्धानामीदृशान्यासन्नक्षराणि येषां कारणात्प्रत्यक्षविषयेऽप्यनुमानस्य सामग्री समघटत। अर्थात् प्रत्यक्षं संमुखस्थितेष्वप्यमीषु लेखेषु अर्थानुसंधानेन पूर्वापरसंदर्भसंगत्या च यथाकथंचिदनुमेयान्यभूवन्नक्षराण्येषाम्। अर्थाज्ञाभिमानिनामस्माकमेवेयं यदा दशा तदा मुद्रालयीयाऽक्षरयोजकानां का स्यात्परिस्थितिरिति सुमहति समयसंकोचेपि भूयसां निबन्धानां पुनः प्रतिलिपिरिह कारणीया समापतत्। अस्तु, यथाकथंचित् संपादनसंकटमिदं समुल्लङ्घ्य मुद्रणाय चेदग्रे समभिसरामस्तर्हि तत्रापि वैलक्षण्यमक्षिलक्ष्यगतं भवति। यस्मिन्मुद्रणालये पूर्वमासीन्मुद्रणस्य वार्ता तेन प्रेम प्रकाशितं प्रत्यक्षमात्मनः स्वार्थसिद्धिमात्र एव, न पुनः सभ्यतासंरक्षणे। अत एव विवशतया द्वितीयस्मिन् 'कल्याण'मुद्रणालये मुद्रणप्रबन्धः कर्तव्योऽभूद्यो हि नगरात्क्रोशद्वयदूरवर्ती।

व्यतिकरेणानेन मुद्रणप्रारम्भिकपत्राणाम् ( प्रूफ ) इतस्ततः समाहरणे लेखप्रेषणादौ च कियती वा संभवेदसुविधेति स्वयमेवानुमातुं शक्नुयुः पाठकमहाभागाः। एवमादावसौविध्येऽपि मुद्रणालयकर्मचारिणामनपनयनीययोपेक्षया पुनः परिक्षयोऽभूत्कार्यस्य। 'प्रूफ'पत्रद्वारा अशुद्धीनां शोधननिर्माणे तेषां गजनिमीलिकया द्वित्रिवारान् प्रारम्भिकपत्राणीतस्ततः समाहरणीयान्यासन्निति त्वनिवार्यमेव तावत्। किन्तु विलम्बातिशयभयादन्तिमे मुद्रणादेशपत्रे (आर्डरी प्रूफ) यानि शोधनान्यस्माभिर्निरमीयन्त न तान्यपि मुद्रणालयीयैः परिशोधितानि, येन समधिकसावधानतायामपि समवाशिष्यन्त पाठकानामपरितोषकराण्यशुद्धानि कानिचित्। किन्तु न तान्यर्थबोधे भ्रममुत्पादयेयुरित्यस्माकं विश्वासः।

दर्शनाङ्कस्यास्य दर्शनीयतासंपादनायाऽऽसीदस्माकं समधिकसमीहा। किन्तु महासमरेणानेन तादृशी परिस्थितिरुपस्थापिता यया हि कृतेऽपि भूयसि व्यये नालभ्यत समीहिता सामग्री। अवाञ्छाम भूयांसि त्रिवर्णाङ्कितानि ब्लाकचित्राण्यस्मिन्प्रकाशयितुम्। किन्तु सामयिकात्सामग्रीदौर्लभ्यात्स मनोरथो मनस्येवोत्पद्य विलीनः। प्रबलेच्छायामपि मसृणमुत्तमञ्च पत्रं

नास्मिन्नायोजयितुमपारयाम। परमप्रयत्नेन यदिदं पत्रम् (कागज) उपलब्धं तद्धि सामान्यमात्रमीत्येत, किन्तु मूल्ये तदिदमसामान्यम्। मुद्रणसौष्ठवार्थमत्यधिकं प्रायत्यत किन्तु लोभवशाद् घृष्टतमैः सीसकाक्षरैः (टाइप) उत्कृष्टकार्यसम्पादनव्रतिनां मुद्रणालयाधिकारिणामनुकम्पया न सम्पादयितुमशक्यत तदपि।

अस्तु, तिष्ठतु सौष्ठवं पृष्ठे। अस्माकं प्रेरणाशतेनापि चेन्मुद्रालयीयाः समये मुद्रणकार्यं परिसमापयिष्यन् तर्हि पाठकमहाभागानामुपालम्भभाजनं तु न वयमभविष्याम। किन्तु न संवृत्तं तदपि। अनुग्राहकमहाभागानामुपालम्भशतानि विनतमस्तकं विषह्य विलम्बेन तमिममङ्कमङ्के तेषां समुपस्थापयाम इति प्रत्यक्षोयमस्माकं मन्तुः। किन्तु विवशतावृत्तान्तेऽस्मिन् पाठकमहानुभावानां संमुखमुपस्थापिते तेऽपि मन्ये मनाग् विमर्शयितुं पारयेयुर्यदस्माकमेव शुद्धोऽयमपराधोऽथवाऽन्येऽप्यत्रांशभागिन इति। अस्तु, परिसमाप्तिमङ्गलेऽस्मिन् दूरमपैतु तावदपराधकथा।

विशेषाङ्कस्यास्य दर्शननिबन्धाः कीदृशाः संपन्नाः येन शीर्षकेणाभिप्रवृत्ताः कियत्साफल्यमिहाधिगतमिति न वयमालोचयितुं वाञ्छामः, न चाप्यधिकारोऽस्माकम्। गतेषु विशेषाङ्केष्वन्ते या काचिदेकत्र समाह्रियत समालोचना तां लोचनातिथीकुर्वन्तो बहवः सन्तो यथा प्रासीदन् तथा बहवो लेखका व्यषीदन्नपीति विदितमभूत्पूर्वानुभवेन। अत एव निबन्धानाममीषामालोचनाचिन्ता चतुरचूडामणिषु पाठकेष्वेव परित्यज्य परिशिष्टमिदं निवेदनीयमुपसंहरामः संक्षेपेण।

यैर्महाभागैर्विशेषाङ्कस्यास्य संपादने यत्किञ्चिदपि साहाय्यं समवालम्बि सर्वेषामपि तेषां परां कृतज्ञतामावहति सेयमभिनन्दनसमितिः। रत्नगढस्थ-एस०, एच० आयुर्वेदमहाविद्यालयाध्यक्षवैद्य-मणिरामशर्मणो भिषगाचार्यमहोदयस्य प्रयत्नेन समवाप्यत तत्प्रान्ताद् भूयसी तावदार्थिकी सहायता। प्रदर्शितश्च महाभागेनानेन भूयानुत्साहोऽभिनन्दनकार्येऽस्मिन्निति भूयस्तरामुपकृताः समितिकार्यकर्तारः। एवमेव वाराणसेयराजकीयसंस्कृतकालेजाध्यापकपं० श्रीभगवत्प्रसादवेदाचार्यमहाभागस्याप्युपकारभारमावहन्ति समितिकार्यकर्तारो येन हि परममाननीयमहामहोपाध्यायपं० श्रीगोपीनाथकविराजमहोदयप्रभृतिनिबन्धकमहोदयेभ्यो निबन्धाधिगमे द्रव्यसंग्रहकार्ये च दत्ता भूयसी सहायता।

समितिसंबद्धेभ्योऽत्रत्यमहानुभावेभ्यो धन्यवादप्रदानं यद्यपि नोचितं प्रतर्कयेरन्बहवः किन्तु निखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य स्वागतमन्त्रिणो राजकीयकालेजायुर्वेदाध्यापक—भिषगाचार्यश्रीजयरामदासस्वामिमहाभागस्योपकारमकीर्तयन्तो वयमकृतज्ञमात्मानं भावयामो येन हि महाभागेन विशेषाङ्कस्यास्य मुद्रणे, द्रव्यसंग्रहाय मित्रादीनां प्रोत्साहने च भूयस्तरां साहाय्यमस्माकमन्वष्ठीयत।

तदेतदादिभिर्दयालुभिर्महाभागैर्दत्तहस्तावलम्बा वयं विलम्बापराधेऽपि समयेऽस्मिन् सुदुःशकमिमं विशेषाङ्कमादाय दयावतां पाठकमहाभागानां सविधमुपतिष्ठामहे महेश्वरानुग्रहेण। दयालवो दयालवलेशेन प्रमादवैगुण्यमस्माकमपनयन्तः संतुष्येयुः पाठकमहाभागाः स्वाभाविकसौजन्येनेति सविनयबहुमानमावेदयामः। निवेदयामश्च निखिलजगन्नायकं भगवन्तमन्तःकरणेन यदेष प्रत्यूहसमूहमामूलमपोहयन् पूरयतादस्माकमिव पाठकमहाभागानामप्यखिलमनोरथान्।

विज्ञाभिनन्दनाङ्कोयं निबन्धचयबन्धुरः।
निदर्शनाङ्को भवताद्दर्शनाङ्को मनीषिणाम्॥

—भट्टश्रीमथुरानाथशास्त्री

॥ श्रीः ॥

# श्रीचतुर्वेदाभिनन्दनसमितये द्रव्यसाहाय्यप्रदायकानां नामानि

## सधन्यवादमधस्तात् प्रकाश्यन्ते—

| | | |
|---|---|---|
| ३००) | जगद्गुरु श्रीवैष्णवाचार्य-महन्तश्रीगोकुलदासस्वामिमहाराजानाम् | शिकारपुर (सिन्ध) |
| २००) | जगद्गुरुश्रीमदाचार्यप्रवरगोस्वामिश्रीगोकुलनाथमहाराजानाम् | बड़ामन्दिर, मुम्बई |
| १२५) | म० म० पं० श्रीपरमेश्वरानन्दशास्त्रिमहोदयानाम् | स० ध० सं० कालेज, लाहोर |
| ११०) | पं० श्रीचन्द्रभानुशास्त्रिपुराणप्राध्यापकानाम् | लाहोर |
| १००) | राजाबलदेवदासबिरलामहोदयानाम् ... ... ... | काशी |
| १००) | श्रेष्ठिवर्यश्रीगौरीशङ्करगोयनकामहोदयानाम् ... ... ... | काशी |
| १००) | श्रेष्ठिवर्यश्रीसूरजमलनागरमलमहोदयानाम् ... ... ... | कलकत्ता |
| १००) | " श्रीचिरञ्जीलालजोयलकामहोदयानाम् ... ... | मुम्बई |
| १००) | " श्रीगजाधरसोमाणीमहोदयानाम् ... ... ... | " |
| १००) | स्व० पं० श्रीरामचन्द्रशास्त्रिवर्तायानाम् ... ... ... | " |
| १००) | पं० श्रीशिवदत्तशास्त्रिसाहित्यरत्नानाम् ... ... ... | तुमसर |
| ६१) | श्रीयुतपुरोहितकन्हैयालालतिवारिमहोदयानाम् ... ... ... | जयपुर |
| ५१) | " " स्वरूपनारायणसीकरनिवासिनाम् | " |
| ५१) | राजवैद्यश्रीनन्दकिशोरशर्मभिषगाचार्याणाम् ... ... ... | " |
| ५१) | वैद्यश्रीजयरामदासस्वामिभिषगाचार्याणाम् ... ... ... | " |
| ५१) | बच्छोवालीसनातनधर्मसभायाः ... ... ... | लाहोर |
| ५१) | वैद्यवर-श्रीनारायणशास्त्रिमहोदयानाम् ... ... ... | बीकानेर |
| ५१) | पं० श्रीसिद्धगोपालशास्त्रिमहोदयानाम् ... ... ... | देहली |
| ५०) | वैद्यप्रवरश्रीठाकुरदत्तमुलतानीमहोदयानाम् ... ... ... | लाहोर |
| ५०) | श्रेष्ठिवर्यश्रीहणुतरामगोपीरामतापड़ियामहोदयानाम् ... ... | रतनगढ़ |
| ५०) | हुकमचन्दविश्वेश्वरलाल-अजीतसरियामहोदयानाम् ... ... | रतनगढ़ |
| २५ | श्रीबालानन्दाचार्यमठाधिष्ठितश्रीराघवानन्दाचार्याणाम् ... ... | जयपुर |
| २५) | दीवानबहादुर—दीवानकृष्णकिशोररईसमहोदयानाम् ... ... | लाहोर |
| २५) | पं० कृष्णानन्दपन्तसाहित्याचार्याणाम् ... ... ... | मेरठ |
| २५ | पं० शिवप्रतापशर्मवेदाचार्याणाम् ... ... ... | जयपुर |
| २५) | पं० श्रीमोतीलालशास्त्रिवेदभास्कराणाम् ... ... ... | " |
| २५) | पं० वृद्धिचन्द्रशास्त्रिव्याकरणाचार्यस्य ... ... ... | " |
| १५) | संस्कृतकालेजीयच्छात्रवृन्दस्य ... ... ... ... | " |

२१) श्रीमद्राजगुरुश्रीविद्यानाथमैथिलमहोदयानाम् ... ... ... जयपुर
२१) श्रीमद्महन्तश्रीगोस्वामिव्रजभूषणलालमुरलीधरमहोदयानाम् ( गिरिधारिजी का मन्दिर ) ”
२१) वैद्यश्रीमणिरामशर्मभिषगाचार्यमहोदयानाम् ... ... ... रतनगढ़
२१) ” ” गोपीनाथशर्ममहोदयानाम् ... ... ... जयपुर
२१) ” ” मुकुन्ददेवशास्त्रिवर्याणाम् ... ... ... ... ”
२१) ” ” यशोराजभिषगाचार्यमहोदयानाम् ... ... ... जोधपुर
२१) ” ” माधवलालायुर्वेदाचार्याणाम् ... ... ... ”
२१) ” ” रामदासस्वामिशास्त्रिभिषगाचार्याणाम् ... ... ... मुलतान
२१) ” श्रीमदुपेन्द्रनाथभिषगाचार्यमहोदयानाम् ... ... ... कानपुर
२१) ” श्रीनन्दलालरसायनाचार्यमहोदयानाम् ... ... ... जयपुर
२१) पं० श्रीयुगलकिशोरशर्मदर्शनाचार्याणाम् ... ... ... ”
२१) ” ” कृपाशङ्करशास्त्रिमहोदयानाम् ... ... ... अजमेर
२०) श्रेष्ठिश्रीनौरङ्गरायकिसनदयालअजीतसरियामहोदयानाम् ... ... रतनगढ़
११) श्रीमद्राजगुरुश्रीगोपीनाथशास्त्रिसम्राजानाम् ... ... ... जयपुर
११) ” ” ” गोपीनाथशास्त्रिद्राविडानाम् ... ... ... ”
११) ” ” ” मुकुन्दरामपर्वणीकराणाम् ... ... ... ”
११) ” ” कथाभट्टश्रीजगदीशचन्द्रशास्त्रिणाम् ... ... ... ”
११) ” महन्तश्रीगङ्गादासस्वामिमहोदयानाम् ... ... ... ”
११) ” पं० विद्याधरशास्त्रिमहोदयानाम् ... ... ... बीकानेर
११) श्रीयुतवैद्यश्रीप्रेमशंकरशर्मभिषगाचार्याणाम् ... ... ... उदयपुर
११) ” ” ” कन्हैयालालशर्मभिषगाचार्याणाम् ... ... ... कलकत्ता
११) ” ” ” सीतारामशर्मभिषगाचार्याणाम् ... ... ... नवलगढ़
११) ” ” ” लक्ष्मीकान्तशर्मभिषगाचार्याणाम् ... ... ... फतहपुर
११) ” ” दयानिधिस्वामिनामायुर्वेदाचार्याणाम् ... ... ... ऋषीकेश
११) ” ” मुखियाश्यामलालशर्मशास्त्रिमहोदयानाम् ... ... मथुरा
११) ” ” रामकिशोरशर्मभिषगाचार्याणाम् ... ... ... महावीर
११) ” ” हरिप्रसादशर्मशास्त्रिमहोदयानाम् ... ... ... खण्डेला
११) ” ” हरिनारायणशास्त्रिमहोदयानाम् ... ... ... हाथरस
११) ” ” हरिनारायणशास्त्रिमहोदयानाम् ... ... ... बीकानेर
११) ” ” ब्रह्मदत्तशर्मायुर्वेदाचार्याणाम् ... ... ... भुसावल
११) ” ” लक्ष्मीनारायणशर्मायुर्वेदाचार्याणाम् ... ... ... जयपुर

११) श्रीयुत वैद्यचन्द्रशेखरशर्मभिषग्वराणाम् ... ... ... जयपुर
११) " " निरञ्जनलालशर्मभिषगाचार्याणाम् ... ... ... "
११) " " आनन्दीलालशर्मायुर्वेदाचार्याणाम् ... ... ... "
११) " " देवेन्द्रशास्त्रिभिषग्वराणाम् ... ... ... मुलतान
११) " " यमुनाप्रसादशास्त्रिभिषग्वराणाम् ... ... ... जबलपुर
११) श्रीयुत पं० रामकृष्णशर्मचतुर्वेदिवेदाचार्याणाम् ... ... ... जयपुर
११) " " श्यामसुन्दरशर्मप्रभवर एम०ए०एल०टी०महो० (सेक्रेटरी पब्लिकसर्विसकमीशन) जयपुर
११) " " श्रीनन्दकिशोरशर्मन्यायाचार्याणाम् ... ... ... "
११) " " " केदारनाथशर्मव्याकरणाचार्याणाम् ... ... "
११) " " " नन्दकिशोरशर्मसाहित्याचार्याणाम् ... ... "
११) " " " विन्ध्याचलप्रसादशर्मज्यौतिषाचार्याणाम् ... ... "
११) " " " पुरुषोत्तमभट्ट एम० ए०महोदयानाम् ... ... "
११) " वैद्यश्रीकल्याणप्रसादशर्मभिषगाचार्याणाम् ... ... "
११) " पं० प्रभुनारायणशर्मसाहित्यरत्नानाम् ... ... ... "
११) " " श्यामसुन्दरशर्मदर्शनाचार्यमहोदयानाम् ... ... (बसवा) जयपुर
१०) " " प्रेमनिधिशास्त्रिमहोदयानाम ... ... ... अमृतसर
१०) " " माधवरामशैवालमहोदयानाम् ... ... ... पटियाला
१०) " " चक्रधरशास्त्रिबहुगुणानाम् ... ... ... देहरादून
१०) " " चक्रधरशास्त्रिहंसमहोदयानाम् ... ... ... लखनऊ
१०) " " सुखलालगोस्वामिमहोदयानाम् ... ... ... वृन्दावन
१०) " " मोहनदेवशास्त्रिणाम् ... ... ... लाहौर
१०) " " हनुमत्प्रसादशास्त्रिसाहित्याचार्याणाम् ... ... ... रामगढ़
१०) " पं० नेत्रमणिशास्त्रिमहोदयानाम् ... ... ... लाहौर
१०) " " देवसहायत्रिवेदिमहोदयानाम् ... ... ... "
७) श्रीयुतपं० रामचन्द्रशर्मसाहित्याचार्याणाम् ... ... ... जयपुर
७) " " नन्दकुमारशर्मसाहित्याचार्याणाम् ... ... ... "
७) " " दुर्गादत्तशर्मव्याकरणसाहित्याचार्याणाम् ... ... "
७) " " बदरीनारायणशर्मज्यौतिषाचार्याणाम् ... ... ... "
७) " वैद्यश्रीछाजूलालशर्मभिषगाचार्याणाम् ... ... ... "
७) " पं० यशोधरझामहोदयानाम् ... ... ... "
६) " " चुन्नीलालशर्माथर्ववेदिनाम् ... ... ... "

५) श्रीमद्राजगुरु-श्रीचन्द्रदत्तशर्ममैथिलव्याकरणा-- चार्यमहोदयानाम्—जयपुर
५) श्रीमद्राजगुरुश्रीमदुमाकरपौण्डरीकाणाम् ,,
५) ,, ,, श्रीपद्माकरपौण्डरीकाणाम् ,,
५) ,, ,, श्रीभट्टराजश्रीरविशंकरशर्ममहोदयानाम् ,,
५) ,, महन्तश्रीगोविन्ददासशास्त्रिमहोदयानाम् ,,
५) ,, ,, श्रीगोपीदासशर्ममहोदयानाम् ,,
५) ,, ,, श्रीगोस्वामिमदनमोहनशर्ममहोदयानाम् (मन्दिरराधादामोदरजी) ,,
५) ,, महन्तश्रीप्रद्युम्नकुमारशर्ममहोदयानाम् गोविन्दमन्दिर जयपुर
५) ,, महन्तनारायणदासशर्ममहोदयानाम्, गेंडाड्योढी ,,
५) ,, ,, श्रीरविकिरणदासमहोदयानाम् (बद्रीनाथडूंगरी) जयपुर
५) ,, महन्तवल्लभदासमहोदयानाम् ,,
५) श्रीयुत स्व०वैद्यश्रीराजारामशास्त्रिभिषगाचार्याणाम् बीकानेर
५) ,, श्रीमदविनाशचन्द्रभिषगाचार्याणाम्- कानपुर
५) ,, ,, चिरंजीलालशर्मायुर्वेदाचार्याणाम् जयपुर
५) ,, वैद्यश्रीगोपालदत्तभिषगाचार्याणाम् जयपुर
५) श्रीयुत वैद्यश्रीमोहनलालभार्गवभिषगाचार्याणाम् जयपुर
५) ,, वैद्यश्रीविजयशङ्करशर्मणाम् ,,
५) ,, श्रीसीतारामभिषगाचार्याणाम् दूणी जयपुर
५) श्रीयुत पं० तारादत्तपन्तसाहित्याचार्याणाम् जोधपुर
५) श्रीयुत पं० रघुनाथदत्तबन्धुमहोदयानाम् लाहौर
५) ,, पं० गोपीचन्द्रशर्मशास्त्रिमहोदयानाम् ,,
५) ,, दीवानचन्द्रशास्त्रिमहोदयानाम् ,,
५) ,, पं० जगदीशभट्टशास्त्रिमहोदयानाम लाहौर
५) ,, पं०दीनदयालुजोशीशास्त्रिमहोदयनाम् मिण्टगूमरी

५) श्रीयुत पं० बालकृष्णभट्टशास्त्रिमहोदयानाम् जखोली (गढ़वाल)
५) ,, ,, मदनसिंहवर्मशास्त्रिमहोदयानाम् भावलपुर
५) ,, ,, लक्ष्मणदत्तशास्त्रिमहोदयानाम् गुजरांवाला
५) ,, ,, राधेशशास्त्रिमहोदयानाम् फिरोजपुर
५) ,, ,, वृन्दावनशास्त्रिमहोदयानाम् ,,
५) ,, ,, प्रेमवल्लभशास्त्रिमहोदयानाम् मुरादाबाद
५) ,, ,, लोकमान्यशास्त्रिमहोदयानाम् अमृतसर
५) ,, श्रेष्ठिदेवीलालगुप्तशास्त्रिबी.ए.महोदयानाम् टोंक
५) ,, श्रीनारायणशर्मजोशिमहोदयानाम् जयपुर
५) श्रीयुत पं० जगदीशशर्मसाहित्याचार्याणाम् जयपुर
५) ,, ,, चिरञ्जीलालशमर्ग्वेदिमहोदयानाम् ,,
५) ,, ,, सूर्यनारायणशर्मवेदाचार्याणाम् ,,
५) ,, ,, जयचन्द्रशर्ममैथिलशास्त्रिसामगानाम् जयपुर
५) ,, ,, श्रीमनोहरशुक्लशास्त्रिमहोदयानाम् ,,
५) ,, ,, कल्याणप्रसादशर्मसाहित्याचार्याणाम् ,,
५) ,, ,, हर्षनारायणशर्मशास्त्रिमहोदयानाम् ,,
५) ,, ,, फूंदालालशर्मशास्त्रिसाहित्याचार्याणाम् जयपुर
५) ,, ,, गुलाबचन्द्रशर्मव्याकरणाचार्याणाम् दौसा
५) ,, ,, लक्ष्मीनारायणशर्मव्याकरणाचार्याणाम् जयपुर
३) ,, ,, भौंरीलालशर्मखाण्डलमहोदयानाम् ,,
२) ,, ,, जगन्नाथशर्मपुरोहितमहोदयानाम् ,,
२) ,, ,, गणेशनारायणशर्ममहोदयानाम् ,,
२) ,, पं० कल्याणदत्तशास्त्रिमहोदयानाम् ,,
२) ,, ,, मणिशंकरवसन्तरामोपाध्यायमहोदयानाम्, बड़ौदा
२) ,, ,, गङ्गाप्रसादशर्मशास्त्रिमहोदयानाम् लाहौर

